अक्षरजीविक त्रि॰ अक्षर-जीव-ष्वुन् । वर्णलेखनोपजीविनि, स्त्रियाम् अक्षरजीविका ।

अक्षरजीविन् त्रि॰ अक्षर जीव-णिनि । वर्णलेखनोपजीविनि, स्त्रियाम् अक्षरजीविनी । [ लेखन्यादौ ।

अक्षरतूलिका स्त्री॰ अक्षर-तूलिका ६त॰ । वर्णलेखनद्रव्ये

अक्षरवाट पु॰ न क्षरतीति अक्षर॰ वट-वेष्टने घञ् । वाङ्युद्धभूमौ । [ विशिष्टस्त्रियामपि ।

अक्षरसंस्थान न॰ अक्षर-संस्थान ६त॰। वर्णविन्यासे। वङ्ग॰। लिप्यादौ च ।

अक्षवती स्त्री अक्ष+मतुप् मस्य वः । अक्षक्रीडायाम् । अक्ष-

अक्षवित् त्रि॰ अक्ष-विद्-क्विप्। द्यूतज्ञे,व्यवहाराभिज्ञे च।

अक्षशौण्ड पु॰ अक्ष-शौण्ड ७त॰ । द्यूतदक्षे । [ज्ञे ।

अक्षसूत्र न॰अक्ष सूत्र ६त॰। जपमालासूत्रे,यज्ञसूत्रे,उपवीते

अक्षाग्रकीलक अस्त्री॰ अक्ष (चक्र) अग्र कीलक ६त॰। चक्रा- ग्रस्थापिते शङ्कौ। [हिते त्रि॰ ।

अक्षान्ति स्त्री॰क्षम-क्तिन् न॰त॰। ईर्ष्यायाम् । ब॰ । क्षमार-

अक्षारलवण न॰ क्षारलवण न॰त॰, ब॰ वा । क्षारलवण- भिन्ने सैन्धवे,सामुद्रे च । गोक्षीरं गोघृतञ्चैव धान्यं मुद्गा- स्तिला यवाः । सामुद्रं सैन्धवञ्चैव अक्षारलवणं स्मृतमिति स्मृतिपरिभाषितेऽपि ।

अक्षि न॰ अश-क्सि । चक्षुषि । [मिति केचित् ।

अक्षिकूटक न॰ अक्षि-कूटक, ६त॰। चक्षुर्गोलके तत्तारकायां

अक्षिगत त्रि॰ अक्षिविषयंगत॰ शाकपार्थिवादि त॰। द्वेष्ये,रिपौ च

अक्षिभेषज पु॰ अक्षि-भेष (रोग) जि-ड । लोध्रविशेषे ।

अक्षिव न॰ क्षिव क न॰त॰। सामुद्रलवणे । [पाते च ।

अक्षिविकूणित न॰ अक्षि-वि-कूण-क्त। अपाङ्गदर्शने कटाक्ष

अक्षीव पु॰ क्षीव-क,न॰त॰ । सामुद्रलवणे । क्षीवो मत्तो न॰ त॰ । मत्तभिन्ने त्रि॰ ।

अक्षोट पु॰ अक्ष-ओट, अक्षस्येव विभीतकस्येव, उटा पर्णा- न्यस्येति वा। पार्वतीयपीलुवृक्षे आखरोट इति प्रसिद्धे ।

अक्षोड पु॰ अक्ष-ओड । पार्वतीयपीलुवृक्षे ।

अक्षोभ पु॰ क्षुभ-घञ् न॰ त॰ । हस्तिबन्धनस्तम्भे । बहु॰ । क्षोभरहिते त्रि॰ ।

अक्षौहिणी स्त्री॰अक्ष (शकटादि) ऊहि-णिनि । संख्याविशेष युक्तरथादिसेनायाम् । तत्संख्या च २१८७० हस्तिनः । २१८७० रथाः । ६५६१० अश्वाः । १०९३५० पदातयः ।

अखट्ट पु॰ खट्ट-अच् न॰त॰ । पियालवृक्षे पियाशाल ख्याते ।

अखट्टि स्त्री खट्ट-इ न॰त॰ । अनिष्टव्यवहारे । अखट्टी च ।

अखण्ड त्रि॰खडि-घञ् न॰त॰। संपूर्णे,सकले। खण्डभिन्ने पु॰न॰।

अखण्डन पु॰ खडि ल्युट् ब॰। काले । खण्डनशून्ये त्रि॰।

अखण्डित त्रि॰ खडि क्त न॰त॰। सम्पूर्णे,खण्डितभिन्ने च ।

अखात न॰ खन-क्त न॰त॰ । देवखाते,मनुष्याद्यखाते च । खातभिन्ने त्रि॰ । [ गोमांसादौ, भक्ष्यभिन्ने च ।

अखाद्य त्रि॰ खादि-अर्हार्थे ण्यत् न॰ त॰ । भोजनानर्हे

अखिल त्रि॰ न खिल्यते न कणशश्चादीयते इति खिल-क न॰त॰ । समग्रे । खिलभिन्ने कृष्टभूम्यादौ स्त्री॰ ।

अग इदित् गतौ भ्वादि॰ पर॰ । अङ्गति । आङ्गीत् ।

अग वक्रगतौ भ्वादि॰पर॰घटादि। अगति आगीत्। अगयति ।

अग॰ पु॰ न गच्छतीति गम-ड न॰त॰ । वृक्षे, पर्वते, सूर्ये च । गमनाकर्त्तरि, स्थिरादौ त्रि॰ ।

अगच्छ पु॰ गम-श न॰त॰। वृक्षे ।

अगति स्त्री॰ गम-क्तिन् न॰त॰। उपायाभावे । बहु॰। गति- शून्ये उपायशून्ये च त्रि॰। [रोगशून्ये अकथने च त्रि॰।

अगद पु॰ नास्ति गदो रोगो यस्मात् ५ब॰। औषधे। ६त॰ ।

अगदङ्कार पु॰अगदं करोति अगद-कृ अण् मुम् च । वैद्ये ।

अगम पु॰न गच्छतीति गम-अच् न॰त॰। वृक्षे। अगन्तरि त्रि॰।

अगम्य त्रि॰ न-गन्तुमर्हति गम-यत् न॰ त॰ । गमनानर्हे, अन्त्यजातिस्त्रियाञ्च स्त्री॰ ।

अगरी स्त्री॰नास्ति गरो विषो यस्याः ५ब॰ङीप् । मूषिकविष हारिणि देवताड वृक्षे । विषहारिणि द्रव्यमात्रे त्रि॰ ।

अगरु न॰ न गिरति गॄ-उ। अगुरुचन्दने स्वनामप्रसिद्धे ।

अगस्ति पु॰ अगं विन्ध्याचलम् अस्यति अग-अस्-ति शकन्ध्वा- दि॰ । अगस्त्यनामके मुनौ ।

अगस्तिद्रु पु॰ अगस्तिप्रियः द्रुः वृक्षः शाक॰त॰। वकवृक्षे ।

अगस्ती स्त्री॰ अगस्तिनिवासस्थानात् दक्षिणस्यां दिशि ।

अगस्त्य पु॰ अगं विन्ध्याचलं स्त्यायति स्तभ्नाति स्त्यै-क । अगस्त्यनामके मुनौ । [छिद्रे न॰ ।

अगाध त्रि॰गाध प्रतिष्ठायाम् गाध-घञ् न-ब॰। अतिगभीरे।

अगाधजल पु॰अगाध-जल-७ब॰। अतिगभीरजले ह्रदे ।

अगार न॰ अगम् न गच्छन्तमृच्छति प्राप्नोति अग-ऋ-अण् । गृहे । [च त्रि॰ ।

अगु पु॰ न गौः किरणो यस्य। राहौ । किरणशून्ये,गोशून्ये

अगुरु न॰न गुरुर्यस्मात् । अगुरुचन्दने स्वनामप्रसिद्धे,शिंशपा- (शिशु) वृक्षे च । गुरुभिन्ने, उपदेशकशून्ये च त्रि॰ ।

अगुरुशिंशपा स्त्री॰ अगुरुःसारो यस्याः शाकपो शिंशपा मध्यपदलोपि स॰ । शिशु इति प्रसिद्धे शिंशपावृक्षे ।

**अगूढगन्ध** न॰ न गूढो गन्धो यस्य इव॰। हिङ्गुद्रव्ये। प्रगुह्य-सौरभे द्रव्यमात्रे त्रि॰।

**अग्नायी** स्त्री॰ अग्नि+ऐङ्-ङीप्। अग्नेर्योषिति स्वाहाख्यायाम्।

**अग्नि** पु॰ अङ्गति ऊर्द्ध्वं गच्छति अगि-नि नलोपः। अग्नौ स्वनामप्रसिद्धे तेजोभेदे।

**अग्निक** पु॰ अग्निवत् कायति प्रकाशते कै-क। इन्द्रगोपकीटे।

**अग्निकण** पु॰ अग्नि-कण इत॰। अग्निच्युतक्षुद्रांशे।

**अग्निकारिका** स्त्री अग्नि-कारिका इत॰। अग्निकृत्ये होमा-धानादौ, अग्न्याहोपकौषधिभेदे च। [धानादौ।

**अग्निकार्य्य** न॰ अग्नि-कार्य्य (कृ-ण्यत्) इत॰। अग्निकृत्ये होमा

**अग्निकाष्ठ** न॰ अग्नेः (उद्दीपनाय) काष्ठम् तादर्थ्यषष्ठ्या त॰। अगुरुकाष्ठे।

**अग्निकुक्कुट** पु॰ अग्नेः कुक्कुट इव रक्तवर्णस्फुलिङ्गत्वात्। ज्वल-दग्निव्याप्ततृणपुञ्जे लुडा इति ख्याते।

**अग्निकोण** न॰ अग्नेः कोणः इत॰। पूर्व्वदक्षिणयोर्मध्ये दिग्-भागे तस्य वह्निदैवत्यप्रसिद्धेः। [सौति प्रसिद्धे काचे च।

**अग्निगर्भ** पु॰ अग्निर्गर्भे यस्य व॰। सूर्य्यकान्तमणौ आत-

**अग्निचयन** पु॰ अग्निश्चीयतेऽनेन चि-ल्युट्। मन्त्रभेदे, काष्ठे च। [ कृतवह्निस्थापने अग्निहोत्रिणि।

**अग्निचित्** पु॰ अग्निं चितवान् चि-भूतार्थे क्विप्। मन्त्रपूर्व्वक

**अग्निज** पु॰ अग्नि-जन-ड। अग्निजारवृक्षे। स्वर्णे न॰। अग्निजातद्रव्ये त्रि॰। [न॰। वह्निजातमात्रे त्रि॰

**अग्निजात** पु॰ अग्नेर्जातः जन-क्त। अग्निजारवृक्षे स्वर्णे

**अग्निजार** पु॰ अग्निं जारयति जॄ-अण्। अग्निजारनामकवृक्षे

**अग्निज्वाल** पु॰ अग्निं जारयति जॄ अण् लत्वम्। अग्निजार वृक्षे। [ इत॰। अग्निशिखायाम्।

**अग्निजिह्वा** स्त्री॰ अग्नेर्जिह्वेव। लाङ्गलीवृक्षे। इत॰। अग्नि जिह्वायाम्। अग्निर्जिह्वा येषां ब॰। देवे

**अग्निज्वाला** स्त्री॰ अग्नेर्ज्वालेव। गजपिप्पलीवृक्षे।

**अग्निदमना** स्त्री॰ अग्निं दमयतीति दमि-ल्यु। गणिकारी [ नामक्षुपभेदे।

**अग्निदेवा** स्त्री॰ अग्निर्देवो यस्याः। कृत्तिकाख्यतारायां तस्या अग्निदैवतत्वात्। अग्निदैवतमात्रे त्रि॰।

**अग्निनिर्य्यास** पु॰ अग्नेर्निर्यासः (चीरवत् निष्यन्दः)। उपचारात् तज्जाते अग्निजारवृक्षे। स्वर्णे न॰।

**अग्निप्रस्तर** पु॰ अग्निं प्रस्तृणाति स्तॄ-अच् अग्नेर्वा प्रस्तरः। चकमकीति ख्यातेऽग्न्युत्थापके प्रस्तरखण्डे।

**अग्निमाङ्ग** पु॰ अग्नेर्माङ्ग इव दीर्घशिखत्वात्। धूमे।

**अग्निभ** न॰ अग्निरिव भाति भा-क। स्वर्णे। अग्निवत् प्रकाशवति त्रि॰।

**अग्निभू** पु॰ अग्नेर्भवति भू-क्विप्। कार्त्तिकेये। स्वर्णे न॰। अग्निजातमात्रे त्रि॰।

**अग्निमणि** पु॰ अग्ने-र्मणिः। अग्निसाधने आतशीति प्रसिद्धे काचे। सूर्य्यकान्ते मणौ च।

**अग्निमथन** पु॰ अग्नये मथ्यतेऽसौ मन्थ-ल्युट् नलोपः। गणियारीति ख्याते गणिकारीवृक्षे। तत्काष्ठयोर्घर्षणे हि झटिति वह्निरुद्दीप्यते। अग्निमन्थनमन्त्रे च।

**अग्निमन्थ** पु॰ अग्नये मथ्यतेऽसौ मन्थ अच्। गणिकारीवृक्षे।

**अग्निमारुति** पु॰ अग्निमारुत+इञ् ह्रस्व कल्पभेदे: अग्नि-वायुरूपयोर्द्वयोः पुत्रे अगस्त्यमुनौ।

**अग्निमुख** पु॰ अग्निर्मुखमिव यस्य। देवे, हुतद्रव्यं हि देवैर-ग्निद्वारेणैवाश्यते। अग्निर्मुखे यस्य तस्मिन्। विप्रे, शाप-रूपाग्नेस्तस्य मुखे स्थितत्वात्। अग्निर्मुखः प्रधानमुपास्यो यस्य तस्मिन् वा। विप्रे। अग्नेर्मुखे तु न॰।

**अग्निमुखी** स्त्री अग्निरिव मुखमस्यं यस्याः गौरादित्वात् ङीष्। (भेला) भल्लातकवृक्षे, पाकशालायाम्, गायत्रीमन्त्रे च।

**अग्निरक्षण** न॰ अग्निः रक्ष्यतेऽनेन रक्ष-ल्युट्। रामवादि श्योऽग्निरक्षाकारके मन्त्रभेदे, अग्निहोत्रे च।

**अग्निरजस्** पु॰ अग्निरिव रज्यते दीप्यते रन्ज असुन् नलोपः। रक्तवर्णे इन्द्रगोपनामककीटे। अग्निवीर्य्ये, स्वर्णे च।

**अग्निवल्लभ** पु॰ अग्नेर्वल्लभः सुखेन दाह्यत्वात्। शालवृक्षे। अग्निप्रिये त्रि॰।

**अग्निवाह** पु॰ अग्निं वाहयति गमयति बोधयति वा वाहिः अण्। धूमे, छागे च। वह्निवाहकमात्रे त्रि॰।

**अग्निवित्** पु॰ अग्निं विन्दते विन्द्-क्विप्। अग्निहोत्रिणि साग्निके। [स्वर्णे, वह्निरेतसि च।

**अग्निवीज** न॰ अग्नेर्वीजम् वह्नेर्तोजातत्वात् उपचारात्।

**अग्निवीर्य्य** न॰ अग्नेर्वीर्य्यं, तद्वीर्य्यजातत्वादुपचारात् स्वर्णे वह्निरेतसि, तत्पराक्रमे च। ब॰। अग्नितुल्यपराक्रमवति त्रि॰

**अग्निशिख** पु॰ अग्निरिव शिखा यस्य। कुङ्कुमवृक्षे, कुसुम्भवृक्षे, अग्नितुल्यशिखे लाङ्गलीवृक्षे च। अग्नितुल्यजटावति त्रि॰

**अग्निशेखर** पु॰ अग्निरिव शेखरमग्रं यस्य। कुङ्कुमवृक्षे कुसु-म्भवृक्षे लाङ्गलीवृक्षे च। अग्नितुल्याग्रवति त्रि॰।

**अग्निष्टोम** पु॰ अग्नेः स्तोमं स्तु मन् षत्वम्। यागविशेषे।

**अग्निष्ठ** पु॰ अग्नौ स्थातुमर्हति स्था-क षत्वम्। वह्नौ स्थिति-योग्ये लौहमये कटाहादिपात्रे।

अग्निसम्भव पु० अग्नेः सम्भवति भू अच् । अरण्यकुसुम्भे । अग्निसम्भूतमात्रे त्रि० ।

अग्निसहाय पु० अग्निना सह अयते अय-अच् । वायौ, अग्निसहायधूमवद्वेगवत्त्वात् धूम्रगतिलाभ वनकपोते च ।

अग्निसार न० अग्नौ सारो यस्य अत्यन्ताग्नितापनेऽपि सारांशादहनात् । रसाञ्जने । अग्नेर्मध्ये तु अस्त्री० ।

अग्निष्वात्त (ष्वात्त) पु० ब०व० अग्नितः (श्राद्धीयविप्रकरणपाग्नेः) सुष्ठु आत्तं स्वदनं येषां आ-दा-क्त सत्वमिति बहुवः । मरीचिसुते पितृगणविशेषे ।

अग्निहोत्र पु० अग्नौ-हूयतेऽत्र हु-त्र । मन्त्रकरणकवह्निस्थापनपूर्व्वकहोमादौ । अग्निहोत्रसंबन्धित्वात् वह्नौ च ।

अग्निहोत्रिन् त्रि० अग्निहोत्र+इनि । अग्निस्थापनपूर्व्वके सायंप्रातरादिकाले होमकर्त्तरि साग्निके ।

अग्नीध् पु० अग्निरिध्यतेऽनेन अग्नि इन्ध-क्विप् । अग्निप्रज्वालनमन्त्रे ।

अग्नीध्र पु० अग्निरिध्यतेऽनेन कर्त्तो अग्नि-इन्ध-रक् । अग्नि-रक्षणकारके ब्रह्मापरपर्य्याये ऋत्विग्भेदे । अग्निं धारयत्यत्र अग्निध्र इत्यपि ष्ट-क । अग्निकुण्डे, होमादौ च ।

अग्नीन्धन त्रि० अग्निरिध्यतेऽनेन अग्नि-इन्ध-ल्युट् । मन्त्रभेदे । स्त्रियां टित्त्वात् ङीप् । भावे ल्युटि । अग्निकर्म्मणि न० ।

अग्न्याधान न० अग्नेराधानम् आ-धाञ्-ल्युट् ६त० । वेदमन्त्रद्वारा वह्निस्थापने । बहु० । अग्निहोत्रयागे ।

अग्न्यालय पु० अग्नेरालयः अग्नि-आ-ली-अच् ६त० । वेदमन्त्रद्वारा वह्निस्थापनयोग्ये स्थले, तदाधारे-कुण्डे, स्थण्डिले च ।

अग्न्याहित पु० अग्निराहितो येन अग्नि-आ-धाञ् कर्म्मणि क्त, वा परनिपातः । अग्निहोत्रिणि साग्निके ।

अग्न्युत्पात पु० अग्निना कृत उत्पातः (अनिष्टसूचकोपद्रव) उत्-पत-घञ् ३त० । आकाशस्थाग्निकृतविकारसूचितोपद्रवे, उल्कापाताद्युपद्रवे, धूमकेतुकृतविकारे च ।

अग्न्युपस्थान त्रि० अग्निरुपस्थीयतेऽनेन अग्नि उप-स्था ल्युट् । वह्न्युपस्थानमन्त्रे । स्त्रियां ङीप् । ६त० । वह्न्युपस्थाने न० ।

अग्र न० अङ्ग-रक् नलोपः । उपरिभागे, शेषभागे, आलम्बने, पूर्व्वभागे, पलपरिमाणे, समूहे च । प्रधाने, अधिके, प्रथमे च त्रि० ।

अग्रकाय अस्त्री० अग्रः-कायः अवयवावयविनोरभेदात् अग्रहस्तवत् कर्म्म० । देहपूर्व्वभागे ।

अग्रग त्रि० अग्रे गच्छतीति अग्र-गम-ड । प्रथमगामिनि । स्त्रियामग्रगा । [प्रधाने च ।

अग्रगण्य त्रि० अग्रे गण्यते अग्र-गण यत् ७त० । अग्रगणनीये,

अग्रगामिन् त्रि० अग्रे गच्छति अग्र-गम-णिनि ७त० । अग्रसरे । स्त्रियामग्रगामिनी ।

अग्रज पु० अग्रे जायते अग्र जन-ड । ज्येष्ठभ्रातरि । अग्रजातमात्रे त्रि० । ज्येष्ठभगिन्यां स्त्री० ।

अग्रजङ्घा स्त्री० अग्रा जङ्घा अवयवावयविनोरभेदात् कर्म० । जङ्घाग्रभागे ।

अग्रजन्मन् पु० अग्रे जन्म यस्य अग्र जन् मनिन् व्यधि० बहु० । ज्येष्ठभ्रातरि, विप्रे च । अग्रजातमात्रे त्रि० ।

अग्रजात पु० अग्रे जातः अग्र-जन् क्त ७त० । ज्येष्ठभ्रातरि, विप्रे च । ज्येष्ठभगिन्यां स्त्री० । पूर्व्वजातमात्रे त्रि० ।

अग्रजाति पु० अग्रा श्रेष्ठा जातिर्यस्य, अग्र-जन-क्तिन् । विप्रे ।

अग्रजिह्वा स्त्री० अग्रा जिह्वा अग्रहस्तवत् क० । जिह्वाग्रभागे । [श्रेष्ठे च ।

अग्रणी त्रि० अग्रे नीयतेऽसौ अग्र नी क्विप् णत्वम् । प्रभौ

अग्रतस् अव्य० अग्रे अग्राद्वा अग्र-तसिल् । पूर्व्वभागे, पूर्व्वभागावधिके च । [अग्रगामिनि । स्त्रियां ङीप् ।

अग्रतःसर त्रि० अग्रतः सरति गच्छति अग्रतस् सृ-ट ७त० ।

अग्रदानिन् पु० अग्रे दानं यस्य अग्र-दान+इनि । प्रेतोद्देशेन यद्दानं दीयते तत्प्रतिग्राहिणि अग्रदानीति ख्याते विप्रे ।

अग्रनख अस्त्री० अग्रं नखं अग्रहस्तवत् क० । नखाग्रे ।

अग्रनासिका स्त्री० अग्रा नासिका अग्रहस्तवत् क० । नासिकाग्रभागे । [शीति ख्याते वृक्षे ।

अग्रपर्णी स्त्री० अग्रे पर्णं यस्याः जातित्वात् ङीप् । आल्कु-

अग्रभाग पु० भज्यते इति भागः एकदेशः अग्रः पूर्व्वः भागः भज-घञ् क० । श्राद्धादौ प्रथममुद्धृत्य देये द्रव्ये अवयवस्य अग्रदेशे च । यथा शरस्य शल्याग्रम् ।

अग्रभुक् त्रि० अग्रे देवपित्रादिभ्योऽदत्त्वा भुङ्क्ते अग्र-भुज-क्विप् । औदरिके ।

अग्रमांस न० अग्रं प्रधानं भक्ष्यत्वेन मन्यते मन्-स, दीर्घः क० । हृदयस्थे पद्माकारे (कुलका) इति नामके मांसे । केचित् व्यक्ताग्रमांसमेकं नाभिमाहुः । अग्रमांस इति प्रसिद्धे रोगभेदे च ।

अग्रमुख न० अग्रं मुखं अग्रहस्तवत् क० । मुखाग्रे ।

अग्रयान न० अग्रे यानं यस्य या-ल्युट् संज्ञात्वेऽग्रयाणम् । पुरोगामिनि सैन्ये । अग्रगामिमात्रे त्रि० ।

**अग्रलोहिता** स्त्री० अग्रमात्रपरिभागः लोहितं यस्याः ब० । चिल्लीति प्रसिद्धे शाकभेदे ।

**अग्रवीज** पु० अग्रं शाखाग्रं वीजमुत्पादकं यस्य । छिन्नाग्रतरुखण्डरूढे कलम इति प्रसिद्धे काण्डजाते कुरण्टकादिवृक्षे

**अग्रसन्धानी** स्त्री० अग्रे फलोत्पत्तेः प्राक् सन्धानं कार्य्यस्य ज्ञानं यस्या ङीप् । यमपञ्जिकायाम् । यत्र हि प्राणिवर्गस्य भागभवीयकर्म्मानुसारेण शुभाशुभसूचनं सर्व्वं लिख्यते सा यमपञ्जिका, कैश्चित् यमपट्टिकेति सा कथ्यते । अग्र-सन्धानकारिणि तु त्रि० ।

**अग्रसन्ध्या** स्त्री० अग्रं सन्ध्यायाः सर्व्वोऽप्येकदेशः कालभाविना समस्यते इत्युक्तेः एकदेश० । सन्ध्यापूर्व्वसमये, अथवा पूर्व्वा सन्ध्या इति क० । प्रातःसन्ध्यायाम् ।

**अग्रसर** त्रि० अग्रे सरति गच्छति अग्र-सृ-ट ७त० । अग्र-गामिनि । स्त्रियां ङीप् ।

**अग्रह** पु० ग्रह (परिग्रह) न०त० । परिग्रहाभावे । बहु० । परिग्रहशून्ये सन्यासिप्रभृतौ त्रि० ।

**अग्रहर** पु० अग्रे ह्रियते दीयतेऽसौ अग्र हृ अच् । अग्रदेये वस्तुनि, भागाग्रे च । अग्र-हृ-ट । अग्रहारिणि तु त्रि० ।

**अग्रहस्त** पु० अग्र हस्तः अवयवावयविनोरभेदात् क० । हस्ताग्रे ।

**अग्रहायण:** अस्त्री० हय ब्रीहिकालयोरिति कावे वाच्ये हा-ल्युट् युक् च भाव स्वभावं जहाति हायनो वर्ष अग्र पूर्व्वं हायन क० णत्वम् । मार्गशीर्षे मासि तस्य च वर्षादित्वम् अमरकोषादौ मार्गादिमारभ्य कार्त्तिकान्त मासकीर्त्तनात् स्पष्टमवगतम् ।

**अग्रहायणी** स्त्री० अब्दानि जहातीति हायनो ब्रीहि० अग्राः श्रेष्ठा हायना शालयो यस्यां संज्ञात्वात् णत्वं गौरादि-त्वात् ङीप् । मृगशीर्षनक्षत्रे । तस्य च नक्षत्रस्य रात्रौ प्रथमसुदयकाले श्रेष्ठब्रीहीणां धान्यानामुत्पत्तिर्लोके दृश्यते । तत्र नक्षत्र सौराग्रहायणे मासि रात्रौ प्रथममुदेति ।

**अग्रहार** पु० अग्रे ह्रियतेऽसौ हृ-घञ् । अग्रहरे (पूर्व्वोक्तेऽर्थे) ब्रह्मचारिणे देये क्षेत्रादौ च । अग्र हृ अण् । अग्रहा-रिणि त्रि० । स्त्रियां ङीप् ।

**अग्राह्य** त्रि० न-ग्रह-ण्यत् । ग्रहणायोग्ये शिवनिर्म्माल्यादौ प्रतिग्रहायोग्ये तिलादस्वर्णादौ च ।

**अग्रिम** पु० अग्रे भव अग्र+डिमच् । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे च त्रि० । [च त्रि० ।

**अग्रिय** पु० अग्रे भव अग्र+घ । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे

**अग्रीय** पु० अग्रे भवः अग्र+छ । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे च त्रि० । [गामिनि ।

**अग्रेगा** त्रि० अग्रे गच्छति अग्र-गम-क्विप् अलुक्स० । अग्र

**अग्रेगू** त्रि० अग्रे गच्छति अग्रे-गम-डू+अलुक्स० । अग्रसरे-सेवके ।

**अग्रेदिधिषू** पु० दिधिं धैर्य्यं स्यति निरस्यति, दिधिषूः द्विरूढा पुनर्भूः योषित् दिधि-सो-कू-षत्वम् अग्रे प्रधाना दिधिषूर्यस्य अलुक्स० कप्भावाच्छसत्वे । पुनर्भूविवाहकारिणि । निपा तनात् अस्य ह्रस्वान्ततापीष्यते । अनूढकनिष्ठभगिन्या अनूढ-ज्येष्ठभगिन्यां च । ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽ-नुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृतेति मनूक्तेः । एतत्पक्षे च अग्रे स्वविवाहात् पूर्व्वं दिधिषू ज्येष्ठाविवाहकालासहनरूपधैर्य्यलोपकारिणी अनुजा यस्य इति विग्रहः ।

**अग्रेवण** न० अग्रे वनस्य ७त० अलुक्स० णत्वञ्च । वनाग्रदेशे

**अग्रेसर** त्रि० अग्रे सरति गच्छति अग्रे सृ-ट अलुक्स० ७त० अग्रगामिनि स्त्रियां ङीप् । [च त्रि०

**अग्र्य** पु० अग्रे भवः अग्र+यत् । ज्येष्ठभ्रातरि । प्रधाने श्रेष्ठे

**अघ** इदित् गतौ भ्वादि० आत्मने० सक० सेट् । अङ्घते । आङ्घिष्ट

**अघ** पापकरणे अदन्तचुरादि० उभय० । अघयति-ते ।

**अघ** न० चुरा० अघ अच् । पापे, व्यसने, दुःखे च ।

**अघमर्षण** त्रि० अघं पापं मृष्यतेऽनेन अघ-मृष ल्युट् । सर्व्व पापनाशार्थे जप्ये मन्त्रादौ । स्त्रियां ङीप् ।

**अघोर** पु० घुण-घोर । न घोरः (शान्तः) न०त० । महादेवे । घोरभिन्ने त्रि० । भाद्रकृष्णचतुर्द्दश्यान्तु स्त्री० ।

**अघोष** पु० घुष-घञ् न० त० । वर्णोच्चारणबाह्यप्रयत्नविशेषे । स च वर्गाणां प्रथमद्वितीयाः शषसाः विसर्गः जिह्वामूलीयोपध्मानीयौ च । एते वाह्यप्रयत्नाः अघोषाख्ये विवृण्वते इति शिक्षोक्तो दिशा खयादिवर्णानामुच्चारणप्रयत्ने ।

**अघ्न्य** पु० न हन्ति स्रष्टिकर्त्तृत्वात् न-हन-यक् निपातनात् साधु । प्रजापतौ । न हन्यते स्त्रीहत्याया निषिद्धत्वात् । स्त्रियां गवि तु स्त्री० ।

**अङ्क** (नक) संख्याकरणे चिह्नयुक्तकरणे अदन्तचुरादि० उभ० सक० सेट् । अङ्कयति ते आङ्किक-त्-त । अंहापयति ते इति केचित् ।

**अङ्क** पु० अङ्क-घञ् । दृश्यकाव्यविशेषे अङ्क इति प्रसिद्धे नाट कपरिच्छेदे, पर्व्वते, चिह्ने, रेखायां, युद्धभूषणे, समीपे च । क्रोडे तु अस्त्री० ।

**अङ्कति** पु० अन्च-(गतौ) अति कुत्वम् । वाते । पूजनार्थत्वे कर्म्मणि अति । ब्रह्मणि अग्नौ च । अग्निहोत्रिणि त्रि० । स्त्रियाम् अङ्कती च ।

**अङ्कन** त्रि० अङ्क-ल्युट् । अङ्कनसाधनद्रव्ये दागनीति प्रसिद्धे स्त्रियामङ्कनी । चिह्नकरणमात्रे न० ।

**अङ्कपालि** (ली) स्त्री० पा अलि अङ्क-पालि इत० वा ङीप् । क्रोडप्रान्ते । अङ्केन पालयतीति अङ्क-पालि-इ । उपमातरि (धाइमा) इति प्रसिद्धायाम् । अङ्कस्य पालिरिव त० । आलिङ्गने च ।

**अङ्कपालिका** स्त्री० अङ्कपालि+क । धात्र्याम्, वेदिकायां, क्रोडप्रान्तभागे, आलिङ्गने च ।

**अङ्कस्** न० अनञ्ज-असुन् कुत्वम् । चिह्ने, शरीरे च ।

**अङ्कित** त्रि० अङ्क-क्त । चिह्निते, चित्रिते, कृतसंख्यायाञ्च ।

**अङ्किन्** त्रि०अङ्क (आलिङ्गनस्थानत्वेन) अस्यास्ति अङ्क+इनि । अङ्केनालिङ्ग्य-मृदङ्गादिवाद्यभेदे, क्रोडविशिष्टे च । स्त्रियामङ्किनी ।

**अङ्कुर** अस्त्री० अङ्क उरच् । बीजादभिनवोत्पन्ने, मृत्तिकाम् छित्त्वा जाते च तृणवृक्षादौ, जले च । शोणितमुत्पद्यते इति साधर्म्यात् रुधिरे, लोम्नि च ।

**अङ्कुरक** पु० अङ्क्यते यत्नेन सङ्गोप्यतेऽसौ अनुच-उरच् तत क । पक्ष्यादीनां वासस्थाने वासा इति ख्याते ।

**अङ्कुश** अस्त्री० अङ्क उशच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहास्त्रभेदे डाङश इति ख्याते ।

**अङ्कुशदुर्द्धर** पु०दु खेन धार्य्यते व्यवस्थाप्यते दुर्-धारि खल् हस्त अङ्कुश-दुर्द्धर ३त० । दुर्दान्तहस्तिनि ।

**अङ्कूर** पु० अङ्क-खर्जूरादित्वात् ऊरच् । अभिनवोत्पन्ने तृणवृक्षादौ । [लोहमयेऽस्त्रभेदे ।

**अङ्कूष** अस्त्री० अङ्क ऊषच् । हस्तिचालनोपयोगिनि वक्राग्रे

**अङ्कोट** (ठ) (ल) पु० अङ्क्यते लक्ष्यते कीलकैः । अङ्क ओट (ओठ) (ओल) । पीतवर्णसारे गन्धयुक्तपुष्पे दीर्घकण्टकयुक्ते रक्तवर्णफले आकोड इति ख्याते वृक्षे ।

**अङ्कोलक** पु० अङ्कोल+क । आकोड इति ख्याते वृक्षे ।

**अङ्कोलसार** पु० अङ्कोलस्य सार इत० । अङ्कोटवृक्षजाते विषभेदे ।

**अङ्कोलिका** स्त्री० अङ्क-वल् अच् सम्प्रसारणं अङ्कोला+क । आलिङ्गनक्रियायाम् ।

**अङ्क्य** पु० अङ्के क्रोडे स्थापयित्वा वाद्यतेऽसौ अङ्के साधु अङ्क-यत् । मार्द्दङ्गिकसवाद्यभेदे मृदङ्गे । हरीत-

क्याकृतिर्यं स्यादङ्क्योऽङ्के स हि वाद्यते इत्युक्ते क्रोडे स्थापनपूर्व्वकं वादनीये मृदङ्गादौ । अङ्कनीये त्रि० ।

**अङ्ग** चिह्नयुक्तकरणे अदन्तचुरादि उभय० सकर्म्मक० सेट् अङ्गय ति ते आञ्जिग-त् त । मतान्तरे अङ्गापयति ते ।

**अङ्ग** न० अङ्ग-अच् । देहे, अवयवे, अप्रधाने, उपाये, मनसि च ।

**अङ्गग्रह** पु० अङ्ग-ग्रह इत० । देहवेदनायाम् ।

**अङ्गज** न० अङ्गात् जायते अङ्ग जन-ड । रुधिरे । पुत्रे, रोमे च पु० । देहजातमात्रे त्रि० ।

**अङ्गण** (न) न० अङ्ग्यत्र अङ्ग ल्युट् पृषोदरादित्वात् वा णत्वम् । (उठान) इति प्रसिद्धे प्राङ्गणे ।

**अङ्गति** पु० अनक्ति यात्यनेन करणेन । अनञ्ज-अति कुत्वम् । वाहने । अज्यते पूज्यते कर्म्मणि अति । ब्रह्मणि, अग्नौ च । अग्निहोत्रिणि त्रि० । स्त्रियाम् अङ्गती च ।

**अङ्गद** न० अङ्गं दायति शोधयति दै-क । ताड्, वाजु इति च प्रसिद्धे वाहुभूषणे । वालिपुत्र-वानरे पु० । अङ्गदानकर्त्तरि त्रि० । दक्षिणदिग्गजकरिण्यां स्त्री० ।

**अङ्गना** स्त्री० प्रशस्तमङ्गमस्ति यस्याः अङ्ग+न । अङ्गसौष्ठववत्यां योषिति, योषिन्मात्रे, उत्तरदिग्गजकरिण्याञ्च ।

**अङ्गनाप्रिय** पु० प्री-क अङ्गना-प्रिय इत० । अशोकवृक्षे तत्पुष्पेण स्त्रियः स्वाङ्गं भूषयन्तीति । योषित्प्रियमात्रे तु त्रि० । [आलिङ्गने ।

**अङ्गपालि** स्त्री० अङ्गं पाल्यते सम्बध्यतेऽत्र अङ्ग-पाल-इ ।

**अङ्गपालिका** स्त्री० अङ्गं देहं पालयतीति अङ्गपालि-ण्वुल् । धाइमा इति ख्यातायाम् उपमातरि । अङ्गपालनकारके त्रि० ।

**अङ्गमर्द्द** पु० अङ्गं मर्द्दयति संवाहयति अङ्ग-मर्द्द-णिच् अण् । देहसंवाहके-सेवके । अङ्गमर्द्दनकारके त्रि० ।

**अङ्गमर्द्दक** पु० अङ्गं मर्द्दयति अङ्ग-मर्द्द-णिच् ण्वुल् । देहसंवाहके-सेवके ।

**अङ्गमर्द्दिन्** पु० अङ्गं मर्द्दयति अङ्ग-मर्द्द-णिच्-णिनि । अङ्गमर्द्दके सेवके । अङ्गमर्द्दनकारके त्रि० स्त्रियां ङीप् ।

**अङ्गरक्त** पु० अङ्गेन रक्त रन्ज क्त ३त० । कम्पिल्लदेशजातेरक्तवर्णचूर्णवति-गुडारोचनीति वाणिजेषु वैद्येषु च प्रसिद्धे वृक्षभेदे । रक्ताङ्गमात्रे त्रि० ।

**अङ्गरक्षणी** स्त्री० अङ्गं रक्ष्यतेऽनया अङ्ग-रक्ष-ल्युट् ङीप् । आङ्राखा इति प्रसिद्धे वस्त्रे । अङ्गरक्षणकारके त्रि० ।

**अङ्गराग** पु० अङ्गं रज्यतेऽनेन अङ्ग रन्ज-करणे घञ् । अङ्गलेपने कुङ्कुमादौ । भावे घञ् । अङ्गस्य विलेपने ।

**अङ्गराज्** पु० अङ्गेषु तन्नामकदेशेषु राजते राज-क्विप् ७त०। अङ्गदेशाधिपे कर्णे।

**अङ्गज** न० अङ्गे स्वावयवे याति अन्तर्भवति अविशेषणात् अङ्गं च ताङ्गमिव भवति अङ्ग-या-ड। गुम्फफले।

**अङ्गविकृति** पु० वि-कृ-क्तिन् अङ्गस्य विकृतिश्चालनादि-र्यस्मात् ५त०। मृगीव्याधि इति ख्याते अपस्माररोगे। ६त०। अङ्गस्य विकारे स्त्री०।

**अङ्गविक्षेप** पु० वि-क्षिप-घञ् अङ्गस्य विक्षेप चालनं यत्र ब०। अङ्गुल्यादिविन्यासभेदेन लिंशद्विधे नृत्ये। ६त०। अङ्गस्य चालनमात्रे।

**अङ्गवैकृत** न० विकृतस्य भावः विकृत+अण् अङ्गेन अङ्ग-चेष्टया वैकृतं हृदयभावो ज्ञायते यत्र बहु०। आकार इति ख्यातायाम्-हृदयगतभावावेदकचेष्टायाम्। ६त०। अङ्गस्य विकारे न०।

**अङ्गस्** पु० अन्ज-असुन् कुत्वञ्च। पक्षिणि इत्युज्ज्वलदत्तः।

**अङ्गसंस्कार** पु० अङ्गं संस्क्रियतेऽत्र अङ्ग-सम्-कृ आधारे घञ्। देहसंशोधनादिसंस्कारकारके स्नाने गोधूमचूर्णा-दिनाङ्गमर्द्दने च। भावे घञ् ६त०। अङ्गस्य संस्कारे विलेपनादौ। अङ्गं संस्करोति अङ्ग-सम्-कृ-कर्त्तरि-अण्। कुङ्कुमादौ त्रि०।

**अङ्गहार** पु० अङ्गं ह्रियते चाल्यतेऽत्र अङ्ग-हृ आधारे घञ्। अङ्गुल्यादिविन्यासभेदेन त्रिंशद्विधे नृत्ये। भावे घञ् ६त०। अङ्गस्य हरणमात्रे।

**अङ्गाङ्गिभावः** पु०अङ्गस्य अङ्गिनश्च भावः। गौणमुख्यभावे।

**अङ्गाधिप** पु० अधि पा-क अङ्ग-अधिप ६त०। अङ्गदेशपतौ कर्णे। अत्र अङ्गाधिपतिरित्यपि।

**अङ्गार** पु०स्त्री० अङ्ग-आरन्। अर्द्धदग्धे-अग्निसंक्रान्ते अग्निशून्ये वा आङार इति प्रसिद्धे-काष्ठखण्डे। मङ्गल ग्रहे पु०। रक्तवर्णे त्रि०।

**अङ्गारक** पु० अङ्गार+स्वार्थे क। रक्तवर्णत्वात् मङ्गलग्रहे, कुरण्टकवृक्षे, भीमराज इति ख्याते-भृङ्गराजवृक्षे च। अल्पार्थे क। स्फुलिङ्ग इति विख्याते-अङ्गारक्षुद्रांशे।

**अङ्गारक** न० तैलमङ्गारकं नाम सर्वज्वरविनाशनमिति वैद्यकपरिभाषिते तैलविशेषे।

**अङ्गारकमणि** पु०स्त्री० अङ्गारकस्य मणिः ६त०। प्रवाले तस्य मङ्गलग्रहप्रीतिकरत्वस्य ज्योतिषे प्रसिद्धिः।

**अङ्गारधानिका** स्त्री० अङ्गाराणि धीयन्तेऽस्याम् अङ्गार-धा-आधारे ल्युट् टित्वात् ङीप् ततः स्वार्थे कप् टाप्। अङ्गा-राधारे (आङ्टा) इति (धुनची) इति च प्रसिद्धे पात्रभेदे।

**अङ्गारपरिपाचित** न० अङ्गारे (ज्वलदग्निव्याप्तकाष्ठखण्डे) परिपाच्यते परि-पच स्वार्थे णिच् क्त। कावाव इति प्रसिद्धे-पक्वमांसादौ।

**अङ्गारपुष्प** पु० अङ्गारमिव लोहितवर्णं पुष्पं यस्य ब०। जियापुति, इति ख्याते इङ्गुदीवृक्षे।

**अङ्गारमञ्जरी** स्त्री० अङ्गारमिव रक्तवर्णा मञ्जरी यस्याः ब० समासान्तकबभावाद्ध्रस्वत्वे संज्ञात्वात्। रक्तवर्णे-(करमचा) इति ख्याते करञ्जवृक्षे।

**अङ्गारवल्ली** स्त्री०अङ्गारमिव रक्तफलत्वात् रक्ता वल्ली क०। रक्तवर्णफलवत्यां-कुँच इति प्रसिद्धायाम्,-गुञ्जालतायां करञ्जवृक्षे च।

**अङ्गारशकटी** स्त्री० शक्नोति वोढुं शकटम्, अल्पं शकटं, शकटी,तस्यादिवत् अल्पार्थे ङीप् अङ्गारस्य शकटी ६त०। (आङ्टा) धुनाचीति च प्रसिद्धे अङ्गाराधारे पात्रभेदे।

**अङ्गारि** स्त्री०अङ्गार+मत्वर्थे इनु पृषोदरादित्वात् कलोपः। अङ्गाराधारे आङ्टा इति प्रसिद्धे पात्रविशेषे।

**अङ्गारिका** स्त्री० अङ्गारं विद्यतेऽस्याः अङ्गार+मत्वर्थे ठन् टाप्। आङ्टा इति ख्याते अङ्गारपात्रे।

**अङ्गारिणी** स्त्री०अङ्गार+इनि। अङ्गारधानिकायां (आङ्टा इति ख्यातेपात्रे)। अङ्गारवति त्रि०।

**अङ्गारित** पु० अङ्गारमिवाचरतीति अङ्गार+क्विप् ततः कर्त्तरि क्त। पलाशकलिकोद्गमे। अङ्गारं करोतीत्यर्थे णिचि क्त। दग्धमात्रे त्रि०।

**अङ्गिका** स्त्री० अङ्गम् आच्छादयति अङ्ग+इनि-के स्त्रियां टाप्। आङ्राखा इति प्रसिद्धे कञ्चुकवस्त्रे।

**अङ्गिन्** त्रि० अङ्ग+इनि। प्रधाने,अवयवविशिष्टे, देहवति च।

**अङ्गिरस्** पु० अङ्ग-असि इरागमः। स्वनामख्याते ऋषिभेदे ब्रह्मणोमुखजाते पुत्रे।

**अङ्गीकार** पु०अनङ्गम् अङ्गकीयम् अङ्गं क्रियते अङ्ग च्वि-कृ-घञ्। स्वीकारे अभ्युपगमे।

**अङ्गीकृत** त्रि० अङ्ग-च्वि-कृ कर्मणि क्त। अभ्युपगते स्वीकृते

**अङ्गुरि (री)** स्त्री० अङ्ग-उलि-रलयोरेकत्व स्मरणात् रत्वम्। आङुल इति प्रसिद्धायाम् हस्तपादशाखायाम् वा ङीप् अङ्गुरीमोरगमयतेति रघुः।

**अङ्गुरीय** न० अङ्गुरौ भवम् अङ्गुलि-छ। बाहुमूलादित्वात् वा रत्वम्। अङ्गुलिभूषणे आङटीति प्रसिद्धे।

**अङ्गुरीयक** न० अङ्गुलौ भवम् अङ्गुलि-छ। बाहुमूलादित्वात्

वा रत्ने स्वार्थे क । अङ्गुलिभूषणे आङ्गुटीति ख्याते ।

**अङ्गुल** पु॰ अङ्ग-उल । हस्तपदशाखायां आंगुल इति ख्यातायाम् वात्स्यायनमुनौ अङ्गुष्ठे च । यवोदरैरङ्गुलमष्टसंख्यै-रिति भास्कराचार्य्योक्तेः अष्टयवोदरपरिमाणे तु न॰ ।

**अङ्गुलि (ली)** स्त्री॰ अङ्ग-उलि । हस्तपदशाखायाम् आङ्गुल इति ख्यातायाम् । वा ङीपि अङ्गुली च । हातशुंडा इति ख्याते गजकर्णिकारवृक्षे च ।

**अङ्गुलितोरण** न॰ अङ्गुल्याः तोरणमिव कृतम् । चन्दनादि-द्वारा कृते ललाटस्थार्द्धचन्द्राकारतिलके ।

**अङ्गुलित्र** न॰ अङ्गुलिं त्रायते अङ्गुलि+त्रै-क । चामाटीति प्रसिद्धे ज्याकर्षणकृतखेदवारणार्थम् अङ्गुलिबद्धे चर्म्मणि बद्धगोधाङ्गुलित्र इति भट्टिः ।

**अङ्गुलित्राण** न॰ अङ्गुलिस्त्रायतेऽनेन त्रै-क ६त॰ । चामा-टीति प्रसिद्धे ज्याकर्षणजनखेदनिवारणार्थम् अङ्गुलिबद्धे चर्म्मणि ।

**अङ्गुलिमुद्रा** स्त्री॰ अङ्गुल्या मुदं राति अङ्गुलि+मुद रा-क ६त॰ । धारयितुर्नामाक्षरमुद्रासहिते आङ्गुटीति प्रसिद्धे अङ्गुलीभूषणे ।

**अङ्गुलिमोटन** न॰ अङ्गुल्योर्मोटनं मर्दनं यत्र ब॰ । अङ्गुलि-द्वयमर्दनजाते तुडि इति प्रसिद्धे शब्दे ।

**अङ्गुलिषङ्गा** स्त्री॰ अङ्गुलौ सङ्गो यस्याः षत्वम् ब॰ । (याउ) इति प्रसिद्धे अङ्गुलिसंलेपकारके यवागूद्रव्ये ।

**अङ्गुलिसन्देश** पु॰ अङ्गुल्या अङ्गुलिध्वनिना सन्दिश्यते सं-दिश-घञ् । अङ्गुलिध्वनिद्वारा समादाने, अङ्गुलिस्फोट-नमात्रेऽपि ।

**अङ्गुलिस्फोटन** न॰ अङ्गुल्योः स्फोटनं ताडनं यत्र ब॰ । (तुड़ि) इति प्रसिद्धे अङ्गुलिद्वयमर्दनजाते शब्दे ।

**अङ्गुलीपञ्चक** न॰ अङ्गुलीनां पञ्चकम् पंञ्चसंख्या । हस्तस्थाना-मङ्गुलीनां समुदाये ताश्च अङ्गुष्ठतर्ज्जनीमध्यमानामिका कनिष्ठानामिका॰ । [प्रसिद्धे अङ्गुलिभूषणे ।

**अङ्गुलीयक** न॰ अङ्गुरीयकवत् वा रत्वाभावः । आंगुटीति

**अङ्गुलीसम्भूत** पु॰ अङ्गुलौ सम्भूतः सम्-भू-क्त ७त॰ । नखे । अङ्गुलिसम्भूतमात्रे त्रि॰ ।

**अङ्गुष्ठ** पु॰ अङ्गौ पाणौ प्राधान्येन तिष्ठति अङ्गु-स्था-क अम्बा-म्बेत्यादिना षत्वम् । वृद्धाङ्गुलौ । अम्बाम्बेति सूत्रेऽङ्गुशब्द-प्रयोगात् अङ्गुशब्दोऽपि हस्तवाचीति ज्ञापितम् ।

**अङ्गुष्ठमात्र** त्रि॰ अङ्गुष्ठ+परिमाणार्थे मात्रच् । अङ्गुष्ठमध्य-पर्व्वपरिमिते । अङ्गुष्ठमात्रोऽह्यवरोऽपि दृष्ट इति श्रुतौ ।

**अङ्घ्रूष** पु॰ अङ्घ-ऊष । नकुले पापे च ।

**अङ्घस्** न॰ अङ्घ-असि । पापे ।

**अङ्घ्रि** पु॰ अघि गतौ ह । चरणे वृक्षमूले च ।

**अङ्घ्रि** पु॰ अघि गतौ क्रि । चरणे वृक्षमूले च ।

**अङ्घ्रिप** पु॰ अङ्घ्रिणा मूलेन पिबति सिक्तजलादिकम् पा-क ३त॰ । वृक्षमात्रे ।

**अङ्घ्रिपर्णिका** स्त्री॰ अङ्घ्रौ मूले अङ्घ्रेरारभ्य वा पर्णमस्याः ब॰ जातित्वात् ङीप् ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति ख्याते वृक्षे । अङ्घ्रिपर्ण्यपि नाम ।

**अङ्घ्रिवल्लिका** स्त्री॰ अङ्घ्रेरारभ्य वल्लीव पर्णवत्त्वेन ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति प्रसिद्धे वृक्षे । अङ्घ्रिवल्लीत्यपि नाम ।

**अच** अविस्पष्टकथने उभय॰ भ्वादि॰ सक॰ सेट् । अचति ते । आचीत् आचिष्ट ।

**अच** पूजने गतौ च इदित् पर॰ भ्वादि॰ सक॰ सेट् । अञ्चति आञ्चीत् आनञ्च । अच्यात् गतौ तु अंच्यात् ।

**अच** अव्यक्तकथने इदित् उभय॰ भ्वादि॰ सक॰ सेट् । अञ्च-ति ते । आञ्चीत् आञ्चिष्ट । [चक्षुर्भिन्ने न॰ ।

**अचक्षुस्** त्रि॰ चक्ष-उसि ब॰ । मन्दनेत्रे नेत्रहीने च । न॰त॰ ।

**अचण्डी** स्त्री॰ चडि कोपने अच् गौरादित्वात् ङीष् न॰ त॰ । शान्तस्वभावायां गवि । कोपनभिन्ने त्रि॰ ।

**अचर** न॰ न चरति चलति-चर-अच् न॰ त॰ । स्थावरे स्थितिशीले पृथिव्यादौ चराणामन्नमचरमिति मनुः । चलनशून्ये त्रि॰ ।

**अचल** पु॰ न चलति चल-अच् न॰त॰ । पर्व्वते, गोंज इति ख्याते शङ्कौ, शिवे, ब्रह्मणि च । पृथिव्यां स्त्री॰ । चलनशून्ये त्रि॰ ।

**अचलत्विष्** पु॰ अचला शतधा प्रक्षालनेनापि मालिन्या-नपगमात् स्थिरा त्विट् कान्तिर्यस्य ब॰ । कोकिले । स्थिर-कान्तिमति त्रि॰ । कर्म्म॰ । स्थिरायां कान्तौ स्त्री॰ ।

**अचिन्त्य** न॰ चिन्ति-कर्म्मणि यत् न॰त॰ । चिन्तयितुमियत्तया परिच्छेत्तुमशक्ये परमब्रह्मणि । चिन्तयितुमशक्ये वस्तुमात्रे त्रि॰ । अचिन्त्याः खलु ये भावा इति स्मृतौ ।

**अचिर** न॰ चि-रक् न॰त॰ । अल्पकाले । अल्पकालस्था-यिनि द्रव्यमात्रे त्रि॰ ।

**अचिरद्युतिः** स्त्री॰ अचिरा अल्पकालस्थायिनी द्युतिर्यस्याः ब॰ । विद्युति । अल्पकालस्थायिद्युतिमति त्रि॰ । कर्म्म॰ । अल्पकालस्थायिन्यां कान्तौ स्त्री॰ ।

**अचिरप्रभा** स्त्री० प्रभा अह्न अचिरा अचिरस्थायिनी प्रभा यस्याः ब० । विद्युति । च्युता दिव स्थाष्णुरवा चरप्रभेति भट्टिः । अल्पकालस्थायिप्रभावति त्रि० । कर्म्म० अचिरायां दीप्तौ स्त्री० ।

**अचिररोचिस्** स्त्री० अचिरं रोचिर्यस्याः ब० । विद्युति । अचिरप्रभावति त्रि० । कर्म्म० । अचिरप्रभायाम् न० ।

**अचिरांशु** स्त्री० अचिरा अंशवोऽस्याः ब० । विद्युति । अल्पकालस्थायिकिरणवति त्रि० । कर्म्म० । अचिरकिरणे पु० ।

**अचिरात्** अव्य० अचिर अवयवेऽपि क्विप् । शीघ्रे, अविलम्बे च ।

**अचिराभा** स्त्री० अचिरप्रभावत् । आ-भा-अङ् । विद्युति

**अचेतन** त्रि० चित णिच्-युच् चेतना ज्ञानम् ब० । चेतनाशून्ये । चित-ल्यु न०त० । ज्ञानविशिष्टभिन्ने ।

**अचेतस्** त्रि० चित-असि ब० । विवेकशून्ये, दुष्टचित्ते, चित्तशून्ये च । अव्ययी० । चित्ताभावे अव्य० ।

**अचैतन्य** त्रि० चेतनस्य भावः चेतन+ष्यञ् ब० । चैतन्यरहिते, ज्ञानशून्ये च । न०त० । ज्ञानभिन्ने न० ।

**अच्छ** अव्य० छो-क न०त० । आभिमुख्ये ।

**अच्छ** त्रि० न छ्यति दृष्टिम्, न+छो क० । स्वच्छे निर्म्मले च । भल्लूके, स्फटिके च पु० ।

**अच्छभल्ल** पु० अच्छ आभिमुख्येन भल्लते गच्छति अच्छ+भल्ल-अच् । भाल्लूके । अत्र भल्ल इत्यपि पृथक् नाम ।

**अच्छम्** अव्य० न-छो कमुन् । आभिमुख्ये ।

**अच्छिद्र** त्रि० छिद-रक् ब० । छिद्रशून्ये, अङ्गहानि छिद्रं तच्छून्ये वैदिककर्म्मणि च ।

**अच्छिद्रावधारण** न० अच्छिद्रतया साङ्गतयावधारणम् अव धारि-ल्युट् । कृतस्य वैदिककर्म्मणोऽच्छिद्रतया अवधारणे कृतैतत्कर्म्माच्छिद्रमस्त्वित्यभिलापरूपे ।

**अच्छोद** त्रि० अच्छम् उदकं यस्य उदकस्योदभावः । निर्म्मल जलवति तडागादौ । तन्नामकप्रसिद्धे सरसि न० ।

**अच्युत** पु० च्योतते च्युत-क न०त० । विष्णौ । च्युतिशून्ये त्रि०

**अच्युताग्रज** पु० अच्युतस्य कृष्णस्य अग्रे जायते अग्र+जन ड उप० स० । बलभद्रे ।

**अच्युताङ्गज** पु० अच्युतस्याङ्गात् जायते अङ्ग+जन-ड । उप० स० । कामदेवे । तदङ्गजातमात्रे त्रि० ।

**अच्युतात्मज** पु० आत्मनोऽङ्गात् जायते जन-ड उप०स० । कामदेवे ।

**अच्युतावास** पु० आ-उष्यते सेव्यतेऽत्र आ वस-घञ् उप० स० । अश्वत्थवृक्षे । अश्वत्थ सर्व्ववृक्षाणामित्युक्तेस्तस्य तत्रोपास्यतावगमात्तथात्वम् ।

**अच्युति** स्त्री० च्यु-क्तिन् न०त० । क्षरणाभावे । बहु० । नाशशून्ये त्रि० ।

**अज** गतौ क्षेपणे च भ्वादि० पर० सक० सेट् । अजति । अवैषीत् आजीत् । अजिता वेता ।

**अज** दीप्तौ इदित् चुरादि० उभय० सेट् अक० । अञ्जयति ते । आञ्जिजत् त ।

**अज** पु० न जायते जन-ड न०त० । ब्रह्मणि, विष्णौ, हरे, जीवात्मनि ईश्वरे, छागे, मेषराशौ, सूर्य्यवंशीयराजभेदे दशरथपितरि, अजात् विष्णोर्जाते कामदेवे च । जन्मरहिते त्रि० । जगत्कारणे सत्त्वरजस्तमोगुणात्मके प्रधाने अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानामिति श्रुतेः । छाग्यान्तु स्त्री० ।

**अजकर्ण** पु० अजस्य कर्ण इव कर्णो यस्य ब० । छागतुल्य लम्बायमानपत्रयुक्ते पियाशाल, इति ख्याते छागकर्णे, वृक्षे महिसपत्रे च ।

**अजकर्णक** पु० अजकर्ण इव कायति पत्रद्वारा प्रकाशते कै-क । पियाशाल इति ख्याते वृक्षे ।

**अजकव** अस्त्री० अजो विष्णुः को ब्रह्मा च वाति शरत्वेनात्र वा+अधिकरणे क उप० स० । शिवधनुषि । बाबुई इति ख्याते बर्व्वरीवृक्षे पु० ।

**अजकाव** अस्त्री० अजकौ विष्णुब्रह्माणौ अवतीति अव-अण् उप०स० । शिवधनुषि ।

**अजक्षीर** न० अजाया क्षीरं पुंवद्भाव । छागदुग्धे ।

**अजग** पु० अजं छागं यज्ञाङ्गत्वेन गच्छति गम ड उप०स० । विष्णौ । अजेन गन्तरि वह्नौ च ।

**अजगन्धा** स्त्री० अजस्य गन्ध इव गन्धोऽस्याः । जोयानोति ख्यातायां वनयमान्याम् ।

**अजगन्धिका** स्त्री० अजस्य गन्ध इव गन्धो यस्याः ब० तत स्वार्थे के टाप् । बाबुइ इति प्रसिद्धे बर्व्वरीशाके ।

**अजगन्धिनी** स्त्री० अजस्य मेषस्य गन्धो लेश एकदेश शृङ्गमिति यावत् तद्यस्याः फलाकारेणास्तीति अजगन्ध+इनि ङीप् । गाडरशिङ्गा इति प्रसिद्धे अजशृङ्गीवृक्षे ।

**अजगर** पु० अजं छागं गिरति गिलति गॄ अच् । वृहत्सर्पे ।

**अजगव** पु० अजगो विष्णुः शरत्वेन त्रिपुरासुरवधकाले ऽस्यास्ति अजग+व । शिवधनुषि । [धनुषि ।

**अजगाव** पु० अजग विष्णुमवति अव-अण् उप०स० । शिव०

**अजघन्य** त्रि० न जघन्य (अधम) न०त० । अधमभिन्ने श्रेष्ठे च ।

**अजजीविक** त्रि० जीव्यतेऽनया जीवयतीति वा जीव-

मुष्-ण्वुल् वा अजएव क्रयविक्रयादिभ्यां पालनादिना वा जीविका जीवनोपायोऽस्य ब० । छागक्रयविक्रयादिना जीविकावति ।

**अजटा** स्त्री० नास्ति जटा शिफा यस्याः ब० । (भुंइआमला) इति प्रसिद्धे शिफारहिते वृक्षभेदे ।

**अजडा** स्त्री० अजडयति स्पर्शमात्रादङ्गमर्द्दनार्थं चालयति न+जड-णिच् ततः अच् । आलकुशीति प्रसिद्धे वृक्षभेदे ।

**अजथ्या** स्त्री० अजानां समूहः । अज+थ्यन् स्त्रीत्वात् टाप् । अजसमूहे । तद्वन्नानावर्णत्वात् स्वर्णयूथिकायाञ्च ।

**अजदण्डी** स्त्री० अजस्य ब्रह्मणोदण्डोऽस्याः ब० गौरा० ङीष् । ब्रह्मदण्डीवृक्षे ब्रह्मणो यज्ञार्थदण्डस्य तदीयकाष्ठेन करणात्तथात्वम् ।

**अजननि** स्त्री० न+जन-आक्रोशे अनि । आक्रुश्यमाने जन्माभावे । अर्थाभावे अव्ययी० । जनन्या अभावे अव्य० ।

**अजन्य** स्त्री० लौकिकहेतुभिर्न जन्यते न+जन-णिच्-यत् । शुभाशुभसूचके दैवकृते भूकम्पादावुत्पाते । जन्यभिन्ने त्रि०

**अजप** पु० असत्‌ जपति निन्दार्थे नञ्, जप-अच् । कुपाठके । अजं पाति रक्षति अज+पा-क । छागपालके त्रि० ।

**अजपा** स्त्री० प्रयत्नेन जपितुमशक्या अयत्नोच्चारिता जप-अच् । श्वासप्रश्वासयोः बहिर्गमनागमनाभ्याम् अहर्निशम्पादनरूपे जपे, हंसः, सोऽहमिति वा मन्त्रभेदे च । जपशून्ये त्रि० ।

**अजपात्** (द) पु० अजस्य पाद इव पादोऽस्य वा अन्त्याकारलोपः । रुद्रभेदे तद्देवताकत्वात् पूर्वभाद्रपदनक्षत्रे च ।

**अजभक्ष** पु० अजैर्भक्ष्यतेऽसौ भक्ष घञ् ३त० । बाबुइ इति प्रसिद्धे बर्बरीवृक्षे तत्पत्रमजैरतिप्रीतितो भक्ष्यते ।

**अजमीढ** पु० अजो मीढः यत्र सिक्तः यज्ञे ब० । आजमीर इति प्रसिद्धे देशे । तद्देशाधिपे राजनि अस्त्रि । आजमीढ युधिष्ठिरे ।

**अजमोदा** स्त्री० अजस्य मोद इव मोदो गन्धो यस्याः अजं मोदयति वा । मुद-घञ् ३त० । मोदि-अन् वा । उग्रगन्धवल्यां वनयमान्याम् यमानीमात्रे च ।

**अजम्भ** पु० नास्ति जम्भो दन्तोऽस्य ब० । भेके तस्य दन्ताभावात् । दन्तशून्ये त्रि० ।

**अजय** पु० जि-अच् न०त० । धीरभूमिनगरसन्निधाने अजय इति नामके नदविशेषे च । अजेन छागेन याति-या-क ३त० । छागवाहने वह्नौ पु० । अजेये जयशून्ये त्रि० । अव्य० जयाभावे । नाम्नि अयो मादकत्वेनास्याम् सिद्धि, भाङ्ग, इति च प्रसिद्धनामिकायाम् विजयायाम् स्त्री० ।

**अजय्य** त्रि० जि-शक्यार्थे यत् । जेतुमशक्ये दुर्जये शत्रौ ।

**अजरा** स्त्री० जॄ अङ् न०ब० । (घृतकुमारी) इति प्रसिद्धे वृक्षे तस्य जराभावात् । जराशून्ये त्रि० । जराभावे अजरसम् अव्य० ।

**अजर्य्य** न० न जीर्य्यति जॄ-यत् न०त० । सौहार्दे ।

**अजलोमन्** पु० अजस्य लोमेव लोम (मञ्जरी) यस्य उपमान ब० । (शूकशिम्बी) इति ख्याते अजलोमवन्मञ्जरीविशिष्टे वृक्षभेदे ।

**अजवीथी** स्त्री० अजेन ब्रह्मणा निर्म्मिता वीथी पदं ३त० । गगनसेतुरूपे (यमनाला) इति ख्याते, छायापथे । यामारभ्य अगस्त्यस्थानपर्य्यन्तं पितृयानपथः ।

**अजशृङ्गी** स्त्री० अजस्य मेषस्य शृङ्गमिव फलमस्याः ब०। (गाड़लशिङ्गा) इति प्रसिद्धे मेषशृङ्गतुल्यफलवति वृक्षे ।

**अजस्र** न० । न-जस र । सन्तते विच्छेदरहिते । तथाभूतकालस्थायिनि वस्तुमात्रे त्रि० ।

**अजहत्स्वार्था** स्त्री० न जहत् स्वार्थोयाम् न+हा-शतृ ब०। स्वार्थापरित्यागेन परार्थबोधिकायां लक्षणायाम् । यथा श्वेतो धावतीत्यादौ श्वेतगुणापरित्यागेन तद्वति लक्षणा ।

**अजहल्लिङ्ग** पु० न जहत् लिङ्गं यम् हा-शतृ ब० । नियतलिङ्गके विशेष्यस्यान्यलिङ्गकत्वेऽपि स्वलिङ्गात्यागेन विशेषणे शब्दे । तथा चान्यत्र विशेषणस्य विशेष्यानुसारिलिङ्गत्वनियमेऽपि अस्य न तथा नियमः । यथा वेदः श्रुतिर्वा प्रमाणम् ।

**अजहा** स्त्री० न जहाति शूकान् । न+हा-श । आलकुशीति ख्याते वृक्षे ।

**अजागर** पु० जागृ णिच्-अच् न जागरो यस्मात् ५ब० । सेवनेन निद्राराहित्यकारके यदंशेक्षयाऽन्यस्मिन् जागरणकर्त्तृत्वं नास्ति तादृशे (भीमराज) इति ख्याते भृङ्गराजे । भृङ्गराजः प्रजागर इति रत्नमालाख्यात् तस्यान्यत्वनिद्राराहित्यकारित्वम् ।

**अजाजी** स्त्री० अजेन छागेन आजीविशेषो गन्धोत्कटत्वात् त्यागो यस्याः अज-घञ् वीभावाभावः ब० । सर्व्वभक्षेणापि छागेन गन्धोत्कटतया त्यज्यमाने, जीरा इति प्रसिद्धे जीरके वृक्षे ।

**अजाजीव** पु० अजैस्तद्दुग्धपोषणादिना तत्क्रयविक्रयादिना वा आजीवति । आ-जीव-अच् ३त० । छागपालके तत्क्रयविक्रयाभ्यामाजीविनि च ।

**अजातककुद्** पु० न जातं ककुदंस्कन्धकूटं यस्य अन-क्त ब० ककुदस्यान्त्याकारलोपः । अपूर्णककुद्वति अल्पवयस्के गवादिवत्से ।

**अजातशत्रु** पु० जातस्य जन्मवतस्य न ; शत्रुः यस्माद्वयो-जीव्यादिवत् नञोऽव्यवहितेन शत्रुशब्देनान्वयात् असमर्थसमासः । युधिष्ठिरे राजनि । एवमजातारिरपि तत्रैव ।

**अजाति** स्त्री० जन-क्तिन् न०त० । अनुत्पत्तौ । ब० । जातिशून्ये जात्यादौ जन्मशून्ये च नित्ये त्रि० ।

**अजादनी** स्त्री० अजैर्दुःखादातैरपि अन्यस्य दुःखस्पर्शनैरजैरे-वाद्यते इति या अद-कर्मणि ल्युट् ङीप्० । दुरालभा इति विचिति इति च प्रसिद्धे स्पर्शेन दुःखदायके वृक्षभेदे ।

**अजानि** पु० नास्ति जाया यस्य ब० जायाया निङादेशः । जायारहिते ।

**अजानेय** पु० अजेऽपि विक्षेपेऽपि आनेयो यथास्थानं प्रापणीयो आरोही येन अज-विक्षेपे अप् वीभावाभावः आ-नी-कर्मणि यत् ततः ब० । वज्रशस्त्रप्रहारेऽपि निर्भयेन यथास्थानमारोहिणः प्रापके अश्वे, उत्तमाश्वे च ।

**अजाप्रिया** स्त्री० अजानां प्रिया । कुल इति ख्याते वदरीवृक्षे ।

**अजि** पु० अज-इ । तेजसि । गतिमति त्रि० । तेन पदाजिः ।

**अजिन** न० अज-इनच् वीभावाभावः । चर्मणि ।

**अजिनपत्रा** (त्री) (त्रिका) स्त्री० अजिनं चर्मेव सुश्लिष्टं पत्रं पक्षो यस्याः ब० । चार्मचिका इति प्रसिद्धे पक्षिभेदे (त्री) इत्यत्र गौरादित्वात् ङीष् । तत स्वार्थे कः ह्रस्वे टापि पत्रिका इत्यपि ।

**अजिनफला** स्त्री० अजिनं (चर्मविकारत्वात् भस्त्रा) इव फलं यस्याः अजिनपूर्वकत्वेन जातिलक्षणं ङीषं बाधित्वा टाप् । टेपारी इति प्रसिद्धे भस्त्राकारफले वृक्षभेदे ।

**अजिनयोनि** स्त्री० अजिनस्य चर्मणः योनिः कारणं ६त० । हरिणमात्रे । [चत्वरे ।

**अजिर** न० अज-किरन् वीभावाभावः । उठानइति ख्याते

**अजिह्म** त्रि० ह्वा मन् ह्वितालोपौ ततः न०त० । सरले

**अजिह्मग** पु० अजिह्मं सरलं गच्छति गम-ड । बाणे । सरलगामिनि त्रि० ।

**अजिह्व** पु० लिह-वन् डक् च जिह्वा रसना सा नास्ति यस्य ब० । भेके । जिह्वाशून्ये त्रि० ।

**अजीर्ण** न० जॄ-भावे क्त न०त० । जठरानलमान्द्येन भुक्तान्नादेरपाके, रोगभेदे च । कर्तरि क्त जीर्णभिन्ने त्रि० ।

**अजीव** त्रि० जीव-भावे घञ् ब० । जीवनरहिते मृते शवे च ।

**अजीवनि** स्त्री० न जीव्यात् नञ्+जीव-आक्रोशे अनि । अभिशापविषये जीवनाभावे ।

**अजेय** त्रि० जेतुमशक्ये नञ्+जि-यत् । जयायोग्ये ।

**अजैकपाद्** (द) पु० अजस्य छागस्य एक पादइव पादो यस्य उपमा०ब० वा पादस्यान्त्याकारलोपः । रुद्रविशेषे, तद्दैवताके पूर्वभाद्रपदनक्षत्रे च ।

**अज्झुका** स्त्री० अर्जयति या सा अर्जि-ण्वुल् रकारस्य जत्वम् । मार्थं नटकर्म तद्विषयकथने वेश्यायाम् ।

**अञ्झटा** स्त्री० अञ्चति दीर्घं गमयति अञ्च-क्विप् झटति संहन्यते झट्-अच् ततः कर्म० । (भुंइ आमला) इति प्रसिद्धे वृक्षे ।

**अज्ञ** त्रि० न जानाति नञ्+ज्ञा-क । ज्ञानशून्ये,मूर्खे, अचेतने च

**अज्ञान** न० ज्ञा-भावे ल्युट् न०त० । ज्ञानविरोधिनि ज्ञाननाश्ये (अविद्या) इति वेदान्तप्रसिद्धे जगत्कारणे, ज्ञानाभावे च । ब० । ज्ञानशून्ये त्रि० ।

**अञ्चति** पु० अञ्च-अति । वायौ ।

**अञ्चल** पु० अञ्च-अलच् । प्रान्तभागे वस्त्रप्रान्ते च ।

**अञ्चित** त्रि० अञ्च-क्त । पूजिते,आकुञ्चिते च । अञ्चितसव्यपादमिति भट्टिः ।

**अञ्चितभ्रू** स्त्री० अञ्चिता पूजिता वक्रीकृता वा भ्रूर्यया । सुन्दरयोषिति,वक्रीकृतभ्रुवि च स्त्रियाम् । कर्म० (भ्रूः) तथा भूतभ्रूलतायाम् स्त्री० ।

**अञ्ज** (न्ज) म्रक्षणे गतौ व्यक्तीकरणे च रुधादि० पर० सक० वेट् । अनक्ति । आञ्जीत् । अञ्जिता अङ्क्ता । वि-व्यक्तीकरणे व्यनक्ति कालतितयेऽपि योग्यतामिति माघः ।

**अञ्जन** न० अज्यतेऽनेन करणे ल्युट् । कज्जले । भावे ल्युट् । म्रक्षीकरणे, गमने,मालिन्ये, व्यक्तीकरणे च । कर्तरि ल्यु । उत्तरदिग्गजहस्तिन्या हनुमन्मातरि च स्त्री० । णिचि युच् । पतिलक्षणाभिन्नं शक्यलक्ष्यात्यार्थबोधके शब्दव्यापारे,स्त्री० । अनर्थाधीकृत्याख्यानिरञ्जनेति काव्यप्रकाशः ।

**अञ्जनकेशी** स्त्री० अञ्जनमिव केशो यस्याः ५त० । केशसंस्कारके हट्टविलासिनीनामके गन्धद्रव्ये । यत्संयोगात् केशस्य कृष्णता स्यात् ।

**अञ्जनाधिका** स्त्री० अञ्जनादधिका कृष्णत्वात् ५त० । (आजनाइ) इति ख्याते कीटभेदे ।

**अञ्जनावती** स्त्री० अञ्जनं विद्यतेऽस्याः अधिकतमवर्णत्वात् अञ्जन+मतुप् वत्वं दीर्घश्च । ऐशानकोणस्य हस्तिन्याम् ।

**अञ्जनिका** स्त्री० अञ्जना स्वार्थे के टाप् कापि पूर्वाकारस्य

इत्वम्। (आजनाइ) इति प्रसिद्धे अञ्जनाख्ये कीटभेदे।

**अञ्जनी** स्त्री० अज्यते चन्दनकुङ्कुमादिभिरसौ अनज-कर्मणि ल्युट् ङीप्। कुङ्कुमाद्यनुलिप्तायाम् स्त्रियाम्। करणे ल्युटि कटुकावृक्षे, कालाञ्जनवृक्षे च।

**अञ्जलि** पु० अनज-अलि। संयुतकरपुटे, कुडवपरिमाणे च।

**अञ्जलिका** स्त्री० अञ्जलिरिव कायति प्रकाशते अञ्जलि+कै-टाप्। बालमूषिकायाम्।

**अञ्जलिकारिका** स्त्री० अञ्जलेः कारिका करणं कृ-भावे धात्वर्थनिर्देशे ण्वुल्। अञ्जलिकरणे अञ्जलेरिवकारिका स्पर्शमात्रेण पत्रपुटस्य संपुटीकरणात् कृ-ण्वुल् इत०। लजालु इति ख्यातायाम् लज्जाशीललतायाम् सा हि स्पर्शमात्रात् सङ्कोचेन पत्रपुट संपुटं कुर्वती अञ्जलिमिव करोति। अञ्जलेः कारः करणं नित्ययोगेन अस्त्यस्या०। कृ-भावे घञ् इत० ततः नित्ययोगे मत्वर्थीयः ठन् ठस्येकः टाप्। प्रतिमायां तस्या हि यत् निर्म्माणसमये अञ्जलिकरणं तत् नित्ययोगेन तिष्ठति। अञ्जलि+कृ-कर्त्तरि ण्वुल्। विनयेनाञ्जलिकारके त्रि०।

**अञ्जस** त्रि० अनज-असच्। सरले।

**अञ्जसा** अव्य० अनज-भावे असच् अञ्जं गतिं विलम्बं वा स्यति सो-क्विप्। विलम्बाक्षमे शैघ्र्ये याथार्थ्ये च।

**अट** गतौ भ्वादि० सक० पर० सेट्। अटति आटीत्।

**अटनि** (नी) द्वि० अटति मौर्व्वीम् अट-अनि वा ङीष्। धनुरग्रे गुणारोपणस्थाने।

**अटरूष** पु० अटति भ्रमति अट-अच् तं रोषति हिनस्ति रुष-क अटद्भिर्वा रूष्यते न युज्यते रूष-क। (वासक) इति ख्याते वृक्षे। [ङीपि दीर्घता। वने।

**अटवि** (वी) स्त्री० अटन्ति चरन्ति वयांसि यत्र अट-अवि वा

**अटाट्या** स्त्री० अट-यङ्-भावे अ स्त्रीत्वात् टाप्। परिभ्रमणे इष्टागमने च।

**अट्ट** अतिक्रमे वधे च भ्वादि० आत्म० सक० सेट्। अट्टते। आट्टिष्ट। [आट्टिटत् त।

**अट्ट** अनादरे चुरादि० उभय० सक० सेट्। अट्टयति ते।

**अट्ट** पु० अट्टयति अनाद्रियतेऽन्यद्यत्र अट्ट-चु० घञ्। प्रासादस्योपरिगृहे, प्राचीरोपरिस्थसैन्यगृहे, तत्र स्थिता हि नरा अन्यान् हीनतया नाद्रियन्ते, अतिशये च। तस्मिन् सति च अन्योत्कर्षेऽनादरः।

**अट्टट्ट** अव्य० अट्टप्रकारः अट्टस्य गुणवाचितया प्रकारे द्वित्वम् शकन्ध्वादि० पररूपम्। अत्युत्कटे हासे।

**अट्टहास** पु० अट्टेनातिशयेन हासः हस-घञ् इत०। उच्चहासे।

**अट्टहासक** पु० अट्टहास इव कायते कै-क। अट्टहासेन दन्तानां वहिर्निर्गमादतिशुभ्रत्वं तद्वत् शुभ्रे कुन्दवृक्षे।

**अट्टालक** पु० अट्ट इव प्रासादोपरिगृहमिव अलति पर्य्याप्तो भवति अल-ण्वुल्। प्रासादोपरिस्थे इष्टकादिगृहे।

**अट्टालिका** स्त्री० अट्टाल+स्वार्थे क। इष्टकादिनिर्मिते राजगृहे

**अठ** गतौ भ्वादि० पर० सक० सेट्। अठति। आठीत्।

**अठि** गतौ इदित् आत्म० भ्वादि० सक० सेट्। अण्ठते।

**अड** उद्यमे भ्वादि० पर० सक० सेट्। अडति। आडीत्।

**अड** व्याप्तौ स्वादि० पर० सक० सेट् वेदएवास्य प्रयोग। अड्णोति। आडीत्। [अड्डति। आड्डीत्।

**अड्ड** अभियोगे समाधाने च भ्वादि० पर० सक० सेट्।

**अण** शब्दे भ्वादि० पर० अक० सेट्। अणति। आणीत्।

**अण** जीवने दिवा० आत्मने० अक० सेट्। अण्यते आणिष्ट।

**अण(न)क** त्रि० अणति यथेच्छम् नदति अण-अच् तत० कुत्सायाम् क। अधमे, निन्दिते च। दन्त्यमध्यश्चायम्।

**अणव्य** त्रि० अण-उन् अणुत्वस्य सूक्ष्मशस्यस्य भवनं क्षेत्रम् अणु+यत्। सर्षपादिसूक्ष्मशस्योत्पत्तियोग्ये (सुनाभूमि) ख्याते क्षेत्रे

**अणि** पुंस्त्री० अणति शब्दायते अण-इन्। आरा इति ख्याते रथचक्राग्रस्थिते कीलके सूच्याद्यग्रभागे च। स्त्रीत्वे वा ङीप्। अत्वादेर्दीर्घतामीप्यते। तेन आणि' आणी।

**अणिमन्** पु० अणोर्भावः अणु+इमनिच्। सूक्ष्मत्वे सूक्ष्मपरिमाणे, ऐश्वर्यभेदे च यद्वशात् सूक्ष्मीभूय सर्व्वत्र गन्तुं शक्नोति। ऐश्वर्य्याणि च। अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वं च वशित्वञ्च तथा कामावसायिता इत्युक्तानि। एतेषां स्वरूपाणि ऐश्वर्यपदार्थनिरूपणे वक्ष्यन्ते।

**अणीयस्** त्रि० अणु+ईयसुन्। अतिसूक्ष्मे अणोरणीयान् महतो महीयानिति श्रुतिः। स्त्रियाम् (सी)।

**अणु** त्रि० अण-उन्। क्षुद्रे, सूक्ष्मपरिमाणवति, द्रव्ये, क्षेत्रे च। स्त्रियाम् अण्वी च। (चिना, काउनी, श्यामा) प्रभृति सूक्ष्मधान्ये पु०।

**अणुक** त्रि० अणु+निपुणार्थे क। निपुणे। स्वार्थे क। सूक्ष्मे काले क। क्षुद्रे।

**अणुभा** स्त्री० अण्वी सूक्ष्मा भा दीप्तिर्यस्याः व०। विद्युति।

**अण्ड** न० अमन्ति संप्रयोगं यान्ति अनेन अम-ड टवर्गादित्वेऽपि डस्य णत्वम्। पुंसोऽङ्गावयवे, पक्षिडिम्बे, वीर्ये च।

**अण्डज** पु० अण्डात् डिम्बात् जायते जन-ड। अण्डजाते

पक्षिणि, सर्पे, मत्स्ये, कांकदाय इति ख्याते शकलाले च। अण्डजातमात्रे त्रि०। स्त्रगमाधिकरूयान्त स्त्री०।

**अण्डालु** पु० अण्ड+आलु। डिम्बविशिष्टे मत्स्ये।

**अण्डीर** पु० अण्डः पुंसवयवभेदः अस्यास्तीति अण्ड-ईरन्। पुरुषे, समर्थे च।

**अत** बन्धने इदित् भ्वादि० पर० सक० सेट्। अन्तति। आन्तीत्।

**अत** बन्धने भ्वादि० पर० सक० सेट्। अतति। आतीत्।

**अत** प्रापणे, सातत्ये, गतौ च भ्वादि० पर० सक० सेट्। अतति। आतीत्। क्तौ अतितः।

**अतट** पु० तट्यते आहन्यतेऽत्रपता इति तटं अवाघातस्थानं तन्नास्ति यस्य ब०। आड़रीति प्रसिद्धे आलम्बनस्थानशून्ये, पर्वताद्युच्चस्थाने, भूमेरधोभागे च।

**अतल** न० अस्य भूखण्डस्य तलं पृषोदरात् इदमोऽलम्। सप्तपातालमध्ये प्रथमखण्डे, भूमेरधोभागे। तलशून्ये त्रि०।

**अतलस्पर्श** त्रि० न तलस्याधोभागस्य स्पर्शो यत्र ब०। अतिगभीरे।

**अतस** पु० अत-गतौ असच्। वाते। स्वार्थात् अत-असच्। आत्मनि। गौरादित्वात् ङीषि। तिसि, मसिना इति ख्याते अतसीवृक्षे। तत्सूत्रजाते क्षौमवस्त्रे न०।

**अति** अव्य० अत-इ। पूजायाम्, उत्कर्षे, अतिक्रमणे, अतिशये च।

**अतिकथ** त्रि० अतिक्रान्तः कथाम्। कथनायोग्ये, अश्रद्धेये, नष्टे च। [मणौ वृक्षे]

**अतिकन्दक** पु० अतिरिक्तः कन्दः यस्य ब०। हस्तिकन्दना-

**अतिकेशर** पु० अतिरिक्तानि केशराण्यस्य ब०। कुब्जकवृक्षे।

**अतिक्रम** पु० अति-क्रम-घञ् ह्रस्वः। उल्लङ्घने। अतिक्रान्तः क्रममिति प्रादि स०। क्रमोल्लङ्घने त्रि०।

**अतिगण्ड** पु० परिभाषया विष्कुम्भावधि षष्ठे योगे।

**अतिगन्ध** पु० अतिशयितो गन्धो यस्य ब०। चम्पकवृक्षे। अतिशयितगन्धवति त्रि०।

**अतिचरा** स्त्री० अतिक्रम्य चरति दुर्गभूमिजातत्वात् उत्पापत्वाच्च अति+चर-अच्। पद्मचारिणीवृक्षे उत्तरदेशभवे, तत्पर्याये पद्मार्थतिशब्ददर्शनात् स्थलपद्मिन्यामिति केचित्

**अतिचार** पु० अतिशयेन चारः अतिक्रम्य वा चारः अति+चर-घञ्। अतिशयितगमने, ज्योतिःशास्त्रप्रसिद्धे मङ्गलादिग्रहपञ्चकस्य सूर्यैकराशिवर्तित्वेन तेजोऽहिम्नतया वक्रशीघ्रादिगत्या स्वस्वभोग्यकालमुल्लङ्घ्य राश्यन्तरगमने, अस्य विशेषस्तु बृहदभिधाने दर्शयिष्यते।

**अतिचारिन्** पु० अति+चर-णिनि। पूर्वोक्तातिचारवति ग्रहे। अतिक्रम्य अतिशयेन वा गन्तृमात्रे त्रि०।

**अतिच्छत्र** पु० अतिक्रान्तश्छत्रम् प्रादि० स०। छातिया इति प्रसिद्धे स्थलतृणविशेषे, तालमाखना इति प्रसिद्धे जलतृणभेदे च। स्वार्थे क। अत्र अतिच्छत्रकोऽपीति नाम। छत्राकारपत्रपुष्पवति छलुफा इति प्रसिद्धे शाकभेदे स्त्री०। क्षीरस्वामिमते छत्रा इत्येव नाम। छत्रातिक्रमकारिणि त्रि०। अतिक्रमेऽव्ययी०। छत्रातिक्रमे अव्य०।

**अतिजगती** (ति) स्त्री० अतिक्रान्ता जगतीं द्वादशाक्षरपादां इति प्रा०स०। त्रयोदशाक्षरपादके छन्दोभेदे। जगतीं भुवनमतिक्रान्तवति त्रि०। तत्र पुंसि क्लीबे च (अतिजगति)।

**अतिजव** त्रि० अतिशयितो जवोऽस्य ब०। अतिवेगवति। द्रुतगामिनि च।

**अतिजागर** पु० अतिशयितो जागरो निद्राराहित्यं यस्य ब०। नीलवके पक्षिणि तस्य सर्वदा जागरूकत्वात्। निद्रारहितवति त्रि०। [पक्षिणाम् अतिदीर्घगमने।

**अतिडीन** न० अतिक्रान्तं डीनं पक्षिगतिभेदं प्रा० स०।

**अतितराम्** अव्य० अति+तर-तमः आम्। अत्यन्तातिशये।

**अतितीक्ष्ण** त्रि० अतिशयेन तीक्ष्णः कटुरसो यस्य ब०। मरीचादौ। सजना इति प्रसिद्धे शोभाञ्जने पु०।

**अतितीव्रा** स्त्री० अतिशयेन तीव्रा पाकादौ दुष्करत्वात् प्रा०स०। मध्यमतया गाँटदूर्वा इति ख्यातायां दूर्वायाम्। अतितीव्रगुणके त्रि०।

**अतिथि** पु० अतति गच्छति न तिष्ठति अत इथिन्। अध्वयोगेन आगन्तुके गृहागते, विषये च तस्य इन्द्रियेषु संसर्गमात्रकाले एव चेतसि स्थितिर्नोत्तरकालमिति गतिरनुमीयते।

**अतिथिसपर्य्या** स्त्री० अतिथीनां सपर्य्या पूजनम् सपरधातुः कण्ड्वादिः तेन यक् ततो अङ्। प्रत्यहं गृहस्थस्य कर्त्तव्यपञ्चयज्ञमध्ये मनुष्ययज्ञेऽतिथिपूजनादौ।

**अतिदिष्ट** त्रि० अति-दिश-क्त। अतिदेशस्य कर्मणि। यथा प्रकृतिवत् विकृतिः कर्त्तव्येति वाक्येन प्रकृतिभूतदर्शयागादेरङ्गकार्याणि प्रयाजादीनि विकृतौ पश्वादियागेऽतिदिश्यन्ते। अतिदेशोनाम इतरधर्मस्य इतरस्मिन् प्रयोगाय प्राप्तिः इति मीमांसायां स्थितम्। कल्पद्रुमकृता तदुपदेशवाक्यमपि तथा।

**अतिदीप्य** पु० अतिशयेन दीप्यते अति-दीप-कर्त्तरि यत्। रक्तचित्रके लालचिता इति ख्याते वृक्षे।

**अतिदेश** पु० अति-दिश-घञ् । अतिदिष्टशब्दार्थे व्याख्यातरूपेऽर्थे । अतिदिश्यतेऽनेनेति करणे घञि तत्प्रतिपादकवाक्येऽपि ।

**अतिधन्वन्** पु० अतिरिक्तं धनुर्यस्य ब० धनुषोऽनङ् । उत्कृष्टधनुर्युक्ते योधे । मरुस्थलातिक्रमकारिणि त्रि० ।

**अतिधृति** स्त्री० अतिक्रान्ता धृतिम् अष्टादशाक्षरपादिका वृत्तिं प्रा० स० । ऊनविंशत्यक्षरपादके छन्दोभेदे । धृतिर्धैर्यं सन्तोषो वा तदतिक्रमकारिणि त्रि० ।

**अतिनु (नौ)** त्रि० अतिक्रान्तो नावम् प्रा० स० क्लीबे ह्रस्वः । नौकातिक्रमकारिणि । पुंसि स्त्रियां च अतिनौ ।

**अतिपतन** न० अति-पत-ल्युट् । अतिक्रमे, अत्यये च । पातातिक्रान्तरि त्रि० ।

**अतिपत्ति** स्त्री० अति-पद क्तिन् । अनिष्पत्तौ, अतिक्रमे च । पत्तिं सेनामतिक्रान्ते त्रि० ।

**अतिपन्न** त्रि० अति+पद क्त । अतिक्रान्ते ।

**अतिपथिन्** पु० अतिशयित: सुन्दर: पन्था: प्रा० स० अते: पूजार्थत्वात् न समासान्त: । सत्पथे ।

**अतिपातक** न० अतिक्रान्तोऽत्यन्तदुष्टत्वेनान्यत् पातकं प्रा० स० । पुंसां मातृस्नुषादुहितृगमनजन्ये स्त्रीणाञ्च पुत्रपितृश्वशुरगमनजन्ये पातकविशेषे । पातकमतिक्रान्तवति पुण्यशीले त्रि० ।

**अतिप्रगे** अव्य० अति प्रगीयतेऽस्मिन् काले गै-के । अत्यन्त [प्रातःकाले ।

**अतिप्रश्न** पु० अति+प्रच्छ नङ् । निरुत्तरप्रश्ने ।

**अतिप्रसक्ति** स्त्री० अति-प्र-सन्ज-क्तिन् । अत्यन्तासक्तौ, प्रसङ्गमतिक्रम्यान्यत्र सम्बन्धे अतिप्रसङ्गे च । लक्ष्ये लक्षणसंबन्ध: प्रसङ्ग: अलक्ष्ये तत्सम्बन्धोऽतिप्रसङ्ग: । प्रसङ्गमतिक्रान्तवति त्रि० ।

**अतिप्रसङ्ग** पु० अति-प्र-सन्ज घञ् । अतिप्रसक्तिवदर्थे ।

**अतिबल** त्रि० अतिशयितं बलं यस्य ब० । अतिशयितबलवति । अतिशयितं बलं यस्या: ब० । अत्यन्तबलाधायिकायां पीतवर्णायां बेड़ियाला इति ख्यातायां लतायां, विश्वामित्रेण ब्रह्मावहनित: शिक्षिते रामाय दत्ते अस्त्रविद्याभेदे च स्त्री० । अतिशयितं बलम् प्रा० स० । अत्यन्ते बले, सामर्थ्ये, सैन्ये च न० ।

**अतिभूमि** स्त्री० अतिशयिता भूमिर्मर्य्यादा प्रा० स० । अतिमर्य्यादायाम्, आधिक्ये च । अतिक्रमेऽव्ययी० । मर्य्यादातिक्रमेऽव्य० । भूमिं भुवं मर्य्यादां वाऽतिक्रान्तवति त्रि० ।

**अतिमङ्गल्य** पु० अतिमङ्गलाय हितम् अतिमङ्गल+यत् । बिल्ववृक्षे । अतिमङ्गल्याढ्ये अतिमङ्गलयुक्ते च त्रि० ।

**अतिमर्य्यादं** अव्य० । अतिक्रमे अव्ययी० । मर्य्यादातिक्रमे । प्रा० स० । मर्य्यादामतिक्रान्तवति त्रि० ।

**अतिमात्र** त्रि० अतिक्रान्तो मात्रामत्र प्रा० स० । अतिशयिते, मात्रातिक्रमकर्त्तरि च ।

**अतिमुक्त** त्रि० अतिशयेन मुक्त: विदेहकैवल्यं गत: अति मुच-कर्त्तरि क्त । निर्व्वाणमुक्तिमति । अतिक्रान्ता मुक्तां शौभ्रत्वात् प्रा० स० । माधवीलतायां पु० ।

**अतिमुक्तक** त्रि० अतिमुक्त-स्वार्थे क । निर्व्वाणमुक्तिमति । अतिशयितमुक्ते च । अतिशयेन मुक्तं विस्तारोऽस्य मुच-भावे क्त ब० । कप् । अतिविस्तृते तिन्दुकवृक्षे पु० ।

**अतिमोदा** स्त्री० अतिशयितो मोदो यस्या: ब० । नवमल्लिकायाम् । अत्यन्तमोदवति त्रि० ।

**अतिरथ** पु० अतिक्रान्तो रथं रथिनम् प्रा० स० । योधविशेषे "अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु स" इत्युक्तलक्षणे । रथातिक्रमकारके त्रि० ।

**अतिरसा** स्त्री० अतिशयितो रसो यस्या: ब० । राखा इति ख्यातायां मूर्व्वालतायाम् । [यज्ञविशेषे ।

**अतिरात्र** पु० अतिक्रान्तो रात्रिम् प्रा० स० अच्-समासान्त: ।

**अतिरिक्त** त्रि० अति-रिच्-क्त । अतिशयिते, श्रेष्ठे, भिन्ने, शून्ये च । भावे क्त । अतिशये आधिक्ये न० ।

**अतिरुक्ष** त्रि० अतिशयित रुक्ष प्रा० स० । अत्यन्तरूक्षे स्नेहशून्ये । तथाभूते कङ्कुकोद्रवादिधान्ये पु० । अतिक्रान्तोरुक्षम् । अतिशयस्निग्धे त्रि० । [आधिक्ये च ।

**अतिरेक** पु० अति-रिच् घञ् । अतिशये, भेदे, प्राधान्ये,

**अतिरोग** पु० अतिशयितो रोग: रुज घञ् । क्षयरोगे ।

**अतिरोमश** पु० अतिशयित: रोमश: अतिरोमन्+श । वनजाते छागे । अत्यन्तरोमाढ्ये त्रि० ।

**अतिवक्तृ** त्रि० अति-वच तृच् । वावदूके, वाचो युक्तिदक्षे च ।

**अतिवर्णाश्रमिन्** पु० अतिक्रान्तो वर्णानाश्रमिणश्च प्रा० स० । ब्राह्मणादिवर्णभिन्ने ब्रह्मचर्य्याद्याश्रमिभिन्ने च परमात्मनिष्ठे "यो वेदान्तमहावाक्यश्रवणेनैव केशव । आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेदिथा" इत्युक्तलक्षणे ।

**अतिवर्त्तिन्** त्रि० अति-वृत-णिनि । अतिक्रमकारके ।

**अतिवर्त्तुल** पु० अतिशयित वर्त्तुल वृत उल । वाटुलाकलाइ इति ख्याते वर्त्तुलाकारके कलाये । अत्यन्तवर्त्तुले त्रि० ।

**अतिवाद** पु० अति-वाद-घञ् । अत्युक्तौ, कठोरवाक्ये, अप्रियवाक्ये च ।

**अन्त** न० अम-तन् । स्वरूपे,स्वभावे च । शेषे पु० न०। नाशे,प्रान्ते, सीमायां,निश्चये,अवयवे च पु०। निकटे, मनोहरे च त्रि० ।

**अन्तःकरण** न० कृ-करणे ल्युट् अन्तरभ्यन्तरं, तद्वृत्ति पदार्थानां ज्ञानादीनां वा करणं कर्म०, ६त० वा । ज्ञान-सुखादिसाधने आभ्यन्तरे इन्द्रिये मनोबुद्धिचित्तादिपदाभि लप्यमाने । अवान्तरभेदस्तु वृहदभिधाने ।

**अन्तःकुटिल** पु० अन्तर्मध्ये कुटिलः। वक्राकारमध्यावयववति शङ्खे । वक्रान्तःकरणे त्रि० ।

**अन्तःपुर** न० अन्तराभ्यन्तरं पुरं गृहं कर्म० । अन्दर इति प्रसिद्धे राज्ञां स्त्रीणां स्थानयोग्ये गृहे। तत्र स्थितत्वात् राजमहिलायामपि । पुरशब्दसमासे क्वचि स्त्रीत्वात् ङीप्। अन्तःपुरीत्यपि ।

**अन्तःसत्वा** स्त्री० अन्तरभ्यन्तरे गर्भे सत्वं प्राणी यस्या ब० । गर्भिण्यां स्त्रियाम् ।

**अन्तःस्वेद** पु० अन्तःस्वेदो मदस्यन्दनं घर्म्मजलं यस्य ब० । मदस्राविणि हस्तिनि ।

**अन्तक** पु० अन्तं करोति अन्त+तत् करोतीत्यर्थे णि-ण्वुल् । यमे । नाशकारके त्रि० ।

**अन्तकर** त्रि०अन्तं नाशं करोति कृ-ट उप०स०। नाशकारके ।

**अन्तग** त्रि० अन्तमवसानं गच्छति गम-ड । पारगामिनि अवसानं गते च । क्त अन्तगत इत्यपि तत्रार्थे ।

**अन्तर्** अव्य० अम-अरन् तुडागमश्च । मध्ये, नाशे, स्वीकारे चित्ते च ।

**अन्तर** न० अन्तं राति ददाति रा-क । अवकाशे, अवधौ, परिधानांशुके अन्तर्द्धाने, भेदे, परस्परवैलक्षण्ये विशेषे, तदर्थे, छिद्रे, आत्मीये, विनार्थे, बहिरर्थे, व्यवधाने, मध्ये, सदृशे च । उदाहरणानि तु वृहदभिधाने ।

**अन्तरङ्ग** त्रि० अन्तर्मध्येऽङ्गानि यस्य । आत्मीये,व्याकरण-शास्त्रे प्रसिद्धे प्रकृतिप्रत्ययकार्यमध्ये प्रकृत्याश्रिते कार्ये च ।

**अन्तरा** अव्य० अन्तरेति इण्-डा । निकटे,मध्ये, विनार्थे च ।

**अन्तरात्मा** पु० अन्तर्वर्त्ती आत्मा । अन्तःकरणे, सर्वान्त-र्यामिनि परमेश्वरे, अन्तःकरणाभिमानिनि जीवे च ।

**अन्तराय** पु० अन्तरं व्यवधानमयते अय-अच् । विघ्ने । व्यव-धानकारके त्रि० ।

**अन्तराल** न० अन्तरं मध्यसीमामाराति गृह्णाति आ-रा क रस्य लत्वम् । मध्ये,अभ्यन्तरे च । स्वार्थे ष्यञि आन्तराल्यम् ।

**अन्तरिक्ष** न० अन्तः स्वर्गपृथिव्योर्मध्ये ईक्ष्यते ईक्ष-कर्मणि घञ्, अन्तः ऋक्षाणि यस्य वा पृषो० पक्षे ह्रस्वः ऋकारस्य रित्वं वा । पक्षिमेघसञ्चारयोग्ये भूलोकसूर्य-मध्यवर्त्तिनि आकाशप्रदेशे । अत्र अन्तरीक्षमपि ।

**अन्तरित** त्रि० अन्तर्+इण-कर्त्तरि क्त २त०।अन्तरं व्यवधानं करोतीति णिचि कर्म्मणि क्त वा । व्यवधानं गते, व्यव-धापिते, तिरस्कृते च । [आत ईत्वम् । द्वीपे ।

**अन्तरीप** पु० अन्तर्मध्ये गता आपोऽस्य ब० अच् स०

**अन्तरीय** न० अन्तरे भवं गहादित्वात् छ । परिधाने वस्त्रे "नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी । अन्तरीयं प्रशस्तं तदच्छिन्नउभयान्तयोरित्येवंलक्षणे ।

**अन्तरे** अव्य० अन्तरेति इण् विच् । मध्ये ।

**अन्तरेण** अव्य० अन्तरेति इण्-ण टवर्गादित्वेऽपि णत्व नेष्टम् । विनार्थे, मध्यार्थे च ।

**अन्तर्गडु** त्रि० अन्तर्मध्ये गडुरिव निरर्थकः। ग्रीवाप्रदेशे जातस्य गलमांसपिण्डस्य गडोर्यथा निरर्थकत्वम् तद्वन्निरर्थके । काव्यान्तर्गडुभूता यानालङ्कारः प्रहेलिकेति साहि०।०परि।

**अन्तर्गृह** न० अन्तर्गृहस्य । गृहमध्ये, वाराणसीस्थे सप्राव-रणवति स्थानविशेषे च ।

**अन्तर्जठर** न० अन्तर्जठरस्य । जठरमध्ये, कुक्षिमध्यस्थकोष्ठे च

**अन्तर्जल** न० अन्तर्जलस्य अव्ययी० । जलमध्ये , जलमध्ये-कर्त्तव्याघमर्षणमन्त्रजपे च। होममन्तर्जलादिनीति स्मृतिः ।

**अन्तर्ज्योतिः** न०अन्तः ज्योतिरिव प्रकाशकम् । अन्तरात्मनि ।

**अन्तर्दधन** न० अन्तर्दध्यते मादकता आधीयतेऽनेन । दध-करणे ल्युट् । किण्वप्रभृतौ मद्यबीजे ।

**अन्तर्दाह** पु० अन्तर्मध्ये दाहः दह-घञ् । देहाभ्यन्तरस-न्तापे, कोष्ठसन्तापे च ।

**अन्तर्द्वार** पु० अन्तर्मध्ये द्वारम् । गृहमध्यस्थे गुप्तद्वारे ।

**अन्तर्द्धान** न० अन्तर्+धा-ल्युट् । तिरोधाने दृश्यपदा-र्थस्य दर्शनायोग्यस्थाने स्थितौ, कृत्यादीनां शरीरत्यागे च । अङि । अन्तर्द्धापत्यर्थे स्त्री० ।

**अन्तर्द्धि** पु० अन्तर्+धा कि । आच्छादने,व्यवधाने,अन्तर्धाने च

**अन्तर्भूत** त्रि०अन्तर्मध्ये भूतः भू+क्त । मध्यस्थिते,अन्तर्गते च

**अन्तर्मनस्** त्रि० अन्तर्गतं बाह्यव्यापाराक्षमतया अन्तरेव स्थितं मनो यस्य । व्याकुलचित्ते, समाहितमनस्के च ।

**अन्तर्यामिन्** पु० अन्तर्मध्येऽनुप्रविश्य यमयति स्वस्वकर्मणि इन्द्रियादीनि जीवं वा व्यापारयति यम-णिच्+णिनि । वायौ, "अन्तराविश्य भूतानि यो बिभर्त्यात्मकेतुभिः । अन्तर्यामीश्वरः साक्षात् भवे"दित्युक्तेः आत्मकेतुभिः निज व्यापारैः प्राणादिवृत्तिभिरित्यर्थः । ईश्वरे, अन्तरेव

यमयतीत्यादिबृहदारण्यकान्तर्यामिब्राह्मणोक्तेः। अन्तर्गतवस्तुज्ञातरि त्रि०।

**अन्तर्वंशिक** त्रि० अन्तर्वंशे राज्ञामाभ्यन्तरगृहे नियुक्तः नियुक्तार्थे ठ। अन्तःपुरे रक्षणार्थं नियुक्ते कुब्जवामनादौ।

**अन्तर्वत्नी** स्त्री० अन्तरस्या अस्ति गर्भः। अन्तर्+मतुप् नि०। गर्भवत्यां स्त्रियाम्।

**अन्तर्वमि** पु० अन्तःस्थित एव वामयति उद्गारशब्दं कारयति वम णिच् इन् तस्य भत्वम्। (ढेकुर) इत्यादि ख्यातस्योद्गारशब्दस्य कारके अजीर्णनामके रोगभेदे।

**अन्तर्वाणि** त्रि० अन्तर्गता अन्तःकरणे स्थिता शास्त्रवाक्यात्मिका वाणी यस्य ब०। न कप् ह्रस्वश्च। बहुशास्त्रवाक्याभिज्ञे पण्डिते।

**अन्तर्वेदी** स्त्री० पृथिव्यामध्यस्थितत्वादन्तर्वेदीव। हरिद्वारावधिप्रयागपर्य्यन्ते मध्यस्थलीति ब्रह्मावर्त्त इति च ख्याते देशे।

**अन्तर्हित** त्रि० अन्तर्-धा-क्त। गुप्ते, तिरोभूते च।

**अन्त(न्ते)वासिन्** पु० अन्ते समीपे वस्तुं शीलमस्य वस-णिनि सप्तम्या वा लुक्। शिष्ये। स्त्रियां ङीप्। समीपवर्त्तिनि त्रि०।

**अन्तशय्या** स्त्री० शयनं शय्या शीङ्-क्यप् अन्तस्य नाशार्थं शय्या चतुर्थ्यर्थे इत०। मरणार्थं भूमिशय्यायाम्, तद्धेतुत्वात् श्मशाने च। अन्त एव शय्या निर्व्यापारार्थकत्वात् कर्म०। मरणे।

**अन्तःस्था** त्रि० अन्तः स्पर्शोष्मणोर्मध्ये तिष्ठतीति स्था-क्विप्। यरलवाख्येषु वर्णेषु। वा विसर्गलोपतोऽन्तस्था अपि।

**अन्तावसायिन्** पु० श्मश्रुकेशानामन्तमवसातुं छेत्तुं शीलमस्य अव+सो-णिनि युक् च। नापिते। अन्ते वृद्धे वयसि अवस्यति निश्चिनोति तत्त्वम्। मुनिभेदे। अन्ताय स्वतोहते जन्तुनाशाय अवस्यति। प्राणिहिंसके चाण्डालादौ।

**अन्ति(का)** स्त्री० अन्यते संबध्यते अन-ति। नटाभिनयनकाले नटुक्तौ ज्येष्ठभगिन्याम्। स्वार्थे के टापि अन्तिकेत्यपि

**अन्तिक** त्रि० अन्यते संबध्यते सामीप्येन, अन-घञ् सोऽस्त्यस्येति मत्वर्थीयः ठन्। सामीप्यवति। स्वार्थे ठनि सामीप्ये पु०। चुल्लाम् न०। ओषधिभेदे स्त्री०।

**अन्तिकाश्रय** पु० अन्तिके समीपे आश्रीयते आ+श्री-अच्। निकटस्थे, अवलम्बनस्थाने च।

**अन्तिम** त्रि० अन्ते भव: अन्त+डिमच्। अन्तभवे, चरमे च।

**अन्त्य** पु० अन्ते पर्य्यन्ते भवतीति अन्त+यत्। चाण्डाले। मुस्तादाम् स्त्री०। अन्तिमे चरमे त्रि०। यथा नक्षत्राणां मध्ये रेवती, राशीनां मध्ये मीनः वर्णानां मध्ये हकार इत्यादि। संख्याभेदे न० "जलधिश्चान्त्यं परार्द्धमिति दशगुणोत्तरा संज्ञे"ति भास्कराचार्य्योक्तेः परार्द्धदशभागे।

**अन्त्यज** पु० अन्त्योऽधमः जायते जन-ड। शूद्रे, स हि वर्णानां विप्रादीनां चतुर्णां मध्ये अधमो जातः। "रजकश्चर्मकारश्च नटो बरुड एव च। कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः" इति स्मृत्युक्तेषु सप्तसु रजकादिषु च। अधमजातमात्रे त्रि०।

**अन्त्यजन्मन्** पु० अन्त्यं जन्म यस्य। शूद्रे। स हि विप्रक्षत्रियवैश्यजन्मानन्तरं ब्रह्मणः पादात् शेषे जातः।

**अन्त्यावसायिन्** पु० "निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम्। श्मशानगोचरं सूते," इति मनूक्तेः निषादस्त्रियां चण्डालजाते मुरदाफरास इति ख्याते सङ्कीर्णवर्णे। "चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा। मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः," इत्यङ्गिरसोक्तचाण्डालादिषु च।

**अन्त्येष्टि** स्त्री० इष्टि र्यागः यज-क्तिन् अन्त्या इष्टिः। मृतस्य दाहादिरूपे चरमसंस्कारे "नान्त्येष्टिर्नास्थिसञ्चय" इति स्मृतिः

**अन्त्र** न० अन्त्यते देहो बध्यतेऽनेन। अति बन्धने ष्ट्रन्। देहबन्धके "ऊह्याः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः अर्द्धव्यामेन हीनानि स्त्रीणामन्त्राणि निर्दिशेत्।" इति वैद्यकोक्तपरिमाणवति नाडीभेदे।

**अन्दुक** पु० अन्द्यते बध्यतेऽनेन अदि बन्धने कु स्वार्थे के ह्रस्वः अभिधानात् पुंस्त्वम्। हस्तिपादबन्धने निगडे, पादकीले च।

**अन्दू** स्त्री० अन्द्यते बध्यतेऽनेन अदि+कू। निगडे स्त्रीपादभूषणे च। [न्दिधत् त।

**अन्ध** दृष्टिनाशे अद० चु० उभ० सक० सेट्। अन्धयति ते आ-

**अन्ध** पु० न० अन्धयति चक्षुषा न पश्यति अच्। चक्षुर्दर्शनहीने। अन्ध्यतेऽनेनेति करणे घञ्। अन्धकारे जले च न०।

**अन्धक** पु० अन्धयति अन्ध-ण्वुल्। देशभेदे, मुनिभेदे, यदुवंश्य नृपभेदे, हिरण्याक्षसुते दैत्यभेदे च। तमसि न०।

**अन्धकरिपु** पु० अन्धकासुरस्य रिपुः। शिवे, अन्धकाख्य तमसो रिपौ सूर्य्ये, चन्द्रे, वह्नौ च।

**अन्धकार** पु० न० अन्धं करोति कृ-अण् उप० स०। तेजोऽभावे तमसि।

**अन्धकूप** पु० अन्धयतीत्यन्धः स चासौ कूपः। अन्धकारे कूपे। अन्धः कूपो यस्य ब०। नरकभेदे। अन्धस्य चक्षुरभावस्य कूपइव। मोहे। स हि धर्माद्यभावसाधकः।

**अन्धतामस** न० अन्धयति अन्ध+अच्, ताम्यति अनेनेति तमु-असि कर्म०-अच् समासान्तः। निविडान्धकारे।

अनुगे च। अक्षु समीपेऽव्ययी०टचि। चक्षुर्निकटे अव्य०।

**अन्वच्** त्रि० अनु+अन्च-क्विन्। अनुगामिनि, अनुपदे च।

**अन्वय** पु० अनु+इण-अच्। सन्ततौ, अनुगतौ, अनुवृत्तौ, आनुकूल्ये, कार्य्य-कारणस्यानुसरणे, कार्य्यसत्तासम्पादकसत्ताकस्य कारणस्य कार्य्योत्स्थितौ, स्वसत्तानियतसत्तावति, कार्य्ये संबन्धे च पदानां, पदोपस्थाप्यपदार्थानाञ्च परस्परेण संबन्धे च।

**अन्वयबोध** पु० अन्वयस्य पदोपस्थाप्यपदार्थानां संबन्धस्य बोधः ६त०। न्यायमते शब्दजन्ये शाब्द इति नामके प्रत्यक्षानुमानादिभिन्ने बोधे। वैशेषिकमते शब्दजन्ये अनुमित्यात्मके एव बोधे।

**अन्वयव्यतिरेकिन्** त्रि० अन्वयव्यतिरेकौ स्तोऽस्य। साध्यसाधके हेतुविशेषे, यथा वह्निसाधने धूमः। स हि वह्निमति महानसादौ वह्न्यभाववति जलादौ च भावाभावाभ्यां वह्नेरन्वयव्याप्त्या व्यतिरेकव्याप्त्येति न्यायमते प्रसिद्धम्।

**अन्वयव्याप्ति** स्त्री० अन्वयेन व्याप्तिर्व्यापकं नियततया। स्थितिः ३त०। यत्र धूमस्तत्र वह्निरित्येवं रूपायां व्याप्तौ।

**अन्ववसर्ग** पु० अनु+अव+सृज-घञ्। यथेष्टं क्रियतामित्येवं रूपायामनुज्ञायाम्।

**अन्ववाय** पु० अन्ववाय्यते उत्पत्त्यानुबध्यते अनु+अव+अय-घञ्, इण्-अच् वा। वंशे, सन्ताने च।

**अन्वष्टका** स्त्री० अनुगतामष्टकाम् गतिस०। अष्टकानन्तरतिथिषु गौणचान्द्रपौषमाघफाल्गुनमासानां कृष्णनवमीषु। तत्र साग्निकस्य मातृश्राद्धमष्टकाश्राद्धवत् कर्त्तव्यम्।

**अन्वहम्** अव्य० अहनि अहनि वीप्सार्थेऽव्ययी० अच्। प्रतिदिने

**अन्वाचय** पु० एकस्य प्राधान्यादन्य आचीयते बोध्यते यत्र अनु+आ+चि-अच्। उद्देश्यसिद्धावनुद्देश्यसिद्धौ। यथा भिक्षां गच्छ यदि गां पश्येस्तामानय, अत्र भिक्षायामेव उद्देशः न गमने, तद्भिक्षोत्तरं गवानयनमनुद्दिष्टमपि साध्यतया निर्द्दिष्टम्।

**अन्वाजे** अव्य० अनु आजयत्यनेन अनु+आ+जि-डे। दुर्ब्बलस्य बलाधाने। सप्तम्यन्तप्रतिरूपकोऽयम्।

**अन्वादेश** पु० अनु+आ+दिश घञ्। पूर्व्वोक्तस्य किञ्चित्कार्य्यान्तर विधातुं पुनरुपदेशे। यथा अनेन व्याकरणमधीतं न्यायमेनं पाठयेति न्यायपाठनार्थं पुनरुपदेशः। कथितकथने, अनुवादार्थे च।

**अन्वाधेय** न० अनु+आ+धाञ् यत्। "विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया। अन्वाधेयं तु तद्बन्धं लब्धं बन्धुकुलात्तथे"त्युक्तलक्षणे स्त्रीधने। पश्चादधेये वस्तुनि त्रि०।

**अन्वासन** न० अनु+आस-ल्युट्। पश्चादुपवेशनक्रमे सेवने, अनुशोचने च। आधारे ल्युटि शिल्पस्थाने।

**अन्वाहार्य्य** न० अनु व्याप्तौ, मासिमासि आह्रियते अनु+आ+हृ-ण्यत्। प्रतिमासकर्त्तव्येऽमावास्याविहिते श्राद्धे "पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा" इति स्मृतिः, यागदक्षिणायाञ्च।

**अन्वाहार्य्यपचन** पु० अन्वाहार्य्यं श्राद्धं पच्यतेऽनेन पच+ल्युट्। दक्षिणाग्नौ अग्निवेदविधिना स्थापितेऽग्नौ।

**अन्विच्छा** स्त्री० अनु+इष-अ नि०। अन्वेषणे।

**अन्विष्ट** त्रि० अनु+इष-क्त। अन्वेषिते।

**अन्वीक्षा** स्त्री० अनु श्रवणादनु ईक्षा श्रुतार्थस्य युक्तायुक्तत्वपर्य्यालोचना अनु+ईक्ष-अङ्। वेदवाक्यश्रवणानन्तरं तदर्थपर्य्यालोचनायाम्। अतएवैतदुपयोगिनी विद्या आन्वीक्षिकीत्युच्यते।

**अन्वेषण** न० अनु+इष-ल्युट्। अनुसन्धाने। व्यवधानादिना अदर्शनं गतस्य ज्ञानार्थं प्रयत्नोऽत्रानुसन्धानम्। बाहुल्यात् युचि। अन्वेषणा। तदिच्छेवार्थे स्त्री०।

**अप्** स्त्री० बहु० आप-क्विप् ह्रस्वः। जले।

**अप** अव्य० न पाति पा-ड। वियोगे, विकृतौ, विपरीते, निदर्शने, आनन्दे, वर्ज्जने, चौर्य्ये च।

**अपकर्म्मन्** न० अपकृष्टं कर्म्म प्रा०। दुराचरणे। ब०। दुराचरणवति त्रि०।

**अपकर्ष** पु० अप+कृष-घञ्। उचितधर्म्मविरहया हीनतायां, स्वकर्त्तव्यकालात् पूर्व्वकालकरणे च।

**अपकार** पु० अप+कृ घञ्। अनिष्टोत्पादने, तद्धेतौ द्वेषे च।

**अपकारगिर्** स्त्री० अपकारेण द्वेषेण गीर्य्यते गॄ-क्विप्। भर्त्सनवाक्ये। [कार्य्ये कृते च।

**अपकृष्ट** त्रि० अप+कृष-क्त। अधमे, हीने, स्वकालात् पूर्व्वं

**अपक्रम** पु० अपपत्य क्रमो गतिः क्रम घञ् अवृद्धिः। पलायने।

**अपक्रिया** स्त्री० अप+कृ-श। द्रोहे, अपकारे च।

**अपक्रोश** पु० अप+क्रुश-घञ्। निन्दने। उपक्रोशोऽप्यत्र।

**अपक्षेपण** न० अप-क्षिप-ल्युट्। अधःस्थानसंयोगहेतौ क्रियाविशेषे, अधःपातने च। अवक्षेपणमप्यत्रार्थे।

**अपगत** त्रि० अप+गम-क्त। मृते, पलायिते, गते, दूरीभूते च

**अपघन** पु० अप+हन अप् घनादेशः। देहे, अङ्गे निचित-हस्तादावित्ते त्रि०। [च।

**अपघात** पु० अप+हन-घञ्। अपमृत्युहनने दुष्टोद्देशमरणे

**अपचय** पु० अप+चि अच्। हानौ, अपहरणे, व्ययने च।

**अपचायित** त्रि॰ अप+चाय-चि-स्वार्थे णिच्-वा क्त । पूजिते ।
**अपचार** पु॰ अप+चर घञ् । अहिताचरणे । अपगतचारे, दूतहीने च त्रि॰ । [चि-क्त । हीने ।
**अपचित** त्रि॰ अप+चाय-क्त चायः चिभावः । पूजिते ।
**अपचिति** स्त्री॰ अप+चाय+क्तिन् प्रकृतेश्चिभावः । पूजायां चि+क्तिन् । हानौ व्ययायाञ्च ।
**अपटान्तर** त्रि॰ पटेन तिरस्करिण्या अन्तरमत्र । अव्यवहिते, आसक्ते, संसक्ते च । अपदान्तरमित्यप्यत्रैवार्थे ।
**अपटी** स्त्री॰ अल्पः पटः पटी न॰त॰ । कानात् इति ख्याते वस्त्रप्रावरणे । [क्षमे च
**अपटु** त्रि॰ पटुर्दक्षः न॰त॰ । रोगिणि, दक्षतारहिते कार्या-
**अपतर्पण** न॰ अप+तृप-ल्युट् । रोगादौ उपवासे, तृप्त्यभावे च
**अपत्य** न॰ न पतन्ति पितरोऽनेन पत-यत् न॰त॰ । पुत्रदुहितृरूपे संताने । [ओषधिविशेषे गर्भदात्रिविद्यादौ च ।
**अपत्यदा** स्त्री॰ अपत्यं तद्धेतु गर्भं ददाति । सेवनेन गर्भधाहके
**अपत्यशत्रु** पु॰ अपत्यस्य शत्रुः ६त॰ । कर्कटे ।
**अपत्र** पु॰ न विद्यते पत्रमस्य । अङ्कुरे तस्य पत्राभावात् ।
**अपत्रप** त्रि॰ अपगता त्रपा लज्जा यस्मात् ५ब॰ । लज्जाहीने ।
**अपत्रपा** स्त्री॰ अप+त्रप-अङ् । अन्यहेतुकलज्जायाम् ।
**अपत्रपिष्णु** त्रि॰ अप+त्रप-इष्णुच् । स्वभावतो लज्जाशीले ।
**अपथ** न॰ न पन्थाः न॰त॰ वा अच् । कुपथे, पथोऽभावे च । अत्र वा अचोऽभावे अपथिन् इत्यपि । ब॰ । पथिशून्ये त्रि॰ ।
**अपथ्य** त्रि॰ पथि (रोगिभोजने) हितं पथिन्+यत् न॰त॰ । रोगिभोजनायोग्ये । [अवदानमप्यत्रार्थे ।
**अपदान** न॰ अप+दैप-ल्युट् । शोधने, (प्रशस्ते) कर्म्मणि
**अपदिश** न॰ दिशयोर्मध्ये अप+दिशा+अव्ययी॰ । दिशोर्मध्ये विदिक् इति कोण इति च ख्याते ।
**अपदेश** पु॰ अप+दिश-घञ् । लक्ष्ये, स्वरूपाच्छादनरूपे, छले, निमित्ते, स्थाने च ।
**अपध्वंसज** पु॰ अपध्वस्यतेऽनेन अपध्वंसः वर्णानां भिन्नरूपता संपादकः सङ्करस्तस्माज्जायते जन-ड ५त॰ । भिन्नवर्णसङ्गमजाते करणादौ सङ्कीर्णवर्णे । [चूर्णिते च ।
**अपध्वस्त** त्रि॰ अप+ध्वंस-क्त । निन्दिते, परित्यक्ते, अव-
**अपनयन** न॰ अप+नी-ल्युट् । दूरीकरणे, खण्डने च ।
**अपनोदन** न॰ अप+नुद-ल्युट् । दूरीकरणे, खण्डने च ।
**अपभ्रंश** भ॰ अप+भ्रंश-पतने घञ् । पतने । अपभ्रश्यते अधर्म्महेतुतया पात्यतेऽनेन करणे घञ् । साधुशब्दभिन्ने अपशब्दे भाषाशब्दे यज्ञादौ तदुच्चारणस्य पापहेतुत्वात् ।

**अपमान** न॰ अप+मि-मा-वा ल्युट् । अवज्ञायाम् ।
**अपमित्यक** न॰अपमितिरपमानं तेनाकं दुःखं यत्र । अपमानहेतुकदुःखदायके ऋणे, तद्ग्रहणे हि उत्तमर्णसमीपेऽनादरात् दुःखं भवति ।
**अपमृत्यु** पु॰ अपकृष्टो मृत्युः प्रा॰स॰ । मरणहेतुरोगादिकं विना शस्त्रादिना स्वयमन्यतो वा मरणे ।
**अपयान** न॰ अप+या-ल्युट् । अपसरणे, पलायने च ।
**अपर** न॰ न पूर्य्यते यतः पृ-अपादाने,अप् । गजस्य पश्चाद्भागे । न पृणाति सन्तोषयति पृ-अच् । पत्नौ । अर्वाचीने, भिन्ने च त्रि॰ । पश्चिमायां दिशि, ऋग्वेदादिविद्यायां च स्त्री॰ ।
**अपरक्त** त्रि॰ अप+रन्ज-कर्त्तरि क्त । विरक्ते, अननुकूले ।
**अपरति** स्त्री॰ अप+रम-क्तिन् । विरागे, निवृत्तौ च ।
**अपरत्र** अव्य॰ अपर+त्रल् । पश्चादर्थे, परकाले च ।
**अपरत्व** न॰ अपरस्य भावः त्व । अपर इति व्यवहारके न्यायमते गुणभेदे, तच्च द्विविधं कालिकं दैशिकञ्च तत्र माघादपरः पौष इति कालिकं, पाटलिपुत्रादपरा काशीति दैशिकम् ।
**अपरपक्ष** पु॰ अपरो निकृष्टः पक्षः कर्म्म॰ । कृष्णपक्षे ।
**अपररात्र** पु॰ अपरं रात्रेः एक॰ त॰ टच् । रात्रिशेषे ।
**अपरस्पर** न॰ अपरश्च परश्च द्व॰ पूर्व्वपदे सुट् । क्रियत्सातत्ये सन्ततैकरूपक्रियाकरणे ।
**अपराजित** पु॰ परा+जि-क्त न॰त॰ । शिवे, विष्णौ, ऋषिभेदे च । पराजितभिन्ने त्रि॰ । दूर्व्वायां, स्वनामख्यातायां लतायां, दुर्गायां, शेफालिकायां, जयन्तीवृक्षे, अश्मन्तके, शङ्खिनीवृक्षे च स्त्री॰ ।
**अपराद्धपृषत्क** पु॰ अपराद्धेर लक्ष्यात् च्युतः पृषत्को बाणो यस्य अप+राध-क्त ब॰ । लक्ष्यापातिशायके धानुष्के ।
**अपराध** पु॰ अप+राध-घञ् । अकार्य्यादिकरणरूपे दोषे ।
**अपरान्त** पु॰ अपरस्या अन्तः । पाश्चात्त्यदेशभेदे । तद्देशवासिनि त्रि॰
**अपराह्ण** पु॰ अपरमह्नः एक॰ त॰ टच् अह्नादेशो णत्वञ्च । त्रिधा विभक्तदिनस्य तृतीये भागे ।
**अपरिग्रह** पु॰परि+ग्रह-अप् न॰त॰ । असंग्रहे, स्वीकाराभावे च । नास्ति कन्थाकौपीनाद्यतिरिक्तः परिग्रहो यस्य ब॰ । परिव्राजके । परिग्रहमात्रशून्ये त्रि॰ ।
**अपरिच्छिन्न** त्रि॰ परि+छिद-क्त न॰त॰ । इयत्तारहिते ।
**अपरिहार्य्य** त्रि॰ परि+हृ-ण्यत् न॰त॰ । परिहर्त्तुमयोग्ये
**अपरेद्युस्** अव्य॰ अपरस्मिन्नहनि अपर+एद्युस् । अपरदिने
**अपरोक्ष** न॰ परोऽतीतः अक्षाणामिन्द्रियाणां न भवति पर+अक्षि+अच्‌ समा॰ टच् नि॰ सुट् । विषयेन्द्रियसन्निकर्ष-

जन्ये प्रत्यक्षरूपे ज्ञाने । अर्श आद्यच् तद्विषये त्रि० ।

**अपर्णा** स्त्री० न पर्णान्यपि भोजनं यस्याः । हिमाद्रिजायाम् तपसि स्थितया तया पर्णस्याप्यभोजनात् । पर्णशून्ये त्रि० ।

**अपर्य्याप्त** त्रि० परि+आप्-क्त न०त० । असमर्थे, असम्पूर्णे च ।

**अपलाप** पु० अप+लप-घञ् । सतोऽप्यसत्त्वेन कथनरूपे अपह्नवे, प्रेम्णि च ।

**अपवरक** न० अप+वृ० वर-इच्छायां कर्म्मणि ण्वुल् । वासगृहे ।

**अपवर्ग** पु० अप+वृज-घञ् । दाने, निर्वाणमोक्षे, फलसाधने, समाप्तौ च ।

**अपवर्ज्जन** न० अप+वृज-ल्युट् । दानादावपवर्गार्थे ।

**अपवर्त्तन** न० अप+वृत-णिच्-ल्युट् । परिवर्त्तने, वक्रीभावे, अङ्कशास्त्रे प्रसिद्धे भाज्यभाजकयोरुभयोरपि तुल्यरूपेण केनचिदङ्केन विभाजने च ।

**अपवाद** पु० अप+वद-घञ् । निन्दायाम्, आज्ञायाम्, प्रणये, विश्वासे, विशेषविधिरूपे बाधके, वेदान्तप्रसिद्धे रज्जौ प्रतिभातस्य रजतस्य रज्जुमात्ररूपतालाभे च ।

**अपवारण** न० अप+वृ० । वृ-ल्युट् । अन्तर्द्धाने ।

**अपविद्ध** त्रि० अप+व्यध-क्त । त्यक्ते, प्रत्याख्याते प्रतिक्षिप्ते, "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते इत्युक्तरूपे पुत्रभेदे च ।

**अपविषा** स्त्री० अपगतं विषं यस्याः ५त० । विषहारिण्याम् ।

**अपवृत्त** त्रि० अप+वृत-क्त । पराङ्मुखीभूते ।

**अपशब्द** पु० अपकृष्टः शब्दः प्रा०स० । संस्कृतभिन्ने शब्दे "तएव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिता इतिहर्य्युक्तदिशा संस्कृतशब्दएव अन्यथोच्चारणादसाधुत्वं गते भाषाशब्दे ।

**अपशोक** पु० अपगतः शोको यस्मात् ब० । अशोकवृक्षे । शोकरहिते त्रि० ।

**अपष्ठु** अव्य० अप+स्था-कु षत्वम् । निर्दोषे, शोभने, विपरीते, च । प्रतिकूले, विरुद्धार्थे च त्रि० । काले पु० ।

**अपष्ठुल** त्रि० अप+स्था-उलच् षत्वम् । निमित्ते, विपरीते च

**अपसद** त्रि० अपकृष्टइव सीदति सद-अच् । अधमे, नीचे च ।

**अपसर्ज्जन** न० अप+सृज-ल्युट् । दाने, परिवर्ज्जने ।

**अपसर्प** पु० अप+सृप-अच् । गुप्तचरे । भावे अपसरणे ।

**अपसव्य** पु० अपगतं सव्यं यत्र । दक्षिणभागे । विपरीतार्थे न० ।

**अपस्कर** पु० अवयवीभूते रथस्थाने विण्मूत्रे अप+कृ-अप् सुडागमः । रथभिन्ने रथाङ्गे रथारम्भके काष्ठे ।

**अपस्नात** त्रि० अपकृष्टं स्नातः । मृतस्नानार्थं स्नाते ।

**अपस्मार** पु० अपगतः स्मारः स्मरणं यस्मात् ५ब० । मिरगीइति ख्याते रोगभेदे । तस्मिन् सति तद्रोगिणस्तदानीं सर्व्वविषयस्मृतिर्नश्यति । [अपसारिते ।

**अपहस्त** त्रि० अपसारणार्थो हस्तो यस्मिन् । गलहस्तादिना

**अपहार** पु० अप+हृ-घञ् । अपसारणे, अपचये, चौर्य्ये, सङ्गोपने, धनस्याम्यनुपयोगिव्यये च ।

**अपह्नव** पु० अप+ह्नु-अप् । सतोऽपि वस्तुनोऽसत्त्वेन कथनरूपेऽपलापे, प्रेम्णि च ।

**अपह्नुति** स्त्री० अप+ह्नु-क्तिन् । अपलापे, अलङ्कारशास्त्रे प्रसिद्धे अर्थालङ्कारभेदे च सा०१०परि० ।

**अपांनाथ** पु० ६त० । अलुक् स० । समुद्रे ।

**अपांनिधि** पु० नि+धा-कि ६त० अलुक् स० । समुद्रे ।

**अपांपति** पु० पा+डति ६त० अलुक् स० । समुद्रे, वरुणे च ।

**अपांपित्त** न० ६त० अलुक् स०वा । अग्नौ, तस्य जलहेतुत्वात् तत्पित्तत्वम् "आकाशाद्वायुर्वायोरग्निरग्नेराप" इति श्रुतेः । अत्र वा लुकि अप्पित्तमित्यपि ।

**अपाक** पु० पच-घञ् न०त० । पाकाभावे, भुक्तान्नादेरग्निमान्द्यादिना पाकाभावे च । ७ब० । तत्साधने अजीर्णतारोगे । ६ब० । पाकरहिते आमे त्रि० ।

**अपाकरण** न० अप+आ+कृ-ल्युट् । निराकरणे ।

**अपाकशाक** पु० न पच्यते शाको यस्य । आर्द्रके तस्य मूलमेव भोजनार्थं पच्यते न शाकः ।

**अपाङ्क्तेय** त्रि० सद्भिः सह भोजने पङ्क्तिमर्हति अर्हार्थे ढ न०त० । सद्भिः सह एकपङ्क्तौ भोजनानर्हे स्तेन पतितादौ । अत्र ष्यञि अपाङ्क्त्य इत्यपि ।

**अपाङ्ग** पु० अपाङ्गति तिर्य्यक् चलति नेत्रं यत्र अप+अङ्ग घञ् । नेत्रप्रान्ते, तिलके च । अपगतोऽङ्गात् गत्यादि० स० । अङ्गहीने त्रि० ।

**अपाङ्गक** पु० अपकृष्टमङ्गं यस्य ब० कप् । आपाङ् इति ख्याते अपामार्गे । नेत्रान्ते पु० । अपगताङ्गे त्रि० ।

**अपाङ्गदर्शन** न० अपाङ्गेन नेत्रान्ताभ्यां दर्शनं ३त० । कटाक्षे ।

**अपाटव** न० नास्ति पाटवं पटुता यस्य पटु+भावेऽण् । ७ब० । रोगे । न०त० । पटुताभिन्ने । ६ब० । पटुताशून्ये त्रि० ।

**अपात्र** न० पात्रं श्राद्धभोजनदानादियोग्यं न०त० । विद्यादिहीनेऽनाचारे, दानादियोग्यताहीने कुपात्रे, शठादौ च ।

**अपात्रीकरण** न०अपात्रं श्राद्धभोजनाद्ययोग्यं क्रियतेऽनेन । निन्दितधनप्रतिग्रहादिजनिते पापभेदे । "निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च

भावय”मिति मनूक्ते तद्धेतुभूते निन्दितधनादानादौ च ।
**अपादान** न० व्याकरणप्रसिद्धे वियोगक्रियावधिभूते विभागजनकतत्क्रियानाधारे तत्क्रियाजन्यविभागाश्रये ।
**अपान** पु० अपसरणेनानियनेन अप+अन-घञ् । सततमधोगमनशीले, गुह्यदेशस्थे, “अधोनयत्यपानस्तु आहारञ्च तथा पुन”रित्युक्तलक्षणे “मूत्रशुक्रवहोवायुरपान इति कीर्त्यते” इत्युक्तलक्षणे च वायौ । गुह्ये न० ।
**अपामार्ग** पु० अपमृज्यते व्याधिरनेन मृज्-करणे घञ् कुत्वं दीर्घौ । आपाङ् इति ख्याते वृक्षे ।
**अपाय** पु० अप+इण्-अच् । वियोगे, नाशे, अपसरणे च ।
**अपार** त्रि० उत्तरोऽवधिः पारं न०ब० । उत्तरावधिशून्ये। नद्यादेरर्वाचीने अवारे तीरे न० ।
**अपार्थ** त्रि० अपगतोऽर्थोऽभिधेयं प्रयोजनं वा यस्मात् ५ब० । अर्थशून्ये, प्रयोजनशून्ये च । ब०कपि । अपार्थकमप्यत्रार्थे, निष्प्रयोजने, असंबद्धार्थके वाक्ये च ।
**अपावृत** त्रि० अप+आ+वृ-क्त । अनाच्छादिते, अप्रतिबद्धे स्वतन्त्रे, उद्घाटिते च ।
**अपावृत्त** त्रि० अप+आ+वृत-क्त । लुण्ठिते, परावृत्ते च ।
**अपाश्रय** पु० अप+आ+श्री-अच् । आश्रयशून्ये। अपाश्रयतीति कर्त्तरि अचि । अधीने । करणेऽचि। चन्द्रातपे ।
**अपासन** न० अप+अस-णिच्-ल्युट् । मारणे ।
**अपास्त** त्रि० अप+अस-क्षेपे क्त । निरस्ते-अवधीरिते च ।
**अपि** अव्य० न पियति गच्छति पि-गतौ क्विप् न तुक् । अयक्य करणायोद्यमरूपायां, गर्हासमुच्चयोत्कर्षमाविष्कर्तुमत्युक्तिरूपायां, वा सम्भावनायां, सन्देहे, निन्दायां, प्रश्ने, समुच्चये, अल्पपदार्थे कामचारानुज्ञायाम् अवधारणे, पुनरर्थे च ।
**अपिगीर्ण** त्रि० अपि+गॄ-क्त । स्तुते,वर्णिते,उद्गीर्णे च ।
**अपितु** अव्य० अपि+तन् डु । किन्त्वर्थे, यद्यर्थे, यद्यपीत्यर्थे च ।
**अपिधान** न० अपि+धाञ् ल्युट् । आच्छादने, अत्र अपेर्लोपे । पिधानमपि । [ पिनद्धमप्यत्र ।
**अपिनद्ध** त्रि० अपि+नह-क्त । परिहिते वसनादौ । अपेर्लोपे
**अपीच्य** त्रि०अपि+न-च्यवते सौन्दर्य्याद्धीयते च्यु-ड । उपसर्गदीर्घः । अतिसुन्दरे । [ वृक्षे । पुच्छहीने त्रि० ।
**अपुच्छा** स्त्री० नास्ति पुच्छमस्यां यस्याः । शिखरहीने शिंशपा-
**अपुनरावृत्ति** स्त्री०न पुनरावृत्तिरागमनं यत्र ७ब०। निर्वाण मुक्तौ । ६ब० । पुनर्गमनशून्ये त्रि० । न०त० । पुनरागत्यभावे स्त्री० । [६ब० । अत्यन्तमुक्ते । न०त० । पुनर्जन्माभावे ।
**अपुनर्भव** पु० न पुनर्भवो जन्म यत्र ७ब० । निर्वाणे मोक्षे ।
**अपुष्पफलद** पु० पुष्पं विनापि फलं ददाति दा-क उप०स० । पुष्पशून्ये फलवति पनसोदुम्बरादिवृक्षे ।
**अपूप** पु० न पूयते विशीर्य्यति पू-प । गोधूमादिचूर्णपिष्टके ।
**अपूरणी** स्त्री० न पूर्य्यते सर्व्वत कण्टकावृततया दुरारोहत्वात् । शाल्मलिवृक्षे । संख्यापूरणसाधनभिन्ने च ।
**अपूर्व्व** त्रि० न पूर्व्वं दृष्टम् । अविदिते आश्चर्य्ये । ६ब० । कारणशून्ये परमात्मनि पु० । वैधनिषेधक्रियाजन्ये कालान्तरभाविनो सुखदुःखयोर्हेतुभूतयो पुण्यपापयो न० । पूर्व्वकालादिभिन्ने त्रि० ।
**अपूर्व्वविधि** पु० अपूर्व्वे प्रमाणान्तरेणाप्राप्ते विधिर्विधानम् वि+धा-कि । अप्राप्तप्रापके लिङादिपदवेदनीये शब्दविशेषे । यथा स्वर्गकामो यजेतेति लिङ्युक्तं वाक्यं प्रमाणान्तरेणाप्राप्तस्य स्वर्गसाधनत्वस्य यागे बोधयत् अपूर्व्वविधिः ।
**अपेक्षा** स्त्री० अप+ईक्ष-अङ् । आकाङ्क्षायां, कार्य्यकारणयोरवश्यसम्बन्धे च । अपेक्षते प्रत्ययमुत्तमं त्वामिति कुमार
**अपेक्षाबुद्धि** स्त्री० अयमेकः अयमेकइत्याकारिकायां अनेकत्वादिविषयिण्यां बुद्धौ ।
**अपेक्षाबुद्धिज** त्रि० न्यायमते प्रसिद्धे द्वित्वादारभ्य परार्द्धसंख्याभेदे, द्वित्वादिकं हि प्रागुक्तापेक्षाबुद्धितोजायते ।
**अपोगण्ड** त्रि० पुनाति पवते वा पू-विच् न पोगण्ड एकदेशोऽस्य । शिशौ, अधिके,विकलाङ्गे, अतिभीरौ च ।
**अपोढ** त्रि० अप-उह-क्त । निरस्ते, बाधिते च ।
**अपोदका** स्त्री० अपगतमुदकं यस्याः ५ब० । पूतिका इति ख्याते शाके ।
**अपोह** पु०अपगत-ऊहो वादिप्रसङ्गावितर्को यस्मात् ५ब० । वादिप्रसङ्गाविततर्कनिरासार्थके प्रतिवादिप्रसङ्गापादितविरुद्धे तर्कभेदे । अप+ऊह-क्त घञि गुणे परद्धरूपम् । त्यागे, अतद्व्यावृत्तौ च ।
**अप्पति** पु० अपां पतिः ६त० । वरुणे समुद्रे च । [कादौ ।
**अप्रकाण्ड** पु० न प्रकाण्ड स्कन्धो यस्य । स्कन्धशून्ये झिण्टि-
**अप्रकाश** त्रि० प्र+काश घञ् न०त० । नाट्ये रङ्गभूमिस्थसामाजिकसन्निधाने एव प्रकाश्ये जनान्तिकपदबोधनीये रङ्गस्थमात्रादिबोधायोग्ये । परप्रच्छन्ने न० । न०त० । प्रकाशाभावे, गोपने च पु० ।
**अप्रकृष्टगुण** त्रि० न प्रकृष्टः गुणो यस्य न०ब० । व्याकुले ।
**अप्रतिकर** त्रि० न प्रतिक्रियते गोपनार्थं न व्याप्रियते यस्मिन् क-आधारे अप् । विश्वासपात्रे ।
**अप्रतिरथ** न० न प्रतिकूलो रथोऽत्र । युद्धार्थयाने, साम-

समये यानान्तरमङ्क्ते, सामान्यमभेदे च। न प्रतिमल्लो रथो रथान्तरमस्य इब०। प्रबलत्वे योधे, विष्णौ च पु०।

**अप्रतिरूपकथा** स्त्री० नास्ति प्रतिरूपा प्रत्युत्तरी भूता कथा यस्याः। उत्तरवाक्यरहितायां वाचि।

**अप्रत्यक्ष** त्रि० ज्ञानभेदः प्रत्यक्षं न०त०। प्रत्यक्षागोचरे अतीन्द्रिये। न०त०। प्रत्यक्षाभावे। न०ब०। प्रत्यक्षज्ञानशून्ये त्रि०।

**अप्रधान** न०। न०त०। प्रधानभिन्ने गौणे।

**अप्रस्तुतप्रशंसा** अप्रस्तुतस्य प्रशंसा प्राकरणिकार्थस्याक्षेपादिना प्रशंसा स्तुतिः। अलङ्कारप्रसिद्धे अर्थालङ्कारविशेषे। सा०द०परि०।

**अप्रहत** त्रि० न प्रहन्यते स्म प्र+हन-क्त न०त०। अनाहते अकर्षभूम्यादौ खिल इति ख्याते।

**अप्राग्र्य** त्रि० प्राग्र्यं प्रधानं न०त०। अप्रधाने।

**अप्सरस्** स्त्री० बहु०। अद्भ्यः सरन्ति सृ-असि। समुद्रात् उत्पन्नत्वात् उर्वश्यादिस्वर्गवेश्यायाम्। प्रवादाचि। अप्सरा।

**अफल** पु० नास्ति फलं यस्य। फलशून्ये झाउ इति ख्याते वृक्षे। निष्फले इन्द्रमाले, निष्प्रयोजने वस्तुमात्रे च त्रि०। फलशून्यायां घृतकुमार्यां, भूम्यामलक्याञ्च स्त्री०।

**अफेन** न० नास्ति फेनं यस्य। वृक्षविशेषनिर्यासे आफिङ् इति ख्याते अहिफेने।

**अब** शब्दे इदित् भ्वादि० आत्म० सक० सेट्। अम्बते आम्बिष्ट

**अबद्ध** न० न संबध्यते स्म बन्ध-क्त। समुदायार्थशून्ये निरर्थके वाक्ये। स्वार्थे के। अबद्धकमप्यत्र। संबन्धहीने त्रि०।

**अबद्धमुख** त्रि० न बद्धं नियन्त्रितं मुखमस्य। दुष्टवाक्यवादिनि दुर्मुखे। [वाक्ये न०।

**अबध्य** त्रि० बध+यदर्थे यत् न०त०। बधानर्हे। अनर्थक-

**अबन्ध्य** त्रि० बन्धे फलप्रतिबन्धे साधु बन्ध-यत् न०त०। सफले।

**अबल** पु० नास्ति बलं यस्मात् ५ब०। वरुणवृक्षे तत्तोवने हि बलक्षयः। इब०। बलरहिते दुर्बले च त्रि०। योषिति स्त्री०

**अबाध** त्रि० नास्ति बाधा यस्य। अप्रतिबद्धे, पीडाशून्ये च।

**अबिन्धन** पु० आपस्त्वन्धनं दाह्यमस्य। बाडवाग्नौ वज्राग्नौ च

**अब्ज** न० अप्सु जायते जन-ड ५त०। पद्मे, "अर्बुदमब्जं खर्वनिखर्व"त्यादिभास्करार्योक्तेः शतकोटिसंख्यायाञ्च। शङ्खे पु०न०। चन्द्रे धन्वन्तरौ च पु०।

**अब्जज** पु० अब्जात् विष्णुनाभिपद्मात् जायते जन-ड। वेधसि। "भरण्यां, स्वातौ, मैत्र्ये वायव्ये वा भृगोः सुते। नीचे वाब्जजयोगोऽयं यातः सद्गुविनायकः इति"स्तुतप्रसिद्धे ज्योतिषप्रसिद्धे यात्रिकयोगभेदे च।

**अब्जभोग** पु० अब्जस्य पद्मस्य भोग इवाकारः इवाकारो यस्य। वराटके। अब्जस्य पद्मस्य भोगः देहाकारः। पद्मकन्दे।

**अब्जयोनि** पु० अब्जं योनिरुत्पत्तिस्थानं यस्य। विधातरि।

**अब्जवाहन** पु० अब्जमिव शुभ्रत्वात् वृषभो वाहनमस्य। वृषवाहने शिवे।

**अब्जहस्त** पु० अब्जश्चन्द्रो हस्तात् किरणात् यस्य। सूर्ये, सूर्यकिरणसंपर्कादेव चन्द्रप्रादुर्भाव इति ज्योतिषसिद्धान्तः।

**अब्जिनी** स्त्री० अब्जानि सन्त्यस्मिन् देशे, अब्जानां समूह इति वा इनि स्त्रीत्वम्। पद्मयुक्तलतायां पद्मसमूहे च।

**अब्जिनीपति** पु० अब्जिन्याः पद्मसमूहस्य पतिः प्रकाशकतयाऽनुकूलः। सूर्ये।

**अब्द** पु० अपोददाति दा-क। मेघे, जलदे, वत्सरे, मुथा इति ख्याते मुस्तके, शैलभेदे च।

**अब्दसार** पु० अब्दस्य मुस्तस्य सारो रसवदंशः। कर्पूरभेदे

**अब्धि** पु० आपो धीयन्तेऽत्र धा-आधारे कि। जलधौ।

**अब्धिकफ** पु० अब्धेः समुद्रस्य कफ इव। समुद्रफेने।

**अब्धिद्वीपा** स्त्री० अब्धिसंख्याता लवणादिचतुःसंख्याता द्वीपा यस्याः। लवणप्रभृतिसप्तद्वीपवत्याम् पृथिव्याम्। [चन्द्रे।

**अब्धिनवनीतक** पु० अब्धेः समुद्रस्य नवनीतमिव स्वार्थे क।

**अब्धिमण्डूकी** स्त्री० अब्धिं मण्डयति मण्ड-ऊक गौरा० ङीप्। मुक्तासाधने शुक्तौ। [शेते।

**अब्धिशयन** पु० अब्धौ शयनमस्य। विष्णौ, स हि प्रलये अब्धौ

**अब्भक्ष** पु० अपोभक्षयति। सर्पभेदे। नित्यं जलपायिनि त्रि०

**अभ्र** न० अपो बिभर्ति भृ-क। मेघे। न बिभर्ति किञ्चित् बकारहीन एवायं गगने।

**अभ्रंलिह** पु० अभ्रं मेघं लेढि अत्युच्चतया स्पृशति। लिह-खश् मुम् च। वायौ। मेघस्पर्शिनि उच्चतमे त्रि०। [भेदे।

**अभ्रक** न० आभ्रमिव कायति राजते कै-क। [अभ्र] धातु-

**अभ्रंकष** न० अभ्रं कषति स्पर्शादिना पीडयति। कष-खश् मुम् च। वायौ। अत्युच्चे त्रि०।

**अभ्रपुष्प** न० अभ्रस्य पुष्पमिव शुभ्रत्वात् कार्यत्वाच्च। जले। आभ्रमिव पुष्पमस्य ब०। वेतसवृक्षे पु०।

**अभ्रमातङ्ग** पु० आभ्रात्मको मातङ्गः शा०त०। ऐरावते गजे।

**अभ्रमु** स्त्री० अभ्रे अभ्रात्मके ऐरावते माति मा-डु। ऐरावतस्य योषिति।

**अभ्रमुवल्लभ** पु० अभ्रमोर्वल्लभः ६त०। ऐरावते गजे।

**अभ्ररोहस्** पु० अभ्रात् मेघशब्दात् रोहति रुह-असि। वैदूर्यमणौ तस्य हि मेघशब्दादुद्भव इति प्रसिद्धम्।

**अभ्रोत्थ** न० अभ्रात् तद्विशेषादुत्तिष्ठति स्था-क। वज्रे।

**अब्र(ब्र)ह्मण्य** न० न (ब्र) ह्मणि वेदे साधु ब्रह्मन्+यत्। न०ब०। हिंसाया वेदनिन्दितत्वात्। नाट्योक्तौ अयं न वध्य इत्याकारके वाक्ये ब्रह्मण्याभावे च। ब०। ब्रह्मण्यशून्ये त्रि०।
**अब्रा(ब्रा)ह्मण** पु० अब्राह्मणे नञा त०। अपकृष्टविप्रे।
**अभ** ध्वनौ भ्वा०आत्म० इदित् अक० सेट्। अम्भते आम्भिष्ट।
**अभय** न० भी-अच् न०त०। भयाभावे। ६ब०। भयशून्ये त्रि० न भयमस्मात् ५ब०। परमात्मनि, तज्ज्ञाने च। अभयं वै जनक। प्राप्तोऽसीति श्रुतिः। हरितक्या स्त्री०।
**अभयडिण्डिम** पु० अभयार्थं डिण्डिमः। जयढक्कायाम्।
**अभाव** पु० भू-घञ् न०त०। मरणे अविद्यमानतायाम्। न्यायमते द्रव्यादिषट्कं भावपदार्थभिन्ने।
**अभाषण** न० भाष-ल्युट् न०त०। मौने, कथनाभावे च।
**अभि** अव्य०न भाति भा-कि। कश्चित् प्रकारं प्राप्तस्य द्योतने, आभिमुख्ये अभिलाषे, वीप्सायां, लक्षणे, समन्तादर्थे च।
**अभिक** त्रि० अभिकामयते अभि+कम-नि०। कामुके।
**अभिक्रम** पु० अभि+क्रम भावे घञ् अवृद्धि। आरम्भे, आरोहणे, युद्धे, शत्रुसंमुखयाने। कर्मणि घञि। आरब्धे। [च।
**अभिख्या** स्त्री० अभि+ख्या अङ्। अभिधाने शोभायां, कीर्त्तौ
**अभिग्रस्त** त्रि० अभि+ग्रस-क्त। शत्रुभिराक्रान्ते।
**अभिग्रह** पु० अभि+ग्रह अच्। लुट इतिख्याते, प्रकाश्यहरणे, अभियोगे, आभिमुख्येनोद्यमे, गौरवे च। ल्युटि अभिग्रहणमप्यत्र न०।
**अभिघात** पु० अभि+हन घञ्। प्रहारे, क्रियाभेदेन द्रव्यस्य द्रव्यान्तरेण संयोगविशेषे, यथा वर्णोच्चारणकाले कण्ठतालुप्रभृतिषु स्थानेषु वायोः संयोगः। संवत्समाले च।
**अभिघातिन्** पु० अभि+हन णिनि। शत्रौ। प्राप्ताभिघातवति त्रि०।
**अभिघार** पु० अभि+घृ भावे-घञ्। होमे आभिमुख्येन घृतादेः सेचने। कर्मणि घञ्। सिच्यमाने घृते।
**अभिचार** पु० अभि+चर-घञ्। हिंसाफलकेषु मारणोच्चाटनस्तम्भनप्रभृतिषु अथर्ववेदतन्त्रादिप्रसिद्धेषु कर्मसु।
**अभिजन** पु० अभिजायतेऽस्मिन् जन-घञ् अवृद्धि। कुले ख्यातौ, जन्मभूमौ, कुलश्रेष्ठे च।
**अभिजात** त्रि० अभि प्रशस्तं जातं जन्म यस्य। कुलीने, पण्डिते, श्रेष्ठे च। अभिजन्मप्यत्र।
**अभिजित्** न० ज्योतिषप्रभाषिते उत्तराषाढानक्षत्रस्य शेषचतुर्थांशसहितश्रवणानक्षत्राद्यकलाचतुष्टयरूपे राशिचक्रस्यैकविंशात्मककलायां। अभिमुखीभूय जयति शत्रूननेन अभि+जि-करणे क्विप्। शत्रुजयिनि, यात्रानुकूललग्नभेदे, मध्यदिनस्थाविभक्तदिनस्याष्टमे भागे स्मृतिप्रसिद्धे कुतपकाले च
**अभिज्ञ** त्रि० अभिजानाति अभि+ज्ञा-क०। निपुणे, पण्डिते च
**अभिज्ञा** स्त्री० अभि+ज्ञा-अङ्। प्रथमसत्पन्नज्ञाने।
**अभिज्ञान** न० अभिज्ञायतेऽनेन। अभि+ज्ञा-करणे ल्युट्। सोऽयमिति ज्ञानसाधने चिह्ने।
**अभितस्** अव्य० अभि+तसिल्। सामीप्ये, आभिमुख्ये उभयतोऽर्थे, शीघ्रतायाञ्च।
**अभिद्रवण** न० अभि+द्रु-ल्युट्। वेगेन गमने।
**अभिद्रोह** पु० अभि+द्रुह-घञ्। आक्रोशे, अनिष्टचिन्तने, अपकारे च।
**अभिधा** स्त्री० अभि+धाञ्-भावे अङ्। अभिधाने, शब्दनिष्ठे अर्थबोधजनकशक्तिभेदे च। अभिधीयतेऽनेनेति करणे अङ्। वाचकशब्दे। भट्टमते अर्थफलजनकव्यापाररूपायां शब्दार्थनिष्ठायां भावनायाञ्च।
**अभिधान** क्ली० अभि+धा भावे ल्युट्। कथने। करणे ल्युट्। संज्ञायां,शब्दार्थप्रतिपादके निघण्टुकोषादिनामके ग्रन्थे च।
**अभिधेय** त्रि० अभि+धा-कर्मणि यत्। वाच्यार्थे, संज्ञिनि च।
**अभिध्या** स्त्री०अभि+ध्यै-अङ्। परधनस्याभिजिहीर्षायां,जिहासायां,चिन्तने, विषयप्रार्थनायां च।
**अभिनन्द** पु० अभि+नन्द-घञ्। सन्तोषे,प्रतिपाद्यगुणकथनादिप्रवर्त्तके ज्ञाने,प्रशंसायाञ्च। ल्युटि। अभिनन्दनमप्यत्र न०।
**अभिनय** पु० अभि+नी करणे अच्। हृद्गतभावव्यञ्जके शरीरचेष्टादौ। भावे अचि। अभिनेयपदार्थस्य शरीरचेष्टाभाषणादिभिरनुकरणे। अभिनयति बोधयत्यर्थमत्र आधारे अच्। शरीरचेष्टादिभिः स्वपदार्थज्ञापके रूपकादौ दृश्यकाव्ये।
**अभिनव** पु० अभि नु-अप्। स्तवने। नूतने त्रि०।
**अभिनवोद्भिद्** (द्) पु० अभिनवमुद्भिद्य जायते उद्+भिद्-क्विप् क वा। अङ्कुरे। [च।
**अभिनहन** न० अभि+नह+ल्युट्। अभितोबन्धने, दृढबन्धने
**अभिनिर्मुक्त** पु० अभि सर्वत आवश्यककर्म्मणा निर्मुक्तः। सूर्यास्तकाले निद्रावशात् त्यक्ततत्कालकर्त्तव्यकर्म्मणि।
**अभिनिर्याण** न० अभि निर्+या+ल्युट्। जिगीषया गमने।
**अभिनिवेश** पु० अभितोनिवेशः घञ्। अवश्यमिदं कर्त्तव्यमित्याग्रहसमन्विते मनःसंयोगभेदे,योगशास्त्रप्रसिद्धे मरणभीतिजनके अज्ञानविशेषे, अनित्यैरपि देहैः इमैर्वियोगो मा भूदिति मरणनिवारणार्थमाग्रहे च।

**अभिनीत** त्रि॰ अभि नी-क्त । युक्ते, विनीते, अक्रोधने, क्षमावति, भूषिते च । [आभिमुख्येन गते च ।

**अभिपन्न** त्रि॰ अभि+पद्-क्त । अपराधवति, आपद्गते, स्वीकृते,

**अभिप्राय** पु॰ अभि+प्र+इण-अच् । आशये, सम्मतौ च ।

**अभिभव** पु॰ अभि+भू अप् । पराजये, तिरस्कारे, अनादरे, च

**अभिभूत** त्रि॰ अभि+भू-क्त । किं कर्त्तव्यमिति ज्ञानशून्ये, पराभूते, व्याकुले च ।

**अभिमत** त्रि॰ अभि+मन-क्त । सम्मते, आदृते, अभीष्टे च ।

**अभिमन्त्रण** न॰ अभि+मन्त्र-ल्युट् । मन्त्रपाठेन संस्कारकरणे, निमन्त्रणे, आह्वाने च । [चक्षूरोगभेदे ।

**अभिमन्थ** (न्य) पु॰ अभि+मन्थ-अच् मन्थ इति पक्षे मन-य ।

**अभिमर** पु॰ अभिम्रियतेऽत्र मृ-अप् । युद्धे, मरणनिरपेक्षतया कृते युद्धोत्साहे च ।

**अभिमर्द्द** पु॰ अभि-मृद-घञ् । युद्धे, मर्द्दे, पीडने च ।

**अभिमान** पु॰ अभि+मन-घञ् । आत्मन्युत्कर्षारोपे, मिथ्यागर्व्वे, अर्थादिदर्पे, ज्ञाने, प्रणये, हिंसायाञ्च ।

**अभिमुख** त्रि॰ अभिगतो मुखं गतिस॰ । सम्मुखे । स्त्रियां ङीप् ।

**अभिम्लष्ट** त्रि॰ अभि+म्लष-क्त । संसृष्टे, मिलिते, संबद्धे च ।

**अभियुक्त** त्रि॰ अभि+युज-क्त । परैः रुद्धे, आसक्ते, व्यवहारविषये, प्रतिवादिनि च ।

**अभियोक्तृ** त्रि॰ अभि+युज-तृच् । व्यवहारे अपराधयोजनकर्त्तरि वादिनि, अभियोगकर्त्तरि च ।

**अभियोग** पु॰ अभि+युज-घञ् । अन्यकृतस्य निजधर्षणस्य न्याय विज्ञापने, युद्धार्थमाह्वाने, अपचिकीर्षयाक्रमणे, आसक्ते, शपथे, उद्योगे च । [प्रिये, मनोहरे च ।

**अभिराम** त्रि॰ अभिरम्यतेऽस्मिन् रम-आधारे घञ् । सुन्दरे,

**अभिरूप** पु॰ अभिरूपयति सर्व्वं स्वात्मकं करोति रुप-रूप-अच् । शिवे, विष्णौ च । अभिरूपयति निरूपयति । पण्डिते । उत्कृष्टं रूपं यस्य । कन्दर्पे, चन्द्रे च । मनोहरे त्रि॰ ।

**अभिलाप** पु॰ अभिलप्यते अकस्मात्तेऽनेन करणे लप-घञ् । देवतादिकोद्देशपूर्व्वकं विहितकर्म्मतदङ्गं कारिष्ये इत्येवं रूपे वाक्ये । कर्म्मणि घञ् । शब्दे ।

**अभिलाव** पु॰ अभि+लू-घञ् । छेदने ।

**अभिलाष** (स) पु॰ अभि+लष(स)-घञ् । इच्छायां, लोभे च । अभिलाषोऽस्त्यस्यार्थे । [वद-घञ् । प्रणामे ।

**अभिवाद** पु॰ अभि+वद-घञ् । अप्रियवाक्ये । अभि+णि॰

**अभिवादन** न॰ अभि+णि॰वद॰ ल्युट् । अभिमुखीकरणार्थं मादृश प्रणामे । आभिमुख्याय आनुकूल्याय वादने

आशीः कार्य्यतेऽनेन वद-णिच्-ल्युट् । स्वनामोच्चारणपूर्व्वकं नमने । तत्प्रकारस्तु शब्दार्थविधाने ।

**अभिविधिः** पु॰ अभि+वि+धाञ्-कि । व्याप्तौ, सहार्थे च ।

**अभिव्यक्त** पु॰ अभि+वि+अनुज-क्त । उत्पत्त्यादिना प्रत्यक्षयोग्यतामापन्ने ।

**अभिव्यक्ति** स्त्री॰ अभि+वि+अनुज-क्तिन् । प्रत्यक्षयोग्यतायां

**अभिव्याप्ति** स्त्री॰ अभितो-व्याप्ति वि+आप-क्तिन् । कात्स्न्येन योगे, सर्व्वावयवसम्बन्धे, सर्व्वतोव्याप्तौ च ।

**अभिशप्त** त्रि॰ अभि+शप-क्त । इदं तेऽनिष्टं भूयादित्येवरूपस्य गुरुविप्राद्यभिशापस्य उद्देश्ये ।

**अभिशस्त** त्रि॰ अभि+शन्स-क्त । अयं परस्त्रियं गच्छतीत्यादिना मिथ्यावाक्येन मैथुनविषयको दोषारोपो यस्मिन् जने क्रियते तस्मिन् । [क्षतमिति मिथ्यापवादे ।

**अभिशस्ति** स्त्री॰ अभि+शन्स-क्तिन् । सुवर्णस्तेयादिकमनेन

**अभिशाप** पु॰ अभि+शप-घञ् । स्वर्णमूनेन कृतमित्यादि मिथ्यादूषकवाक्यकथने । द्विजगुरुप्रभृतिकर्त्तृके अनिष्टं ते भूयादित्येवमनिष्टस्याशंसने च ।

**अभिषङ्ग** पु॰ अभि+षञ्ज-घञ् । पराभवे, आक्रोशे, शपथे, व्यसने च "अभिषङ्गजडं विजज्ञिवानि" ति रघु ।

**अभिषव** पु॰ अभि+सू-अप् । यज्ञाङ्गस्नाने, यज्ञे, स्नाने, पीडने, सुरोत्पादनादिव्यापारे, सोमलतापाने, तत्कण्डने च ।

**अभिषवण** न॰ अभि+सु-ल्युट् । स्नाने, यज्ञाङ्गे स्नाने, सोमादिकण्डने च ।

**अभिषेक** पु॰ अभि+सिच्-घञ् । विधिना मान्यार्थं, सेचने, अधिकारप्राप्त्यर्थं स्नाने, यथा राज्याधिकारार्थं राज्येऽभिषेक वाममार्गे शक्तिदीक्षायामधिकारार्थं शाक्ताभिषेकश्च मन्त्रादिना शिरसि जलप्रक्षेपणादिना मार्ज्जने च ।

**अभिषेणन** न॰ सेनया शत्रोरभिमुखं यानम् अभि+सेना+णिच् ल्युट् षत्वणत्वे । सेनया शत्रुं योधयितुं तदभिमुखगमने ।

**अभिष्टुत** त्रि॰ अभि+स्तु-क्त । वर्णित, स्तुते च ।

**अभिष्यन्दः** पु॰ अभि+स्यन्द्-भावे घञ् । स्रवणे, अत्यन्तवृद्धौ स्रवणे, उन्मादिस्रवणे च । कर्म्मणि घञ् । अधिके । स्वर्गाभिष्यन्दवमनमिति कुमारः । करणे घञ् । नेत्ररोगे ।

**अभिष्यन्दनगर** पु॰ अभिष्यन्देन प्रधाननगरातिरेकेण तदतिवाहेन कृतं नगरम् । शाखानगरे ।

**अभिसन्ताप** पु॰ अभि+सम्+तप-आधारे घञ् । युद्धे । भावे घञ् । अभितापे, सन्तापे च ।

**अभिसन्धान** न॰ अभि+सम्+धा-ल्युट् । वञ्चने, प्रतारणे च ।

**अभिसन्धि** पु० अभि+सम्-धा-कि । अभिसन्धाने उद्देशे च ।
**अभिसम्पात** पु० अभि+सम्-पत आधारे घञ् । युद्धे । भावे घञि । पतने । [स्त्रियां ङीप् ।
**अभिसर** त्रि० अभितः सरति सृ+ट । सहाये, अनुचरे
**अभिसर्ज्जन** न० अभि+सृज-भावे ल्युट् । दाने, वधे च ।
**अभिसार** पु० अभि+सृ-घञ् । बले युद्धे, साहाय्ये, साधने, स्त्रिया पुंसो वा संभोगार्थं निर्ज्जनसङ्केतस्थानगमने च ।
**अभिसारिका** स्त्री० अभि+सृ-सारेर्वा ण्वुल् । कान्तार्थिनया स्वयं संकेतस्थानगामिन्यां, स्वस्थाने वा कान्तानयनकारिण्यां स्त्रियाम् ।
**अभिसारिणी** स्त्री० अभि+सृ-णिनि । अभिसारिकायाम् ।
**अभिसृष्ट** पु० अभि+सृज-क्त । दत्ते उत्सृष्टे, त्यक्ते च ।
**अभिहार** पु० अभि+हृ घञ् । अपचिकीर्षया अभिगम्याक्रमणे,साकाङ्क्षचौर्य्ये, अभियोगे, कवचादिधारणे च ।
**अभीक** त्रि० अभिकामयते अभि+काम-नि० । कामुके, स्वामिनि, क्रूरे, निर्भये च । कवौ पु० ।
**अभीक्ष्णम्** अव्य०अभिक्ष्णौति क्ष्णु-अम दीर्घ । नित्ये,पश्चदर्थे, भृशे च । तद्वति द्रव्ये प्रकृष्टे भृशे सतते च त्रि० ।
**अभीरु** स्त्री० भी--रुक् न०त० । शतमूल्याम् असङ्कुचितपत्रत्वादभीरुत्वमस्याः । भयशून्ये त्रि० । [शतमूल्याम् ।
**अभीरुपत्री** स्त्री० न भीरूणि असंकुचितत्वात् पत्राण्यस्याः ।
**अभीषङ्ग** पु०अभि+सञ्ज-घञ् दीर्घ । आक्रोशे, शापे च ।
**अभीषु** पु०अभि+इष-कु।किरणे,लागाम इति ख्याते प्रग्रहे, कामे, अनुरागे च ।
**अभीष्ट** त्रि० अभि+इष क्त । वाञ्छिते दयिते, हृद्ये च ।
**अभेद** पु० भिद+घञ न०त० । भेदाभावे, तादात्म्ये, अविशेषे च । ब० । विशेषशून्ये, भेदशून्ये च त्रि० ।
**अभेद्य** न० कर्म्मणि भिद ण्यत न०त० । हीरके । भेदनानर्हे त्रि०
**अभ्यग्र** त्रि० अभिगतमग्रं यस्य । निकटे आसन्ने च ।
**अभ्यङ्ग** पु० अभि+अन्ज-घञ् कुत्वम् । तैलादिमर्द्दने ।
**अभ्यञ्जन** न० अभ्यज्यतेऽनेन करणे अन्ज ल्युट् । तैलादौ । भावे ल्युटि अभ्यङ्गे ।
**अभ्यधिक** त्रि० अभितोऽधिक । सर्वोत्तमे ।
**अभ्यन्तर** न० अभिगतमन्तरम् । अन्तराले, मध्यस्थाने ।
**अभ्यमित** त्रि० अभि+अम-रोगे क्त । रोगयुक्ते ।
**अभ्यमित्रीण** त्रि० अभि+अभिलमलं गामी ख । शत्रुमभि, सामर्थ्येन गन्तरि । [सामर्थ्येन गामिनि ।
**अभ्यमित्रीय** त्रि० अभि+अमित्रमलं गामी छ । शत्रुमभि,

**अभ्यमित्र्य** त्रि० अभि+अमित्रमलं गामी यत् । शत्रुमभि,सामर्थ्येन गन्तरि । [दिश नलम् । समीपे ।
**अभ्यर्ण** त्रि० अभि+अर्द्द कर्म्मणि क्त अविदूर्य्ये इडभाव
**अभ्यर्हित** त्रि० अभि+अर्ह-क्त । उचिते,श्रेष्ठे, पूजिते च ।
**अभ्यवकर्षण** न० अभि+अव+कृष-ल्युट् । शल्यादेरुद्धारणे ।
**अभ्यवस्कन्द** पु०अभि+अवस्कन्द-घञ् । शत्रोराक्रमे,शत्रुमभि क्रियमाणे प्रहारे, आसादने, प्रपाते च । ल्युटि । अभ्यवस्कन्दनमप्यत्रार्थे न० ।
**अभ्यवहार** पु० अभि+अव+हृ-घञ् । भोजने । [जरणे ।
**अभ्यसन** पु० अभि+अस ल्युट् । अभ्यासे पौन पुन्येनैकक्रिया
**अभ्यसूया** स्त्री० अभि+असू-उपतापे कण्ड्वादि० यक् प्रत्यया न्तत्वात् अ स्त्रीत्वात् टाप् । गुणेषु दोषारोपणे ।
**अभ्याकाङ्क्षित** न० अभि+आ+काङ्क्ष-क्त । मिथ्याभियोगे ।,
**अभ्याख्यान** न० अभि+आ+ख्या-ल्युट् । मिथ्याभियोगे, मिथ्योद्भावने च । [धौ । सम्मुखागतमात्रे त्रि० ।
**अभ्यागत** पु०अभि+आ+गम-क्त । अदृष्टपूर्व्वे गृह गतेऽतिथि-
**अभ्यागम** पु० अभि+आ+गम-घञ् अवृद्धि । विरोधे,समरे, अन्तिके अभिगमने, भोगे, स्वीकारे, फलसंबन्धे च ।
**अभ्यागारिक** त्रि० अभि+अगारे तद्गते व्याप्टत ठञ् । गृहस्थकुटुम्बादिपोषणे व्याकुले । [आरम्भे च ।
**अभ्यादान** न० अभि+आ+दा-ल्युट् । आभिमुख्येनादाने,
**अभ्यान्त** त्रि० अभि+अम क्त नि० । रोगयुक्ते ।
**अभ्यामर्द्द** पु० अभि+आ+मृद-आधारे घञ् । रणे । [च ।
**अभ्याश** पु०अभि+अश-व्याप्तौ घञ् । अवश्यमेवेत्यर्थे अन्तिके
**अभ्यास** पु० अभि+अस-घञ् । आवृत्तौ । गुरोराकर्णनं, तदर्थे युक्तायुक्तत्वविचार, पौन पुन्येन तदावृत्ति, शिष्येभ्योदानमित्येवरूपविद्याभ्यासे, पौन पुन्येन कीर्त्तने, अन्तिके, विजातीयज्ञानानन्तरिते सजातीयैकरूपज्ञानप्रवाहरूपे ध्यानादेरभ्यासे च ।
**अभ्यासादन** न० अभि+आ+सद-णिच्-ल्युट् । शत्रोर्थे शत्रोर्निवीर्य्यताकरणे,शत्रो सम्मुखगमने च ।
**अभ्याहार** पु० अभि+आ+हृ-घञ् । अभिहारार्थे ।
**अभ्युत्थान** न० अभि+उत्-स्था-ल्युट् । आदरेणासनादित उत्थाने गौरवेणोत्थानादिना प्रत्युद्गमने, उत्थितिमात्रे, उद्यमे, उद्भवे च ।
**अभ्युदय** पु० अभि+उत्-इण्-अच् । अभीष्टकार्य्याणां प्रादुर्भावे, वृद्धौ, आधानसमानचूडादिसंस्कारे च । अतएव तदर्थकश्राद्धम् आभ्युदयिकमित्युच्यते ।

**अभ्युदित** पु० अभितः सर्व्वतः उदितियमेन इतं गतं मार्तविहितं कर्म्म यस्मात्। सूर्य्योदयकाले निद्रयाऽकृततत्कालकर्त्तव्ये ब्रह्मचारिणि। उदिते, प्रकाशिते च त्रि०।

**अभ्युद्यत** त्रि० अभि+उत्-यम-क्त। अयाचितोपस्थितेऽन्नादौ

**अभ्युपगम** पु० अभि+उप+गम-घञ् अवृद्धिः। स्वीकारे समीपगतौ च।

**अभ्युपपत्ति** स्त्री० अभि+उप+पद-क्तिन्। अनिष्टनिवारणपूर्व्वकाभीष्टसम्पादनरूपे अनुग्रहे, सान्त्वने च।

**अभ्युपाय** पु० अभि+उप+इण्-अच्। स्वीकारे अधिकोपाये

**अभ्र** गतौ भ्वादि० पर० सक० सेट्। अभ्रति। आभ्रीत्।

**अभ्रि** स्त्री० अभ्र-गतौ-इन्। नौकामलापकर्षार्थे काष्ठरचिते कुद्दाले। स्त्रियां ङीपि अभ्रीत्यपि।

**अभ्रेष** पु० भ्रेष-चलने घञ् न०त०। न्याय्ये, उचिते च।

**अम** रोगे चुरा० उभय० अक० सेट्। आमयति ते आमिमत् त।

**अम** गतौ, भोजने, शब्दे च भ्वादि० अक० सेट्। अमति आमीत्

**अम** पु० अम-घञ् अवृद्धिः। रोगे। अपक्वफलादौ त्रि०।

**अमङ्गल** पु० नास्ति मङ्गलं यत्र। एरण्डवृक्षे। इव० अशुभान्विते त्रि०। न०त०। मङ्गलाभावे। [पात्रे।

**अमत्र** न० अमत्यनमत्र अम-भोजने आधारे त्रन्। भोजन-

**अमर** पु० मृ-पचाद्यच् न०त०। देवे, अष्टमान्दिकमध्ये अमरसिंहनामके मान्दिके, स्नुहीवृक्षे, स हि छिन्नोऽपि पुन पुनः प्ररोहति, सहसा न म्रियते। पारदे, तस्यापि वह्न्यादौ बहुतापनेऽपि भ्रमः। अस्थिसंहारे च स हि बहुकालं भूमौ स्थितोऽपि न जीर्य्यति। इव० मरणशून्ये त्रि०।

**अमरद्विज** पु० अमरपूजकः द्विजः शाक० त०। देवले पूजारीति ख्याते विप्रे। [हनुगन्धायां स्त्री०।

**अमरपुष्पक** पु० अमरमविशीर्णं पुष्पं यस्य। कल्पवृक्षे,

**अमरा** स्त्री० मृ-पचाद्यच् न०त०। दूर्व्वायां, गुडूच्यां, वन्ध्यायां, जरायौ, वटवृक्षे, इन्द्रपुर्य्यां च। अर्श आदित्वादचि। देवनगर्य्यामिमरावत्याम्।

**अमराद्रि** पु० अमराणामद्रिः इत०। सुमेरुपर्व्वते।

**अमरालय** पु० अमराणामालयः। स्वर्गे। [इन्द्रनगर्य्याम्।

**अमरावती** स्त्री० अमरा विद्यन्तेऽस्यां मतुप् वस्य दीर्घः।

**अमर्त्य** पु० मर्त्तुमर्हति यत् मर्त्यः न०त०। मरणशून्ये देवे।

**अमर्त्यभुवन** न० अमर्त्यानां देवानां भुवनम्। स्वर्गे।

**अमर्ष** पु० मृष-क्षान्तौ घञ् विरोधे न०त०। क्षमाविरहे क्रोधे।

**अमर्षण** त्रि० मृष-ल्यु न०त०। क्रोधने, असहने च।

**अमल** न० अम+कलच्। अभ्रके। निर्म्मले, दोषरहिते च त्रि० लक्ष्म्यां, भूम्यामलक्यां, नाभिनालायां च स्त्री०।

**अमा** अव्य० न माति क्विप्। सहार्थे, निकटे च। अमावास्यायां तिथौ, चन्द्रस्य सर्व्वकलाव्यापकतया स्थितायां सूर्य्यकिरणासंपर्कादृष्टीभूतायां कलायाञ्च स्त्री०।

**अमांस** त्रि० नास्ति मांसं यस्य। दुर्बले। मांसहीनो हि दुर्बलः।

**अमात्य** पु० अमा सह वसति त्यक्। मन्त्रिणि। तस्य सहचरत्वात्। [मनःकष्टदायके दु खे।

**अमानस्य** न० मानसे साधु न भवति मानस+यत् न०त०।

**अमाव(वा)स्या** स्त्री० अमा सह वसतश्चन्द्रार्कौ यत्र वस-यत् ण्यद्वा कृष्णपक्षशेषतिथौ तद्दिने चन्द्रार्कावेकराशिस्थौ।

**अमित्र** पु० अम-रोगे इत्र। रिपौ। [त्रि०।

**अमुक्त** न० मुच-क्त न०त०। सदा धार्य्ये छुरिकाभेदे। मुक्तभिन्ने

**अमुत्र** अव्य० अदस्+त्रल्। परलोके, जन्मान्तरे च।

**अमूर्त्त** त्रि० मूर्त्ति+अर्श आदित्वादच् न०त०। मूर्त्तिशून्ये वाय्वादौ। [शून्ये त्रि०।

**अमूला** स्त्री० नास्ति मूलं यस्याः। अग्निशिखावृक्षे। मूल-

**अमृत** न० मृ-क्त न०त०। मोक्षे, होमावशिष्टद्रव्ये, सुधायां, जले, घृते, अमृतं स्यादयाचितमितिमनूक्ते अयाचितलब्धे च। परब्रह्मणि न०। मरणशून्ये त्रि०। विभीतके स्त्री०।

**अमृतजटा** पु० अमृता जटा यस्याः। जटामांसीवृक्षे।

**अमृतदीधिति** पु० अमृतमिवाप्यायनकरी दीधितिः किरणो यस्य। चन्द्रे। [पटोले पु०।

**अमृतफला** स्त्री० अमृतमिव स्वादु फलं यस्याः। द्राक्षायाम्

**अमृतयोग** पु० ज्योतिषमसिद्धायां नक्षत्रविशेषयुक्तायां वारविशेष युक्तायाञ्च तिथौ।

**अमृतवल्ली** स्त्री० अमृताय जीवनसाधनाय वल्ली। गुडूच्याम्

**अमृतसू** पु० अमृतं दीधितिरूपमाप्यायनं सूते सू-क्विप्। चन्द्रे। अमृतान् देवान् सूते। देवमातरि स्त्री०।

**अमृतसोदर** पु० अमृतं सोदर एकस्थानजं यस्य। उच्चैःश्रवसि। उच्चैःश्रवसो हि समुद्रादुत्पत्तिः। तज्जातीयत्वात् घोटकमात्रे। [लतायाम्।

**अमृतस्रव** स्त्री० अमृतमिव स्रवति स्रु-पचाद्यच्। रुदन्ती-

**अमृतान्धस्** पु० अमृतमन्धो भक्ष्यं यस्य। देवमात्रे।

**अमृताशन** पु० अमृतमश्नाति अश-ल्यु। देवमात्रे।

**अमृताहरण** पु० अमृतमाहरति मातुर्दास्यविमोचनार्थं स्वर्गात् भूलोकं नयति आ+हृ ल्यु। गरुडे तस्यामृतहरणकथा महाभारते आदिप० इत्य०।

**अमेधस्** त्रि० नास्ति मेधा यस्य ब० असिच्। मूर्खे, अल्पबुद्धौ च

अमेध्य न० मेध्यं पवित्रं न०त०। पुरीषे। पवित्रभिन्ने त्रि०।
अमोघ त्रि० मोघो निष्फलः न०त०। सफले,अव्यर्थे च। नद-भेदे पु०। पटोललतायां, हरितक्यां विडङ्गे च स्त्री०।
अम्ब गतौ भ्वादि० पर०सक०सेट्। अम्बति आम्बीत्।
अम्बक न०अम्बति योग्यं नक्षत्रस्थानपर्य्यन्तं गच्छति अम्ब-ण्वुल्। नेत्रे। अम्ब्यते स्नेहेनोपगम्यते घञ् स्वार्थे क। पितरि।
अम्बर न० अबि शब्दे घञ् अम्बं शब्दस्तं राति धत्ते अम्ब+रा-क। शब्दाश्रये आकाशे, मर्म्मरशब्दयुक्ते वस्त्रे, स्वनाम ख्याते गन्धद्रव्ये, अभ्रकधातौ च।
अम्बरि(री)ष न० अम्ब्यते पच्यतेऽत्र अम्ब-अरिष नि० वा दीर्घ.। भाजनाखोला इति ख्याते भर्ज्जनपात्रे। अम्ब रीषमपि। दीर्घयुक्तस्तु विष्णौ,शिवे,भास्करे,बालके,आम्रा तकवृक्षे, नरकभेदे, अनुतापे, सूर्य्यवंश्यन्वपभेदे च पु०।
अम्बष्ठ पु० अम्बाय चिकित्सकशब्दाय तत्प्रख्यापनेन स्थं तिष्ठते-ऽभिप्रैति स्था क षत्वम्। चिकित्सके,विप्रात् वैश्यकन्यायां जाते सङ्कीर्णवर्णे, देशभेदे,हस्तिपके च। यूथिकायां स्त्री० स्वार्थे के ह्रस्वे अत इत्वे अम्बष्ठिकाप्यत्रैव वामनहाटीति प्रसिद्धायां आम्रातकलतायाञ्च।
अम्बष्ठकी स्त्री०अम्बष्ठं कायति आदानार्थमाह्वयति कै-क गौरा० ङीष्। (पत्ताड्) इति ख्यातायां लतायां पाठायाञ्च।
अम्बा स्त्री० अम्ब्यते स्नेहेनोपगम्यते अम्ब-कर्म्मणि घञ्। मातरि,नाट्योक्तावपि तत्रैव, अम्बष्ठलतायां, काशीराज कन्यायाञ्च।
अम्बाला स्त्री० अम्बेति शब्दं लाति धत्ते ला-क। मातरि।
*अम्बालिका स्त्री० अम्बालैव स्वार्थे के ह्रस्वे अत इत्वम्।* मातरि, पाण्डुराजमातरि च।
अम्बिका स्त्री० अम्बैव स्वार्थे के ह्रस्वे अत इत्वम्। मातरि, धृतराष्ट्रराजमातरि, जगदुत्पादकत्वात् दुर्गायाम्, अम्बष्ठ *लतायाम् कट्की* न *ख्यातायां लतायाञ्च।* [स्त्री०।
अम्बु न०अबि शब्दे-उ। जले। राम्ना इति ख्यातायां लतायां
अम्बुकण्टक पु० अम्बुन कण्टकमिव। कुम्भीरे,शृङ्गाटके च।
अम्बुकिरात पु० अम्बुनि किरात इव हिंस्र। कुम्भीरे।
अम्बुकीश पु०अम्बुनि कीश वानर इव। शुशक इति ख्याते शिशुमारे जलजन्तुभेदे।
अम्बुचामर न० अम्बुनि चामरमिव। शैवले।
अम्बुज न० अम्बुनि जायते। पद्मे। चन्द्रे हिजल् इति ख्याते वृक्षे च पु०। शङ्खे पु०न०।
अम्बुद पु० अम्बु ददाति दा-क। मेघे, मुस्तके च।

अम्बुधि पु० अम्बूनि धीयन्तेऽत्र धा-आधारे कि। समुद्रे।
अम्बुवाची स्त्री० "यस्मिन् वारे सहस्रांशुर्यत्कालं मिथुनं व्रजेत्। अम्बुवाची भवेन्नित्यं पुनस्तत्कालवारयोरिति" ज्योतिषोक्ते "रजोयुक् क्ष्माम्बुवाची स्यादि"ति कृतेस सूर्य्याक्रान्तार्द्रानक्षत्रप्रथमचरणे जातरजस्कायां भूमौ।
अम्बुधिस्रवा स्त्री० अम्बु धरिव स्रवति स्रु-अच्। मलान्ल-वैङ्करकायां घृतकुमार्य्याम्।
अम्बुपत्रा स्त्री० अम्बूनि पत्रे यस्याः। उच्चटावृक्षे।
अम्बुप्रसाद पु० अम्बूनि प्रसीदन्त्यनेन प्र+सद-घञ्। निर्म्मलीति प्रसिद्धे कतकवृक्षे। [च।
अम्बुभृत् पु० अम्बूनि बिभर्त्ति भृञ्-क्विप्। मेघे समुद्रे मुस्तके
अम्बुमात्रज पु० अम्बुमात्रे जलमात्रे जायते जन-ड। शामुक इति ख्याते शम्बूके। [स्त्रियां स्त्री०।
अम्बुरुह न०अम्बुनि रोहति जायते रुह-क। पद्मे। स्थलप-
अम्बुवासिनी स्त्री० अम्बुनि जलप्रधाने वसति वस-णिनि। पाटलावृक्षे। [मुस्तके च।
अम्बुवाह पु० अम्बूनि वहति वह-अण्। मेघे, तन्नामनामके
अम्बुवाहिनी स्त्री० अम्बूनि वाहयति नौकातः बहिरपसा-रयति वह+णिच्-णिनि। काष्ठादिरचिते नौकाजल-सेचनीपात्रे।
अम्बुवेतस पु० अम्बुजातोवेतसः शाक०त०। जलवेतसे।
अम्बुशिरीषिका स्त्री०अल्प शिरीषः अल्पार्थे के स्त्रीत्वम्। जलशिरीषे। [इति ख्यातायां जलौकायाम्।
अम्बुसर्पिणी स्त्री०अम्बुनि सर्पति सृप-णिनि ७त०। (जोंक)
*अम्बूकृत त्रि०अनम्बु अम्बु तत अम्बु श्लेष्मात्मकाम्बु इव-* धारात्तद्युतं तत च्वि-कृ-क्त। निष्ठीवनयुक्ते वचसि।
अम्भस् न० अभि-शब्दे असुन्। जले, बालाख्यौषधौ च।
अम्भःसार न० अम्भस सार वा शरोति वा विसर्ग। मुक्तायाम्। सत्वे अम्भस्सारमपि।
अम्भोज न०अम्भसि जायते जन-ड ७त०। पद्मे। चन्द्रे पु०। शङ्खे पु०न०। जलजातमात्रे त्रि०। [पद्मसमूहे।
अम्भोजखण्ड(ष)ण्ड न० अम्भोजानां समूहः अम्भोज+ख(ष)ण्ड
अम्भोजयोनि पु० अम्भोज हरिनाभिपद्मं योनि उत्पत्ति-स्थानं यस्य। विधातरि।
अम्भोजिनी स्त्री० अम्भोज+मत्वर्थे, इनि देशे वा इनि। पद्मसमूहे,पद्मयुक्तदेशे लताकृपे च।
अम्भोद पु० अम्भो ददाति दा क। मेघे, मुस्तके च। जल-दातरि त्रि०।

श्चार । तथाच ज्योतिषोक्तगणितरीत्या मेषादित पश्चादेकविंशांशे मीनादौनवमांशे एवेदानीं विषुवादिसंक्रान्तिर्भवति एवं विष्णुपदादीनामपि तत्तदंश एव ग्रहप्रभासञ्चार । अयञ्चायनमानुसारेण ग्रहप्रभासञ्चारस्वीकार दिनमानविशेषस्य लग्नपरिमाणस्य, छायापदविशेषस्य, च बोधार्थमिति सिद्धान्ते प्रसिद्धम् । करणे ल्युट् । उक्ताय नज्ञानसाधने शास्त्रे, "ज्योतिषामयनञ्चैवेति" सैन्यनिवेश विशेषरूपव्यूहप्रवेशमार्गे च "अयनेषु च सर्व्वेषु यथाभागमव स्थिता" इति गीता । आधारे ल्युट् । पथि, गृहे, आश्रये, स्थाने, "ता यदस्यायनं पूर्व्वमिति" मनु । मासुक्तराशि चक्रस्य कंशरूपे गतिस्थानविशेषे च "तत्काले सायनार्क स्येति" नीलकण्ठ ।

अयनसंक्रान्ति स्त्री॰ अयनेन राशिचक्रस्य पश्चात्, प्राग्वा-गत्या छता संक्रान्तिर्ग्रहाणां प्रभापुञ्जस्य सञ्चार सम्+क्रम-क्तिन् । चलसंक्रान्तौ, मेषादिभिर्द्वादशसु स्थानेषु विभक्तस्य राशिचक्रस्य प्राक् पश्चाद्वा दोलायमानतया निर्दिष्टमेषादिस्थानात् पश्चात् पूर्व्वं वा ग्रहप्रभापुञ्जसंचार आक्रान्तराशिं विहाय राश्यन्तरे गमनं चलसंक्रान्ति अ-नियतस्थानतया चलत्वात् । निर्दिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चार अचलसंक्रान्ति राशिसंक्रान्तिरिति चो-च्यते नियतमेकस्थाने एव जायमानत्वादचलत्वम् । अनयैव संक्रान्त्या यथा मासादिव्यवहारे न दोष चलसंक्रान्त्या तु बहवो दोषास्तथा बृहदभिधाने द्रष्टव्याः ।

अयस् न॰ इण-असुन् । लोहे, तद्धि स्थावरमप्ययस्कान्तसा-न्निध्यात् चलति ।

अयस्कान्त पु॰ अयसा मध्ये कान्त रमणीय कस्कादित्वात् सत्वम् । कान्तिलौह इति ख्याते लौहभेदे । ६त॰ । सन्नि-धिमात्रेण लौहाकर्षके चुम्बक इति ख्याते प्रस्तरभेदे च ।

अयस्कार पु॰ अयस्-कृ-अण् उप॰स॰ । लौहकारे ।

अयाचित न॰ याच-क्त न॰त॰ । अमृताख्यवृत्तौ "अमृतं स्यादयाचित"मिति मनु । अप्रार्थिते त्रि॰ ।

अयि अव्य॰ इण्-इन् । प्रश्ने, अनुनये, संबोधने, अनुरागे च

अयुक्छद॰ पु॰ अयुज सप्तसप्त छदा यस्य । वृक्षो संज्ञा-या चीस्रावंलम् (छातिम) इतिख्याते सप्तपर्णवृक्षे ।

अयुक्त त्रि॰ न+युज-क्त । विषयासक्ततया कर्मध्यानरहिते, अनुचिते, आपद्गते च ।

अयुग्म न॰ न युग्मात्मकम् । विजोड़ इति ख्याते विषमे ।

अयुग्मच्छद पु॰अयुग्मानि सप्त सप्त छदा यस्य । सप्तपर्णवृक्षे

तस्य हि प्रत्येकपल्लवे सप्त सप्त पर्णानि विद्यन्ते ।

अयुत त्रि॰ यु-क्त न॰त॰ । असंयुक्ते । दशसहस्रसंख्यायां न॰ ।

अये अव्य॰ इण्-एच् । क्रोधे, विषादे, संभ्रमे, स्मृतौ, सबुद्धौ च

अयोग पु॰ युज-घञ् न॰त॰ । योगाभावे, कुयोगे, वियोगे च । न॰ब॰ । विधुरे, कूटे, कठिनोद्यमे च ।

अयोगव पु॰ अय इव कठिना गीर्वाणी यस्य नि॰ अच् । शूद्रात् वैश्यायां जाते प्रतिलोमजे सङ्कीर्णवर्णे ।

अयोगवाह पु॰ अक्षरसमाम्नायसूत्रेषु अइउण् इत्यादिषु चतुर्दशसु नास्ति योग पाठादिरूपःसंबन्धो येषां ते तथापि गाहयन्ति सत्वणत्वादिकार्य्यादिकं निष्पादयन्ति वाहि अच् कर्म॰ । अनुस्वारविसर्गादिषु, "अनुस्वारो विसर्गश्च+क प्रपौ चैव पराश्रितौ । अयोगवाहा विज्ञेया इति शिक्षाक्तदुपदिष्टेषु ।

अयोगुड पु॰ गुड गोलाकार अयसा निर्म्मितोगुड । गोलीति ख्याते लौहगुटिकायाम् । [हलात् ।

अयोऽग्र न॰ अयोऽग्रे मुखे यस्य । मुषले तस्य मुखे लौहव-

अयोघन पु॰ अयांसि हन्यन्तेऽनेन हन-अप् घनादेशश्च नि॰ । हातुड़ीति ख्याते लौहमुद्गरे ।

अयोध्या स्त्री॰ युध ण्यत् न॰त॰ । सरयूतीरे स्वनामख्या-तायां नगर्य्याम् । योधनानर्हे त्रि॰ ।

अयोनिज पु॰ योनौ उपचारात् मातरि न जायते । परमेश्वरे । सीतायां स्त्री॰ । [मले ।

अयोमल न॰ अयसो मलइव । लौहगुय इति ख्याते लौह-

अर न॰ ऋ-अच् । चक्रस्य नाभिनेम्योर्मध्यस्थे काष्ठे, शीघ्रे च शीघ्रतादिगुणवति त्रि॰ । स्वार्थे के । शैवाले । पर्पटे मापडीति ख्याते पु॰ ।

अरघट्ट(क) पु॰ अरं शीघ्रं घट्टते चाल्यतेऽसौ । महाकूपे, तदुपरिनिबद्धजलोत्तोलनकाष्ठे च । स्वार्थे क । तत्रैव

अरजस् त्रि॰ रञ्ज असुन् नलोप न॰त॰ । रजोगुणकार्य्य-

मर्म्मपीडके, हृदयग्रन्थिरूपमर्म्मस्थानस्थरंकारके च ।
अरुन्धती स्त्री० अरुन्धत् । वशिष्ठपत्न्याम् ।
अरुष्क पु० अरुर्म्मर्म्मस्थानं कायति पीडयति कै-क । स्पर्शमात्रेण व्रणकारके भल्लातकवृक्षे ।
अरुष्कर पु० अरुर्व्रणं करोति अरुस्+कृ+अच् । भल्लातकवृक्षे । व्रणकारिणि त्रि० ।
अरुस् पु० ऋ-उसि । अर्के, रक्तखदिरे च । मर्म्मणि न० । व्रणे, व्रते च पु० न० ।
अरूहा स्त्री० न किञ्चिन्मूलमाश्रित्य रोहति आकाश एव रोहति । रुह+क । भूम्यामलक्याम् ।
अरे अव्य० ऋ-ए । रोषाह्वाने, नीचसम्बोधने, असूयायाञ्च
अरेऽरे अव्य० अरे+वीप्सायां द्विरुक्तिः । नीचसंबोधनादौ ।
अरोक त्रि० रुच-दीप्तौ घञ् रोकश्छिद्रं दीप्तिश्च । न०ब० । छिद्रशून्ये दीप्तिशून्ये च । [र्कत् त ।
अर्क तापे, स्तुतौ च चुरा०उभ०सक०सेट् । अर्कयति ते आर्चि-
अर्क पु० अर्च-कर्म्मणि घञ् कुत्वम् । सूर्य्ये, इन्द्रे, ताम्रे, स्फटिके, विष्णौ, पण्डिते, आकन्द इति ख्याते वृक्षे, आरक इति ख्याते क्वाथविशेषे च ।
अर्ककान्ता पु० अर्कोऽर्ककिरणः कान्तोऽनुकूलो यस्याः कर्म० । हुड्हुडिया इति ख्याते वृक्षे । ३त० । सूर्य्यप्रियायाम्
अर्कचन्दन पु० अर्कस्य प्रियचन्दन शाक०त० । रक्तचन्दने ।
अर्कतनय पु० ६त० । सुग्रीवे, कर्णे, यमे, शनौ, वैवस्वतमनौ च । यमुनायां स्त्री० । द्विवचनान्त । अश्विनीकुमारयोः पु० ।
अर्कपत्र पु० अर्कं सूर्य्यइव तीक्ष्णं पत्रं यस्य । अर्कवृक्षे । अर्कपर्णोऽप्यत्र । ६त० । अर्कवृक्षस्य पत्रे न० ।
अर्कपादप पु० अर्कं अर्कवृक्षइव तीक्ष्णः पादपः । निम्बे ।
अर्कपुष्पी स्त्री० अर्कस्याऽर्कवृक्षस्य पुष्पमिव पुष्पमस्याः । कुटुम्बिनीवृक्षे । [सूर्य्यप्रियायां, छायायाञ्च ।
अर्कप्रिया स्त्री० अर्कं प्रीणाति प्री-क० । जवायाम् । ६त० ।
अर्कबन्धु पु० अर्कस्य बन्धुरिव । गौतमे सूर्य्यवंश्ये बौद्धे ।
अर्कभक्ता स्त्री० अर्कस्य भक्ता तत्किरणसंपर्के एव तस्याः सौन्दर्य्यम् हुड्हुडिया इति ख्यातायां लतायाम् ।
अर्कमूला पु० अर्कस्य सर्पाणां दुष्प्रसह मूलं यस्याः । ईशेरमूल इति ख्यातायां लतायाम् ।
अर्कवल्लभ पु० अर्कस्य वल्लभः समानवर्णपुष्पत्वात् । रक्तपुष्पत्वेन अर्कप्रियपुष्पे बन्धूकवृक्षे ।
अर्कव्रत पु० अर्कस्याराधनार्थं व्रतम् । माघशुक्लसप्तम्यादौ कर्त्तव्ये अर्काराधनार्थे व्रते । अर्कस्येव व्रत नियमः "अष्टगुणमुत्स्रष्टुमादत्ते हि रसान् रवि"रित्युक्ते यथा रविणा लोकहितार्थं रसस्य ग्रहणमेवं प्रजापालनार्थमेव राज्ञा प्रजाभ्यो यत् करस्य ग्रहणं तादृशे "अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः । तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तदिति" मनूक्ते व्रते च ।
अर्काश्मन् पु० अर्कस्य अनुगतः, अश्मा । सूर्य्यकान्तमणौ, स हि सूर्य्यरश्मिसंपर्कादुज्ज्वलति ततस्तस्यार्कसम्बन्धित्वम् ।
अर्कोपल पु० अर्कस्यानुगत उपलः । सूर्य्यकान्तमणौ ।
अर्गल स्त्री० न० अर्ग-कलच् कुत्वम् । कपाटमध्यस्थे रोधके काष्ठादिदण्डे, सप्तशतीस्तोत्रस्यादौ पाठ्ये स्तोत्रविशेषे च "अर्गलं कीलकं चादौ पठित्वा कवचं पठेत् । जपेत् सप्तशतीं पश्चादित्युक्ते । कल्लोले, कपाटे च न० । क्षुद्रार्गले स्त्री० गौरा० ङीप् अर्गली, स्वार्थे के, अर्गलिकाप्यत्रार्थे ।
अर्घ मूल्ये भ्वादि० पर० सक० सेट् । अर्घति आर्घीत् ।
अर्घ पु० अर्घ-घञ् । क्रेयवस्तुनो ग्रहणार्थं तत्स्वरूपे देये रजतादिद्रव्यरूपे मूल्ये । सामगैरयं सयकार लौर्गलहस प्रयोक्तव्य । अर्ह-करणे घञ् न्यङ्क्वादित्वात् कुत्वम् । पूजोपचारे दूर्वाक्षतादौ ।
अर्घ्य अर्घ+देयार्थे यत् । अर्घार्थं दीयमाने जलादौ । अर्घदानयोग्ये मन्त्रे त्रि० । [आर्चिष्ट ।
अर्च पूजायाम् उभ०भ्वादि० सक०सेट् । अर्चति ते आर्चीत्
अर्च पूजायां चुरा० उभ० सक० सेट् । अर्चयति ते आर्चिचत् त
अर्चा स्त्री० अर्च-आधारे अङ् । प्रतिमायाम् । भावेऽङि, पूजायाम्
अर्चि स्त्री० अर्च इन् । वह्न्यादिशिखायाम् । [त्रि० ।
अर्चिष्मत् पु० अर्चिर्विद्यतेऽस्य मतुप् । सूर्य्ये, वह्नौ च । दीप्र
अर्चिस् न०पु० अर्च-इसि । वह्न्यादेः शिखायां, मयूखे च ।
अर्ज अर्जने भ्वादि० पर०सक०सेट् । अर्जति, आर्जीत् ।
अर्ज्ज संस्कारे चुरा०उभ०सक०सेट् । अर्ज्जयति ते आर्जिजत् त ।
अर्ज्जक पु० अर्ज्जयति रज्जुम् अर्ज्ज-ण्वुल् । बाबुइ इति ख्याते वृक्षे, तत्त्वकृततन्तुना हि रज्जुर्निर्म्मीयते । अर्ज्जनकर्त्तरि त्रि०
अर्ज्जन न० अर्ज्ज ल्युट् । स्वामित्वसम्पादके व्यापारभेदे सम्पादने च ।
अर्ज्जुन पु० अर्ज्ज-उनन् । स्वनामख्याते वृक्षे, मध्यमपाण्डवे, हैहयाधिपे कार्त्तवीर्य्ये, करवीरे, मयूरे, धवले च । शुभ्रतागुणवति त्रि० । आर्जुनि इति ख्याते नेत्ररोगे न० ।
अर्ज्जुनी स्त्री० गौरा० ङीप् । उषायां, बाहुदायां नद्यां, स्त्रियां गवि, कुट्टन्याञ्च ।
अर्ज्जुनोपम पु० अर्ज्जुनः स्वनामख्यातः वृक्ष उपमा यस्य ।

**अर्द्धयाम** पु॰ अर्द्धं यामस्य। अष्टधा विभक्तस्य दिनस्य रात्रेर्वा अष्टमे भागे यत्र वारवेलाकालवेलाव्यवहार।

**अर्द्धरथ** पु॰ अर्द्धं रथस्य रथनामकयोधविशेषस्य। निकृष्टयोधे

**अर्द्धरात्र** पु॰ अर्द्धं रात्रेः। द्वितीयप्रहरशेषदण्डद्वये निशीथे।

**अर्द्धवीक्षण** न॰ अर्द्धमसम्पूर्णं वीक्षणम् वि+ईक्ष-ल्युट्। कटाक्षदर्शने। [इति ख्याते मत्स्यभेदे।

**अर्द्धशफर** पु॰ अर्द्धं मकरशफरादीनं शफर। दाडका

**अर्द्धासन** न॰ अर्द्धमासनं यत्र। स्नेहव्यञ्जके सम्मानभेदे। अर्द्धमसनं क्षेपो यत्र। निन्दायाम्।

**अर्द्धोदय** पु॰ माघमासीयामातिथिनक्षत्रवारविशेषयुक्ते "माघे मासि सिते पक्षे अमा स्यादर्कसंयुता। नक्षत्रे श्रवणे देवि! व्यतीपातो यदा भवेत्। अर्द्धोदय सविज्ञेय" इत्युक्ते योगे।

**अर्द्धोरुक** न॰ अर्द्धमूरोः अर्द्धोरु तत्र कायते कै-क। उर्व्वोरधरपर्य्यन्ताङ्गाच्छादने वस्त्रे उत्तमस्त्रीणामर्द्धोरु पर्य्यन्ते चोलकाकारे परिधेयवस्त्रे च।

**अर्पण** न॰ ऋ णिच्-पुक् ल्युट्। निक्षेपे,स्वत्वत्यागे च। करणे ल्युटि। मन्त्रादौ। जुहूप्रभृतौ स्त्री॰। सम्प्रदाने ल्युटि। देवादिषु। अधिकरणे ल्युटि। त्यागाधिकरणे वह्न्यादौ। कर्म्मणि ल्युटि। हविरादौ त्याज्यद्रव्ये।

**अर्पिस** पु॰ ऋ-णिच् पुक् च इसन्। हृदये,अग्रमांसे च।

**अर्ब्ब** (र्व) हिंसने, भ्वादि॰ पर॰सक॰ सेट्। अर्ब्बति आर्ब्बीत्।

**अर्बु(र्वु)द** न॰ अर्ब्ब (र्व) रिप् तस्मै उदेति अर्ब् (र्व्)+उद्+इण-ड। आव् इति ख्याते मांसपिण्डाकारे रोगभेदे, दशकोटिसंख्यायां तत्संख्यातेषु च। पर्व्वतभेदे पु॰।

**अर्भ** पु॰ ऋ-भ। बालके। [च।

**अर्भक** पु॰ अर्भ एव स्वार्थे क। बालके, मूर्खे,कृशे,अल्पे,सदृशे

**अर्य्य** त्रि॰ ऋ-यत्। स्वामिनि। वैश्ये पु॰। स्त्रियां टाप्। अर्य्या वैश्यजातिस्त्रियां स्वामिन्याञ्च। वैश्यपत्न्यान्तु ङीष्। अर्य्यी। वैश्यजातीयायां स्त्रियाम् आनुक् ङीप् च। अर्य्याणीत्यपि।

**अर्य्यमन्** पु॰ अर्य्यं श्रेष्ठं मिमीते मा कनिन्। सूर्य्ये तद्देवताके उत्तरफल्गुनीनक्षत्रे अकद्वृक्षे पितॄणां राजनि च।

**अर्व्वन्** पु॰ ऋ वनिप्। घोटके इन्द्रे, गोकर्णपरिमाणे च। स्त्रियामर्व्वती वडवायां कुट्टिन्यामपि।

**अर्व्वाच्** अव्य॰ अवरे काले देशे वा अञ्चति अनुप क्विन्। पृषो॰ अर्व्वादेशः। पश्चात्काले मध्यगते। विपर्य्यस्ते च अर्व्वाच्+असि तस्य लुक्। अवरकालादौ मध्ये च अस॰ तद्भवे अर्व्वाक्तन इत्यादि।

**अर्व्वाचीन** त्रि॰ अर्व्वाक्काले पश्चात्काले भव ख। पश्चाद्भवे

**अर्शस्** न॰ ऋ-असुन् शुक् च। वलिकाकारे गुह्यस्थरोगभेदे वा पृषो॰ सलोपे। अर्शमप्यत्र।

**अर्शस** त्रि॰ अर्शस्+अस्त्यर्थे अच्। वलिकाकारकगुह्यव्याधियुक्ते

**अर्शोघ्न** पु॰ अर्शांसि हन्ति हन ट। (ओल) शूरणे भल्लातके च।

**अर्शोघ्नी** स्त्री॰ अर्शस् हन ठ टित्त्वात् ङीप् उप॰स॰। ताल मूल्याम् भल्लातक्याञ्च। [भल्लातके।

**अर्शोहित** पु॰ अर्शसोऽहितं सेवनेन तन्नाशकत्वात्। इत॰।

**अर्ह** पूजने, योग्यत्वे च भ्वादि॰ पर॰सक॰ सेट्। अर्हति, आर्हीत् आनर्ह। [शक्ते च। योग्ये त्रि॰।

**अर्ह** पु॰ अर्ह कर्म्मणि घञ्। पूजाप्रशंसादिभिराराध्ये ईश्वरे,

**अर्हण** पु॰ अर्ह-ल्यु। बुद्धभेदे। भावे ल्युट्। पूजने न॰। करणे ल्युटि। पूजोपकरणे पुष्पादौ उपायने च न॰।

**अर्हणा** स्त्री॰ अर्ह-युच्। पूजायां, योग्यतायाञ्च।

**अर्हत्** पु॰ अर्ह कर्म्मणि शतृ। बुद्धभेदे। पूज्ये त्रि॰।

**अर्हन्त** पु॰ अर्ह झच्। बुद्धभेदे।

**अर्हा** स्त्री॰ अर्ह-अङ्। पूजायाम्।

**अल** भूषणे वारणे, पर्य्याप्तौ च भ्वा॰ उभ॰सक॰ पर्य्याप्तौ अक॰ सेट्। अलति ते आलीत् आलिष्ट।

**अलक** पु॰ अलति भूषयति मुखम् अल-वुन्। ललाटस्थे छिन्नाग्रे कुटिलकेशे, अङ्गुलिप्रकुङ्कुमे च। क्षिपकादित्वात् कापि नेत्त्वम्। कुवेरपुर्य्याम् अष्टमेश्वर्षाद्धदशमवर्षपर्य्यन्तवयस्कायां कन्यायाञ्च स्त्री॰।

**अलकनन्दा** स्त्री॰ अलति पर्य्याप्नोति वुन् अलका नन्दयती त अच् नन्दा कर्म॰। गङ्गायाम्। अलकैः नन्दति अच्। कन्यायाम्। सा हि अलकैस्तुष्यति [(पियासाल) पीतसालवृक्षे।

**अलकप्रिय** पु॰ अलकान् प्रीणाति चक्रणीकरोति प्री-क।

**अलकाधिप** पु॰ अलकाया अधिप इत॰। कुवेरे।

**अलक्त** पु॰ न रक्तोऽस्मात् ५ब॰ रस्य लत्वम्। लाक्षारसे, स्वार्थे के। अलक्तकोऽप्यत्र तद्वेशौ लाक्षायाञ्च।

**अलक्षण** त्रि॰ नास्ति लक्षणमनुमापकं सुचिह्नं वा यस्य। अननुमेये,सुचिह्नशून्ये च। न॰त॰। दुर्लक्षणे न॰ब॰। तद्वति त्रि॰

**अलक्षित** त्रि॰ लक्ष-क्त न॰त॰। अज्ञाते,लक्षणेनाननुमिते च।

**अलक्ष्मी** स्त्री॰ विरोधार्थे नञ् त॰। लक्ष्मीविरुद्धायां निर्ऋतौ व्याधलक्ष्मीति ख्यातायाम्।

**अलगर्द्द** पु॰ लगति स्पृशति क्विप् लग् अर्द्दयति अर्द्द-अच् लग् स्पृशन् सन् अर्द्दः न भवति। विषशून्ये जलसर्पे पृषो॰ अलम् स्पृशति वा स्पृश-क्विप् वा। अलगर्दोऽप्यत्र।

दैशिक स चावकाश इत्येव "अवकाशं किलोदन्वानिति" रघु
अवकीर्ण त्रि० अव-कॄ कर्मणि क्त । चूर्णिते, ध्वस्ते च ।
अवकीर्णिन् त्रि० अवकीर्णं ध्वस्तं व्रतमस्यास्य इनि । क्षतव्रते ।
अवकृष्ट त्रि०अव+कृष क्त । दूरीकृते,अपसारिते,बहिष्कारिते च
अवकेशिन् त्रि० अवच्युतं क सुखं यस्मात् ब०व०अवकं शून्यतां फलशून्यतामीशितुं शीलमस्य अवक+ईश-णिनि । अफले वृक्षे । अवसन्ना केशा विद्यन्ते अस्य इनि । अल्पकेशयुक्ते।
अवक्रय पु० अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन अव+क्री-अच् । भाण्डस्य प्रतिरूपत्वेन देये मूल्ये, भाटके च
अवच्युत त्रि० अव-च्यु-क्त । उपरि क्षतच्युते । [भर्त्सने च न०।
अवक्षेप पु०अव+क्षिप-घञ् । निन्दायाम् । ल्युटि अवक्षेपणमप्यत्र
अवगणित त्रि० अव+गण-क्त । तिरस्कृते, अवज्ञाते च ।
अवगण्ड पु० अव+गम-ड डकारस्य नेत्वम् । गण्डस्थव्रणे ।
अवगत त्रि० अव+गम-क्त । निम्नगते, ज्ञाते च ।
अवगाढ त्रि० अव+गाह-क्त । निबिडे अन्तःप्रविष्टे,निमग्ने च
अवगाह पु०अव+गाह-घञ् । स्नाने,अन्तःप्रवेशे च । आधारे घञ् । स्नानस्थाने । वा अल्लोपे वगाहोऽप्यत्र । ल्युटि अवगाहनमप्यत्र । [च ।
अवगीत त्रि० अव+गै-क्त । निर्वादे जनापवादे,दुष्टे, गर्हिते
अवगुण पु० अव+गुण-क । दोषे ।
अवगुण्ठन न० अव+गुण्ठ-ल्युट् । योषितां शिरःप्रावरण क्रियायाम् । करणे ल्युटि । मुखाच्छादने वस्त्रे ।
अवगुण्ठिका स्त्री० अव+गुण्ठ-ण्वुल् स्त्रीत्वात् टापि अत इत्वम् । स्त्रीणां मुखावरणशाट्याम्, जवनिकायाञ्च ।
अवगुण्ठित त्रि० अव+गुण्ठ क्त । कृतावगुण्ठने, चूर्णिते च
अवग्रह न०अव+ग्रह-क्यप् । व्याकरणे सिद्धे प्रगृह्यसंज्ञके पदे
अवगोरण न०अव+गुर-उद्यमे ल्युट् । वधायास्त्राद्युद्यमे ।
अवग्र(ग्रा)ह पु० अव+ग्रह-अप घञ वा । वृष्टिजलप्रतिबन्धे ।
अवग्रहण न० अव+ग्रह-ल्युट् । प्रतिरोधे ।
अवघट्ट पु०अव+घट्ट-अच् । बन्धे, (जाता) घरट्टे च । [णे ।
अवघात पु० अव+हन-घञ् । अवहनने,तण्डुलादेर्विन्नुषीकरणे
अवचय पु० अव+चि अच् । पुष्पफलाद्यादाने । [वस्त्रे।
अवचूड(ल) पु०अवनता चूडाग्रं यस्य वा डोल । ध्वजाधोबद्धे
अवचूर्णित त्रि० अव+चूर्ण-क्त । पिष्टे,क्षिप्ते, चूर्णीकृते च ।
अवचूलक अवनता चूडा यस्य डस्य लत्वम् स्वार्थे कन् । चामरे । [अवच्छेदकतानिरूपके च ।
अवच्छिन्न त्रि० अव+छिद-क्त । छुरिते,विशिष्टे,व्यावर्तिते
अवच्छुरित न० अव+छुर-क्त । अट्टहासे । मिश्रिते त्रि० ।
अवच्छेद पु० अव+छिद घञ् । विरामे,परिच्छेदे एकदेशे च ।
अवच्छेदक त्रि०अव+छिद-ण्वुल् । एकदेशे,व्यावर्तकविशेषणे च
अवच्छा स्त्री० अव+छा अङ् । अनादरे ।
अवट पु०अव-अटन् । गर्ते, कूपे,ऐन्द्रजालिकजीविकावति च।
अवटि स्त्री०अव-अटि । गर्ते, कूपे च। वा ङीष् अवटीत्यपि ।
अवटीट त्रि० अवनता नासिका प्रा०ब० । नतार्थे नासाया टीटादेश अर्शआदित्वादच् । (खादा) नतनासिके जने ।
अवटु पु० अव+टीक-डु । गर्ते, वृक्षभेदे,कूपे च । ग्रीवापश्चाद्भागे, ग्रीवाया उन्नतभागे च स्त्री० । [गतिभेदे
अवडीन न० अव+डी-ल्युट् । अवरोहणरूपे पक्षिणां
अवतंस पु०न० अव+तन्स-घञ् । कर्णपूरे, शिरोभूषणभेदे च।
अवतमस न०अवकृष्टं हीनं तम प्रा०ब० अच् । अल्पान्धकारे ।
अवतार पु० अव+तॄ करणे घञ् । तीर्थे, (पुष्करिण्यादेः सोपानपद्धतौ) । भावे घञ् । अवरोहणे, देवानामंशावेश वशेन प्रादुर्भावे च ।
अवतारण न० अव+तॄ-णिच्-ल्युट् । भूतादीनामावेशनेन प्रादुर्भावने, अवरोपणे, ग्रन्थप्रस्तावने च। अवतारणमप्यत्र।
अवतोका स्त्री० अवपतितं तोकमस्याः । स्रवद्गर्भाया स्त्रियाम्
अवदंश पु०अव+दन्श-घञ् । भर्जिते चर्वणद्रव्ये, (मद्यपानोत्साहादिकारके चर्वणद्रव्ये) । [मनोज्ञे च त्रि० ।
अवदात पु० अव दै-क्त । शुभ्रे, पीते च वर्णे । तद्वति,विशुद्धे
अवदान न० अव+दो ल्युट् । खण्डने, पराक्रमे, अतिक्रमे, शुद्धिकरणे,वीरणमूले च । [ण्वुल् । भेदनकर्तरि त्रि०।
अवदारक पु०अवदारयति दॄ णिच्-ण्वुल् । (खोनता) खनित्रे
अवदारण न० अव+दॄ-णिच् करणे ल्युट् । खनित्रे ।
अवदाह न० अव+दह्यते दह कर्मणि घञ् । वीरणमूले ।
अवद्य त्रि० वद यत् न०त० । अधमे,पापिनि, निन्द्ये, कथनायोग्ये च । [विषयान्तरतो मनोनिवर्तने ।
अवधान न० अव+धा-ल्युट् । मनोयोगविशेषे, चेतसः
अवधारण न० अव+धृ-णिच्-ल्युट् । इयत्तापरिच्छेदे, अयमेवेति विषयपरिच्छेदके निश्चये च । [त्रि० ।
अवधि पु० अव+धा कि । सीमायां,काले च । आधारे कि ।
अवधीर अवज्ञायाम् अद०चुरा० उभय०सकं०सेट्। अवधीरयति ते आववधीरत् त । मतान्तरे कथादिधीरत् त ।
अवधूत त्रि० अव+धू-क्त । अभिभूते निरसिते, चालिते, अनादृते च । "यो विलङ्घ्याश्रमान् वर्णान् आत्मन्येव स्थितः पुमान् । अतिवर्णाश्रमी योगी अवधूत स उच्यते" इत्युक्तलक्षणे वर्णाश्रमधर्मत्यागिनि संन्यासिनि पु० ।

**अवध्वंस** पु॰ अव+ध्वंस-घञ् । परित्यागे, चूर्णिते, निन्दायाञ्च

**अवन** न॰ अव-ल्युट् । प्रीणने, रक्षणे, प्रीतौ च ।

**अवनत** त्रि॰ अव+नम-क्त । अधोभूते, आनते च ।

**अवनति** स्त्री॰ अव+नम-क्तिन् । औद्धत्याभावे, विनये, अधोनमने च । [वाद्ये न॰ ।

**अवनद्ध** त्रि॰ अव+नह-क्त । खचिते, रोपिते च । मृदङ्गादि-

**अवनय** पु॰ अव+नी-अच् । अधोनयने ।

**अवनाट** त्रि॰ अवनता नासिका या॰स॰ नतार्थे नासिकाया नाटादेशः अर्श आद्यच् (खांदा) अवनतनासिके जने ।

**अवनि** (नी) स्त्री॰ अव-अनि । भूमौ । वा ङीप् अवनीत्यपि ।

**अवनेजन** न॰ अव+निज-ल्युट् । प्रक्षालने, श्राद्धे पिण्डप्रदानार्थमास्तृतकुशस्योपरि जलसेचने च ।

**अवन्ति** (न्ती) पु॰ स्त्री॰ अव-झि । मालवदेशे ।

**अवन्तिका** स्त्री॰ अवन्तिषु कायति प्रकाशते । मालवदेशीयराजधान्यामुज्जयिन्याम् । [काञ्जिके ।

**अवन्तिसोम** न॰ अवन्तिषु अभिषुतं सोममिव शाक॰त॰।

**अवपात** पु॰ अव+पत-घञ् । बिले, अधःपतने, निपाते च ।

**अवप्लुत** त्रि॰ अव+प्लु-क्त । सहसाऽवतीर्णे ।

**अवभास** पु॰ अव+भास-घञ् । साक्षात्कारे, अन्यधर्मस्यान्यस्मिन्नारोपेण भाने च ।

**अवभृथ** पु॰ अव+भृ-क्थन् । मुख्ययज्ञसमाप्तौ क्रियमाणे यज्ञशेषे कर्मणि, यज्ञाङ्गभूते यज्ञान्ते स्नाने च ।

**अवभ्रट** त्रि॰ अवनता नासिका प्रा॰स॰ नतार्थे नासिकाया भ्रटादेशः अर्श आद्यच् । अवनतनासिके (खांदा) जने ।

**अवम** त्रि॰ अवत्यस्मादात्मानम् अव-अम् । कदाचारादौ, कुत्सिते, नीचे च । ज्योतिषप्रसिद्धे एकतिथिद्वयान्तवर्तिनि एकस्मिन् दिनवारे न॰ । अवमदिनमप्यत्र॰।

**अवमत** त्रि॰ अव+मन-क्त । अनादृते ।

**अवमर्द** पु॰ अव+मृद-घञ् । पीडने । [गर्भेदे च ।

**अवमर्ष** पु॰ अव+मृश-घञ् । आलोचनायाम्, नाटकस्य सन्ध्यं

**अवमानना** त्रि॰ अव+चुरा॰-मन-युच् । अपमानकरणे ।

**अवमानित** त्रि॰ अव+चुरा॰ मन-क्त । कृतापमाने ।

**अवमोटन** न॰ अव+मुट्-णिच्-ल्युट् । (मोचड़ान) परिवर्त्तनेनान्यथापादनरूपे परिमोटने ।

**अवयव** पु॰ अव+यु-अप् । देहादावङ्गे, उपकरणे, न्यायमते प्रतिज्ञाहेतूदाहरणादिषु पञ्चसु वाक्येषु च ।

**अवर** त्रि॰ अव+रा-क । चरमे, अधमे, कार्य्ये च । पश्चाद्वर्त्तिनि देशे काले पु॰ तद्वर्त्तिनि त्रि॰ । हस्तिजङ्घायाः पश्चाद्देशे न॰।

**अवरज** पु॰ अवरस्मिन् काले जातः । कनिष्ठसोदरे भ्रातरि, शूद्रे च । कनिष्ठसोदरभगिन्यां, शूद्रायाञ्च स्त्री॰ टाप् ।

**अवरति** स्त्री॰ अव+रम-क्तिन् । विरामे, निवृत्तौ च ।

**अवरवर्ण** पु॰ कर्म्म॰ । शूद्रे ।

**अवरीण** त्रि॰ अव+रीङ-क्त । तिरस्कृते ।

**अवरुद्ध** त्रि॰ अव+रुध-क्त । आच्छादिते, बन्धादिना प्रतिरुद्धे च अन्तःपुरवासिन्यां भोग्यायां दास्यां, राजयोषिति च स्त्री॰ ।

**अवरूढ** त्रि॰ अव+रुह-क्त । अवतीर्णे, स्वस्थानाद्भ्रंशिते ।

**अवरोध** पु॰ अव+रुध-भावे घञ् । निरोधे । कर्म्मणि घञ् । राजान्तःपुरस्थायां योषिति, राजदारेषु च । आधारे घञ् । राजान्तःपुरे । ल्युट् । अवरोधनमप्यत्र न॰ ।

**अवरोधिक** पु॰ अवरोधे रक्षणादौ नियुक्तः ठञ् । राजान्तःपुररक्षणार्थं नियुक्ते वामनादौ ।

**अवरोपित** त्रि॰ अव+रुह-णिच्-पुक् च क्त । उत्पाटिते ।

**अवरोह** पु॰ अव+रुह-घञ् । अवतरणे, ऊर्द्ध्वदेशान्निम्नदेशगमने, आरोहे च । पचाद्यच् । तरोर्मूलादग्रपर्य्यन्तमारूढायां गुडूच्यादिलतायां । अपादाने घञि । स्वर्गे, ततो हि भोगावसाने सर्व्वेऽवतरन्ति ।

**अवरोहशाखिन्** पु॰ अवरोहति छिन्नोऽपि पुनः प्ररोहति अव+रुह-अच् कर्म्म॰, अवरोहन्ति अधोगच्छन्ति मूलमस्य तादृशी शाखा कर्म्म॰ ततः बाहुल्ये मत्वर्थीय इनिः । वटवृक्षे, तस्य छेदनेऽपि पुनः प्ररोहः च । शाखातोऽपि महन्ति मूलान्यवतरन्ति ।

**अवरोहिका** स्त्री॰ अव-रोहति अत्यन्तमधोगच्छति रुह-ण्वुल् टाप् कापि अतइत्वम् । अश्वगन्धालतायाम् ।

**अवरोहिन्** पु॰अव+रुह-णिनि । वटवृक्षे । अवरोहिशाखोऽप्यत्र

**अवर्ण** पु॰ वर्ण-घञ् विरोधे नञ्त॰। प्रशंसाविरोधिनि अपवादे

**अवलक्ष** अव+लक्ष घञ् श्वेतवर्णे । तद्वति, मूर्खे च त्रि॰ । अर्शआदेरतो लोपे, वलक्षोऽप्यत्रार्थे ।

**अवलग्न** पु॰ अव+लग-क्त नि॰ इडभावः । (माजा) देहमध्यभागे । संबद्धमात्रे त्रि॰।

**अवलम्ब** पु॰अव+लबि-आधारे घञ् । आश्रये । करणे घञि । अवलम्बनसाधने दण्डादौ । अवलम्बनमप्यत्र ल्युट् ।

**अवलम्बित** त्रि॰ अव+लबि-क्त । आश्रिते, वस्त्रादिना बद्धे च

**अवलिप्त** त्रि॰ अव+लिप-क्त । गर्विते, कृतलेपने च ।

**अवलीढ** त्रि॰ अव+लिह-क्त । भक्षिते, कृतावलेहे च ।

**अवलीला** स्त्री॰ अवरा लीला । अनायासे, अनादरे च ।

**अवलेप** पु॰ अव+लिप-घञ् । गर्व्वे, लेपने, दूषणे, सम्बन्धे च ।

**अवलेपन** न॰ अव+लिप-भावे ल्युट् । विलेपे, गर्वे, सङ्गे च । करणे ल्युटि । चन्दनादौ ।

**अवलेह** पु॰ अव+लिह-घञ् । जिह्वाग्रेण स्वादने । कर्मणि घञि । तथास्वाद्ये औषधादौ च ।

**अवलोकन** न॰अव+लुक-ल्युट् । दर्शने,अनुसन्धाने च । करणे ल्युट् । आलोके, नेत्रे च । [लतायाम् ।

**अवल्गुज** पु॰ अवल्गोरशोभनाज्जायते जन-ड । सोमराजी

**अववाद** पु॰अव+वद-घञ् । निन्दायाम्, विश्वासे,आज्ञायाम्, अवालम्बने च । [परवशे, पराधीने च ।

**अवश** त्रि॰ नास्ति वशमायत्तत्वं यस्य । अस्वाधीने, कामादि-

**अवशिष्ट** त्रि॰अव+शिष-क्त । अतिरिक्ते, परिशिष्टे, अधिके च

**अवश्यम्** अव्य॰अव+श्यै-डम् । निश्चये, अवाक्यनिवारणे च ।

**अवश्याय** पु॰अव-श्यै-ण । कुज्झटिकायाम्, अभिमाने च ।

**अवश्रयण** न॰ अव+श्री-अच् । चुल्लीतोऽवतार्य स्थापने ।

**अवष्टब्ध** त्रि॰ अव+स्तन्भ-क्त । आसन्ने, आक्रान्ते, अवलम्बिते,प्रतिरुद्धे च ।

**अवष्टम्भ** पु॰ अव+स्तन्भ-घञ् । स्वर्णे,स्तम्भे,प्रारम्भे, रोधने, गर्वे च "रक्षोऽवष्टम्भमयेन मत्रिणे",त रघु ।

**अवस्** अव्य॰ अवर+प्रथमायाः पञ्चम्याः सप्तम्या वार्थे असि अवादेशः । वाह्ये पश्चादर्थे च ।

**अवसथ** पु॰ वस-अथन् न॰प्र॰व॰ । निलये,ग्रामे च ।

**अवसथ्य** पु॰ अवसथ+स्वार्थे यत् । आवासे, ग्रामे च ।

**अवसर** पु॰ अव+सृ-अच् । प्रस्तावे, जिज्ञासानिवृत्तयेऽवश्यवक्तव्ये, वत्सरे, मन्त्रभेदे, वर्षणे, क्रियास्थितियोग्यतासम्पादककाले कालिकेऽवकाशे च । [कामचारानुज्ञायां च ।

**अवसर्ग** पु॰अव+सृज-घञ् । अप्रतिबन्धे, यथेष्टं क्रियतामिति

**अवसर्प** पु॰ अव+सृप-अच् । चरे । [स्वपारवश्यतायाञ्च ।

**अवसाद** पु॰ अव+सद-घञ् । नाशे, विषादे, स्वकार्याक्षमत्व

**अवसादन** न॰ अव+सद-णिच्-ल्युट् । कार्याक्षमत्वापादने, नाशने च । [भृत्यौ च ।

**अवसान** न॰ अव+सो-ल्युट् । विरामे, समाप्तौ, सीमायां,

**अवसाय** पु॰ अव+सो-घञ् । समाप्तौ, शेषे, निश्चये च ।

**अवसित** त्रि॰ अव+सो-क्त । समाप्ते, ऋद्धे, ज्ञाते, परिपक्वे, निश्चिते, गृहीतधान्ये च । अव+षि-क्त । संबद्धे ।

**अवस्कन्द** पु॰अव+स्कन्द-आधारे घञ् । जिगीषया सैन्यनिवेशस्थाने शिविरे, आक्रमणे च । [तरणे,आक्रमणे च ।

**अवस्कन्दन** न॰ अव+स्कन्द-ल्युट् । सर्वाङ्गे स्नानावगाहने,अव

**अवस्कर** पु॰अव+कॄ-अप् सुट् । विष्ठादिमले । अपादाने अपि गुह्यदेशे उपस्थादौ । [अवादेशः । अवरकालादौ ।

**अवस्तात्** अव्य॰ अवरस्मिन् अवरस्मात् अवरमित्यर्थे अस्ताति

**अवस्तार** पु॰ अव+स्तॄ-घञ् । परदा इति ख्यातायां जवनिकायाम्, आस्तरणे च । [अवस्थाने च ।

**अवस्था** स्त्री॰ अव+स्था-अङ् । कालकृतायां देहादेर्दशायाम्,

**अवस्थान** न॰ अव+स्था-ल्युट् । स्थितौ । आधारे वञि । आवासे, प्रतिष्ठायाञ्च ।

**अवस्यन्दन** न॰ अव+स्यन्द-ल्युट् । हिंसने ।

**अवस्रंसन** न॰ अव+स्रन्स-ल्युट् । अधःपतने, च्युतौ च ।

**अवहार** पु॰अव+हृ-कर्त्तरि ण । चौरे,ग्राहनामके, जलजन्तुभेदे च । भावे घञि । युद्धादिविश्रामे । कर्मणि घञि । निमन्त्रितविप्रादिभ्यो देये द्रव्ये । [भावे ।

**अवहित्था** स्त्री॰ न॰ न बहिस्तिष्ठति स्था-क इत्यो॰ । हृद्गत-

**अवहेल** न॰स्त्री॰ । अव+हेल-अच् घञर्थे क वा । अनादरे ।

**अवाक्पुष्पी** स्त्री॰ अवाक् अधोमुखं पुष्पमस्याः । (मुलफा) इति ख्यातायाम् शतपुष्पिकायाम् ।

**अवाक्शिरस्** त्रि॰ अवाक् शिरोऽस्य ब॰ । अधोमुखे ।

**अवाग्र** त्रि॰ अवनतमग्रमस्य । नम्रमुखे ।

**अवाङ्मुख** त्रि॰ अवाक् मुखमस्य । अधोमुखे ।

**अवाच्** त्रि॰ अवाञ्चति अव+अन्च-क्विप् । अधोमुखगते, अवरे-देशे, काले च । दक्षिणस्यां दिशि स्त्री॰ ङीप् । नास्ति वाक् यस्य इ॰ब॰ । वाक्यरहिते त्रि॰ । पूर्वार्थे अवाञ्चौ,अत्र अवाचौ इत्यादिभेदः । कालाद्यर्थे प्रथमादीनां स्थानेऽस्ताति तस्य लुक् । अवरकालादावर्थे अव्य॰ ।

**अवाच्य** न॰ वच-ण्यत् कुत्वम् न॰त॰ । दुष्टवचने, वचनानर्हे,निन्दनीये च अवाच्+यत् । अवरकालादौ भवे त्रि॰ ।

**अवान्तर** त्रि॰ अवगतमन्तरं मध्यम् प्रा॰स॰ । प्रधानान्तःपातिनि अङ्गादौ, सामान्यस्य विशेषे च ।

**अवार** न॰ न वारमत्र । नद्यादेर्जलानतिक्रमेण प्राप्ये तीरे ।

**अवारपार** पु॰ अवारं पारञ्च स्तो यस्य अर्शआद्यच् । उभयकूलवति समुद्रे ।

**अवारपारीण** त्रि॰अवारपारे गच्छति+ख । पारगामिनि ।

**अवारिका** स्त्री॰ नास्ति वारि यत्र । धन्याके, तस्य अतिशुष्कफलत्वेन जलशून्यत्वात् ।

**अवासस्** त्रि॰ न वासोऽस्य । वस्त्ररहिते नग्ने ।

**अवि** पु॰ अव-इन् । सूर्य्ये, मेषे, छागे, पर्वते, मूषिककम्बले, प्रभौ च । ऋतुमत्या स्त्रिया लज्जायाञ्च स्त्री॰ वा ङीप् ।

**अविकट** पु॰ अवि+समूहे कटच् । मेषसंघाते । विकट एव

न०त०। उपभिन्ने भौम्ये। [अजगन्धाहृत्ते।

**अविगन्धा** स्त्री० अवेश्छागस्य गन्ध इव गन्धः पुष्पादावस्याः।

**अविग्न** पु० विज-क्त न०त०। (करमचा) करमर्द्दकवृक्षे।

**अवितथ** न० न वितथं मिथ्या न०त०। सत्ये।

**अविद्या** स्त्री० विद-क्यप् न०त०। विद्याभावे, अहङ्कारहेतौ अज्ञाने, विद्याविरोधिन्याम् अयथार्थबुद्धौ च। वेदान्तमते भावाभावाभ्यामनिर्वाच्यायामचेतनायां मायायाम्।

**अविद्धकर्णी** स्त्री० न विद्धः अच्छिद्रः पर्णरूपः कर्णोऽस्याः। पाठालतायाम्।

**अविनाभाव** पु० विना व्यापकम्तते न भावः स्थितिः। व्यापकस्थित्यनुरोधिसत्तात्मायां व्याप्तौ।

**अविनीत** त्रि० अव+नी-क्त। उद्धते। कुलटायां स्त्री०।

**अविप्रिय** पु० अवीन् मेषान् प्रीणाति प्री-क। श्यामाकतृणे। विप्रियमपकारः न०त०। प्रतिकूलभिन्ने। न०ब०। अपकारशून्ये त्रि०। श्वेतानन्तायां स्त्री०।

**अविभक्त** पु० वि+भज-क्त। संसृष्टे, विभागरहिते द्रव्ये-स्वामिनि च। अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः इति, अविभक्तं स्थावरं यत्सर्व्वेषामेव तद्भवेदिति च स्मृतिः।

**अविमुक्त** न० "न विमुक्तं शिवाभ्यां यदविमुक्तं ततो विदुः"-रित्युक्तलक्षणे काशीक्षेत्रे। वि+मुच-क्त न०त०। मुक्तभिन्ने त्रि०

**अविरत** त्रि० वि+रम भावे-क्त न०ब०। विरामशून्ये, अनवरते द्रव्यादौ च क्रियाविशेषणत्वे न०।

**अविरति** स्त्री० विरामो विरतिः भावे क्तिन् न०त०। विषयादौ स्थिरचित्ततायाम्, विरामाभावे च।

**अविरल** त्रि० न विरलं न०त०। घने, निविडे।

**अविलम्बित** त्रि० वि+लबि-क्त न०त०। विलम्बशून्ये त्वरायुक्ते द्रव्यादौ। क्रियाविशेषणत्वे न०।

**अविवेक** पु० वि+विच-घञ् न०त०। सदसद्विवेकाभावे, सम्भूयैककार्य्यकारणे, भ्रमे च। न०ब०। विवेकशून्ये त्रि०।

**अविवेकिन्** त्रि० वि+विच-घिनुण् न०त०। विवेचकभिन्ने, मूर्खे, शास्त्राद्युपदेशशून्ये, विवेकोभेदस्तद्रहिते च। साङ्ख्यमते प्रधाने, महदादौ च। प्रधानं महदादिभ्यः, महदादयश्च प्रधानात् न विविच्यन्ते (भिद्यन्ते) इत्युक्तम् तत्रैव।

**अविशेष** पु० वि+शिष-घञ् न०त०। विशेषाभावे, अभेदे च। न०ब०। विशेषशून्ये तुल्ये त्रि०। साङ्ख्यादिमतसिद्धेषु तन्मात्राख्येषु सूक्ष्मभूतेषु तानि च इदमेतदेवंगुणकमिति व्यावृत्ततया नानुभूयन्ते इत्यविशेषाः।

**अविश्रान्त** त्रि० वि+श्रम-क्त न०त०। विरामरहिते द्रव्ये।

**अविष** पु० अव-टिषच्। समुद्रे, नृपे च। ङीप्। नद्यां स्त्री०। विषशून्ये त्रि०। (आतइच्) विश्वायां स्त्री० टाप्।

**अविसोढ** न० अवेर्दुग्धम् अवि+सोढ न पत्नम्। मेष्यादुग्धे।

**अविस्पष्ट** न० विस्पष्टं श्रुतमात्रेणार्थावबोधकं सुखेन श्रवणायोग्यञ्च वि+स्पश-क्त न०त०। अस्पष्टवाक्ये। [व्यक्त।

**अवीचि** पु० नास्ति वीचिः सुखमत्र। नरकभेदे अवीचिमयोऽ-

**अवीजा** स्त्री० ईषदर्थे नञ् ब०। अल्पवीजवत्यां द्राक्षायाम्। वीजशून्ये त्रि०। [प्रवर्त्तमाने निषेधके अनुमाने।

**अवीत** न० वि+इण्-क्त न०त०। न्यायप्रसिद्धे व्यतिरेकमुखेन

**अवीर** त्रि० वीरः पुत्रादि र्नास्ति यस्य। पुत्रादिशून्ये। न०त० वीर्य्यवद्भिन्ने। पतिपुत्ररहितायां स्त्री०। "अजातपुत्रा विधवा साऽवीरा परकीर्त्तितेति" स्मृतेः। [धाने च।

**अवेक्षण** न० अव+ईक्ष-ल्युट्। दर्शने, प्रतिजागरणे, अव-

**अव्यक्त** पु० वि+अन्ज-क्त न०त०। विष्णौ, कामे, शिवे, सांख्यमते सर्व्वकारणे, प्रधाने, रूपाद्यहीनतया चक्षुराद्यगोचरत्वात्तस्य, वेदान्तमते सूक्ष्मशरीरे सप्तावस्थायां शब्दप्रवृत्तिनिमित्तैर्जातिगुणादिभिर्वर्ज्जिते निराकारे ब्रह्मणि च न०। अस्पष्टे वस्तुमात्रे त्रि०। [ईषद्रक्ते अरुणवर्णे।

**अव्यक्तराग** पु० न व्यक्तोऽस्पष्टोरागोऽरुणिमा यस्य।

**अव्यङ्गा** स्त्री० अवेरङ्गं स्वङ्गमिवाङ्गमस्याः। शूकशिम्ब्याम्। न विकलमङ्गमस्य इ०ब०। विकलाङ्गभिन्ने पूर्णाङ्गे त्रि०।

**अव्यञ्जन** पु० नास्ति व्यञ्जनं शुभलक्षणं शृङ्गं यस्य। शृङ्गहीनपशौ, सुलक्षणशून्ये, चिह्नशून्ये च त्रि०।

**अव्यण्डा** स्त्री० न विगतमण्डं वीजमस्याः। शूकशिम्ब्याम्।

**अव्यथ** पु० न व्यथते मन्त्रं न स्खलति व्यथभयचलनयोः अच्। सर्पे। व्यथाशून्ये त्रि०। नास्ति व्यथा यस्याम् ७ब०। हरितक्याम् शुण्ठ्याञ्च स्त्री०। [व्यथाशून्ये त्रि०।

**अव्यथिन्** पु० वङ्कचलनेऽपि न व्यथते व्यथ-इनि। अश्वे,

**अव्यभिचारिन्** त्रि० वि+अभि+चर-णिनि न०त०। केनापि प्रतिकूलहेतुना निवारयितुमशक्ये। न्यायमते व्यभिचारो व्याप्तेरभावस्तच्छून्ये हेतौ पु०।

**अव्यय** पु० न० वि+इण्-अच् न०त०। "सर्व्वासु विभक्तिषु सर्व्ववचनेषु च एकरूपे शब्दवृत्तिधर्म्मविशेषे, यथास्वरादयोऽव्ययाः सर्व्वत्रैकरूपाः शिवे, विष्णौ च पु०। आद्यन्तरहिते विकारशून्ये त्रि०। परब्रह्मणि न०। "सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु। वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययमिति श्रुतिः।

**अव्ययीभाव** पु० अनव्ययमव्ययं भवत्यनेन अव्यय+च्वि-भ

नञ् । व्याकरणसिद्धे समासविशेषे । तत्र हि उपकुम्भमित्यादौ अनव्ययस्यापि कुम्भादिपदस्याव्ययत्वम् ।
**अव्यवस्था** स्त्री॰ वि+अव+स्था-अङ् न॰त॰ । इदं कर्त्तव्यमिदं नेति नियमाभावे शास्त्रादिविरुद्धायां अवस्थायाम्, अविधौ च । [भोजनादौ एकत्रावस्थानायोग्ये पतितादौ ।
**अव्यवहार्य्य** त्रि॰ वि+अव+हृ-ण्यत् न॰त॰ । शयनासन-
**अव्यवहित** त्रि॰ वि+अव+धा क्त न॰त॰ । व्यवधानरहिते साक्षात्संबद्धे ।
**अव्याकृत** त्रि॰ वि+आ+कृ-क्त न॰त॰ । वेदान्तमते अप्रकटीभूते वीजरूपे जगत्कारणेऽज्ञाने। सांख्यादिमते प्रधाने च ।
**अव्याप्यवृत्ति** त्रि॰ व्याप्य स्वाधिकरणं देशादिकं साकल्येन संबध्य न वृत्तिः स्थितिर्यस्य । स्वाधिकरणे देशादौ प्रदेशविशेषस्थिते वस्तुनि । यथा घटोभूतलादौ एकदेशे एव तिष्ठति इत्यतोऽव्याप्यवृत्तिः । व्याप्यवृत्तिस्तु॰ जात्यादि॰ घटादौ साकल्येन सम्बध्य स्थित इति न्यायमते प्रसिद्धम् ।
**अव्युत्पन्न** त्रि॰ वि+उद्+पद-क्त न॰त॰ । समुदायशब्दस्यावयवयोरर्थबोधकताशक्तिः व्युत्पत्तिस्तच्छून्ये अवयवार्थशून्ये शब्दे, शब्दार्थानभिज्ञे मूर्खादौ च ।
**अश** संहतौ-व्याप्तौ च स्वादि॰आत्म॰ वेट् सक॰ । अश्नुते आशिष्ट आष्ट आनशे ।
**अश** भोजने क्र्यादि॰ पर॰ सक॰ सेट् । अश्नाति आशीत् ।
**अशकुम्भी** स्त्री॰ अश्नुते व्याप्नोति अश-अच् अशा सती कुम्भाति जलमाप्नोति कुम्भ-ट पृषो॰ सलोपः टित्वात् ङीप् कर्म्म॰ । अल्पकालेन जलव्यापके जलोपरिजाते पाना इति ख्याते तृणभेदे ।
**अशन** पु॰ अश्नुते व्याप्नोति अश-ल्यु । पीतशालवृक्षे दन्त्यमध्योऽप्ययमत्रार्थे । भावे ल्युट् । व्याप्तौ, भोजने च न॰ । कर्म्मणि ल्युट् । अन्ने न॰ ।
**अशनपर्णी** स्त्री॰ अशनस्य पीतशालस्य पर्णमिव पर्णमस्याः । आराढो इति ख्याते वृक्षभेदे तस्य पीतशालतुल्यपर्णत्वात्
**अशनाया** स्त्री॰ अतिलोभेनाशनमिच्छति अशन+क्यच्-भावे अ । बुभुक्षायाम् । [बुभुक्षायाम् न॰ ।
**अशनायित** त्रि॰अशन-क्यच्-कर्त्तरि-क्त । क्षुधिते । भावे-क्त ।
**अशनि** पु॰ स्त्री॰ अश्नुते संहन्ति अश-अनि । मेघोत्पन्ने ज्योतिषि वज्रे, प्रस्तरवर्षिणि उल्काविशेषे,विद्युति च ।
**अशब्द** त्रि॰ नास्ति शब्दो, वेदादौ वाचकशब्दो वा यस्य । शब्दहीने, वेदे वाचकशब्दवर्जिते च "प्रधानेऽशब्दमस्पर्शमरूपमव्ययमिति" श्रुतिः "ईक्षतेर्नाशब्दमिति" शारीरकसूत्रम्
**अशरीर** त्रि॰ नास्ति शरीरं तदभिमानो वा यस्य । "प्रत्यग्ब्रह्मणि स्थिते मिथ्याज्ञाने सहेतुके । नेतिनेतिस्वरूपत्वादशरीरो भवत्ययं"मित्युक्तलक्षणे सकलावयवरूपे देहशून्ये परमात्मनि, शरीराभिमानशून्ये जीवन्मुक्ते च "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति श्रुतिः ।
**अशास्त्र** न॰ शास-करणे ष्ट्रन् शास्त्रं वेदादि विरोधे न॰त॰। वेदादिविरुद्धे नास्तिकागमादौ ।
**अशित** त्रि॰ अश-कर्म्मणि क्त । भक्षिते। कर्त्तरि क्त । तृप्ते ।
**अशितङ्गवीन** त्रि॰अशितास्तृप्ता गावोऽत्र । पूर्वगोचारणक्षेत्रे ।
**अशितम्भव** त्रि॰ अशितस्तृप्तो भवत्यनेन ख मुम् च । तृप्तिसाधने चरवादौ । [ इव । चरौ ।
**अशित्र** पु॰ अश-संहतौ इत्र । चौरे । भोजनार्थात् कर्म्मणि
**अशिर** पु॰ अश-भोजने इर । वह्नौ, राक्षसे, सूर्य्ये, वायौ च । वज्रे न॰ । [शाम् । स्वार्थे के हस्वे अशिरिकाप्यत्र ।
**अशिश्वी** स्त्री॰ नास्ति शिशुर्यस्याः ङीप् । शिशुहीनायां स्त्रि-
**अशीति** स्त्री॰ दशानामवयवं दशतिः दशकमष्टगुणिता दशतिः नि॰ अशीत्यादेश॰। अष्टगुणिते दशके संख्याभेदे, तत्सङ्ख्यान्विते च
**अशुभ** न॰ नास्ति शुभं यस्मात् ५ब॰। पापे "प्रयतत्वाद्दोपचितमशुभं नाशयती"ति स्मृतिः।न॰त॰। अमङ्गले। तद्वति त्रि॰
**अशेष** त्रि॰नास्ति शेषो यस्य । शेषरहिते समस्ते । क्रियाविशेषणत्वे न॰ । नञ् त॰ । शेषाभावे ।
**अशोक** पु॰ नास्ति शोको यस्मात् ५ब॰ । स्वनामख्याते अशोकवृक्षे, वकुलवृक्षे च । पारदे न॰। कटुकवृक्षे स्त्री॰। इत॰ । शोकशून्ये त्रि॰ ।[कट्कीति ख्यातायां कटुकायाम् ।
**अशोकरोहिणी** स्त्री॰ अशोक इव रोहति रुह-णिनि ।
**अशोच्य** त्रि॰ शुच-योग्यत्वे ण्यत् न॰त॰ । शोचितुमयोग्ये
**अशौच** न॰ शुचेर्भावः शौचं न॰त॰। स्मृतिप्रसिद्धे, विहितकर्म्मानधिकारित्वसम्पादके अधर्म्मे, शुचित्वाभावे च । स्वार्थे अञ् आशौचमप्यत्र "आशौचव्यादिमसचेते"ति स्मृतिः ।
**अश्मकदली** स्त्री॰ अश्नुते अश-मन् कर्म्म॰। काष्ठकदल्याम् ।
**अश्मकुट्ट** पु॰ अश्मनि प्रस्तर एव धान्यादिकं कुट्टयति । वानप्रस्थभेदे, तस्योदूखलादिशून्यत्वेन तण्डुलादेर्निस्तुषीकरणं प्रस्तरे एव विहितम् । [मरकतमणौ ।
**अश्मगर्भ** पु॰अश्मना कृतो गर्भोऽस्य । पन्ना इति ख्याते
**अश्मगर्भज** पु॰ अश्मगर्भाज्जायते जन-ड । मरकतमणौ अश्मयोनिरप्यत्र । [हिङ्गे ।
**अश्मघ्न** पु॰ अश्मानं हन्ति भिनत्ति हन-ड । पाषाणभेदके
**अश्मज** न॰अश्मनो जायते जन-ड । प्रस्तरजाते शिलाजतुनि,

आपद् स्त्री० आ+पद-क्विप् । विपत्तौ ।
आपन न० आप-ल्युट् । प्राप्तौ, मरीचे च । कर्मणि ल्युट् । क्षेत्रे
आपन्न त्रि० आ+पद-क्त । विपद्युक्ते, प्राप्ते च ।
आपन्नसत्त्वा स्त्री० आपन्नं सत्त्वं यया । गर्भिण्याम् ।
आपमित्यक न० अपमित्य परीवर्त्य निर्वृत्तम् अप+मे-क्त्वा ल्यप् ततो निर्वृत्तेऽर्थे कक् किच्चात् वृद्धि । तुल्यरूपद्रव्य विनिमयेन ग्रहणे । [तस्य तृतीयभागभवे पित्र्यश्राद्धादौ
आपराह्णिक त्रि० अपराह्णे भव ठञ् । त्रिधा विभक्तस्य दि-
आपस् न० आप-असुन् । जले, 'आपोभिर्मार्ज्जनं'मित्यस्मृति 'सर्वमापोमयं जगदि'ति देवीभागवतम् । [लतायाम् ।
आपस्तम्भिनी स्त्री० आप स्तभ्नाति स्तम्भ-णिनि । त्रिद्रुम्या
आपाक पु० आपच्यतेऽत्र आ+पच+घञ् । (पोयान्) कुम्भकारस्य मृत्पात्रपाकस्थाने । [घञ् । तत्काले, मर्गे च ।
आपात पु० आ+पत-भावे घञ् । सहसा पतने, । आधारे
आपाततस् अव्य० आपात+तसिल् । अनिश्चये विनेत्यर्थे "आपाततोयदर्थस्ये"ति साहित्यदर्पणे ।
आपान न० आ सम्भूय पिबन्त्यत्र । सुरापानार्थ सम्भूयोपवेशने, (चक्र) मद्यपानसभायाञ्च ।
आपानभूमि स्त्री० आपानस्य भूमि । सुरापानस्थाने ।
आपिञ्जर न० ईषत् पिञ्जरवर्णम् । स्वर्णे ।
आपीड पु० आ+पीड-अच् । शिखामाल्ये शिरोभूषणे, छन्दसि वर्हिर्नि दृतकाले च । [पीते त्रि० ।
आपीत न० आपीयते आ+पा-क्त । माक्षिकधातौ । ईषत्-
आपीन न० आ+प्याय-क्त पीभावः तस्य मतम् । (बँट) ऊधसि । कूपे पु० । ईषत्स्फीते त्रि० ।
आपूपिक न० अपूपानां पिष्टकानां समूह ठक् । पिष्टकसमूहे पिष्टकसम्पादनेन जीवतीत्याद्यर्थे ठक् । पिष्टकाजीवे, तद्-भक्षणकारके, तद्रचयितरि, तद्व्यवसायिने च त्रि० ।
आपूप्य पु० अपूपार्थं पिष्ट अन्न । सक्तुषु, गोधूमचूर्णादौ च । [च ।
आपृच्छा स्त्री० आ+प्रच्छ-अङ् । आलापे जिज्ञासायामभाषणे
आप्त त्रि० आप-क्त । विश्वस्ते, प्राप्ते, लब्धे, सत्ये, रागद्वेषादिवर्जिते, यथार्थोपदेष्टरि भ्रमादिशून्ये यथार्थज्ञातरि च ।
आप्तकाम त्रि० आप्त प्राप्त काम कामनाविषयो येन । सम्पूर्णकामे निष्पृहे । परमेश्वरे पु० ।
आप्ति स्त्री० आप-क्तिन् । संबन्धे, योगे, लाभे प्राप्तौ च ।
आप्तोक्ति स्त्री० आप्तस्य उक्तिः वच-क्तिन् । अभ्रिन्नविषय निर्णयार्थं विद्वान्निवाक्ये, यथार्थवाक्ये च ।
आप्य न० आप स्वत् । (कुड) कुष्ठे । जलोद्भूते मत्स्यादौ

प्राप्ये च त्रि० । अपां विकार ष्यञ् । जलविकारे फेनादौ त्रि० । [ल्युट् । तर्पणे प्रीणने च । ल्यु । तत्कर्त्तरि त्रि० ।
आप्यायन न आ+प्याय-ल्युट् । तृप्तौ, प्रीतौ च । णिच्-
आप्रच्छन न० आ+प्रच्छ-ल्युट् । आनन्दने गमनागमनसमये बन्धूनामन्योन्यकुशलजिज्ञासयानन्दसम्पादने ।
आप्रपद अव्य० प्रपदं पादाग्रं तत्पर्यन्तम् अव्ययी० । पादाग्रपर्य्यन्ते
आप्रपदीन त्रि० आप्रपदं पादाग्रान्तं प्राप्नोति ख । पादाग्रान्तं लम्बमाने वस्त्रादौ । [जलाशा सर्वत प्रस्रवने च ।
आप्ल(प्ला)व पु० आ+प्लु-घञ्-अप् वा । स्नाने । (छयलाप) ।
आप्लुत त्रि० आ+प्लु-क्त । स्नाते । भावे क्त । स्नाने न० ।
आप्लुतव्रत पु० आप्लुत वेदाध्ययनानन्तरं स्नानं व्रतमस्यस्य । अधीतवेदे, अकृतदारस्नानके ब्रह्मचारिभेदे स्नातके ।
आबद्ध न० आ सम्यक् बद्धम् बन्ध-भावे क्त । दृढबन्धने । आधारे क्त । प्रेम्णि । कर्मणि क्त । भूषणे । करणे क्त । योक्त्रे पु० । बद्धे आप्ते प्रतिरुद्धे च त्रि० ।
आबन्ध पु० आ+बन्ध-घञ् । दृढबन्धे, योक्त्रे च ।
आबाधा स्त्री० आ+बाध-अङ् । पीडायां क्लेशे च । क्षीतान्त्यानी प्रसिद्धे । त्रिकोणक्षेत्रे लम्बोभयपार्श्वस्थे क्षेत्रमध्ये रज्जुनिक्षेपाज्जायमाने भूखण्डे ।
आबिल त्रि० आ+बिल भेदने, क । कलुषे, अस्वच्छे च ।
आवुत्त पु० आप्नमाप् क्विप् आपसत्ततीति वद्+तन-ड । नाट्योक्तौ भगिनीपतौ ।
आभरण न० आ+भृ-ल्युट् । भूषणे । [भाने, ज्वररोगभेदे च ।
आभा स्त्री० आ+भा-अङ् । दीप्तौ, शोभायाम्, कान्तौ उप
आभाषण न० आ+भाष-ल्युट् । आलापे, परस्परकथने च
आभाषित त्रि० आ+भाष-क्त । अभिमुखीकृत्य कथिते ।
आभास पु० आ+भास घञ् । प्रतिबिम्बे, दीप्तौ, पश्वादेरादौ सद्वृतिदर्शनेनोत्थापने अवतारणे च ।
आभास्वर पु० आ+भास-वरच् । चतुःषष्टिमिते, द्वादशमिते वा गणदेवताभेदे । दीप्ते त्रि० । [पाण्डित्ये च ।
आभिजात्य न० अभिजातस्य भाव ष्यञ् । कौलीन्ये
आभीक्ष्ण्य न० नार्थेष्यञ् । अत्यर्थे । तद्वति त्रि० । क्रियाविशेषणे न०
आभीक्ष्ण्य न० अभीक्ष्णस्य भाव ष्यञ् । पौनःपुन्ये ।
आभीर पु० आ समन्तात् भियं राति रा-क । आहिर इतिख्याते ब्राह्मणादम्बष्ठायामुत्पन्ने वर्णसङ्करभेदे गोपे, देशभेदे च ।
आभीरपल्लि(ल्ली) स्त्री० आभीराणां पल्लि । गोपग्रामे, घोषे
आभील न० आ समन्तात् भियं लाति आभी+ला+क । कष्टे भ्रदति, भयानके च त्रि० ।

**आभोग** पु॰ आ+भुज-भावे आधारे वा घञ् । वरुणस्य छत्रे परिपूर्णतायां, यत्ने, गानसमाप्तौ (भणिता) कविनामख्यापने च । [कर्माणि तद्भृत्यर्थे कर्त्तव्ये श्राद्धे ।

**आभ्युदयिक** त्रि॰ अभ्युदयार्थं वृद्ध्यर्थं विहितं ठक् । चूडादि

**आम** त्रि॰ आ ईषत् अम्यते पच्यते आ+अम-घञ् । अपक्वे वैद्यकोक्ते अजीर्णान्नरसे रोगभेदे पु॰ ।

**आमगन्धि** न॰ आमस्यापक्वस्य गन्ध इव गन्धो यत्र इत् समा॰ । अपक्वमांसादिगन्धगन्धाढ्ये ।

**आमनस्य** न॰ अप्रशस्तं मनो यस्य तस्य भावः ष्यञ् । दुःखे ।

**आमन्त्रण** न॰ आ+मन्त्र-ल्युट् । अभिनन्दने, संबोधने, कामचारानुज्ञाकर्मे स्वनामख्याते च । अवश्यकर्त्तव्ये नियोगो निमन्त्रणं यथा श्राद्धादौ भोजने, अकरणे प्रत्यवायाभावेन नियोग आमन्त्रणं यथा स्थलविशेषे गमने ।

**आमन्त्रित** त्रि॰ आ+मन्त्र-क्त । आमन्त्रिते, सम्बोधिते च । व्याकरणे संबोधने या प्रथमा तस्यां न॰ ।

**आमय** पु॰ आमं रोगं यात्यनेन या-ड । रोगे ।

**आमयाविन्** त्रि॰ आमयोऽस्यास्ति विनि दीर्घश्च । रोगयुक्ते ।

**आमर्शन** न॰ आ+मृश ल्युट् । स्पर्शे । [निर्दोर्यमित्युक्ते ।

**आमर्ष** पु॰ न+मृष-घञ् दीर्घः । क्रोधे, "निरुद्योगं निरामर्षं

**आमलक** पु॰ आ+मल वुन् । वृक्षभेदे । ङीप् । धात्र्याम् तिष्यफलायां च स्त्री॰ । तस्याः फलं फले लुगिति तद्धितस्य लुक् । धात्रीफले न॰ । [स्वनामख्याते वातरोगभेदे ।

**आमवात** पु॰ आमयति पीडयति अम-णिच्-अच् कर्म॰ ।

**आमातीसार** पु॰ कर्म॰ । स्वनामख्याते रोगभेदे । [स्थाने

**आमाशय** पु॰ आमस्याशय । नाभिस्तनयोर्मध्यभागे अपाक

**आमिक्षा** स्त्री॰ आमिष्यते सिच्यते मिष-सक् । तप्ते पक्वे दुग्धे दधियोगजातायां (छाना) विकृतौ । [स आमिक्षीयमप्यत्र ।

**आमिक्षीय** न॰ आमिक्षायै हितं छ । आमिक्षोपकरणे दधि

**आमिष** न॰पु॰ आ+मिष-क । मांसे, भोग्यवस्तुनि, उत्कोचे, रूपरसादौ, लोभवस्तुनि, लाभे, कामगुणे, भोजने, विषये च

**आमिषप्रिय** पु॰ ६त॰ । कङ्कपक्षिणि । मांसाभिलाषिणि त्रि॰ ।

**आमिषाशिन्** त्रि॰ आमिषमश्नाति अश-णिनि । मांसभक्षके

**आमिषी** स्त्री॰ आमिषमात्रैकदेशनामिकायां जटामांस्याम् ।

**आमुक्त** त्रि॰ आ+मुच परिधाने क्त । परिहिते । कर्त्तरि क्त । परिहितकवचे जने । [मुक्तायां नाटकाङ्के प्रस्तावनायाम्

**आमुख** न॰ "आमुखं तद्विजानीयात् बुधैः प्रस्तावना मता"

**आमुष्मिक** त्रि॰ अमुष्मिन् परलोके भवः ठञ् टिलोपश्च । परलोके जन्मान्तरे भवे वस्तुनि । स्त्रियां ङीप् ।

**आमुष्यायण** त्रि॰ अमुष्यापत्यमविख्यातस्यापि सद्वंशत्वेन सच्चरितत्वेन च प्रख्यातस्यापत्यं फक् षष्ठ्या अलुक् । सद्वंशोद्भवे ।

**आमोद** पु॰ आ समन्तात् मोदयति आ+मुद+णिच्-अच् । अतिदूरव्यापके गन्धे, गन्धमात्रे च । आ+मुद भावे घञ् हर्षे

**आमोदिन्** त्रि॰ आमोदोऽतिदूरगो गन्धोऽस्त्यस्मिन् । मुखसुगन्धितापादके कर्पूरादौ, हर्षवति च ।

**आम्नाय** पु॰ आम्नायते अभ्यस्यते आ+म्ना-घञ् । वेदे, आगमे निगमे, गुरुपरम्परागते, सदुपदेशे, वंशे, कुलक्रमस्य कथने च । भावे घञ् । अभ्यासे ।

**आम्र** पु॰ अम-रक् दीर्घश्च । स्वनामख्याते वृक्षे । तत्फलादौ न॰

**आम्रातक** पु॰ आम्रं तद्रसम् आ ईषत् अतति याति आ+अत ण्वुल् । आमडा इति ख्याते वृक्षे ।

**आम्रावर्त्त** पु॰ आम्र इव आ ईषत् तुल्यरसतया वर्त्तते आ+वृत अच् । आम्रातकवृक्षे ।

**आम्रेडित** न॰ आ+म्रेड-उन्मादे अच् उन्मत्तेनैवाचर्यते । आम्रेड+आचारे क्विप् ततः क्त । उन्मत्तेन यथा कथितस्य पुनः पुनः कथनं क्रियते एवं कथितस्य द्विस्त्रिकथने ।

**आम्ला** स्त्री॰ आ सम्यक् अम्लो रसो यस्याः । तिन्तिड्याम् स्वार्थे कनि आम्लिकाप्यत्र ।

**आय** पु॰ आ-इण्-अच् । लाभे । प्राप्तौ, धनागमे, ज्योतिषोक्ते एकादशस्थाने, ग्रामादौ स्वामिग्राह्यभागे वनितागाररक्षके च

**आयःशूलिक** त्रि॰ अयः शूलेनार्थानन्विच्छति । तीक्ष्णोपायेनाभीष्टसाधके जने । [अतिशयसम्पत्तिनि

**आयत** त्रि॰ आ+यम-क्त । दीर्घे, आकृष्टे च । आ+यत-अच् ।

**आयतच्छदा** स्त्री॰ आयतः छदोऽस्याः । कदल्याम् ।

**आयतन** न॰ आयतन्तेऽत्र यत-आधारे ल्युट् । देवादिवन्दनस्थाने, आश्रये, विश्रामस्थाने, यज्ञस्थाने च ।

**आयति(ती)** स्त्री॰ आ+या डति वा ङीप् । उत्तरकाले, प्रभावे, फलदानकाले च । आ+यम क्तिन् । सङ्गमे, दैर्घ्ये, प्रापणे च ।

**आयत्त** त्रि॰ आ+यत-कर्त्तरि क्त । अधीने, वशीभूते ।

**आयत्ति** स्त्री॰ आ+यत-क्तिन् । स्नेहे, वशित्वे, सामर्थ्ये, सीम्नि, यत्ने, प्रभावे च । [लौहपात्रे स्त्री॰ ङीप् ।

**आयस** न॰ अयसा निर्मितं तद्विकारो वा अण् । लौहपात्रादौ

**आयस्त** त्रि॰ आ+यस-क्त । क्षिप्ते, क्रोधिते, हते तीक्ष्णीकृते

**आयाम** पु॰ आ+यम-घञ् । दैर्घ्ये ।

**आयास** पु॰ आ+यस घञ् । परिश्रमे, अतियत्ने च ।

**आयु** पु॰ इण-उण् । जीवनकाले, "मा वधिष्ट जटायु मामि"ति

भट्टिः । [कर्म्माध्यक्षे, कुशले च ।

**आयुक्त** त्रि० आ+युज-क्त । व्यापारिते, ईषद्युक्ते, नियुक्ते,

**आयुध** न० आ+युध-करणे घञर्थे क । प्रहरणमात्रे ।

**आयुधिक** पु० आयुधं शिल्पमस्य ठक् । शस्त्राजीवे । तदर्थे छ आयुधीयश्चात्र । [सोपाङ्गे ।

**आयुर्वेद** पु० आयुर्विन्दतेऽनेन घञ् । चिकित्साशास्त्रे वेद-

**आयुर्वेदिन्** त्रि० आयुर्वेदोवेद्यतया विद्यतेऽस्य इनि । आयुर्वेदज्ञे चिकित्सके । [आयुधिके तृतीये योगे पु० ।

**आयुष्मत्** त्रि० आयुर्विद्यतेऽस्य मतुप् । चिरजीविनि । विष्कु

**आयुष्य** त्रि० आयुषे हितम् यत् । आयुषोहितकारके पथ्ये । स्वार्थे यत् आयुषि न० । [रघुः ।

**आयुस्** न० इण-उसि-णिच्च । जीवनकाले 'आयुषः क्षये' इति

**आयोग** पु० आ+युज-घञ् । गन्धमाल्योपहारे, व्यापारे, रोधे च

**आयोगव** पु० शूद्राद्वैश्यायामुत्पन्ने प्रतिलोमवर्णसङ्करजे जातिभेदे

**आयोजन** न० आ+युज ल्युट् । उद्योगे, आहरणे च ।

**आयोधन** न० आ+युध-आधारे ल्युट् । युद्धस्थाने । भावे ल्युट् । योधने, तत्फले वधे च ।

**आर** पु० ऋ-घञ् । मङ्गलग्रहे, शनिग्रहे, मधुराम्लफले वृक्षभेदे च । पित्तले, कोणे, प्रान्तभागे, सुवर्णलोहे च न० ।

**आरकूट** पु०न० । आरं पित्तलं कूटयति रूपीकरोति अच् । पित्तलाभरणे । 'किमारकूटाभरणेन न श्रिय'इति नैषधम् ।

**आरक्ष** पु० आ+रक्ष-अच् । हस्तिकुम्भाधःस्थले, हस्तिमस्तक चर्म्मणि, सैन्ये च । रक्षके त्रि० । भावे घञ् । रक्षायाम् ।

**आरग्वध** पु० रुगे-रुग्णाया क्विप् आरुगं रोगमहान्तमपि हन्ति वध् बधादेशश्च । सोंदाल इति ख्याते वृक्षे ।

**आरट्ट** पु० आरट्यते विख्याप्यते आ+रट टच् टस्य नेत्त्वम् । अश्वोत्पत्तिस्थाने (आरब) देशभेदे । [घोटके ।

**आरट्टज** पु० आरट्टे देशे जायते जन-ड । (आरब) स्थानजाते

**आरणि** पु० आ+ऋ अणिच् । आवर्त्ते पयसां स्वतोभ्रमे ।

**आरण्य** त्रि० अरण्ये भवः यक् । वनजाते मृगमहिषादौ ।

**आरण्यक** पु० अरण्ये भवः ततः स्वार्थे क । पथि, अध्याये, न्याये, विहारस्थाने मनुष्ये, हस्तिनि च । वेदस्यांशविशेषे न० । "आरण्यकमधीत्य चेति" मनुः ।

**आरति** स्त्री० आ-रम क्तिन् । उपरमे, निवृत्तौ च ।

**आरनाल** न० आरमस्नाति आरं अन्+ल, नल-गन्धे घञ् । आरो नालोगन्धो यस्य । काञ्जिके । वा अण् । आरनालकमप्यत्र

**आरभटी** आरभ्यतेऽनया आ+रभ-अटि ङीप् । नाट्यरचनाभेदे

**आरम्भ** पु० आ+रभ घञ् नुम् च । त्वराक्रमु वेगे-उद्यमे, दर्पे, उपक्रमे, प्रस्तावनायाञ्च । कर्म्मणि-घञ् । आरभ्यमाणे ।

**आरम्भवाद** पु० आरम्भस्य वादो यत्र । न्यायमते वैशेषिक मते च "पृथिव्यम्बुवह्निवायूनां क्रियासंयोजिताणवः द्व्यणु कादिक्रमेणैवमारभन्ते इदं महदिति" तयोः स्वीकारात्

**आर(रा)व** पु० आ+रु-घञ् अप् वा । शब्दमात्रे ।

**आरा** स्त्री० आ+ऋ अच् । चर्म्मभेदकास्त्रभेदे । टेको इति ख्याते लौहास्त्रे च । 'आरामतालो ह्यवरोऽपीति' श्रुतिः

**आरात्** अव्य० आ+रा-आति । दूरे, समीपे च ।

**आरात्रिक** न० अरात्रावपि निर्वृत्तं ठञ् दीपो हि रात्रावेव प्रदर्श्यते इदं दिनेऽपि दर्श्यते । (आरति) नीराजनकर्म्मणि ।

**आराधन** न० आ+राध-ल्युट् । पाके, साधने, पूजने, तोषणे, प्राप्तौ च ।

**आराधना** स्त्री० आराध-युच् स्त्रीत्वात् टाप् । सेवायाम् ।

**आराम** पु० आ+रम-आधारे घञ् । उपवने, कृत्रिमवने, क्रीडार्थवने च । [वक्रगामिनि त्रि० ।

**आरालिक** पु० अरालं कुटिलं शिल्पमस्य ठक् । पाचके ।

**आरु** पु० ऋ-उण् । वृक्षभेदे, कर्कटे, शूकरे च ।

**आरेवत** पु० आरेचयति रेचयति मलं रेव-णिच्-विच् अतच् । अत्यन्तसारके (सोन्दाल) आरग्वधवृक्षे ।

**आरोग्य** न० अरोगस्य भावः ष्यञ् । रोगराहित्ये अनामये ।

**आरोग्यशाला** स्त्री० आरोग्यार्थं शाला । चिकित्सालये ।

**आरोप** पु० आ रुह-णिच्-पुक् घञ् । अतद्वति अन्यधर्मा-वभासे यथा रज्ज्वां सर्पज्ञानम् । रूपकालङ्कारादौ तु सत्यपि बाधज्ञानेऽभेदावबोधः शाब्दः न प्रतिरुध्यते ।

**आरोह** पु० आ+रुह-घञ् । दैर्घ्ये । उत्तमस्त्रीणां नितम्बे, आरोहणे, उच्छ्राये, परिमाणभेदे च ।

**आरोहण** न० आ+रुह-करणे ल्युट् । प्रासादादिरचिते उच्चप्रासादारोहणसाधने (सिंडि) सोपाने । भावे घञ् । निम्नस्थानादूर्द्ध-गमने ।

**आर्चिक** पु० ऋचां व्याख्यानं ठक् । ऋचां व्याख्याने । ऋक्षु भवः ठक् । ऋग्वेदभवे त्रि० । वैदिके आर्चिकच्छन्दसि त्रि० ।

**आर्जव** पु० ऋजोर्भावः अण् । सरलतया परमतानुसारिणि

**आर्त्त** त्रि० आ+ऋ-क्त । पीडिते, दुःखिते, अस्वस्थे च ।

**आर्त्तव** न० ऋतौ भवम् अण् । स्त्रीपुष्पे, पुष्पे च । ऋतुरस्य प्राप्तः अण् । ऋतुजे फलपुष्पादौ त्रि० । बोधव्याम् स्त्री० ङीप् । [मिथुनेच्छायाञ्च ।

**आर्त्ति** स्त्री० आ+ऋ-क्तिन् कर्त्तरि भावे इति । पीडायाम्

**आर्त्विज्य** न० ऋत्विजः कर्म्म ष्यञ् । ऋत्विग्योग्ये कर्म्मणि ।

**आर्थिक** त्रि० अर्थं गृह्णाति अर्थात् आगच्छति वा ठक्। अर्थ-ग्राहके दृष्टार्थगते च। [आरभ्य षष्ठे नक्षत्रे च स्त्री० न०।

**आर्द्र** न० अर्द्-रक् दीर्घश्च। क्लिन्ने, सजलवस्तुनि। अश्विनीत

**आर्द्रक** न० आर्द्रायां भूमौ जातं वुन्। (आदा) स्वनाम-ख्याते मूलभेदे।

**आर्य** पु० ऋ-ण्यत्। स्वामिनि, गुरौ, सुहृदि च। श्रेष्ठकुलो-त्पन्ने पूज्ये, श्रेष्ठे, सङ्गते, नाट्योक्तौ मान्ये, उदारचरिते, शान्तचित्ते "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। तिष्ठ-ति प्रकृताचारे स वा आर्य इति स्मृतः" इत्युक्तलक्षणे जने च त्रि०।

**आर्यक** पु० अतिशयेनार्यः पितुरपि पूज्यत्वात् प्रागल्भ्ये कन्। पितामहे, मातामहे च। स्वार्थे कन्। श्रेष्ठे त्रि०।

**आर्यपुत्र** पु० आर्यः श्वशुरो गुरुश्च ६त०। पत्यौ, गुरुपुत्रे च।

**आर्यावर्त्त** पु० आर्याणामावर्त्तो देशः। 'आ समुद्रात्तु वै पूर्वा-दा समुद्रात्तु पश्चिमात्। हिमवद्विन्ध्ययोर्मध्यमार्यावर्त्तं प्रच-क्षते' इति मनूक्ते देशभेदे।

**आर्ष** त्रि० ऋषिभिः प्रोक्तम् स्मृतं वा अण्। ऋषिप्रणीते धर्म्मशास्त्रे, तत्स्मृते वेदे च। "आर्षं धर्म्मोपदेशञ्चेतिमनुः।" आर्षं आदाय गोयुगमित्युक्ते विवाहभेदे पु०।

**आर्हत** पु० अर्हन्नेव स्वार्थे अण्। बुद्धविशेषे। तत्सम्बन्धिनि त्रि०।

**आर्हन्ती** स्त्री० अर्हतोभावः ष्यञ् नुम् च ङीष् यलोपः। योग्यतायाम्। [ मङ्गुषु च त्रि०।

**आल** न० आलयन्ति भूषयन्ति अच्। हरिताले। अनल्पे,

**आलभन** न० आ+लभ-ल्युट्। स्पर्शे।

**आलम्ब** पु० आ+लबि घञ्। अवलम्बे, आश्रये च।

**आलम्बन** न० आ+लबि-ल्युट्। आश्रये, अलङ्कारमते रसा-श्रये विभावे च। [लम्भमिति स्मृति" स्पर्शे च।

**आलम्भ** पु० आ+लभ घञ् मुम् च। बधे, "अश्वालम्भं गवा-

**आलय** पु० आलीयतेऽस्मिन् अच्। गृहे। अव्ययी० लयपर्य्य-न्ते। अव्य०। "पिबत भागवतं रसमालयमि" ति भागव०।

**आलयविज्ञान** न० आलयं विज्ञानम्। बौद्धमते लयपर्य्यन्त स्थायिनि अहङ्कारास्पदे विज्ञाने तन्मते हि सर्व्वज्ञानानां क्षणिकतयाऽनुभवजन्यसंस्कारस्य तस्मिन् ज्ञाने एव प्रक-ल्पनात् पूर्व्वानुभूतस्य स्मृतिसम्भवः।

**आलवाल** न० आ समन्तात् जललवमालाति आ+ला-क। वृक्षमूले सेकार्थं मृदादिघटिते जलाधारे सेतौ।

**आलस्य** न० अलसस्य भावः ष्यञ्। सत्यपि सामर्थ्येऽनुष्ठ-कर्त्तव्येऽनुत्साहरूपेऽलसत्वे। अलस एव ब्राह्मणादित्वात् स्वार्थे ष्यञ्। अलसयुक्ते। [रज्ज्वां, बन्धनमात्रे च।

**आलान** न० आलीयतेऽत्र आ+ली-ल्युट्। गजबन्धनस्तम्भे

**आलाप** पु० आ+लप-घञ्। कथोपकथने, सम्भाषणे च।

**आलाबू** स्त्री० आ+लबि ऊङ् नलोपश्च। तुम्ब्याम्।

**आलावर्त्त** न० आ समन्तात् अलमत्यर्थं वर्त्तते चाल्यते आ+अल+वृत-णिच् घञ्। वस्त्रनिर्म्मिते व्यजने।

**आलि(ली)** स्त्री० आ+अल इन्। आगन्तुकजलवारणार्थं शस्यसेकजलधारणार्थं च इतिक्रमे सेतौ, सख्यां सम-वयस्कायां, पङ्क्तौ, आरामादिष्वचऽश्रेण्याम्, सन्ततौ च। वा ङीप् आलीत्यप्यत्र। शुद्धान्तःकरणे अनर्थे च त्रि०। भ्रमरे, वृश्चिके च पु०।

**आलिङ्गन** न० आ+लिगि-ल्युट्। प्रीतिपूर्व्वकमन्योन्यदेह संश्लेषणे, परिरम्भे च। [न्दवृद्धे च।

**आलिङ्ग्य** त्रि० आ+लिगि-ण्यत्। आलिङ्गनीये, यवाकृति-

**आलिञ्जर** पु० अलिञ्जर एव अण्। जाला इति ख्याते महत्प्रये जलपात्रे मणिके।

**आलिम्पन** न० आ+लिप-ल्युट् मुम् च। मङ्गलार्थं लेपने।

**आलीढ** न० "नमिता पूर्व्वजङ्घा तु पश्चिमा प्रगुणा भवेत्। अन्तरमध्यकाय' स्यादालीढस्य च लक्षणमित्युक्तलक्षणे "आलीढं दक्षिणं पादमित्युक्तलक्षणे च धन्विनां पादविन्यास विशेषेणावस्थाने। आ+लिह-क्त। भुक्ते, क्षते च त्रि०। 'सेनान्यमालीढमिवासुराम्त्रैरि' ति रघुः। भावे क्त लेहने न०।

**आलीनक** न० आईषत् प्रयासेन अग्निसंबन्धमात्रेण लीयते द्रवीभवति आ+ली-क्त संज्ञायां कन्। (रां) इतिख्याते रङ्गे

**आलु** पु० आ+लु-डु। स्वनामख्याते कन्दभेदे, भेलके, पेचके मत्स्ये च। झारी इति ख्यातायां क्षुद्रघटिकायां स्त्री०।

**आलुक** न० आलुरेव स्वार्थे कन्। मूलभेदे, काष्ठालुशङ्खालु प्रभृतिकन्दमात्रे च। शेषे नागे पु०। आ-लू-क्विप् संज्ञायां कन् ङीप्। आलूकी रक्तालुभेदे स्त्री०।

**आलेख्य** न० आ-लिख-आधारे-ण्यत्। चित्रपटादौ।

**आलेख्यशेष** त्रि० आलेख्यं चित्रमेव शेषो यस्य ब०। मृते, तस्य चित्रे एव प्रतिकृतिरूपेण अवस्थानात्।

**आलोक** पु० आ+लुक-घञ्। दर्शने, उद्द्योते, वन्दिनामालोकटे-त्यादि स्तुतिवाक्ये। "आलोकमार्गं सहसा व्रजन्ती" ति रघुः

**आलोचन** न० आ+लुच-ल्युट्। कर्त्तव्यतयाऽवधारणे, विवेचने च। "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विक-ल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्। ततः परं पुनर्वस्तुधर्म्मैर्जात्यादिभिर्यया। बुद्ध्यावसीयते सापि

प्रत्यक्त्वेन सम्मतेऽति सांख्योक्ते निर्द्धर्मके शुद्धवस्तुविषयके प्राथमिके ज्ञाने च ।

**आवपन** न० आउप्यते स्थाप्यतेऽत्र ल्युट् । धान्यस्थापनपात्रे (थल्या) इति ख्याते । वप-णिच्-भावे ल्युट् । सर्व्वमुण्डने ।

**आवरक** न० आ+वृ-करणे अप् संज्ञायां वुन् । अपवरके, आच्छादके वस्त्रादौ ।

**आवरण** न० आ+वृ-करणे ल्युट् । (ढाल) चर्म्ममयफलके । भावे ल्युट् । आच्छादने, वेदान्तमतेऽविद्यादिना ज्ञानप्रकाशाच्छादने च । [भित्तौ च ।

**आवर्जित** त्रि० आ+वृज्-क्त । आहूते, क्षिप्ते, दत्ते, आन-

**आवर्त्त** पु० आ+वृत-घञ् । चक्राकारेण जलस्य स्वयं भ्रमणे, भुवाख्ये रोमसंस्थानभेदे घोटकचिह्ने वामावर्त्तनामके मणौ आवर्त्तने, चिन्तने च । अच् । मेघाधिपभेदे माक्षिकधातौ च न०

**आवर्त्तन** न० आ+वृत-णिच् ल्युट् । (आवटान) दुग्धादेरालोडने । आवर्त्तते परिवर्त्तते यस्मिन् काले । मध्याह्नोत्तरं यदा पश्चिमतः पूर्व्वस्यां दिशि सूर्य्यच्छाया प्रथमं गच्छति, तस्मिन् काले 'आवर्त्तनसमीपे वेति स्मृतिः । धातुद्रव्यस्य द्रवीकरणे च ।

**आवर्त्तनी** स्त्री० आवर्त्त्यते द्रवीकृत्य आलोड्यतेऽत्र आ+वृत णिच्-आधारे ल्युट् । ताम्रादिधातुद्रव्यस्य द्रवीकरणाधारे मूषये (मुची) पात्रभेदे, मूषायाम् ।

**आवर्त्तित** त्रि० आ+वृत-णिच् क्त । अभ्यस्ते, गुणिते च ।

**आवर्ह** पु० आ+वृह-घञ् । उत्पाटने । [स्त्रियां ङीप् ।

**आवश्यक** त्रि० अवश्यं भाव्यः मनोज्ञा० वुञ् । नियतकर्त्तव्ये

**आवसथ** पु० आवसत्यत्र, वस-अथच् । वसतिस्थाने, विश्रामस्थाने, व्रतभेदे च । [उपनीतकर्म्मणे रागीकृते धान्ये च ।

**आवसित** त्रि० आ+अव+सो-क्त । पक्वधान्ये, मर्दनानन्तर

**आवहमान** त्रि० आ+वह शानच् । क्रमागते ।

**आवाप** पु० आ+वप-घञ् । आलवाले, (थल्या) पात्रभेदे, प्रक्षेपे, भाण्डे, वलये, शत्रुचिन्तने परराष्ट्रचिन्तने, निम्नोन्नत भूमौ, प्रधानहोमे च । [आभरणे वलयादौ ।

**आवापक** पु० आ+वप-कर्म्मणि घञ् संज्ञायां कन् । प्रको-

**आवापन** न० आ+वप-णिच्-ल्युट् । (तांत) तन्तुवयने ।

**आवास** पु० आ+वस आधारे घञ् । वासस्थाने गृहादौ ।

**आवाहन** न० आ+वह-णिच् ल्युट् । आविध्याय देवानामाह्वाने

**आविक** न० अविना मेषोणा निर्म्मितं ठक् । कम्बले । अविसम्बन्धिनि त्रि० । [इति ख्याते कटमर्द्दके च ।

**आविग्न** पु० आ+विज कर्त्तरि क्त । उद्विग्ने (पाणियामला)

**आविद्ध** त्रि० आ+व्यध-क्त । विद्धे, वक्रे, परास्ते, क्षिप्ते, अभिभूते, मूर्खे च ।

**आविध** पु० आविध्यतेऽनेन व्यध-घञर्थे क । काष्ठादिवेधनसाधने (भ्रमर) (तुरपिन) सूच्याकाराग्रे अस्त्रे । [व्याप्ते च ।

**आविष्ट** त्रि० आ+विश-क्त । भूतादिग्रस्ते, आवेशयुक्ते, निविष्टे,

**आविस्** अव्य० आ+अव-इसुन् । प्रकाशे । एतच्छब्देन सह भूधातुः प्रकाशार्थे यथा आविर्भावः । कृञ्धातुः प्रकाशकरणेऽर्थे यथा आविष्कारः ।

**आवीरचूर्ण** पु० आ समन्तात् विशेषेण ईर्य्यते क्षिप्यते आ+वि+ईर-घञ् कर्म्म० । आवीर इति ख्याते फल्गुनि 'आवीरचूर्णं रुचिरं गृह्णतां परमेश्वरे'ति पुराणम् ।

**आवुक** पु० आवति पालयति उण् संज्ञायां कन् । नाट्योक्तौ जनके

**आवृत्** स्त्री० आ+वृत-संपदादित्वात् क्विप् । परिपाट्यामनुक्रमे ।

**आवृत** त्रि० आ+वृ-क्त । वेष्टिते कृताच्छादने ।

**आवृत्त** त्रि० आ+वृत-क्त । निवृत्ते, 'आवृत्तानां गुरुकुलादिति स्मृतिः अभ्यस्ते, गुणिते च ।

**आवृत्ति** स्त्री० आ+वृत-क्तिन् । अभ्यासे, पुनःपुनर्गुणने 'चण्डयाः शताद्यावृत्तिपाठादि'ति पुराणम् । [दृढदारुकाष्ठे ।

**आवेगी** स्त्री० आवेगोऽस्त्यस्या अर्श आद्यच् गौरा० ङीप् ।

**आवेश** पु० आ+विश-घञ् । अहङ्कारभेदे, संरम्भे, अभिनिवेशे, आवेशे, अनुप्रवेशे, यथा भूतावेशः । ग्रहभये, भूतादिना रोगे च । [भूतावेशे रोगे, सूर्य्येन्दुपरिधौ च

**आवेशन** न० आ+विश-आधारे ल्युट् । शिल्पशालायाम्

**आवेशिक** त्रि० आवेशे गृहे भवः आगतो वा ठञ् । अतिथौ असाधारणे स्वकीये पान्थवादौ च । [०(पिंडा) ।

**आवेष्टक** पु० आवेष्टयति ण्वुल् । आवरणकारके प्राचीरादौ

**आशंसा** स्त्री० आ+शंस-अ । अप्राप्तस्य प्राप्तीच्छायाम्, इष्टार्थाशंसने च । [क्त । कथने न० ।

**आशंसित** त्रि० आ+शंसि-क्त । वाञ्छिते, कथिते च । भावे

**आशंसु** त्रि० आ+शंस-उ । इच्छावति, इष्टार्थमभिकाङ्क्षी, कथयितरि च ।

**आशङ्का** स्त्री० आ+शकि-अ । त्रासे, सन्देहे, ईषद्वितर्के च

**आशय** पु० आ+शी-अच् । अभिप्राये, आधारे, विभवे, पनसवृक्षे वैद्यकोक्ते अजीर्णस्थाने च । आ फलविपाकात् चित्तभूमौ शेते इति कर्त्तरि अच् कर्म्मजन्ये वासनाख्ये संस्कारे, धर्म्माधर्म्मरूपे अदृष्टे च । आधारे अच् । आशयशति वित्ते । भावे अप् । शयने स्थाने च ।

**आशर** पु० आशृणाति आ+शॄ-अच् । अग्नौ, राक्षसे च ।

**आशा** स्त्री॰ आ समन्तात् अश्नुते अश-अच् । दिशि, अप्राप्तयो-
प्यार्थविषयायाम् दीर्घाकाङ्क्षायाम् अनधिगतविषयायां
तृष्णायां च । [६त॰ । तृष्णासम्बन्धे दिशां बन्धे च ।

**आशाबन्ध** पु॰ आशां दिशं बध्नाति अच् । मर्कटजाले, बन्ध-घञ्

**आशास्य** त्रि॰ आ+शास-ण्यत् । आशीःसाध्ये, आशं-
सनीये च "आशास्यमन्यत् पुनरुक्तमि"ति रघु ।

**आशित** त्रि॰ आ+क्र्यादि॰ अश-क्त । भुक्ते, अशनेन तृप्ते च ।

**आशितङ्गवीन** अशितङ्गवीनवत् सर्व्वम् । दीर्घादिरिति वङ्गव

**आशितम्भव** पु॰ अशितम्भववत् सर्व्वम् । दीर्घादिरिति वङ्गव

**आशिस्** स्त्री॰ आ+शास-क्विप् इत्वम् । हितप्रार्थने अभीष्ट
वृद्धिप्रार्थने, सर्पतालुस्थदन्ते, सर्पदंष्ट्रायामाशीरित्यपि रूपो॰ ।

**आशीर्व्वाद** पु॰ आशिषोवाद वद-घञ् । मङ्गलप्रार्थने आ-
शीर्व्वचने च ।

**आशीविष** पु॰ आशिषि आश्यां वा विषोऽस्य रूपो॰ । सर्पे ।

**आशु** अव्य॰ अश-उण् । क्षिप्रत्वे । वर्षाभवे षष्टिकादौ धान्ये,
पाटले व्रीहौ च पुल्लि॰ । क्षिप्रे त्रि॰ । क्रियाविशेषणत्वे न॰

**आशुग** पु॰ आशु+गम-ड । वायौ, वाणे, सूर्य्ये च । शीघ्रगामिनि त्रि॰

**आशुपत्री** स्त्री॰ आशु पत्रं यस्याः । शल्लकीलतायाम् ।

**आशुशुक्षणि** पु॰ आ+शुष सन्+अनि । अग्नौ, वायौ च ।

**आशौच** न॰ अशौचमेव स्वार्थेऽण् । अशौचसमनार्थे वैदिक-
कर्म्मानर्हावस्थायाम् ।

**आश्चर्य्य** न॰ आ इति पर्य्यन्तेऽभिनीयते आ+चर ण्यत् सुट्
च । अपूर्व्वे अद्भुते चित्ते, विस्मये च । अद्भुतवति त्रि॰

**आश्मन** पु॰ आ+अश-मनन् । सूर्य्यसारथौ अरुणे । [रघु

**आश्यान** त्रि॰ आ+श्यै-क्त । ईषद्घनीभूते 'पयआश्यानकर्द्दमानि'ति

**आश्रम** पु॰ न॰ आ+श्रम-आधारे घञ् अवृद्धिः । ब्रह्मचर्य्या-
दिके शास्त्रोक्ते धर्म्मभेदे, मुनीनां वासस्थाने, मठे वने च
कलौ तु ब्रह्मचर्य्यवानप्रस्थौ न स्तः गृहस्थभिक्षुकाश्रमावेव
"गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" इति
स्मरणात् सर्व्वक्लेशक्षानेन विश्रामस्थाने परमेश्वरे च ।

**आश्रमधर्म्म** पु॰ आश्रमेषु विहितो धर्म्मः । ब्रह्मचर्य्यादीनां
शास्त्रविहिते धर्म्मे ।

**आश्रय** पु॰ आ+श्रि-अच् । सामीप्ये, आधारे, गृहे, राज्ञां
सन्धिप्रभृतिषु षट्सु गुणेषु मध्ये प्रबलशत्रोराश्रयणरूपे गुणे च

**आश्रयाश** पु॰ आश्रयमाधारं काष्ठमश्नाति अश-अण् । वह्नौ ।

**आश्रव** पु॰ आ+श्रु-अप् । अङ्गीकारे, क्लेशे च । आशृणोति
वाक्यमुपचाराद्वा । प्रवर्त्तयितुं निवर्त्तयितुं वा शक्ये वचनस्थिते

**आश्रित** त्रि॰ आ+श्रि क्त । आश्रयप्राप्ते, शरणागते, आधेये च

**आश्रुत** त्रि॰ आ+श्रु-क्त । अङ्गीकृते, आकर्णिते च ।

**आश्लेष** पु॰ आ ईषदेकदेशेन श्लेष सम्बन्ध आ+श्लिष-घञ् ।
एकदेशसंबन्धे । [ऽण् । रथादौ त्रि॰ ।

**आश्व** न॰ अश्वानां समूहः अण् । अश्वसमूहे । अश्वैरूह्यते

**आश्वत्थ** न॰ अश्वत्थस्य फलमित्यणि तस्य न लुक् । अश्वत्थफले ।

**आश्वयुज** पु॰ आश्वयुजी अश्विनीनक्षत्रयुक्ता पौर्णमासी यस्मिन्
मासे अण् । शुक्लप्रतिपदादिके दर्शान्ते चान्द्रे आश्विने मासे

**आश्वयुजी** स्त्री॰ अश्वयुजा अश्विनीनक्षत्रेण युक्ता पौर्णमासी
'नक्षत्रेण युक्तः काल' इत्यण् । आश्विनमासीयपौर्णमास्याम्

**आश्वास** पु॰ आ+श्वस-घञ् । निर्वृतौ आश्रयदाने भीतस्य
भयनिवारणार्थे सान्त्वने च । [चान्द्रे मासि ।

**आश्विन** पु॰ आश्विनी पूर्णिमा यस्मिन् मासे । स्वनामख्याते

**आश्विनी** स्त्री॰ अश्विना अश्वाकारवता नक्षत्रेण युक्ता पूर्णि-
मा नक्षत्राण् । आश्विनमासिकपौर्णमास्याम् ।

**आश्विनेय** पु॰ द्वि॰ अश्विन्या अश्वाकारवत्या सूर्य्यपत्न्याः
सञ्ज्ञाया अपत्ये ढक् । स्वर्वैद्ययोः । [गम्ये स्थाने ।

**आश्वीन** त्रि॰ अश्वेनैकाह्नेनातिक्रम्यते खञ् । अश्वस्य एकाह

**आषाढ** पु॰ आषाढी पूर्णिमाऽस्मिन् मासेऽण् । स्वनामख्याते मासे

**आषाढी** स्त्री॰ आषाढया नक्षत्रेण युक्ता पूर्णिमा 'नक्षत्रेण
युक्तः काल' इत्यण् । आषाढमासीयपौर्णमास्याम् ।

**आस** उपवेशने अदादि॰ आत्म॰ अक॰ सेट् । आस्ते आसिष्ट

**आस्** अव्य॰ आस् क्विप् । स्मरणे, अपाकरणे, कोपे, सन्तापे,
पीडायां, सगर्व्वतर्ज्जने च ।

**आसक्त** त्रि॰ आ+सन्ज-क्त । आसङ्गयुक्ते विषयान्तरनिष्ट
स्पृहा तत्परे च । नित्ये सतते च न॰ । तद्वति त्रि॰ ।

**आसङ्ग** न॰ आ+सन्ज-घञ् । अभिनिवेशे, प्राप्तस्योपस्थित
स्यापि नाशतो रक्षणाभिलाषे, भोगाभिलाषे, कर्त्तृत्वाभिमाने
च । तद्युक्ते त्रि॰ । सौराष्ट्रमृदि स्त्री॰ ।

**आसत्ति** स्त्री॰ आ+सद क्तिन् । संसर्गे, लाभे, सन्निधौ ।
न्यायादिमते यत्पदार्थेन यत्पदार्थस्यान्वयापेक्षा तयोरव्यव-
धानेन पदेनोपस्थापने च ।

**आसन** न॰ आस-ल्युट् । उपवेशने । आधारे ल्युट् पीठादौ,
हस्तिस्कन्धदेशे, सन्ध्यादिषु षट्सु नृपगुणेषु शत्रुदुर्गादिस्व
वध्य स्थितौ, यात्रानिवृत्तौ, अष्टाङ्गयोगमध्ये स्वस्तिकाद्ये
पद्मासनादौ । आस्यते अनु स्यार्थेऽण् । जीरकवृक्षे पु॰ ।
गुण टाप् । स्थितौ ।

**आसन्न** त्रि॰ आ+सद-क्त । निकटस्थे, उपस्थिते च ।

**आसव** पु॰ आ+सु-अप् । मद्यमात्रे "सीधुरिक्षुरसैः पक्वै-

रमके रावणो भवेदि" इत्युक्तप्रकारे मद्ये च । [तालहृच्चे

**आसवद्रु** पु० आसवस्य (ताडी) मद्यस्य कारणं द्रुः शाक० त०।

**आसादन** न० आ+सद-णिच्-ल्युट् । सन्निधापने, स्थापने च

**आसादित** त्रि० आ+सद-णिच्-क्त । लब्धे, सन्निधापिते, आयोजिते च ।

**आसार** पु० आ+सृ घञ् । धारासम्पाते वेगवृष्टौ, प्रसरणे, सैन्यानां सर्वतो व्याप्तौ च । करणे घञ् । सुहृद्बले ।

**आसीनप्रचलायित** न० आसीनेन उपविष्टेनैव प्रचलवत् आचरितम् प्रचल-क्यच् क्त । उपविश्य निद्रावशेन प्रचलन रूपे (ढोला) दोलने । [घ्रादने (चोयान) इति ख्याते शाके

**आसुति** स्त्री० आ+सु-क्तिन् । सोमाभिनिष्पीडने अभिषवे, मद्यानि-

**आसुतीवल** पु० आसुतिरस्यास्ति वलच् दीर्घः । शौण्डिके । सोमाभिषवशालिनि याज्ञिके त्रि० ।

**आसुर** पु० 'आसुरो द्रविणादाना'दित्युक्तलक्षणे धनदानेन कन्याविवाहे । असुरस्येदम् अण् । असुरसम्बन्धिनि त्रि० । स्त्रियां ङीप् 'आसुरी रात्रिरन्यत्रे'ति स्मृतिः ।

**आसुरस्व** न० ६त० । "अयज्वनान्तु यद्द्रव्यमासुरस्वं तदु-च्यते" इति मनूक्ते अयाज्ञिकधने ।

**आसेचन** त्रि० असेचन+स्वार्थे अण् । असेचनार्थे दृष्टिप्रियकारके यस्य दर्शने तत्र । स्वार्थे कन् आसेचनकमप्यत्र ।

**आसेध** पु० आ+सिध-घञ् । राजाज्ञयाऽन्यत्र गमनादेः प्रति-षेधरूपेऽवरोधे ।

**आसेवा** स्त्री० आ+सेव-अ । अभिलाषपूर्वकं पौनःपुन्येन प्रवृत्तौ । [आधारे घञ् । रणे ।

**आस्कन्दन** न० आ+स्कन्द-ल्युट् । शोषणे, आक्रमणे च ।

**आस्कन्दित** न० आ+स्कन्द-स्वार्थे णिच्-क्त । अश्वगतिभेदे त्वरितगमने च । स्वार्थे कन् । आस्कन्दितकमप्यत्र ।

**आस्तर** पु० आ+स्तॄ-करणे अप् । हस्तिपृष्ठस्थकम्बले कुथ इति ख्याते । ल्युट् । आस्तरणमप्यत्र न० ।

**आस्तिक** त्रि० अस्ति परलोक इति मतिर्यस्य ठन् । परलोका-स्तित्ववादिनि "अस्तीत्युक्ता मतो यस्यास्तिकस्तेन कथ्यते इति सिद्धान्तेनास्य स्वरूपादुपदिश्यते । आस्तीकोऽप्यत्र।

**आस्तिक्य** न० आस्तिकस्य भावः कर्म वा । वैदिकधर्मे श्रद्धायाम्

**आस्तीकजननी** स्त्री० ६त० । जरत्कारुमुनिपत्न्यां जरत्कारु-नाम्न्यां वासुकिभगिन्यां मनसादेव्याम् ।

**आस्था** स्त्री० आ+स्था-अङ् । आलम्बने, अपेक्षायां, श्रद्धा-यां, स्थितौ, यत्ने च । आधारे अङ् । प्रतिष्ठायां स्थाने च ।

**आस्थान** न० आ+स्था-आधारे ल्युट् । सभायां विश्रामस्थाने

च । स्त्रीत्वमपि तत्र ङीप् । आस्थानीत्यप्यत्रैवार्थे ।

**आस्थित** त्रि० आ+स्था-क्त । आरूढे प्राप्ते, अङ्गीकृतवति च

**आस्पद** न० आ+पद-घ सुट् च । प्रतिष्ठायाम्, पदे, स्थाने, कृत्ये, प्रभुत्वे च । ["ऐरावतास्फालनकर्कशेने"ति कुमार'

**आस्फालन** न० आ+स्फुर-णिच् ल्युट् स्फालादेशः । चालने

**आस्फोट** पु० आ+स्फुट-अच् । स्वयं फलस्य स्फोटनात् अर्कवृक्षे (नालठोका) मल्लादेर्बाह्वादिहस्ततालेन शब्दकरणे च । (हाप-रमाली) वनमल्लां स्त्री० । ल्युट् आस्फोटनमप्यत्र न० ।

**आस्फोटक** पु० आस्फोटोऽस्त्यत्र इव । (आखरोट) शैलपीलौ

**आस्फोटनी** स्त्री० आस्फोट्यते विदार्यतेऽनया आस्फुट-णिच्-करणे ल्युट् स्त्रीत्वात् ङीप् । (तरपन) वेधनास्त्रे ।

**आस्फोत** पु० आ+स्फुट-अच् पृषो० टस्य तत्वम् । अर्कवृक्षे कोविदारवृक्षे, भूपलाशवृक्षे च । स्वार्थे कन् । आस्फोतकोऽर्कवृक्षे

**आस्फोता** स्त्री० आ+स्फुट-अच् पृषो० । अपराजितायां, वनमल्लायाम् (हापरमाली) लताभेदे च ।

**आस्य** न० असते अस्यतेऽन्नम् अस-आधारे ण्यत् । मुखे । तन्मध्ये च । आस्ये भवः यति यलोपः । मुखभवे त्रि० ।

**आस्यपत्र** न० आस्यमेव पत्रमस्य । पद्मे ।

**आस्यलाङ्गल** पु० आस्यं लाङ्गलमिव भूविदारकं यस्य । शूकरे

**आस्यलोमन्** न० ६त० । पुरुषमुखजाते लोम्नि (दाड़ि) ।

**आस्या** स्त्री० आस-ण्यत् टाप् । स्थितौ, आसने च ।

**आस्यासव** पु० आस्यस्यासवः मधवः ६त० । लालायाम् (थुथु) (लाल) इति ख्यातायाम् । [अप् । निस्त्रावस्रवणे ।

**आस्रव** पु० आस्रवति मनोऽनेन करणे अप् । क्लेशे । भावे

**आस्वाद** पु० आ+स्वद-कर्मणि घञ् । रसे।भावे घञ् । रसानुभवे

**आह** अव्य० आ+हन-ड । आक्षेपे, नियोगे, दृढसम्भाषणे, उवाचेत्यर्थे 'अथाह वर्णी विदितो महेश्वर'इति कुमारः ।

**आहत** त्रि० आ+हन-क्त । गुणिते, ताडिते, अभ्यासतोऽभी-प्सादौ मृषार्थके वाक्ये च । ढक्कायाम् पु० । पुरातने नूतने च वस्त्रे न० ।

**आहतलक्षण** पु० आहतमभ्यस्तं लक्षणं यस्य । गुणैः प्रथिते

**आहर** पु० आ+हृ-अप् । उपादाने, अन्तःस्थितस्य वायोर्मु-खेन बहिर्गतौ ।

**आहव** न० आहूयन्तेऽस्मिन् आ+ह्वे-अप् सम्प्रसारणं गुणः । युद्धे । आहूयतेऽस्य आ+हु अप् । यज्ञे ।

**आहवनीय** पु० आहवनमर्हति छ । गार्हपत्याग्नेरुद्धृत्य हो-मार्थं कृतसंस्कारे वह्नौ । आ+हु-अनीयर् । हवनीये ।

**आहार** पु० आ+हृ घञ् । आहरणे, द्रव्यमात्रस्य सवाभ्य-

ग्रहरूपे भोजने च । 'नीराहाराश्च ये जीवा' इति स्मृतौ जलपानेऽप्याहारशब्दः । कर्म्मणि घञ् । अन्नादौ भक्ष्ये ।

**आहार्य्य** त्रि० आ+हृ-ण्यत् । आहरणीये, आगन्तुके, कृत्रिमे, आरोपे नाट्ये रचिते रसादिव्यञ्जकभूषादौ च ।

**आहाव** पु० आ+ह्वे-घञ् संप्रसारणे वृद्धिः । कूपसमीपे गवादीनां जलपानाय प्रस्तरादिना रचिते (खाल) जलाशये, युद्धे, आह्वाने च । [क्षते, क्षताधानसंस्कारे च ।

**आहित** त्रि० आ+धाञ्-क्त । न्यस्ते, स्थापिते, अर्पिते,

**आहितुण्डिक** त्रि० अहितुण्डेन दीव्यति ठक् । व्यालग्राहिणि

**आहुत** त्रि० उद्देश्यस्य आभिमुख्येन सादादेव हुतं हु-क्त । गृहस्थकर्त्तव्येषु पञ्चसु यज्ञेषु । मनुष्ययज्ञे भूतयज्ञे चेत्यन्ये ।

**आहुति** स्त्री० आ+हु-क्तिन् । देवोद्देशेन मन्त्रेणाग्नौ हवि क्षेपे

**आहेय** न० अहेरिदम् ढक् । सर्पसंबन्धिनि चर्म्मविषादौ ।

**आहो** अव्य० आ+हन-डो । प्रश्ने, विकल्पे, विचारे च ।

**आहोपुरुषिका** स्त्री० अहमेव पुरुषः शूरः मयू० अहो पुरुषः तस्य भावः वुञ् स्त्रीत्वात् टाप् । दर्पजन्ये आत्मनि उत्कर्षसम्भावने ।

**आहोस्वित्** अव्य० आहो च स्विच्च द्व० । विकल्पे, प्रश्ने च ।

**आह्निक** त्रि० अह्ना साध्यं ठञ् । दिनसाध्ये, स्नानसन्ध्यातर्पणादौ च । इदमर्थे ठञ् । दिनसम्बन्धिनि । अध्यायान्तर्गते ग्रन्थस्य प्रकरणसमूहे न० ।

**आह्लाद** पु० आ+ह्लद घञ् । आनन्दे । [च ।

**आह्वय** पु० आ+ह्वे श । नामनि संज्ञायाम् प्राणिसाधने द्यूते

**आह्वान** न० आ+ह्वेञ् ल्युट् । आकारणे आहूतौ च ।

# इ

**इ** पु० अस्य विष्णोरपत्यम् अ+इञ् । कामे । अस्येदम् अ+इञ् । भेदे, रोषोक्तौ, निराकरणे, अनुकम्पायाम्, खेदे, विस्मये, निन्दायाम्, सम्बोधने च । [इन्द्राभञ्जन इत्युद्भट'।

**इ** गतौ भ्वादि० पर० सक० अनिट् । अयति ऐषीत् । अयमुदयति

**इक्** स्मरणेऽधिपूर्व्वक एव कित् अदादि० पर० सक० अनिट् । अध्येति अध्यैषीत् इण इव तिङि न क्ङिति । अधीयन् ।

**इक्षु** पु० इष-क्सु । मधुररसयुते स्वनामख्याते वृक्षे ।

**इक्षुकाण्ड** पु० इक्षोः काण्ड इव काण्डोऽस्य । काशतृणे ।

**इक्षुकुट्टक** पु० इक्षुं कुट्टयति कुट्ट-ण्वुल् । गुडकारके लघीनलादौ । [क्षुद्रगोक्षुरे च ।

**इक्षुगन्ध** पु० इक्षोरिव गन्ध एकदेशावयवो यस्य । काशतृणे,

**इक्षुगन्धा** स्त्री० इक्षोर्गन्ध इव गन्धोऽस्याः । क्षीरविदार्य्याम्, कृष्णभूमिकुष्माण्डे, काशे, गोक्षुरे च । स्वार्थे के अत इत्वम् । इक्षुगन्धिका भूमिकुष्माण्डे । [धान्यविशेषे ।

**इक्षुतुल्या** स्त्री० इक्षुणा तुल्या पत्रादिना । (जनार) ।

**इक्षुनेत्र** न० इक्षुर्नीयते पुनरुत्पादनायारोप्यतेऽनेन नी-ष्ट्रन् । इक्षोर्नेत्रमिव वा इक्षूत्पादके इक्षुनेत्राकारे तदग्रन्थौ ।

**इक्षुपत्र** पु० इक्षोः पत्रमिव पत्रमस्य । (जनार) धान्यभेदे ।

**इक्षुभ** पु० इक्षुरिव भूर्यते भृ कर्म्मणि घञर्थे क । शरवृक्षे ।

**इक्षुमती** स्त्री० इक्षुस्तद्रसोऽस्त्यास्यां मतुप् । नदीभेदे ।

**इक्षुमूल** पु० इक्षोर्मूलं ग्रन्थिरिव मूलं ग्रन्थिर्यस्य । वंशवृक्षे । ६त० । इक्षुमूले तदग्रन्थौ न० । [इक्षुनिष्पीडने यन्त्रे ।

**इक्षुयन्त्र** न० इक्षोस्तन्निष्पीडनस्य यन्त्रम् । (गन्नाशाल)

**इक्षुर** पु० इक्षुमिक्षुगन्धं राति रा-क । (तालमाखना) कोकिलाख्ये वृक्षे, काशे च । ततः स्वार्थे क । तत्रार्थे, स्थूलशरे च ।

**इक्षुरस** पु० इक्षो रस इव रसो यस्य । (नड़ा) इति ख्याते तृणभेदे । ६त० । इक्षोः रसे ।

**इक्षुरसक्वाथ** पु० इक्षुरसस्य क्वाथः पाकभेदः । गुडे ।

**इक्षुवल्ली(ल्लरी)** स्त्री० इक्षुरिव सुस्वादा वल्ली वल्लरी वा लता । क्षीरविदार्य्याम् । [इक्षुक्षेत्रे ।

**इक्षुव(टि)टीका** स्त्री० इक्षोर्वाटीव इवार्थे के वा ह्रस्वः ।

**इक्षुवालिका** स्त्री० इक्षुरिव वलति ण्वुल् । तालमाखना इति ख्याते वृक्षे, काशे च ।

**इक्षुसार** पु० इक्षुरिव सरति सृ-अच् । कायभेदे तद्वने गन्धर्व्वनिवृत्तेर्दृष्टत्वात् तस्येक्षुरत् हिंस्रकत्वम् ।

**इक्षुशाकट** पु० इक्षूणां भवनं क्षेत्रम् इक्षु+शाकटच् । (दो) (कल्ल) इति ख्याते इक्षुभवनयोग्ये क्षेत्रे । तदर्थे शाकिन् । इक्षुशाकिन्शब्दोऽप्यत्रार्थे ।

**इक्षुसार** पु० ६त० । गुडे । [न्वयाम् सूर्य्यवंशे आदिराजे च ।

**इक्ष्वाकु** पु० इक्षुमिच्छामाकरोति इक्षु+आ+क-डु । कटुतु-

**इक्ष्वारि** पु० इक्षुरिवाशमनादिच्छति आ+ऋ-इन् । काशतृणे

**इक्ष्वालिका** पु० इक्षुरिव अलति व्याप्नोति ण्वुल् । काशे ।

**इख** गतौ भ्वादि० पर० सक० सेट् । एखति ऐखीत् ।

**इखि** गतौ इदित् भ्वादि० पर० सक० सेट् । इङ्खति ऐङ्खीत् ।

**इगि** गतौ इदित् भ्वादि० पर० सक० सेट् । इङ्गति ऐङ्गीत् ।

**इङ्** अध्ययने अधिपूर्व्व एव ङित् अदा० आत्म० सक० अनिट् । अधीते अध्यैष्ट अध्यगीष्ट । अधिगमे, अध्यैष्यत अध्यगीष्यत ।

**इङ्गित** न० इगि-क्त । अभिप्रायव्यञ्जकदेहचेष्टायाम् ।

**इङ्गुद** पु० इं० उ इङ्गुः रोगस्तम् द्यति दो-क । तापसतरौ

गौरा० ङीष् इङ्गुदीवृक्षफले च । [त्रि०।

**इच्छुक** पु० इष-शक । टावालेबु इति ख्याते वृक्षे । इच्छायुक्ते

**इच्छा** स्त्री० इष-श । इदं मे भूयादिति मनोधर्म्मभेदे सुखे तत्साधने च चित्तवृत्तौ न्यायमते, "निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि" इत्युक्तदिशा सुखादिज्ञानेन तत्साधनत्वज्ञानेन च जायमाने इदं मे भूयादित्येवं रूपे आत्मधर्मे अभिलाषे च ।

**इच्छावती** स्त्री० इच्छाऽस्त्यस्याः मतुप् मस्य वत्वम् । मैथुनेच्छावत्यां कामुकायाम् इच्छामात्रयुतायाञ्च ।

**इच्छु** त्रि० इष-उ नि० । इच्छायुक्ते, इच्छाशीले च । [वृक्षे ।

**इज्जल** पु० इज्-क्विप् तुक् इत् जलं यस्य । (हिजल) निचुल

**इज्य** पु० इज्यतेऽसौ यज-क्यप् । सुरगुरौ, नारायणे च । पूज्ये त्रि०

**इज्या** स्त्री० यज-भावे क्यप् स्त्रीत्वात् टाप् । यज्ञे, यजेर्दानार्थत्वात् दाने, सङ्गमे च । कर्म्मणि क्यप् । प्रतिमायां, गवि, कुट्टन्याञ्च । [श्च । पुनःपुनर्यज्ञकारके ।

**इज्याशील** त्रि० इज्यां यज्ञं शीलयति पुनः पुनराचरति शील-

**इट** गतौ भ्वादि० पर० सक० सेट् । एटति ऐटीत् ।

**इडा** स्त्री० इल अच् वा लस्य डत्वम् । गवि, वाचि, भूमौ, स्वर्गे, वामपार्श्वस्थायाम् वक्रायां नाड्याञ्च ।

**इण्** गतौ चित् अदादि० पर० सक० अनिट् । एति ऐषीत् ।

**इतर** त्रि० इना कामेन तर० तॄ-अ । नीचे भिन्ने पामरे च ।

**इतरेतर** त्रि० इतर+द्वित्वम् । अन्योन्यार्थे परस्परार्थे ।

**इतरेतरयोग** पु० इतरेतरस्य परस्परस्य योग एकपदार्थान्वयित्वेन संबन्धः । सार्थविशेषे, व्याकरणे यत्र द्वन्द्वसमासे समस्यमानानां पदानां प्राधान्यं तदर्थे ।

**इतरेद्युस्** अव्य० इतर-एद्युस् । अन्यस्मिन्नहनीत्यर्थे ।

**इतस्** अव्य० इदम्+तसिल् । अस्मादित्यर्थे ।

**इतस्ततः** अव्य० इतश्च ततश्च । अस्मिन् तस्मिन्नित्यर्थे ।

**इति** अव्य० इण-क्तिच् । हेतौ, प्रकाशने, निदर्शने, प्रकारे, अनुकर्षे, समाप्तौ, प्रकरणे, स्वरूपे, सान्निध्ये, विवक्षानियमे, मते, प्रत्यक्षे, अवधारणे, व्यवस्थायाम्, परामर्शे, माने, इत्थमर्थे, प्रकर्षे, उपक्रमे च ।

**इतिकर्त्तव्यता** स्त्री० इति इदं कर्त्तव्यं तस्य भावः । इदं कृत्वा इदं कुर्य्यादित्येवं परिपाटीरूपे कर्म्मानुष्ठानक्रमे ।

**इतिह** अव्य० इति एवं ह किल द्व० । उपदेशपरम्परायाम् यथाऽत्र वटे यक्ष इत्युपदेशपरम्परैव न तु केनापि दृष्टा तथा कथितम् ।

**इतिहास** पु० इतिह पारम्पर्य्योपदेशः आस्तेऽस्मिन् इतिह+आस घञ् । "धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते" इत्युक्तलक्षणे पूर्ववृत्तप्रकाशके भारतादिग्रन्थे ।

**इत्थम्** अव्य० इदम्+थमु । इदंप्रकारे अनेन प्रकारेणेत्यर्थे

**इत्थम्भूत** त्रि० इदंप्रकारं भूतः प्राप्तः भू-क्त । एवं प्रकारमाप्ते

**इत्वर** त्रि० इण् क्वरप् । पथिके, नीचे, क्रूरकर्म्मणि च । षण्ढे पु० । अभिसारिकायां स्त्री० ।

**इदि** ऐश्वर्ये इदित् भ्वादि० पर० अक० सेट् । इन्दति ऐन्दी

**इदम्** त्रि० इदि कमि नलोपश्च । पुरोवर्त्तिनि दृश्ये चराच

**इदानीम्** अव्य० इदम्+दानीम् इश् च । सम्प्रत्यर्थे ।

**इद्ध** न० इन्ध-भावे क्त । आतपे, दीप्तौ, आश्चर्य्ये च । कर्त्तरि क्त । इद्धे, निर्म्मले च त्रि० ।

**इध्म** न० इन्ध-मक् । समिधि, अग्निसन्दीपने काष्ठे च ।

**इन** पु० इण-नक् । सूर्य्ये, प्रभौ, नृपविशेषे च ।

**इन्दिरा** स्त्री० इदि इरच् । लक्ष्म्याम् । [नीलोत्पले ।

**इन्दि(न्दी)वर** न० इन्दिरिन्दी वा लक्ष्मीस्तस्या वरमभीष्टम् ।

**इन्दीवरिणी** स्त्री० इन्दीवर+समूहे देशे वार्थे इनि । उत्पलसमुदाये, तद्युक्तलतायाञ्च । [शतमूल्याम् ।

**इन्दीवरी** स्त्री० इन्दी लक्ष्मीं वृणोति वृ-अच् गौरा० ङीष् ।

**इन्दु** पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द-उ आदेरिच्च । चन्द्रे, तद्देवताके मृगशिरोनक्षत्रे तत्क्रम-संख्ये एकसंख्यायुक्ते, कर्पूरे च ।

**इन्दुकलिका** स्त्री० इन्दुरिव शुभ्रा कलिका यस्याः । केतक्या

**इन्दुकान्त** पु० इन्दुः कान्तोऽभीष्टोऽस्य । चन्द्रकान्ते मणौ ।

**इन्दुजनक** पु० ६त० । समुद्रे । [नद्याम् ।

**इन्दुजा** स्त्री० इन्दोर्जायते जन ड । सोमोद्भवायां नर्म्मदायां

**इन्दुपुत्र** पु० ६त० । बुधग्रहे । [जाङ्गलीवृक्षे ।

**इन्दुपुष्पिका** स्त्री० इन्दुरिव शुभ्रं पुष्पमस्याः । (विषलाङ्गला)

**इन्दुभृत्** पु० इन्दुं बिभर्त्ति भृ-क्विप् । शिवे । [राजपत्न्याञ्च ।

**इन्दुमती** स्त्री० इन्दु+मास्यस्ये मतुप् । पूर्णिमायाम्, अज-

**इन्दुरत्न** न० ६त० । मुक्तायां तस्याश्चन्द्रदेवताकत्वात् ।

**इन्दुलेखा** स्त्री० इन्दोर्लेखेव । चन्द्रकलायाम् । तदंशनाम्नि सोमलतायाम्, तदाप्यायनकारिण्याममृतायां, तदंशकलगुणत्वात् यमानिकायाञ्च ।

**इन्दुलोहक** न० ६त० । इन्दुदेवताके लोहके, रौप्ये धातौ ।

**इन्दुवल्ली** स्त्री० ६त० । चन्द्रनामिकायां सोमलतायाम् ।

**इन्द्र** पु० इदि+र । देवाधिपे, परमेश्वरे, इन्द्रदैवते ज्येष्ठानक्षत्रे,

द्वादशार्कमध्ये अर्कभेदे, इन्द्रतुल्यसंख्याके चतुर्द्दशसंख्यान्विते, विष्कम्भादितः षड्विंशे योगे, कुटजवृक्षे च।

इन्द्रक न० इन्द्रस्य कं सुखमिव कं यत्र । सभागृहे ।

इन्द्रकील पु० इन्द्रस्य कील इव अचलत्वात् । मन्दरपर्व्वते ।

इन्द्रकोष पु० इन्द्रस्य कोष इव सुखदायकत्वात् । मञ्चे,खट्वायाञ्च

इन्द्रगोप पु० इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात् । इन्द्रर क्षिते रक्तवर्णे कीटभेदे ।

इन्द्रजाल न० इन्द्रेण कौशलादोश्वर्य्येण जालं दृष्टेर्वावरणम् यथास्थितवस्तुदर्शनाच्छमत्वसाधनात् । मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसाधने कुहके (बाजी)।

इन्द्रजालिक त्रि० इन्द्रजालं शिल्पमस्य ठन् । कुहककारिणि

इन्द्रजित् पु० इन्द्रं जितवान् जि-भूते क्विप् । रावणसुते मेघनादे

इन्द्रतूल न० इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वादिन्द्र स्वामिकत्वम । आकाशे मरुता चाल्यमाने कर्पासे सूत्रे ।

इन्द्रदारु पु० इन्द्रस्य तद्भुवनस्य दारु अत्युच्चायततयाकाशगामित्वादिन्द्रभुवनदारुत्वम् । देवदारुवृक्षे ।

इन्द्रद्रु पु० इन्द्रस्य द्रुरिव । अर्ज्जुनवृक्षे, कुटजवृक्षे च ।

इन्द्रधनुस् न० इन्द्रस्य धनुरिव । ‘रविकिरणा वज्रवर्णा वातेन विलोडिता नभसि’। शक्रायुधसंस्थाना दृश्यन्ते तत्तु इन्द्रधनुरि’त्युक्ते नभसि वायुचालिते शक्रधनुराकारेण परिणते रविकिरणे ।

इन्द्रध्वज पु० न० इन्द्रस्य ध्वज । भाद्रशुक्लद्वादश्यां नृपैः प्रजावृद्ध्यर्थं पूज्यमाने उच्छ्रिते शक्रदेवताके ध्वजे ।

इन्द्रनील पु० इन्द्र इव नीलः । “चीरमध्ये क्षिपेन्नीलं चीरं चेत्नीलतां नयेत् । इन्द्रनीलमि”ति ख्यातमित्युक्तलक्षणे (पान्ना) मरकतमणौ ।

इन्द्रपुष्पा स्त्री० इन्द्र इव नील पुष्पमस्याः (विषलाङ्गला) लाङ्गलीवृक्षे । ब० वा कपि । इन्द्रपुष्पिकाप्यत्र । [पुरे ।

इन्द्रप्रस्थ न० इन्द्रस्य तत्स्थानमेरो प्रस्थ इव (दिल्लीति) ख्याते

इन्द्रभेषज न० इन्द्र इव भेषजं श्रेष्ठत्वात् । (शुट्) शुण्ठ्याम् ।

इन्द्रमहकामुक पु० इन्द्रमहं कामयते कम उक । कुक्कुरे ।

इन्द्रयव न० पु० इन्द्रस्य कुटजवृक्षस्य यवाकृतिबीजत्वात् यवो बीजम् । कुटजवृक्षस्य यवाकारे तिक्तरसे बीजे स्वनामख्याते । [रोगे । इन्द्रेण लुप्तं । त्रि०।

इन्द्रलुप्त न० ३त०। (टाक) इति ख्याते मस्तकोपरि केशनाशके

इन्द्रलुप्तिक त्रि० इन्द्रलुप्तमस्यास्ति ठन् । (टाक) रोगयुक्तशीर्षके (टेको) इतिख्याते जने ।

इन्द्रवंशा स्त्री० वर्णवृत्तेषु द्वादशाक्षरपादके छन्दोभेदे ।

इन्द्रवज्रा स्त्री० वर्णवृत्तेषु एकादशाक्षरपादके छन्दोभेदे ।

इन्द्रवारुणी स्त्री० इन्द्रं वारयति वृ० ह उनन् । (राखाल सशा) तिक्तरसायां श्वेतमूलायां पीतपुष्पायां लतायाम् ।

इन्द्रवृक्ष पु० ६त० । देववारुवृक्षे ।

इन्द्रवृद्धा स्त्री० ३त०। व्रणरोगभेदे ।

इन्द्रव्रत न०इन्द्रस्येव वर्षणे व्रतम् । ‘वार्षिकांश्चतुरो मासान् यथेन्द्रोऽप्यभिवर्षति । तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्नि”ति स्मृत्युक्ते प्रजापालने राजव्रतभेदे ।

इन्द्रशत्रु पु० इन्द्रः शत्रुः घातयिता यस्य । वृत्रासुरे ।

इन्द्रसावर्णि पु० चतुर्दशे मनौ । [वालिनामके वानरे च ।

इन्द्रसुत पु० ६त० । जयन्ते मध्यमपाण्डवे पार्थे, अर्ज्जुनवृक्षे,

इन्द्रसुरस पु० इन्द्रः कुटजवृक्ष इव सुरसः पथ्यरसः । (निसिन्दा) सिन्धुवारे ।

इन्द्राणिका स्त्री०इन्द्रं कुटजमिव आनयति सेवनेन जीवयति अन णिच् ण्वुल् स्वार्थेन कत्वम् । निर्गुण्ड्याम्(निसिन्दा)

इन्द्राणी स्त्री० इन्द्रस्य पत्नी ङीप् आनुक् च । शचीनाम्न्यामिन्द्रपत्न्याम् । इन्द्रं कुटजं इव आनयति अन णिच्-अण् (निसिन्दा) सिन्धुवारे वृक्षे स्थूलैलायां, सूक्ष्मैलायां, गौर्य्यादिषु षोडशमातृकासु मध्ये षाष्ठ्यां मातृकायाञ्च ।

इन्द्रानुज पु० ६त०। विष्णौ,स हि कश्यपाददितौ वामनरूपेण इन्द्रस्य पश्चात् जात ।इन्द्रावरजोऽप्यत्र ।

इन्द्रायुध न० इन्द्रस्यायुधं धनुरिव । इन्द्रधनुःशब्दार्थे ।

इन्द्राशन पु० इन्द्रेण अश्यते भुज्यते कर्म्मणि ल्युट् । (सिद्धि) भङ्गायाम् ।

इन्द्रिय न० इन्द्रस्य प्रत्यगात्मन लिङ्गमनुमापकम्, तेन दृष्टं मम चक्षुः मम श्रोत्रमित्येवमभिमतम इन्द्रेण ईश्वरेण सृष्टं, सेवितं वेत्याद्यर्थे इन्द्र+घ । आत्मनो विषयोपलब्धिकरणतयेश्वरसृष्टेषु ज्ञानकर्मसाधनेषु चक्षुरादिषु । [प्रतिबन्धे

इन्द्रियनिग्रह पु० ६त०। स्वस्वविषयेभ्यश्चक्षुरादीनां प्रवृत्ति

इन्द्रियवध पु० ६त०। इन्द्रियाणां स्वस्वकार्य्याक्षमत्वरूपे “बाधिर्य्यं कुष्ठतान्धत्व जडताऽजिघ्रता तथा । मूकता कौण्य पङ्गुत्वक्लैव्योदावर्त्तमत्तता” इत्युक्तप्रकारे एकादशेन्द्रियाणां क्रमेणैकादशविधे घाते ।

इन्द्रियवृत्ति स्त्री० ६त०। “शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चाना”मिति सांख्योक्ते श्रोत्रादीनां शब्दादिषु प्रकाशनार्थे व्यापारे।

इन्द्रियसंप्रयोग पु० इन्द्रियाणां संप्रयोगः स्वस्वविषयेषु प्रयोग व्यापारणम् । इन्द्रियसम्बन्धे । इन्द्रियसन्निकर्षोऽप्यत्र

**इन्द्रियार्थ** पु० इन्द्रियाणामर्थो विषयः । शब्दस्पर्शरूपरस-
गन्धात्मके इन्द्रियवेद्ये विषये ।

**इन्द्रियायतन** न० ६त० । शरीरे ।

**इन्द्रियार्थसन्निकर्ष** पु० इन्द्रियाणामर्थैः स्वस्वविषयैः सह
सन्निकर्षः सम्बन्धः । प्रत्यक्षज्ञानहेतौ इन्द्रियविषयसंयोगे ।

**इन्ध** दीप्तौ भ्वादि० आत्म० अक० सेट् । इन्धते, ऐन्धिष्ट ।

**इन्धन** न० इध्यतेऽग्निरनेन इन्ध-करणे ल्युट् । काष्ठे ।

**इभ** पु० इण्-भ किच्च । हस्तिनि, तत्तुल्यसंख्यके अष्टसंख्यान्विते च

**इभकणा** स्त्री० इभोपपदा कणा शाक० त० । गजपिप्पल्याम् ।

**इभदन्ता** स्त्री० इभस्य दन्त इव शुभ्रं पुष्पमस्याः । शुभ्र
पुष्पवत्या नागदन्त्याम्, विषौषधौ च ।

**इभनिमीलिका** स्त्री० इभं हस्तिनमपि निमीलयति सेवनात्
निद्रापयति । भङ्गायाम् ।

**इभपालक** पु० इभं पालयति । (माहुत) हस्तिपके ।

**इभया** स्त्री० इभैर्यायते भक्ष्यतया प्राप्यते या कर्म्मणि क ।
स्वर्णक्षीरीवृक्षे । [त्वमे च ।

**इभ्य** त्रि० इभं हस्तिनमर्हति यत् । प्रचुरधनवति आढ्ये,

**इभ्या** स्त्री० इभाय हिता इभ+यत् । शल्लकीवृक्षे । [ङीप्

**इयत्** त्रि० इदं परिमाणमस्य इदम् वतुप् । एतावदर्थे स्त्रियां

**इयत्ता** स्त्री० इयतो भावः तल् । सीमायां, परिमाणे, संख्यायाञ्च

**इरम्मद** पु० इरया जलेन माद्यति वर्द्धते इरा-मद खश्
ह्रस्वः मुम् च । वज्राग्नौ वाडवानले च ।

**इरा** स्त्री० इण् रक् इ कामं राति रा-क वा । भूमौ, वाचि,
सुरायाम्, जले, अन्ने च । [जलचरे, भूचरे च त्रि०

**इराचर** न० इरायां चरति चर ट । (शिल) करकायाम् ।

**इराज** पु० इरया सुरया पीयतेऽसौ अज घञ् । कन्दर्पे ।

**इरावती** स्त्री० इरां भूमिम् अवति अव-शतृ ङीप् । वट-
पत्त्रीवृक्षे, सा हि पाषाणभेदनेनापि भूमिमागच्छति ।

**इरिण** न० ऋ इन किच्च । ऊषरभूमौ, निरालम्बे, शून्ये च

**इरेश** पु० ६त० । वरुणे, वागीशे, भूमिपतौ, विष्णौ च ।

**इर्वारु** स्त्री० उर्व्व आरु पृषो० । (काँकुड) कर्कट्याम् । आलु ।
इर्व्वारुरप्यत्र । [फुटी (स्वयं भिन्नपक्वकर्कट्याम्) ।

**इर्व्वारु(लु)शुक्तिका** स्त्री० इर्व्वारु शुक्तिकेव स्वयं स्फोटनात्

**इल** गमने अक० गतौ क्षेपे च सक० तुदा० पर० सेट् । इलति

**इल** क्षेपणे चुरा० उभ० सक० सेट् । एलयति ते ऐलिलत् त ।

**इलविला** स्त्री० पुलस्त्यमुनिपत्न्याम् कुवेरजनन्याम् । एतस्य
अपत्यत्वेनैव कुवेरस्य ऐलविल इति नाम ।

**इला** स्त्री० इल-क । भूमौ, गवि, वाचि, जम्बुद्वीपस्थनववर्षमध्ये
वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते । वैवस्वतमनुक-
न्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुरुषमासाद्य
पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तु तामुपयम्य पुरूरवस-
मुत्पादयामासेति पुराणे प्रसिद्धम् ।

**इलावृत** न० इला पृथिवी वृता येन । नववर्षात्मकजम्बुद्वीपस्य
वर्षभेदे तच्च वर्षं "पश्चान्माल्यवतः प्राच्यां गन्धमादन-
शैलतः । इलावृतं नीलगिरेर्याम्यतो निषधादुदक्" इत्यु-
क्त एतत्सीमावच्छिन्ने देशेऽस्ति ।

**इली** स्त्री० इल-इन् ङीप् । (छातकुरी) करवालिकायाम् ।

**इलीश** ० इलीव करवालिकेव शोभते शुभ-ड । करवालिका
सदृशावयवे स्वनामख्याते मत्स्यभेदे ।

**इल्वल** पु० इल वलच् नि० गुणाभावः अत्यन्तचञ्चले मत्स्यभेदे,
वधित्वनामिति दैत्यभेदे च मृगशिरोदेशस्थपञ्चताराविर
स्थासु तारासु स्त्री० ब०व० ।

**इव** व्याप्तौ इदित् भ्वा० पर० सेट् सक० । इन्वति ऐन्वीत् ।

**इव** अव्य० इण्-क्वन् । सादृश्ये, उत्प्रेक्षायाम्, ईषदर्थे, वाक्यालङ्कारे च

**इष** गतौ सर्पणे च दिवा० पर० सक० सेट् । इष्यति, ऐषीत् ।

**इष** वाञ्छायाम् तुदा० पर० सक० सेट् । इच्छति, ऐषीत् एषिता
एष्टा एषित्वा इष्ट्वा । इष्ट । [एषित एषित्वा ।

**इष** पौनः पुन्ये क्र्यादि० पर० अक० सेट् । इष्णाति ऐषीत् ।

**इष** पु० इष-गतौ क्विप् यात्रा जिगीषूणां यास्मिन् अर्श
आद्यच् । आश्विने मासि ।

**इषि(षी)का** स्त्री० ईष गत्यादिषु (क) ईकन् कित् ह्रस्वश्च ।
गजनेत्रगोलके । दीर्घमध्यस्थ काष्ठे, मुञ्जामध्यवर्त्तितृणे च

**इषु** पु० स्त्री० इष्यते हिंस्यतेऽनेन ईष उ कित् ह्रस्वश्च । बाणे
तत्तुल्यसंख्ये पञ्चसंख्यान्विते च ।

**इषुधि** पु० स्त्री० इषवो धीयन्तेऽत्र धा-कि । बाणाधारे तूणे ।

**इषुपुङ्खा** स्त्री० इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खावृक्षे ।

**इष्ट** त्रि० इष क्त । पूजिते अभिलषिते, प्रिये च । यज-क्त ।
यज्ञादौ कर्म्मणि, एरण्डवृक्षे च पु० । संस्कारे न० ।
"एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्याञ्च
यद्दानमिष्टं तदभिधीयते । अग्निहोत्रं तपः सत्यं वेदाना-
ञ्चानुपालनम् । आतिथ्यं वैश्वदेवञ्च प्राङ्गुरिष्टमित्युक्तलक्षणे
धर्म्मकार्ये च ।

**इष्टका** स्त्री० इष-तकन् । (इट्) मृदादिनिर्म्मिते वस्तुखण्डभेदे

**इष्टकापथ** न० इष्टकाभिनिर्म्मितः पन्थाः । इष्टकानिर्म्मिते
पथि । इष्टं कापथमपानं यस्य । अधोवायुहेतौ उशीरे ।

**इष्टगन्ध** त्रि० इष्टो गन्धो यस्य । सुगन्धिद्रव्ये । वालुकायां न०

स्त्रीवक्षोजाते स्तने । [प्रशस्तवक्षोयुते ।
उरसिल त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मत्वर्थीय इलच् ।
उरस्कट पु० उरः कध्यते आम्रियतेऽनेन कट-घञर्थे क ।
वालानामुत्तरीयभेदे तदीये यज्ञोपवीताकारे वस्त्रभेदे च ।
(बुकवाक्‌ड) । [उरस्त्राणमध्यत न० ।
उरस्त्र न० उरस्त्रायते त्रै-क । वक्षोरक्षके कवचे । ल्युट् ।
उरस्य पु० उरसा निर्मितः उरस्+यत् । स्वजाते औरसे पुत्रे
उरस्वत् त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः ।
प्रशस्तवक्षोयुते ।
उरी अव्य० वेञ् रीक् । अङ्गीकारे, विस्तारे च ।
उरीकार पु० उरी+कृ-घञ् । स्वीकारे, विस्तारे च ।
उरीकृत त्रि०उरी+कृ-क्त । अङ्गीकृते, विस्तृते च । [बाङ्गीष्
उरु त्रि०ऊर्णु-कु नुलोपो ह्रस्वश्च । विशाले, महति च स्त्रियां
उरुक्रम पु० उरुर्महान् क्रमः पादविक्षेपो वा यस्य । विष्णौ
उरुवूक पु० उरु-वै-ऊक आलोपश्च । एरण्डवृक्षे रक्तैरण्डे च
उरोज पु० उरस् जन-ड त० । स्त्रीस्तने । [(माकड़सा) मर्कटके
ऊर्णनाभ पु० ऊर्णेव सूत्रं नाभौ गर्भेऽस्य अच् समा० ह्रस्वः ।
ऊर्णा स्त्री० ऊर्णूयते आच्छाद्यते ऊर्णु-ड ह्रस्वश्च । मेषादिलोम्नि
उर्द माने स्वादे च सक० क्रीडायाम् अक० भ्वा० आत्म० सेट् । उर्दते
उद्र पु० उर्द-रक् । जलविडाले (उद्बिड़ाल)
उर्व हिंसायां भ्वा० पर० सक० सेट् । उर्वति और्वीत् ।
उर्वरा स्त्री० उरु-ऋ-अच् । सर्वशस्ययुतायां भूमौ ।
उर्वशी स्त्री० उरून् अश्नुते वशीकरोति उरु+अश-क गौरा०
ङीप् । स्वर्वेश्यायाम् ।
उर्वशीरमण पु० ६त० । चन्द्रवंश्ये बुधपुत्रे पुरूरवोनामके राज्ञि
उर्वारु पु० उरु-ऋ-उण् । कर्कट्याम् । स्वार्थे कन् अत्रैव ।
उर्वी स्त्री० उरु+स्त्रियां गुणवचनत्वात् ङीष् । भूमौ ।
उल दाने (चौरा०) पर० सक० सेट् । ओलति औलीत् ।
उलप पु० न० वल-कपच् सम्प्रसारणम् । शाखापत्रप्रचययुतायां
लतायाम् । कोमले तृणभेदे न० (उलुखड़) ।
उलूक पु० वल-संवरणे ऊक संप्रसारणम् । पेचके, इन्द्रे, दुर्योधनामात्यशकुनिपुत्रे च । तृणभेदे न० । (उलुखड़)
उलूखल न० ऊर्ध्वं खम् उलूखं पृषो० तत् लाति गृह्णाति
ला-क । धान्यादिकण्डनसाधने काष्ठमये पात्रे (उखरी)
गुग्गुलौ च । [भिक्षुके, (भोमक) मत्स्यभेदे च
उलूपिन् पु० स्त्री० उलूपीव रूपमस्त्यस्य इनि रस्य लत्वम् ।
उलूलु पु०उरु उरु इति रस्य लत्वम् । इष्टसूचके माङ्गल्यादौ
स्त्रीध्वनिभेदे "उच्चैरुलूलुध्वनिरुच्चचार"इति नैषधम् ।

उल्का स्त्री० उष-दाहे क नि० षस्य लः । रेखाकारे गगनात्
पततेजःपुञ्जे । (भेदे (स्याकुयाली)
उल्कामुखी स्त्री० उल्केव रात्रौ ज्वलत् मुखं यस्याः । शृगाली
उल्मुक न० उष-दाहे मुक, षस्य लः । अङ्गारे ।
उल्बण त्रि० उद्+वल-अच् । बद्धरोमयुक्ते ।
उल्लसित त्रि० उद्+लस-क्त । तरलिते, आन्दोलिते च । [पु०
उल्लाघ त्रि०उद्+लाघ-क्त नि० । रोगनिर्मुक्ते, दक्षे, शुचौ, च । मरिचे
उल्लाप पु० उद्+लप-घञ् । काकुवाक्ये, शोकरोगादिना
ध्वनेर्विकारे च । [स्नानीये परिच्छेदे च
उल्लास पु० उद्+लस+घञ् । प्रकाशे, आह्लादे, ग्रन्थस्याध्याय
उल्लिखित त्रि० उद्+लिख-क्त । उत्कीर्णे तनूकृते उपरि
लिखिते, चित्रिते च ।
उल्लेख पु०उद्+लिख-घञ् । उच्चारणे, अलङ्कारभेदे साहि०द०प्र
उल्लेखन न० उद्+लिख-ल्युट् । वमने, खनने, उच्चारणे च
उल्लोच पु० उद्+लोच-घञ् । चन्द्रातपे विताने ।
उल्लोल पु० उद्+लोड़-घञ् डस्य लत्वम् । महातरङ्गे ।
उल्व न० वल-वन् संप्रसारणञ्च । गर्भवेष्टनचर्म्मणि जरायौ ।
उल्वण त्रि० उद्+वण-अच् पृषो० दस्य लः । व्यक्ते, स्पष्टे ।
उ(प)शती स्त्री० उष-शतृ, वश-शतृ संप्रसारणम् वा ।
स्त्रियां ङीप् । अकल्याणायां वाचि ।
उशनस् पु० वश-कनसि । भार्गवे शुक्रे । सौ उशना संबुद्धौ
उशनन् उशन, उशनः ।
उशीर पु० न० वश-ईरन् किच्च । (खस खस्) वीरणमूले ।
उष वधे, दाहे च भ्वादि० पर० सक० सेट् । ओषति, औषीत् ।
उष वधे दाहे च भ्वादि० पर० सक० वेट् । ओषति औषीत्, औक्षीत्
उष पु० उष-क दिने गुग्गुलौ, रात्रिशेषे, धारम्भिकायां च
कामनायुक्ते त्रि० । [च (चड़) ।
उषण न० उष-क्युन् । मरिचे । पिप्पल्यां, शुण्ठ्यां चविके
उषर्बुध पु० उषसि संध्यायां बुध्यते होमार्थं प्रज्वालने प्रकाशते
उषस्+बुध-क अहरादित्वात् रः । अग्नौ, रक्तचित्रके च ।
उषस् न० उष-असि किच्च । प्रत्यूषे, पञ्चपञ्चाशद्घटिकोत्तरकाले
उषसी स्त्री० उषं तापकत्वात् दिवसं स्यति उष+सो-क गौरा०
ङीष् । सायं सन्ध्यायाम् ।
उषा स्त्री० उष-क टाप् । "तेजःपरिह्लानिरुषा भानोरर्द्धोदयं
यावदि"ति वराहोक्ते काले बाणराजसुतायाञ्च ।
उषाकल पु० उषायां कलः शब्दोऽस्य । कुक्कुटे ।
उषापति पु० उषाया बाणराजसुताया पतिः । अनिरुद्धे
कन्दर्पात्मजे कृष्णपौत्रे । उषाकान्तादयोऽप्यत्र ।

उषित त्रि॰ उष-क्त । पर्य्युषिते दग्धे च । वस-क्त । स्थिते ।
उष्ट्र पु॰ उष-ष्ट्रन् किच्च । स्वनामख्याते पशुभेदे, वाह्यरथे च ।
उष्ण पु॰ उष-नक् । ग्रीष्मे ऋतौ, आतपे, पलाण्डौ नरकभेदे, शीतभिन्ने स्पर्शे च । तद्वति, आलस्यरहिते दक्षे च त्रि॰।
उष्णक त्रि॰ उष्णमिव करोति कन् । अनलसे, शिघ्रकारिणि च उष्णं करोति उष्ण+णिच् । ण्वुल् ज्वरे पु॰ ।
उष्णगु पु॰ उष्णा गावः किरणा अस्य । सूर्य्ये । उष्णरश्मिरप्यत्र
उष्णनदी स्त्री॰ कर्म॰ "यमद्वारे महाघोरे नप्ता वैतरणी नदी"त्युक्तायाम् उष्णनद्यां वैतरण्याम् ।
उष्णवारण न॰ उष्णं वारयति वृ-णिच्-ल्यु । आतपत्रे, छत्रे
उष्णवीर्य्य पु॰ उष्णमुग्रं वीर्य्यमस्य । शिशुमाराख्ये जलजन्तौ । उग्रवीर्य्यवति त्रि॰ ।
उष्णांशु पु॰ उष्णा अंशवो यस्य । सूर्य्ये ।
उष्णागम पु॰ उष्णस्यागमोऽस्मिन् । निदाघकाले ।
उष्णासह पु॰ उष्णं आसह्यतेऽत्र आ+सह-अच् । हेमन्ते ऋतौ । उष्णं न सहते अच् । असह्योष्णे त्रि॰ ।
उष्णिका स्त्री॰ अल्पमन्नमस्याम् अल्पार्थे कन् नि॰ अन्नस्य उष्णादेशः । यवाग्वाम् (याउ)। उष्णकशब्दात् टाप् । दक्षायाम्
उष्णिह् स्त्री॰ उत्स्निह्यति क्विन् नि॰ षत्वम् । सप्ताक्षरपादके छन्दोभेदे । स्वादौ उष्णिक् उष्णिग्भ्याम् ।
उष्णीष पु॰ न॰ उष्णमीषते हिनस्ति ईष-क शक॰ पररूपम् । शिरोवेष्टनवस्त्रे, (पागडी) किरीटे च ।
उष्णोपगम पु॰ उष्णस्य उपगमोऽत्र । निदाघकाले ।
उष्म पु॰ उष-मक् । निदाघे, आतपे, ग्रीष्मे ऋतौ च ।
उष्मपा पु॰ उष्मं पिबन्ति पा-क्विप् । भृगोः पुत्रे पितृगणभेदे।
उस्र पु॰ वसन्ति रसा अत्र वस रक् । किरणे, सूर्य्यकिरणानां जलहेतुत्वात् रसवत्त्वम् । वृषे च । सुरभ्यां उपचित्रालतायां च स्त्री॰ । [उवोह ऊहतुः
उह वधे भ्वादि॰पर॰सक॰सेट् । ओहति औहत्, औहीत्,
उह अव्य॰ उ च ह च द्व॰ । संबोधने, एवार्थे च ।
उहह अव्य॰ उह च ह च । सम्बोधने । [कर्म्मणि च ।
उह्यमान त्रि॰ वह-कर्म्मणि शानच् । आकृष्यमाणे, वहन-

## ऊ

ऊ अव्य॰ वेञ् क्विप् । संबोधने, वाक्यारम्भे, दयायां, रक्षायाञ्च
ऊ पु॰अवतीति अव-क्विप् ऊठ् । महादेवे चन्द्रे च । पालके त्रि॰
ऊत त्रि॰ वेञ्-तन्तुसन्ताने क्त । स्यूते, यत्नेन प्यायिते च ।
ऊति स्त्री॰ वेञ्-क्तिन् । स्यूतौ । अव-क्तिन् नि॰ । रक्षणे, लीलायां, चरणे च । [क्षीराधारे आपीने (बाँट)
ऊधस् न॰ उन्द-असुन् निपा॰ उतोदीर्घः । स्त्रीगव्यादेः
ऊधस्य न॰ ऊधसि भवम् ऊधस्+यत् । दुग्धे ।
ऊन परिहाणे अदन्तचुरा॰ उभ॰ अक॰ सेट् । ऊनयति ते औनिनत् त औनयीत् औनयिष्ट ।
ऊन त्रि॰ ऊन-हानौ अच् । हीने, असंपूर्णे च ।
ऊम् अव्य॰ ऊय-मुक् । रोषोक्तौ, प्रश्ने, निन्दायां, स्पर्द्धायाञ्च
ऊय तन्तुसन्ताने भ्वा॰ आत्म॰सक॰सेट् । ऊयते औयिष्ट ।
ऊररी अव्य॰ ऊय-ररीक् । अङ्गीकारे, विस्तारे च ।
ऊरव्य पु॰ ऊरु+भवार्थे यत् । वैश्ये । तस्य ब्रह्मण ऊरुतो जन्म 'ऊरू वैश्य' इति श्रुतेः प्रसिद्धम् । ऊरुसम्भवे त्रि॰।
ऊरी अव्य॰ ऊय-रीक् । अङ्गीकारे, विस्तारे च ।
ऊरु पु॰ ऊर्णूयते आच्छाद्यते ऊर्णु-कर्म्मणि कु नुलोपश्च । जानूपरिभागे ।
ऊरुज पु॰ ऊरोर्ब्रह्मण ऊरोर्जायते जन-ड । वैश्ये ।
ऊरुपर्व्वन् पु॰ ऊरोः पर्व्वेव । जानुनि (हांटु)
ऊरुस्तम्भ पु॰ ऊरुं स्तभ्नाति अण् । स्वनामख्याते रोगे ।
ऊरुस्तम्भा स्त्री॰ऊरोरुपमानभूत स्तम्भो यस्याः । कदलीवृक्षे ।
ऊर्ज्ज जीवने बले च चु॰ उभ॰ अक॰ सेट् । ऊर्ज्जयति, ते औजिर्जत् त ।
ऊर्ज्ज पु॰ऊर्ज्ज-आधारे घञ् । कार्त्तिके मासि । भावे घञ् । बले, उत्साहे च । असुनि सान्तोऽप्ययमत्रार्थे ।
ऊर्ज्जस्वल त्रि॰ ऊर्ज्जस्+अस्त्यर्थे वलच् । बलवति । विनि । ऊर्ज्जस्वीत्यप्यत्र ।
ऊर्ज्जित त्रि॰ ऊर्ज्ज-क्त । बलातिशययुक्ते, वृद्धियुक्ते च ।
ऊर्णनाभ पु॰ ऊर्णेव तन्तुर्नाभावस्य अच् समा॰ ह्रस्व॰ । मर्कटे (माकडसा) अजभावे ऊर्णनाभिरप्यत्र भ्रुवोर्मध्यस्थे महापुरुषचिह्ने आवर्त्ताकारे लोमसङ्घे च ।
ऊर्णा स्त्री॰ ऊर्णु-करणे ड । मेषलोमनि ।
ऊर्णायु पु॰ ऊर्णा॰ मत्वर्थे युस् । मेषे, कम्बले, ऊर्णनाभे, छागभङ्कुरे च ।
ऊर्णु आच्छादने अदा॰ उभ॰ सक॰ सेट् । ऊर्णोति, ऊर्णुते, और्णावीत् और्णुवीत् और्णवीत् और्णविष्ट और्णुविष्ट ।
ऊर्द्ध त्रि॰ उद् हाङ्-ड पृषो॰ ऊरादेशः । उच्चे उपरि च
ऊर्द्धक पु॰ ऊर्द्धं सन् कायति शब्दायते । मृदङ्गभेदे स च गोपुच्छवदाकारस्त्रितालपरिमितः सोऽङ्गाल ऊर्द्धं कृत्वा वाद्यते । [उच्चे उपरि च
ऊर्द्ध त्रि॰ उत् उपरि ध्मायते ध्मा-ड आदेरूरादेशः । उच्चे

ऊर्द्धकण्ठी स्त्री॰ ऊर्द्ध्वं कण्ठः मुखमस्याः ब॰ गौरा॰ ङीष्। महाशतावरीलतायाम्।

ऊर्द्धजानु त्रि॰ ऊर्द्ध्वे जानुनी यस्य। उपरिभागे स्थूलजानुयुक्ते

ऊर्द्धज्ञु त्रि॰ ऊर्द्ध्वे जानुनी यस्य जानुनो वा ज्ञु। उपरिभागे स्थूलजानुयुक्ते। [गजारातौ मनुभेदे

ऊर्द्धपाद पु॰ ऊर्द्ध्वाः पृष्ठस्थाः चत्वारः पादा यस्य। शरभाख्ये

ऊर्द्धपुण्ड्र पु॰ ऊर्द्ध्वम् ऊर्द्धमुखं पुण्ड्रम् इक्षुयष्टिरिव। ललाटस्थे ऊर्द्धमुखे पुण्ड्रेक्षुवत् रेखात्रयात्मके तिलकभेदे। तद्धारणे विधिनिषेधादिकं वृहदभिधाने वक्ष्यते।

ऊर्द्धम् अव्य॰ उद्-ह्वेञ् डम आदेरूरादेशश्च। ऊर्द्धशब्दार्थे।

ऊर्द्धमान न॰ ऊर्द्ध्वमारोप्य मीयते येन मा-ल्युट्। पलकर्षादिमिते माषापादौ (वाटखारा)। तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमुन्मीयते। उन्नतापरक्षेत्रकपरिमाणे च।

ऊर्द्धरेतस् पु॰ ऊर्द्ध्वं न पतत् रेतो यस्य। महादेवे, सनकादौ ब्रह्मचारिणि, भीष्मे च।

ऊर्द्धलिङ्ग पु॰ ऊर्द्ध्वमुत्कृष्टं लिङ्गं चिह्नमस्य। महादेवे ऊर्द्ध्वलिङ्गं विरूपाक्षमिति सन्ध्याङ्गमन्त्र।

ऊर्द्धलोक पु॰ कर्म॰। स्वर्गे।

ऊर्द्धासित पु॰ ऊर्द्धमुपरिभागे असित ह्रस्व॰ आसितो वा। कारवेल्ले (करला) ऊर्द्धोपविष्टे त्रि॰।

ऊर्म्मि पु॰ स्त्री॰ ऋ-मि अर्त्तेरुच्च। तरङ्गे, प्रकाशे, वेगे, वस्त्रसङ्कोचरेखायाम्, पीडायाम्, उत्कण्ठायाम्, बुभुक्षादिषु, षट्सु च "यथा बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्मयः" इति। "षडूर्मीस्तानामस्थाना ममनोरमनाकृति। अतिवेग समायुक्ता गतिरूर्म्मिरुदाहृत" इत्युक्तलक्षणायामश्वगतौ स्त्री॰

ऊर्म्मिका स्त्री॰ ऊर्म्मिरिव कायति कै-क। तरङ्गवत्प्रकाशमाने अङ्गुरीयके। स्वार्थे कन्। तरङ्गादौ च।

ऊर्म्मिमत् त्रि॰ ऊर्म्मिरिव वक्रतास्त्यस्य मतुप् यवा॰ मस्य न व। वक्रे तरङ्गवति च।

ऊर्म्मिमालिन् पु॰ ऊर्म्मिमालाऽस्त्यस्य इनि। समुद्रे।

ऊष पु॰ ऊष रुजायां क। क्षारमृदि, प्रभाते, रन्ध्रे चन्दनादौ च

ऊषण न॰ ऊष-ल्युट्। मरिचे, पिप्पलीमूले, शुण्ठ्यां च। (चिता) चित्रके पु॰। पिप्पल्याः चव्ये च (चइ) स्त्री॰।

ऊषर त्रि॰ ऊष+मत्वर्थीयो र। ऊषवति क्षारमृत्तिकायुक्ते देशे यस्मिन्नुप्तं बीजं न प्ररोहति।

ऊषरज न॰ ऊषराज्जायते जन-ड। (पांशु) लवणभेदे।

ऊषवत् त्रि॰ ऊष-मतुप् मस्य व। ऊषरभूमौ।

ऊष्मन् पु॰ ऊष-मनिन्। घोषे व्याकरणोक्तेषु शोषसायुनोऽशार्यमाणेषु शषसहरूपेषु वर्णेषु।

ऊह वितर्के भ्वादि॰ आत्म॰ सक॰ सेट्। ऊहते औहिष्ट।

ऊह पु॰ ऊह-घञ् वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्वपक्षनिवारणेन, उत्तरपक्षव्यवस्थापनेन निर्णयरूपे परीक्षणे, अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्वके अन्वययोग्यविभक्त्यादिकल्पने, यथा पार्वणे शौन्ध्याय इति मन्त्रवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् पदान्तरेणाकाङ्क्षापूरणे च। [च।

ऊहा स्त्री॰ ऊह अ स्त्रीत्वात् टाप्। अध्याहारे ऊहशब्दार्थे

## ऋ

ऋ गतौ भ्वा॰ पर॰ सक॰ अनिट्। ऋच्छति। आरत् आर्षीत्।

ऋ गतौ जुहोत्यादि॰ पर॰ सक॰ अनिट्। इयर्त्ति आरत्।

ऋ हिंसायां स्वा॰ पर॰ सक॰ अनिट्। ऋणोति। आर्षीत्।

ऋक्थ न॰ ऋच-थक्। धने स्वर्णे, ऋतिप्रसिद्धे दायरूपे धने च

ऋक्ष पु॰ ऋष-स किच्च। भल्लूके। नक्षत्रे मेषादौ च पु॰ न॰।

ऋक्षगन्धा स्त्री॰ ऋक्षान् गन्धयति हिनस्ति गन्ध-अच्। अधिशाङ्गलोहिके, महाश्वेतायाम्, क्षीरविदार्यां च।

ऋक्षगिरि पु॰ कर्म॰। कुलाचलभेदे ऋक्षनामके पर्वते।

ऋक्षराज पु॰ ऋक्षाणां राजा त॰ टच्। जाम्बवति, चन्द्रे च

ऋक्षवत् पु॰ ऋक्षा सन्त्यस्मिन् मतुप् मस्य व। नर्म्मदातीरस्थे पर्वतभेदे।

ऋग्वेद पु॰ ऋक्प्रधानो वेद। देवदैवत्ये स्वनामख्याते वेदभेदे

ऋच स्तुतौ तुदा॰ पर॰ सक॰ सेट्। ऋचति आर्चीत्।

ऋच् स्त्री॰ ऋच् क्विप्। अर्थवशेन नियताक्षरपादयुते वेदांशे।

ऋच्छ मोहे मूर्त्तौ गमने च तुदा॰ पर॰ सक॰ अक॰ च। सेट्। ऋच्छति आर्च्छीत्। आनर्च्छ। [आनर्जे

ऋज गतौ अर्जने च भ्वा॰ आत्म॰ सक॰ सेट्। अर्जते आर्जिष्ट

ऋजीष न॰ ऋज-ईषन् किच्च। भर्जनपात्रे कटाहादौ। धने, नरकभेदे च।

ऋजु त्रि॰ ऋज-उ। सरले। स्त्रियां वा ङीप् ऋज्वी ऋजु।

ऋण गतौ तना॰ उभ॰ सक॰ सेट्। अर्णोति ऋणोति, ऋणुते आर्णीत् आर्णिष्ट।

ऋण न॰ ऋ-क्त नि॰ नत्वम्। अधमर्णेन उत्तमर्णात् पुनर्देयत्वेनाभ्युपगम्य गृहीते धने, (धार) जले, दुर्गे, दुर्गभूमौ च। देवर्षिपितृगणोद्देशेन यथाक्रम यज्ञवेदाध्ययनपुत्रोत्पादनरूपे ऽवश्यकार्ये तत्ते ऋणमन्त्यमवेहीति रघुः।

ऋणमत्कुण पु० इदम् ऋणं मम देयमिति कुणति अभ्युपगम्य शब्दायते ऋण+अस्मद्+कुण क। लग्नके प्रतिभुवि (जामिन)

ऋणमार्गण ऋणं परकीयमृणमात्मीयत्वेन मार्गयति चुरा० मार्ग-ल्युट्। प्रतिभुवि। (जामिन)।

ऋणमुक्ति स्त्री० मुच क्तिन् ६त०। ऋणशोधने।

ऋणादान न० ऋणस्यादानम्। उत्तमर्णेनाधमर्णात् दत्तधनतुल्यधनस्य सवृद्धिकग्रहणे अष्टादशव्यवहारमध्ये व्यवहारभेदे। "तेषामाद्यमृणादान"मित्यादि स्मृतिः।

ऋणिन् पु० त्रि० ऋण+मत्वर्थीय इनि। ऋणवति अधमर्णे ऋणपक्षे 'ऋणी न स्याद् यथा पिते'ति स्मृतिः। [ध स्त्रिष

ऋत गतौ (सौत्र) पर० सक० सेट्। ऋतीयते आर्तीयिष्ट

ऋत न० ऋ-क्त। 'ऋतमुञ्छशिलं ज्ञेय'मित्युक्ते ब्राह्मणस्य उपजीव्यवृत्तौ मोक्षे, जले, कर्म्मफले "ऋतं पिबन्ता"विति श्रुतिः सुप्रिये वाक्ये मानसादिसत्ये च। दीप्ते, सत्ये, पूजिते च त्रि०।

ऋतधामन् पु० ऋतं सत्यं धाम यस्य। परमेश्वरे, विष्णौ च।

ऋतम् अव्य० ऋत कमि। सत्यमित्यर्थे।

ऋतम्भरा स्त्री० ऋतम् बिभर्त्ति ऋतम्+भृ-खच्। योगशास्त्रप्रसिद्धे विपर्य्यासशून्ये यथार्थज्ञानरूपे चित्तवृत्तिभेदे।

ऋति स्त्री० ऋ क्तिन्। गतौ स्पर्द्धायाम् निन्दायाञ्च। कर्म्मणि क्तिन्। वर्त्मनि मङ्गले च।

ऋतु पु० ऋ तु किच्च। शिशिर पुष्पसमयो ग्रीष्मो वर्षा शरद्धिम। माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादिति इत्युक्तेकालभेदे। शोणितदर्शनयुक्ते गर्भधारणयोग्ये स्त्रीणामवस्थाभेदे "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" इति मनुः। दीप्तौ मासे च। [अवश्यकर्त्तव्ये।

ऋतुप्राप्त त्रि० ऋतुफलयोग्य पुष्पादि प्राप्तोऽनेन, फलेग्रहौ

ऋतुमती स्त्री० ऋतु+मतुप्। रजस्वलायां स्त्रीधर्म्मिण्याम्।

ऋतुराज पु० ऋतूनां राजा ६त० टच् समा०। वसन्ते ऋतौ।

ऋतुवृत्ति पु० ऋतूनां वृत्तिः पर्य्यायेणावर्त्तना यत्र। वत्सरे।

ऋते अव्य० ऋत (सौत्र) के। वर्ज्जने विनार्थे च।

ऋत्विज् ऋतु+यज-क्विन्। याजके, 'अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते" इति मनूक्ते आतुरेयवैदिकादिकर्म्मकरे।

ऋद्ध न० ऋध-क्त। पक्वमर्द्दितधान्ये सिद्धान्ते च। समृद्धे सम्पन्ने च त्रि०।

ऋद्धि स्त्री० ऋध क्तिन्। वृद्धौ, देवभेदे, औषधिभेदे च।

ऋध वृद्धौ दिवा० स्वा० च पर० अक० सेट्। ऋध्यति ऋध्नोति आर्द्धीत् आर्द्धत्। [तुदा० पर० सेट्। ऋफति आर्फीत्।

ऋफ दाने हिंसायां निन्दायां युद्धे च सक० श्लाघायां अक०

ऋभु पु० अरि स्वर्गे अ दनौ वा भवति ऋ+भू-डु। देवे।

ऋभुक्ष पु० ऋभवो देवाः क्षियन्ति वसन्त्यत्र क्षि+ड। स्वर्गे वज्रे इन्द्रे च। [स्वादौ ऋभुक्षा ऋभुक्षाणौ।

ऋभुक्षिन् पु० ऋभुक्ष वज्रं स्वर्गो वाऽस्यास्ति इनि। इन्द्रे

ऋष गतौ तुदा० पर० सक० सेट्। ऋषति आर्षीत्।

ऋषभ पु० ऋष अभक्। वृषभे, औषधिभेदे, मुनिभेदे च।

ऋषभतर पु० तनु ऋषभः तनुत्वे तरप्। भारवहने मन्दशक्तौ वृषभे। जातित्वेन स्त्रियां ङीप् ऋषभतरी।

ऋषभध्वज पु० ऋषभो ध्वजो यस्य। शिवे। वृषभध्वजोऽप्यत्र

ऋषभी स्त्री० ऋषभ इवाचरति ऋषभ+क्विप्-अच्। पुमाकारायां स्त्रियां, शूकशिम्ब्याम् शिरालतायाञ्च।

ऋषि पु० ऋष-इन् किच्च। वेदे, मन्त्रद्रष्टरि मुनौ, अनुष्ठेयकर्म्मज्ञापकस्वलक्षणाचार्य्ये, गोत्रप्रवरप्रवर्त्तके मुनौ च।

ऋषियज्ञ पु० ऋष्युद्देश्यको यज्ञः। ब्रह्मयज्ञे वेदाध्ययने।

ऋष्टि स्त्री० ऋष-करणे क्तिन्। उभयतो धारायुक्ते खड्गे।

ऋष्य पु० ऋष क्यप्। मृगभेदे। [छगले

ऋष्यगन्धा स्त्री० ऋष्यस्य गन्ध इव गन्धो यस्याः। वृद्धदारके

ऋष्यप्रोक्ता स्त्री० ऋषिभिः प्रोक्ता। शतावर्य्याम्, अतिबलायाम्, शूकशिम्बीवृक्षे च।

ऋष्यमूक पु० ऋष्यो मृगो मूको यत्र। 'ऋष्यमूकस्तु पम्पायाः पुरतः पुष्पितद्रुमः' इति रामायणोक्ते पर्वतभेदे।

ऋष्यशृङ्ग पु० ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गमस्य। विभाण्डकपुत्रे लोमपादराजकन्यायाः शान्तायाः पत्यौ।

## ॠ

ॠ गतौ जुहो० पर० सक० सेट्। इयर्त्ति अरीत्। आर आरतुः।

## ए

ए अव्य० इण्-विच्। दयायां, स्मृतौ आमन्त्रणे, असूयायां, आह्वाने च। विष्णौ पु०।

एक त्रि० इण् कन्। एकशब्दप्रथमसंख्यान्विते, केवले, मुख्ये, अन्यार्थे श्रेष्ठे, अद्वितीये, समाने, अल्पे च।

एकक त्रि० एक+कन्। असहाये। [परस्परकारके शालेच।

एककार्य्य त्रि० एकं कार्य्यं प्रयोजनमस्य। एकमुद्दिश्यकार्यकरे,

एकगुरु पु० एकोऽभिन्नो गुरुर्यस्य। समानाध्यापके सतीर्थ्ये।

एकचक्र न० एकं चक्रं यस्य। हरिरथे। सूर्यरथे पु०।

पुरोभेदे स्त्री०यत्र वकासुरवधार्थं पाण्डवाः स्थिताः [स्मर्यादौ

एकचर त्रि० एक सन् चरति पचाद्यच्। एकाकिचारिणि

एकचर्य्या स्त्री० एकस्य चर्य्या चर,यत्। असहायगमने।

एकजाति पु० एका जातिर्जननं यस्य। शूद्रे। एकजन्माप्यत्र

एकजातीय त्रि० एक- प्रकारो विधा यस्य प्रकारार्थे जातीयर्। तुल्यप्रकारा।

एकतम त्रि० एक+डतमच्। बहूनां मध्ये जात्यादिभिर्निर्द्धार्य्ये एकस्मिन्। यथा भवतामेकतमः साधुः।

एकतर त्रि० एक+डतरच्। द्वयोर्मध्ये जात्यादिभिर्निर्द्धार्य्ये एकस्मिन्। यथा, भवतोरेकतरः साधुः।

एकतान त्रि० एकं तानयति चु० तन-श्रद्धायाम् अण्। अनन्यचित्तवृत्तौ एकविषयासक्तचित्ते तद्गतचित्ते च।

एकताल पु० एक' समस्तालोमानं यत्र। समन्वितलये, विच्छेदरहिते च नृत्यगीतादौ।

एकत्र अ० एक+त्रल्। एकस्मिन्नित्यर्थे। [ध्यावर्त्तके च।

एकत्व न०एक-त्व। ऐक्ये, अभेदे,साम्ये, सायुज्यमुक्तौ, भेद-

एकदण्डिन् पु० एकः केवलः शिखायज्ञोपवीतादिशून्यो दण्डोऽस्यास्ति। "यदा हृदाध्ययमितं परंब्रह्म सनातनम्। तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेदित्युक्तलक्षणे परिव्राजके।

एकदन्त पु० एको दन्तोऽस्य। गणेशे। एकदंष्ट्रोऽप्यत्र।

एकदा अव्य० एक+काले दाच्। एकस्मिन् काले इत्यर्थे।

एकदृक् त्रि० एका दृक् यस्य। एकनेत्रे काणे। काके पु०। एकं सर्व्वमभिन्नं पश्यति दृश-क्विप्। शिवे।

एकदेश पु० कर्म्म०। अवयवे, प्रतीके।

एकधा अव्य० एक+प्रकारे धाच्। एकप्रकारे "एकधा बहुधा चैव दृश्यते जलचन्द्रवदि"ति श्रुतिः।

एकधुरा स्त्री० एका धूः कर्म्म० अच्। एकभारे। तद्वहतीत्यर्थेऽण् तस्य लुक्। एकभारवाहके गवादौ। [वाहके गवादौ।

एकधुरावह त्रि० एकधुरां वहतीति वह-अच्। एकभार-

एकधुरीण त्रि० एकधुरां वहतीति ख। एकभारवाहके गवादौ

एकपक्ष त्रि० एक पक्षो यस्य। सहाये।

एकपत्नी स्त्री० एक' समान' अनन्योवा पतिर्यस्याः ङीप् नुक् च। सपत्न्यां पतिव्रतायाञ्च। यो धर्म्म एकपत्नीनामिति मनु'

एकपद न० एकं पदं पदगतिर्योग्यकालो यत्र। एकपदगतियोग्यकाले तत्काले। कर्म्म०। एकस्मिन् पदे। मिथुनि स मकपदे इति साप। [एकस्मिन् पदि।

एकपदी स्त्री० एकः पादोऽस्याः। कुम्भपदी ङीप् पद्भावः।

एकपदे अव्य० एक+पद-के। अकस्मादित्यर्थे 'कथमेकपदे निरागस'मिति कुमारः।

एकपिङ्ग पु०एकं नेत्रं पिङ्गमस्य। कुबेरे स हि कामवं गौरीं निरीक्ष्य तच्छापात् नष्टनेत्रो जातः पुनः शिवप्रसादात् तत्त्वरूप- पिङ्गलत्वं जातमिति पुराणकथा। एकपिङ्गलोऽप्यत्र

एकभक्तव्रत पु न० 'दिवार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचने"त्युक्ते व्रतभेदे।

एकयष्टिका स्त्री० एका यष्टिर्हारावली यस्याः; ब० कप्। (एकनर) एकावलीहारभेदे।

एकराज् पु० एको राजते क्विप्। सार्व्वभौमे।

एकवचन न० वच-ल्युट् इत०। व्याकरणोक्ते एकसंख्यावाचके स्वादौ तिङादौ च। [गवि।

एकवर्षिका स्त्री० एको वर्षो वय'कालो यस्याः। एकहायन्यां

एकविंशति स्त्री० एकाधिका विंशतिः। एकाधिकविंशतिसंख्यायां तद्वति च। एकविंशदादयश्चैवम्। [भेदे च।

एकवीर पु० एको वीरः कर्म्म०। महावीरे अतिवीरे वृक्ष-

एकशफ पु०एक' शफोऽस्य। एकखुरयुतेषु खरादिषु "खरो ऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफा" इत्युक्तेषु पशुषु।

एकशेष पु० एकः शेषो यत्र। व्याकरणप्रसिद्धे द्वन्द्वस्थानीये वृत्तिभेदे। यथा घटः घटो इत्यत्र घटौ।

एकश्रुति स्त्री०एका अभिन्ना उदात्तादिशून्या श्रुतिरुच्चारणम्। प्रातिशाख्ये प्रसिद्धे उदात्तानुदात्तस्वरितानामविभागेनोच्चारणे।

एकसर्ग त्रि० एकस्मिन् सर्गो निश्चयो यस्य। अनन्यमनसि एकाग्रचित्ते। [एकवर्षवयस्कायां गवि।

एकहायनी स्त्री० एको हायनो वयोमानं यस्याः ङीप्। एक-

एकाकिन् त्रि० एक+आकिनच्। असहाये।

एकाक्ष पु० एकमक्षि यस्य षच् समा०। काके। काणे त्रि०।

एकाग्र त्रि० एकमग्रं विषयो यस्य। विषयान्तरव्यावृत्त्या एकमात्रवस्तुके विषयरहितध्याने च। स्वार्थे ष्यञ् ऐकाग्र्यमप्यत्र

एकादश त्रि० एकादशन्+पूरणे डट्। एकादशानां पूरणीभूते। [मल्लादुर्गे।

एकादशन् त्रि० एकश्च दश च आत्वम्। एकाधिकदश-

एकादशद्वार न० एकादश द्वाराणि यत्र। शरीराख्ये पुरे तत्र हि नासिकाश्रोत्रनेत्राणां द्वयं द्वयमिति षट् मुखम्नाभि, ब्रह्मरन्ध्रम्, पायूपस्थ इति त्रयाणि सन्ति, ब्रह्मरन्ध्रेण सह एकादशद्वाराणि सन्ति।

एकादशी स्त्री० एकादशानां पूरणी। तत्सङ्ख्यान्विता

दिते एकादशपूरण्या तिथौ । यत्र हि हरिवासरव्रतम्

एकान्नविंशति स्त्री० एकेन न विंशतिः एक+नञ् आदुक् । एकोनविंशतिसंख्यायां तद्युक्ते च । एवमेकान्नत्रिंशदादयः ।

एकान्त त्रि० एकः अन्तो निश्चयो यत्र । अत्यन्ते ।

एकान्ततस् अव्य० एकान्त+तसिल् । अव्यभिचारिणि ।

एकान्न त्रि० एककालमेवान्नं भक्ष्यं यत्र । एकभक्तव्रते ।

एकान्नविंशति स्त्री० एकेन न विंशतिः । एक+न+आदुक् दस्य वा न । एकोनविंशतिसंख्यायां, तद्युक्ते च । एवमेकान्नत्रिंशदादयः [गवि ।

एकाब्दा स्त्री० एकः अब्दो वयोमानं यस्याः । एकहायन्यां

एकायन त्रि० एकमयनं विषयो यस्य । विषयान्तरव्यावृत्तचित्ते एकाग्रमनस्के । कर्म० एकस्थाने । [एकाग्रचित्ते ।

एकायनगत त्रि० एकायनमेकविषयं मनोद्वारा गतः ।

एकावली स्त्री० एका अद्वितीया आवली माला मणिश्रेणी । (एकनर) हारभेदे अर्थालङ्कारभेदे च ।

एकाश्रय त्रि० एक आश्रयो यस्य । अनन्यगतिके ।

एकाष्ठीन पु० एकमस्थि काण्डं तत्तुल्यं लाति ला-क पत्व दीर्घौ च । वकष्ठचे पाठायां स्त्री० । [पुस्तम् । एकादिने ।

एकाह पु० एकमहः द्विगु० अच् । अह्नाहान्ताः पुंसीति

एकाहगम त्रि० एकाहेन गम्यते गम घञ् । एकाहगम्ये देशे

एकाहार पु० एकस्मिन् दिवसे एक आहारो भोजनम् । एकदिनस्थैकवारभोजने । ब० । तद्वति त्रि० । [एकत्वे

एकीभाव पु० अनेकस्य एकस्य भावः एक+च्वि भू-उप० घञ् ।

एकीय त्रि० एक+छ । एकपक्षभवे, एकसम्बन्धिनि च ।

एकोद्दिष्ट न० एक उद्दिष्टो यत्र । एकोद्देशेन विहिते श्राद्धे "एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं तदुच्यते" इति स्मृतिः । तच्च प्रेतश्राद्धं तत्तुल्यविधिकं सांवत्सरिकं श्राद्धमिति ।

एज कम्पने भ्वादि० आत्म०अक० सेट् । एजते ऐजिष्ट ।

एज दीप्तौ भ्वादि० पर०सक० सेट् । एजति ऐजीत् ।

एठ बाधने भ्वादि०आत्म०सक० सेट् । एठते ऐठिष्ट ।

एड पु० इल स्वप्ने अच् डस्य लः मेषे । बधिरे त्रि० ।

एडक पु० इल ण्वुल् डस्य लः । वनच्छागले स्थूलशृङ्गे मेषे मेषमात्रे च जातित्वात् स्त्रीत्वे अजादित्वात् टाप् एडका ।

एडगज पु० एडो मेषो गजो भक्ष्यत्वादस्य । दद्रुघ्ने (दादमर्द्दन)

एडमूक त्रि० श्रुतिरहितएडोबधिरश्चासौ मूकः । वाक्श्रुतिशक्तिरहिते ।

एडु(डू)क न० ईड (ज)उक नि० गुणः । हिंसायाम् । अन्तर्न्यस्तास्थियुक्ते कुड्ये, भित्तौ च ।

एण पु० इ-ण तस्य नेत्वम् । कृष्णवर्णे मृगे । स्त्रियाम् एणी

एणतिलक पु० एणः तिलकमिव चिह्नं यस्य । मृगाङ्के चन्द्रे ।

एत त्रि०पु० इण् तन् । कर्बूरवर्णे । तद्वति त्रि० । स्त्रियामेनी च

एतद् त्रि० इण्-अदि तुक् च । पुरोवर्त्तिनि बुद्धिस्थे ।

एध वृद्धौ भ्वा० आत्म०अक० सेट् । एधते ऐधिष्ट । [काष्ठे

एध पु० इध्यतेऽग्निरनेन इन्ध-करणे घञ् नि० नलोप गुणौ ।

एधस् न० इध्यतेऽग्निरनेन इन्ध असि नि० नलोप गुणौ । काष्ठे

एधित त्रि० एध-क्त । वृद्धियुक्ते 'मधुमन्त्रद्विषमेधित'ति भाव ।

एनस् न० इण असुन् नुट् च । पापे, अपराधे च ।

एरका स्त्री० इण-रक । निर्ग्रन्थितृणभेदे ।

एरण्ड पु० ईरयति वायुम् मलं वा ईर-अण्डच् नि० गुणश्च । वृक्षभेदे (एरंडी) । (भेरण्डा)

एरण्डपत्रिका स्त्री० एरण्डस्य पत्रमिव पत्रमस्याः ब० संज्ञायां कन् अत इत्वम् । दन्तीवृक्षे ।

एला स्त्री० इल-अच् । एलालतायाम् (एलाची) ।

एलापर्णी स्त्री० एलाया पर्णमिव पर्णमस्याः । रास्नायाम् (काटा यामरक्त) ।

ए(ल)लावालुक न० एलेव वलते वल उण् संज्ञायां कन् । वा ह्रस्वः । गन्धद्रव्यभेदे ।

एव अव्य० इण्-वन् । सादृश्ये अनियोगे, अवधारणे चार्-नियोगे, विनिग्रहे, परिभवे ईषदर्थे च । विशेष्यसङ्गत अन्ययोगव्यवच्छेदे । यथा पार्थ एव धनुर्द्धरः' इत्यादौ पार्थान्यपदार्थे प्रशस्तधनुर्द्धरत्वम् व्यवच्छिद्यते । विशेषण सङ्गत अयोगव्यवच्छेदे यथा शङ्खः पाण्डुर एवेत्यादौ शङ्खे पाण्डुरत्वायोगो व्यवच्छिद्यते । क्रियासङ्गत अत्यन्तायोगव्यवच्छेदे यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते । तद्वति त्रि० ।

एवम् अव्य० इण् वम् । सादृश्ये, इत्थंप्रकारे, 'एवंवादिनि देवर्षाविति' कुमार अवधारणे, स्वीकारे, प्रश्ने च ।

एष गतौ भ्वा० आत्म० सक० सेट् । एषते ऐषिष्ट ।

एषण पु० एष ल्यु । लौहमये बाणे । युच् । इच्छायां पुत्र-लोकधनकामनायां स्त्री० । ल्युट् । स्वर्णकारादीनां तुलासाधने न० । विस्फोटभेदके अस्त्रभेदे स्त्री० ङीप् । स्वार्थे कन् । एषणिकाप्यत्र ।

## ऐ

ऐकागारिक त्रि० एकमसहायमगारं प्रयोजनमस्य ठक् । चौरे

ऐकाग्र्य त्रि०एकाग्र+स्वार्थे ष्यञ् । एकाग्रचित्ते अनन्यासक्तचित्ते

ऐकात्म्य न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ् । ऐक्ये एकस्वरूपत्वे ।

ऐकान्तिक त्रि० एकान्तं व्याप्नोति ठञ् । अव्यभिचारिणि, अवश्यं भाविनि । स्त्रियां ङीप् । ऐकान्तिकी हरेर्भक्तिरत्यन्तायेन कल्पते इति पुराणम् ।

ऐकाह्निक त्रि० एकाह्ने भव कालात् ठञ् । एकदिननिष्पन्ने । एकाहमतीत्य भव । एकाहानन्तरं जायमाने ज्वरे दिने दिने एकसमये जायमाने ज्वरे च पु० । ऐकाह्निक ज्वरं हन्ति तस्य नामानुकीर्त्तनमिति ज्वरनाशकमन्त्र ।

ऐक्य न० एकस्य भव एक+ष्यञ् । अभेदे एकरूपतायाम् ।

ऐक्षव त्रि० इक्षोर्विकारः इक्षु-अण् । इक्षुविकारे गुडादौ । 'ऐक्षवं गुडवर्ज्जित'मिति स्मृति ।

ऐक्ष्वाक पु० इक्ष्वाकोर्गोत्रापत्यम् अण् नि० । सूर्य्यवंश्ये नृपे

ऐङ्गुद न० इङ्गुदा फलम् फले अण् तस्य न लुक् । इङ्गुदी वृक्षफले ।

ऐण त्रि० एणस्य कृष्णमृगस्येदम् अण् । कृष्णमृगचर्म्मादौ ।

ऐणेय त्रि० एण्या इदम् ढक् । कृष्णमृगीचर्म्मादौ ।

ऐतिह्य न० इतिह पारम्पर्य्योपदेशे अनिर्दिष्टप्रवक्तृकोपदेश इति यावत् स्वार्थे ष्यञ् । पारम्पर्य्योपदेशे । यथात्र वटे यक्ष प्रतिवसतीत्यादि परम्परोपदेशमात्रम् । न तु केनाप्येतदुपलभ्य कथितम् ।

ऐन्दव न० इन्दुर्देवताऽस्य । मृगशिरोनक्षत्रे चन्द्रसम्बन्धिनि त्रि० । सोमराज्याम् स्त्री० ङीप् ।

ऐन्द्र त्रि० इन्द्रस्येदम् इन्द्र+अण् । शक्रसम्बन्धिनि । ज्येष्ठा नक्षत्रे न० । स्त्रियां ङीप् । 'ऐन्द्री तमहरीश्वर'मिति दुर्गादेवतार्थेऽण् । इन्द्रदेवताके त्रि० । प्राच्यां दिशि स्त्री० ।

ऐन्द्रजालिक त्रि० इन्द्रजालेन चरति । मायाकारके । (बाजिकर)

ऐन्द्रि पु० इन्द्रस्यापत्यम् इञ् । इन्द्रपुत्रे, जयन्ते, अर्ज्जुने, सुग्रीववानरे, काके च । [धकाष्ठे ।

ऐन्द्रियक त्रि० इन्द्रियेण प्रकाश्यं वुञ् । इन्द्रियजन्यप्रत्यक्षेण

ऐर न० इरा अन्नं तद्विकारः । अन्नमये ब्रह्मलोकस्थे सरसि च ।

ऐरावण पु० इरा सुरा वनमुदकं यत्र पूर्व्वपदादिति णत्वम् तत्र भव अण् । इन्द्रगजे ऐरावते ।

ऐरावत पु० इरा जलानि सन्त्यस्य इरा+मतुप् मस्य वः इरावान् समुद्रस्तत्र भव अण् । समुद्रजाते इन्द्रगजे ।

ऐरावती स्त्री० इरा सन्त्यस्य मतुप् मस्य वः इरावान् तत्र समुद्र भवा अण् । विद्युति ।

ऐरिण न० इरिणे ऊषरे भव । लवणभेदे । (पाङ्गा)।

ऐरेय न० इरा अन्नम् तत्र भव ढक् । अन्नभवे मद्ये ।

ऐल पु० इलाया अपत्यम् । बुधपुत्रे पुरूरवोनामके नृपतौ ।

ऐलविल पु० इलविलाया अपत्यम् अण् । कुवेरे ।

ऐशानी स्त्री० ईशानो देवताऽस्याः । उत्तरपूर्व्वदिशि ।

ऐश्वर्य्य न० ईश्वरस्य भाव । अणिमाद्यष्टविधविभूतिभेदे ।

ऐषमस् अव्य० अस्मिन् वत्सरे नि० । वर्त्तमानवत्सरे । [ज्ञात

ऐहलौकिक त्रि० इह लोके भव ठञ् द्विपदवृद्धि । इहलोक

ऐहिक त्रि० इह भव कालाट्ठञ् । इहलोकभवे इहलोकज्ञाते इहसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च ।

## ओ

ओक पु० उच-क नि० चस्य कः । पक्षिणि वृषले च ।

ओकस् न० उच असुन् न्यङ्क्वादित्वात् कुत्वम् । गृहे आश्रयमात्रे च । [(उकुण) केशकीटे ।

ओकोदनी स्त्री० ओक आश्रय मूर्द्धरूपम् अदनं भक्ष्यं यस्याः ।

ओखृ शोषणे, भूषणे, निवारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट् । ओखति औखीत् । [द्रुतनृत्ये च ।

ओघ पु० उच-घञ् पृषो० च । समूहे, जलवेगे, परम्परायां

ओङ्कार पु० अव मन् तस्याकारलोप, ऊठ् गुण ओम् तत्स्वरूपे कारः । प्रणवे । [ओजिजत्-त

ओज बले अद० चुरा० उभ० अक० सेट् । ओजय-ति-त

ओजस् न० उब्ज असुन् बलोपे गुण । दीप्तौ अवष्टम्भे, प्राणबले, प्रकाशे, सामर्थ्ये, ज्योतिषोक्ते प्रथमतृतीयादौ विषमराशौ, शस्त्रादिकौशले, धातुतेजसि, ज्ञानेन्द्रियाणां पाटवे, काव्यगुणभेदे, गौडरीत्याम्, वैद्यकोक्ते 'भ्रमरै फलपुष्पेभ्यो यथा सम्भ्रियते मधु । तद्वदोज शरीरेभ्यो धातु सम्भ्रियते नृणाम्' इति लक्षणे धातुरसपोषक वस्तुभेदे च । अव्य । ओजसस्तोऽप्यत्र ।

ओजिष्ठ त्रि० अतिशयेनोजस्वी ओजस्विन् इष्ठन् मतो लुक् । अतितेजस्विनि सारतमे च । [(उड्धान) भोवारे ।

ओडिका स्त्री० उ-ड तस्य नेत्वम् गौरा० ङीप् स्वार्थे क ह्रस्व ।

ओडी स्त्री० उ-ड तस्य नेत्वम् गौरा० ङीप् । (उडीधान्य) भोवारे

ओड्र पु० न० आ+ईषत् उनत्ति उन्द-रक् दस्य ड । जवापुष्पे

ओड्रपुष्प पु० ओड्रं पुष्पमस्य । जवावृक्षे ।

ओण अपनयने भ्वा० पर० सक० सेट् । ओणति औणीत् ।

ओत त्रि० आ+वे+क्त । सन्तत्याम् 'ओतम् प्रोतमिति' श्रुति । पटे दीर्घतन्तौ च ।

**ओतु** त्रि॰ अव-तुन् ऊठ् गुणः। विड़ाले।

**ओदन** पु॰ उन्द्-युच् नलोपो गुणश्च। भक्ते सिद्धान्ने।

**ओदनपाकी** स्त्री॰ ओदनस्य पाक इव पाको यस्याः ङीष्। नीलझिण्टिकायाम् ओषधिभेदे च।

**ओदनी** स्त्री॰ ओदन इवाचरति ओदन+क्विप्-ततः अच् गौरा॰ ङीष्। (वेलेडा) बलायाम्।

**ओम** अव्य॰ अव-मन् तस्यातोलोपः गुणः। प्रणवे, आरम्भे, स्वीकारे, ओमित्युक्तवतोऽथेति माघः। अनुमतौ, अपाकृतौ, अस्वीकारे मङ्गले, शुभे, ज्ञेये, ब्रह्मणि च।

**ओल** पु॰ आ-उनत्ति आ+उन्द् क नलोपे पृषो॰ ह्रस्वः। शूरणे (ओल) इति ख्याते कन्दे। आर्द्रे त्रि॰

**ओलजि** क्षेपे इदित् भ्वा॰पर॰सक॰सेट्। ओलञ्जति औलञ्जीत्

**ओलडि** क्षेपे वा चुरा॰ उभ॰ पक्षे भ्वादि॰ पर॰सक॰ सेट्। ओलण्डयति ते ओलण्डति औलिलण्डत् त औलण्डीत्।

**ओष** पु॰ उष घञ्। दाहे।

**ओषण** पु॰ उष-ल्यु। कटुरसे (झाल) इति ख्याते रसभेदे।

**ओषधि** स्त्री॰ ओषो दाहो धीयतेऽत्र। ओष+धा-कि जातिविषयत्वात् स्त्रीत्वे वा ङीष् ओषधी च। फलपाकान्ते ब्रीह्यियवादौ। [हिमालयपुरे।

**ओषधिप्रस्थ** पु॰ न॰। ओषधिप्रधानः प्रस्थः शाक॰।

**ओषधिपति** पु॰ ६त॰। चन्द्रे। ओषधीशोऽप्यत्र। [च्छेदे।

**ओष्ठ** पु॰ उष्यते उष्णाहारेण उष कर्म्मणि थन्। (ओंठ) दशन-

**ओष्ठपुष्प** पु॰ ओष्ठोपमानं पुष्पं यस्य। बन्धूकवृक्षे।

**ओष्ठी** स्त्री॰ ओष्ठ इवाचरति ओष्ठ+क्विप् ततः अच् गौरा॰ ङीष्। बिम्बफलनामके (तेलाकुचा) वृक्षे।

**ओष्ठोपमफला** स्त्री॰ ओष्ठ उपमीयतेऽनेन ओष्ठोपमं फलं यस्याः। बिम्बिकालतायाम्।

# औ

**औक्ष** न॰ उक्ष्णां वृषाणां समूहः अण् टिलोपः वृषसमूहे। वुञ्। औक्षकमप्यत्र।

**औख्य** त्रि॰ उखायां पक्वम् ष्यञ्। स्थालीपक्वे माषादौ।

**औचिती** स्त्री॰ उचितस्य भावः ष्यञ् स्त्रीत्वपक्षे षित्वात् ङीष् यलोपः। न्याय्यत्वे उचितत्वे च।

**औचित्य** न॰ उचितस्य भावः ष्यञ्। उचितस्य भावः न्याय्यत्वे

**औडुम्बर** पु॰ चतुर्द्दशसु यमेषु मध्ये यमभेदे, कुष्ठरोगभेदे च।

**औत्कण्ठ्य** पु॰ उत्कण्ठाया भावः ब्राह्म॰ ष्यञ्। उत्कण्ठायाम्

**औत्तानपादि** पु॰ उत्तानपादस्य नृपभेदस्यापत्यम् इञ्। ऐहिकभोगसाधनकर्म्मान्ते ज्योतिर्मण्डले निश्चलतया तारकारूपेण स्थिते ध्रुवनामके नृपतौ।

**औत्सर्गिक** त्रि॰ उत्सर्गं सामान्यविधिमर्हति ठञ्। सामान्यविधियोग्ये। [क्येन कृतत्वरेति रत्नावली'।

**औत्सुक्य** न॰ उत्सुकस्य भावः ष्यञ्। उत्कण्ठायाम् 'औत्सु-

**औदनिक** त्रि॰ ओदनः शिल्पमस्य ठञ्। सूपकारे।

**औदरिक** त्रि॰ उदरे प्रसितः ठक्। आद्यूने, (पेटुक) उदरमात्रपूरणापेक्षके।

**औदश्वित** न॰ उदश्विति अर्द्धजलमथिते तक्रे संस्कृतम् अण्। उदश्वित्संस्कृते द्रव्ये। तत्रार्थे ठकि औदश्वित्कमप्यत्र।

**औदार्य्य** न॰ उदारस्य भावः गुणवचनत्वात् ष्यञ्। उदारतायाम्

**औदासीन्य** न॰ उदासीनस्य भावः ष्यञ्। शुभाशुभयोरुपेक्षायाम् ताटस्थ्ये।

**औदास्य** न॰ उदास्ते उद्+आस-अच् भावार्थे ष्यञ्। वैराग्ये अनुरागशून्यतायाम् मनोयोगविरहे।

**औद्दालक** न॰ 'प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः। कुर्व्वन्ति कापिलं स्वल्पं तत् स्यादौद्दालकं मधु इत्युक्ते मधुनि

**औद्भिद** न॰ 'उद्भिदं पांशुजवणं यज्जातं भूमितः स्वयमि'त्युक्ते पांशुलवणे, विदार्य्य भूमिं निर्गता यत् महत्या धारया स्रवेत्। तत्तोयमौद्भिदं नामे'त्युक्तलक्षणे जले च। उद्भिद्य जायते जन ड उद्भिज्जः ततः स्वार्थेऽण् औद्भिज्जमप्यत्र।

**औद्वाहिक** न॰ उद्वाहकाले लब्धं ठञ्। विवाहकाले लब्धधनादौ। 'भृत्यमौद्वाहिकञ्चैवे'ति स्मृतिः।

**औपचारिक** पु॰ उपचार एव विनयादित्वात् स्वार्थे ठक्। उपचारार्थे।

**औपनिषद** पु॰ उपनिषत्स्वेव वेद्यः अण्। वेदान्तमात्रवेद्ये परमात्मनि 'तं त्वौपनिषदं पुरुषमि'ति श्रुतिः।

**औपनीविक** त्रि॰ नीविसमीपे व्याप्तं ठक्। नीविसमीपे व्याप्ते। 'औपनीविकमरुन्ध किल स्त्री'ति माघः।

**औपम्य** न॰ उपमैव चतुर्वर्णा॰ स्वार्थे ष्यञ्। सादृश्ये।

**औपयिक** त्रि॰ उप+अय घञ् उपायस्तेन लब्धः ठक् ह्रस्वश्च। उपायलब्धे, युक्ते न्यायागतवस्तुनि च।

**औपसर्गिक** पु॰ उपसर्गेण निष्पादितः ठञ्। वातादिदोषविघातजाते रोगभेदे।

**औरभ्र** न॰ उरभ्रस्य मेषस्येदम् अण्। मेषादिलोमजाते कम्बले

**औरभ्रक** न॰ उरभ्राणां समूहः वुञ्। मेषसमूहे।

**औरस** पु॰ उरसा निर्मितः अण्। "सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम्। औरसः स विज्ञेयः" इत्युक्तलक्षणे पुत्रे।

और्द्ध्वदेहिक त्रि० ऊर्द्ध्वो देहः प्रेतदेहः तत्र भवं तस्मै देयं वा श्राद्धादि ठक्। मृतदिनमारभ्य सपिण्डीकरणान्तं क्रियमाणे जलदानश्राद्धादिरूपे कर्म्मकलापे। अनुशतादित्वात् द्विपदवृद्धौ और्द्ध्वदैहिकमप्यत्र।

और्व पु० उर्वस्यापत्यम् अण्। वाडवानले तस्यौर्व्वमुनिजातत्वात् तत्स्थानश्च भूगोलस्य दक्षिणसीमायाम्। उर्व्वां भवः। पांशुलवणे।

औलूक न० उलूकानां समूहः अण्। पेचकसमूहे।

औलूक्य पु० वैशेषिकदर्शनकारके कणादमुनौ तच्छास्त्रवेत्तरि च।

औशनस न० उशनसा शुक्रेण प्रोक्तम् अण्। शुक्रप्रोक्ते उपपुराणादौ दण्डप्रणयनरूपे शास्त्रे च।

औशीर न० वश-ईरन् किच्च ततः प्रज्ञाद्यण्। सपुदितयोः शय्यापीठयोः।

औषध न० ओषधौ भवं अण्। रोगनाशके ओषधिभवे द्रव्ये, रोगहारके द्रव्यमात्रे च।

औष्ट्र न० उष्ट्रस्येदम् अण्। उष्ट्रदुग्धादौ।

औष्ट्रक न० उष्ट्राणां समूहः वुञ्। उष्ट्रसमूहे। [गोदौ

औष्ठ्य त्रि० ओष्ठे भवः यत्। ओष्ठस्थानोच्चार्य्यमाणे उवर्णपव-

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते शब्दस्तोममहानिधौ

स्वरवर्णादिकाः शब्दाः समाप्ताः।

औंतत्सत्।

# क

क पु० कै शब्दे कच दीप्तौ वा ड। ब्रह्मणि, वायौ आत्मनि, यमे दक्षप्रजापतौ सूर्य्ये अग्नौ विष्णौ, काले कामग्रन्थौ, राजनि, मयूरे देहे मनसि, धने, प्रकाशे, शब्दे च। सुखे शिरसि, जले रोगे च न०।

कंस पु० कम स। उग्रसेनसुते नृपे श्रीकृष्णमातुले। तैजसद्रव्ये, कांस्ये (ताम्ररङ्गमिश्रणजनितधातुद्रव्ये। (कासा) स्वर्णरजतादिनिर्मितपानपात्रे। आढक इति प्रसिद्धे परिमाणे च अस्त्री०। पृषो० तालव्यान्त इति केचित्।

कंसक न० कंसादिव क जलं यस्मात् ब०। (हीराकस) इति प्रसिद्धे नेत्रौषधौ तत्प्रयोगाद्धि अग्निसंयोगेन कंसादिव चक्षुरादितो जलं स्रवति। [जातिभेदे

कंसकार पु० कंस+कृ-अण् उप०। (कासारी) इति प्रसिद्धे

कंसजित् पु कंस+जि-क्विप् ३त०। कंसनृपजयकारिणि श्रीकृष्णे

कंसहन् पु० कंस+हन् क्विप् ३त०। कंसदैत्यघातके श्रीकृष्णे।

कंसाराति पु० कंस+अराति ६त०। कंसनृपशत्रौ श्रीकृष्णे।

कंसास्थि न० कंस अस्थीव उपमितसमास। शुक्लतयाऽस्थिसदृशे (कासा) इति प्रसिद्धे धातुभेदे।

कक इच्छायाम् भ्वादि० आत्म० सक० सेट। ककते। अककिष्ट।

ककि गतौ भ्वा० इदित् आत्म० सक० सेट्। कङ्कते। अकङ्किष्ट।

ककुत्स्थ पु० ककुत्ति असुरवधार्थमिन्द्रेण प्रार्थित सन् वृष रूपधरस्य इन्द्रस्य ककुदि पृष्ठभागे तिष्ठतीति ककुत्+स्था-क। सूर्य्यवंशीयनृपभेदे यदपत्यतया काकुत्स्थेति संज्ञा भाज सूर्य्यवंशीया अभवन्।

ककुद् अस्त्री० क सुखं कौति कुशब्दे क्विप् तुक् च तस्य द। वृषस्कन्धस्थस्यमांसपिण्डाकारे (झुड) इति ख्याते वृषाङ्गे, श्वेतच्छत्रादौ नृपचिह्ने प्रधाने पर्वताग्रभागे च।

ककुद अस्त्री० कस्य देहस्य सुखस्य वा कुं भूमिं ददाति दा क। (झुड) इति ख्याते वृषाङ्गे, प्रधाने, नृपचिह्ने, छत्रादौ पर्व्वताग्रभागे च।

ककुद्मत् पु० ककुदस्यास्तीति मतुप् झयन्तत्वेऽपि यवादित्वात् न मस्य व। वृषे, वृषोषधिविशेषे च। ककुदिव मांसपिण्डमस्यास्तीति मतुप् ङीप। कन्यायाम् स्त्री०।

ककुन्दर न० कस्य शरीरस्य (पृष्ठदेशस्य) कुं भूमिं दारयतीति कक् दृ-णिच-अच पृषो०। पृष्ठवंशाधःस्थगर्त्ताकारे कूपके

ककुभ् स्त्री० क वात स्कुभ्नाति स्कुन्भ क्विप् पृषो०। दिशि, शोभायाम्, चम्पकमालायाम्, शास्त्रे, रागिणीभेदे च।

ककुभ पु० क वातं स्कुभ्नातीति क पृषो०। वीणाङ्गे, स्वरगाम्भीर्य्यसम्पादनार्थमधोवद्धालाबुमयभाण्डे। कस्य वातस्य कुं भूमिं भात्यस्मात् ककु+भा क। विस्तीर्णशाखत्वात् वातभूमिप्रकाशके अर्जुनवृक्षे, रागभेदे च। दिशि रागिणीभेदे च स्त्री०।

कक्ख हासे भ्वादि० पर० अक० सेट्। कक्खति। अकक्खीत्।

कक्कोल पु० ककते गच्छतीति क्विप कक् कोलति सस्त्यायति अच् कोल कक चासौ कोलश्चेति कर्म०। गन्धद्रव्यभेदे (काकोल) इति वङ्गभाषा ख्याते चनकपूर. इति पाश्चात्त्ये ख्याते।

कक्कोलक न० इदमर्थे कन्। कक्कोलवृक्षजाते गन्धद्रव्ये चनकपूर इति ख्याते। तस्य कोषे फलवत्त्वात कोषफल इति प्रसिद्धि

कक्ष पु० कष-हिंसायां स। स्त्रीणाम् उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अञ्चले (आचल) लतायाम्, शुष्कतृणे, शुष्कवने च। पार्श्वभागे, राजान्तःपुरे, बाहुमूले पृष्ठदेशनिहितधौतांशुकस्यैकदेशे (काछा) वस्त्राञ्चले, हस्तिबन्धनरज्ज्वाम्, काञ्च्याम्, प्रकोष्ठके, गृहभित्तौ, साम्ये स्पर्द्धास्पदे क्षत्ररोगभेदे च (काकविराली) स्त्री०।

कक्षावेक्षक पु० कक्ष वनसुपवन सास्य स्त्रीबाहुमूल वा कक्षा राजशुद्धान्तं वावेक्षते अव-ईक्ष ण्वुल्। शुद्धान्तपालके, उद्यानपाले, रङ्गाजीवे, कवौ, जारे च। [भद्रकुलायाम।

कक्षोत्था स्त्री० कक्षात शुष्कतृणात् उत्तिष्ठति उद्+स्था-क।

कक्ष्या स्त्री० कक्षे भवा यत्। वृहतिकायाम् हर्म्यादिप्रकोष्ठे, साद्दश्ये, वस्त्रप्रान्ते, मेखलायाम् गजबन्धनरज्ज्वौ उद्योगे, परार्धबद्धकक्ष्याणां नाड्यासुद्धव पुल इति, उत्तरीय वस्त्रे च। [अकगीत्।

कग क्रियामात्रे भ्वादि० पर० सक० अक० च सेट्। कगति अकगीत्

कङ्क पु० ककि गतौ अच्। (काक) पक्षिभेदे यस्य पक्षेण शरपुङ्खं क्रियते। युधिष्ठिरे यस्य हि विराटनगरे ता संज्ञा लेभे।

कङ्कट पु० कं देहं कटति क+कट ष्ट्रन् च, ककि लौल्ये अटन् वा। कवचे। स्वार्थे कन्। कङ्कटकोऽप्यत्र। [माने च।

कङ्कण न० क शुभं कणति कन् कण अच्। करभूषणे भूषण-

कङ्कत म० ककि-अतच्। केशप्रसाधन्याम् (कांकइ)।

कङ्कतिका स्त्री० ककि-अतच् गौरा० ङीष् स्वार्थे कनि ह्रस्वे टाप। प्रसाधन्याम् (काकुइ) नागबलायाञ्च।

कङ्कती स्त्री० ककि अतच् गौरा० ङीष्। प्रसाधन्याम्।

कङ्कलोटि पु० कङ्कस्य लोटिरिव चञ्चुरस्य। मत्स्यभेदे (काकिला) अच् समा०। कङ्कलोटीऽप्यत्र।

कङ्कपत्र पु० कङ्कस्य पत्रेण पत्रं पक्षोऽस्य। पुङ्खे तत्पत्रयुक्ते शरे

कङ्कमुख पु० कङ्कस्य मुखमिव मुखमस्य। (साडाशि) संदंशे

**कटायन** न० कटस्य तृणासनस्य अयनमुत्पत्तिस्थानम्। वीरणमूले

**कटाह** पु० कटमाहन्ति आ-हन-ड। महिषीशिशौ, तैलादि पाकसाधनपात्रे, खर्परे, नरके च।

**कटि(टी)** स्त्री० कट-इन्। श्रोणिदेशे (कांकाल)। कृदिकारान्तत्वात् वा ङीप्। [वर्म्मणि च।

**कटित्र** न० कटिं त्रायते त्रै-क। काञ्च्याम् कटिवस्त्रे कटि-

**कटिल्ल** पु० कट-इल्ल। कारवेल्ले (करेला)।

**कटिसूत्र** न० कट्यां धार्य्यं सूत्रं शाक०। कटिधार्य्ये कार्पासरचिते धातुमये वा सूत्रे (घुनसी गोट)। [बद्धो धार्य्यते

**कटीतल** पु० कट्या तलमास्पदमस्य। वक्रखड्गे यतोऽसौ कटिदेशे

**कटीर** पु० कट-ईरन्। जघने कन्दरे, च। कट्या न०। संज्ञायां कन् नितम्बे। तद्वत, तीक्ष्णे, मत्सरिणि च त्रि०

**कटु** न० कट-उ। दूषणे, दुष्कार्य्ये, रसभेदे (झाल) तद्वति त्रि०। चम्पके, चीनकर्पूरे, पटोले, कटुकीलतायाञ्च स्त्री० वा ङीप्।

**कटुक** पु० कटु स्वार्थे संज्ञायां वा कन्। पटोले, सुगन्धितृणे, अर्कवृक्षे (आकन्द) कुटजवृक्षे, (कुरची) राजसर्षपे (राइसर्षा) शुण्ठीपिप्पलीमरिचरूपे त्रिकटौ न०। [लशूने च

**कटुकन्द** पु० कटु कन्दो मूलं यस्य। शिग्रुवृक्षे (सजना) आर्द्रके,

**कटुकफल** पु० कटुकं फलमस्य। कक्कोले।

**कटुका** स्त्री० कटु+संज्ञायां कन्। (कट्की) कटुरोहिण्याम्, ताम्बूल्यां राजिकायां, (राइसरषा) तिक्तालाबुके च (तितलाउ)

**कटुकी** स्त्री० कटु+स्वार्थे कन् गौरा० ङीष्। (कट्की) कटुकायाम्

**कटुकीटक** पु० कटु कीट स्वार्थे कन्। मशके। [पतङ्गे।

**कटुक्वाण** पु० कटु सोच्चं क्वाणो यस्य। (तितिर) टिट्टिभ-

**कटुग्रन्थि** पु० न०। कटुर्ग्रन्थिरस्य। पिप्पलीमूले, शुण्ठीमूले च

**कटुच्छद** पु० कटु छदं पत्रं यस्य। तगरवृक्षे (टगर)

**कटुतिक्तक** पु० कटुश्चासौ तिक्तश्चेति स्वार्थे कन्। भूनिम्बे, शणवृक्षे च कटुतुम्ब्याम् स्त्री०। टाप् अत इत्वम्।

**कटुतुम्बी** स्त्री० कर्म०। (तितलाउ) लताभेदे। कटु तुण्डं मुखमस्या ङीप् कटुतुण्डीत्यप्यत्र। [त्रिकमप्यत्र।

**कटुत्रय** न० कटूनां त्रयम्। शुण्ठीपिप्पलीमरिचानां त्रये। कटु-

**कटुदला** स्त्री० कटु दलं यस्याः। (कांकुड) कर्कट्याम्।

**कटुफल** पु० कटु फलं यस्य। पटोले। श्रीवल्लीवृक्षे स्त्री०।

**कटुभङ्ग** पु० कटु भङ्ग एकदेशो यस्य। शुण्ठ्याम्। कटुरपि भद्रं हितकारी कर्म० कटुभद्रोऽप्यत्र।

**कटुमञ्जरिका** स्त्री० कटुर्मञ्जरी यस्याः। अपामार्गे।

**कटुर** न० कटु विपाके कटुरसं राति रा-क। तक्रे।

**कटुरस** पु० कटुस्तीक्ष्णो रसो ध्वनिर्यस्य। भेके।

**कटुरोहिणी** स्त्री० कटु सती रोहति रुह-णिनि कटुकायाम्

**कटुवार्त्ताकी** स्त्री० कर्म०। श्वेतकण्टकारिकायाम्।

**कटुबीजा** स्त्री० कटु बीजं यस्याः। पिप्पल्याम्।

**कटुस्नेह** पु० कटु स्नेहः तैलादिरूपो निर्यासो यस्य। सर्षपे

**कट्टार** पु० कटौ कृतमावरणम् ऋच्छति ऋ-अण्। (काटार) अस्त्रभेदे। स्व-ण्वुल् कट्टारकोऽप्यत्र।

**कट्फल** पु० कट-क्विप् कट् फलं यस्य। (कायफल) श्रीपर्णीवृक्षे गाम्भार्य्याम् (गामार) बृहत्याम्, काकमाच्याम्, वार्त्ताक्याञ्च

**कट्वर** न० कट-ष्वरच्। तक्रे, दधिसरे व्यञ्जने च।

**कट्वी** स्त्री० कटु+गुणवचनत्वात् ङीप्। (कट्की) कटुकायाम्।

**कठ** आध्याने (उत्कण्ठापूर्व्वकस्मरणे) वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। कण्ठयति ते कण्ठति। अचकण्ठत् त अकण्ठीत्। [अकाठीत्।

**कठ** कृच्छ्रजीवने भ्वादि० पर० अक० सेट्। कठति अकठीत्

**कठ** आध्याने उत्कण्ठापूर्व्वकस्मृतौ इदित् भ्वा० आत्म० सक० सेट्। प्रायेणोत्पूर्व्व। उत्कण्ठते उदकण्ठिष्ट। [नि च।

**कठ** पु० कठ-अच्। मुनिभेदे ऋग्वेदीयशाखायाम् तच्छाखाध्यायि

**कठाकु** पु० कठ आकु। पक्षिभेदे।

**कठिञ्जर** पु० कठ-इन् कठिं कठिनं जरयति जॄ+णिच् अच्। पृषो० मुम् च। तुलस्याम् पलाशवृक्षे बर्बूरायाञ्च। [स्त्री०

**कठिन** त्रि० कठ-इनच्। क्रूरे निष्ठुरे कठोरे स्तब्धे च स्थाल्याम्

**कठिनपृष्ठ** पु० कठिनं पृष्ठमस्य। कच्छपे।

**कठिनी** स्त्री० कठिन+गौरा० ङीष्। वर्णलेखनसाधने द्रव्ये। खटिकायाम्। कठिनो विद्योतीति नैप०म् स्वार्थे कन् अल्पार्थे। [लाञ्छाच्छविरिति माघ।

**कठोर** त्रि० कठ-ओरन्। कठिने, पूर्णे च। कठोरताराधिप

**कड** भेदने रक्षणे च चुरा० इदित् उभ० सक० सेट्। कण्डयति ते अचकण्डत् त। [ण्डीत् अकण्डिष्ट।

**कड** हर्षे भ्वा० उदित् उभ० सक० सेट्। कण्डति ते अक-

**कड** मदे तुदा० पर० सक० सेट्। कडति अकाडीत् अकडीत्।

**कडक** न० कड-अच् संज्ञायाम् कन्। (कारकच) लवणभेदे।

**कडङ्गर** न० कड गिरति गृणाति वा अच् नि० मुम्। माषमुद्गादिकाष्ठे (चागडा) बुसे।

**कडङ्गरीय** त्रि० कडङ्गरमर्हति। बुसभक्षणयोग्ये गवादौ।

**कडम्ब** पु० कड-अम्बच्। शाकनालिकायाम्, (डाट) कोणे, प्रान्तभागे च।

**कडम्बी** स्त्री० कडम्बो भूयसा विद्यतेऽस्याः अर्श आद्यच् गौरा० ङीष्। (कलमी) शाकभेदे तस्याः कडम्बभूयस्त्वात्।

कडार पु० कड सेचने आरन् गस्य पकारादेश । पिङ्गलवर्णे । तद्वति त्रि० । करभकण्टककडारभासा इति माघ ।

कड्ड कार्कश्ये भ्वा० पर० अक० सेट् । कड्डति अकड्डीत् ।

कण आर्त्तस्वरे भ्वा० पर० अक० सेट् । कणति अकाणीत् अकणीत् । णिचि अचीकणत् त अचकाणत् । [यति ते

कण गतौ भ्वा०पर०सक०सेट् । कणति अका(क)णीत् । णिचि कण-

कण पु० कण निमीलने अच् । धान्यादेरतिसूक्ष्मांशे, लेशे च गौरा० ङीष् वनजीरके स्त्री० । अल्पार्थे टाप् । क्षुद्रांशे, जीरके पिप्पल्याम्, श्वेतजीरके च । [कणात् अचकाणत त

कण निमीलने चुरा० उभ०अक०सेट् । काणयति ते । अची-

कणजीरक न० कर्म० । क्षुद्रजीरके ।

कणभक्ष पु० भक्ष-अण् उप० । श्यामचटके कणादे मुनौ "कण भक्षपक्षानुकारिणः सिद्धि प्रकाशिका" । ण्वुल् कणभक्षकोऽप्यत्र

कणिक पु० कणो विद्यतेऽस्य अस्त्यर्थे ठन् । गोधूमचूर्णे, (मयदा) अतिसूक्ष्मांशे, अग्निमन्थवृक्षे च स्त्री० ।

कणित न० कण आर्त्तस्वरे क्त । पीडितानां शब्दे ।

कणिश न० कणो विद्यतेऽस्य इति कणो त श्यति शो क । शस्यमञ्जर्यां धान्यादिशीर्षे च ।

कणीयस् त्रि० कण+ईयसुन् । अत्यन्ताल्पे ।

कणे अव्य० कण-के । अभिलाषातिशये ।

कणेर पु० कण एर । कर्णिकारवृक्षे । वेश्यायां हस्तिन्याञ्च स्त्री० ।

कण्टक पु०न० कटि ण्वुल् । क्षुद्रशत्रौ, क्षुद्रशत्रौ रोमाञ्चे, मत्स्याद्यस्थ्नि द्रुमाङ्गे (काटा) "लग्नाम्बुद्यूनकर्माणि केन्द्र-सुतञ्च कण्टकमिति ज्योतिषोक्ते लग्ने, तत्र चतुर्थसप्त-मदशमस्थानेषु च । [(शिमुल) ।

कण्टकद्रुम पु० कण्टकान्वितो द्रुमः शाक० । शाल्मलीवृक्षे

कण्टकप्रावृता स्त्री० ३त० । घृतकुमार्याम् ।

कण्टकफल पु० कण्टकान्वितं फलं यस्य । पनसवृक्षे (काटाल) कण्टकिफलोऽप्यत्र । [वैगुण] तस्यापि कण्टकान्वितत्वात्

कण्टकलन्ताकी स्त्री० कण्टका यता हलाकी । वार्त्ताक्याम्

कण्टकश्रेणी स्त्री० कण्टकानां श्रेणी यत्र । कण्टकार्याम् ।

कण्टकारिका स्त्री० कण्टकान् इयर्त्ति कण्टक+ऋ-ण्वुल् स्वनामख्याते वृक्षे । फलेऽपि नुक् हरितक्यादित्वात् स्त्री० ।

कण्टकारी स्त्री० कण्टक+ऋ-अण् । कुहेलाम् । फलेऽपि तस्य नुक् हरितक्यादित्वात् स्त्री० ।

कण्टकाशन पु० कण्टकमश्नाति अश-ल्यु । उष्ट्रे ।

कण्टकित त्रि० कण्टको रोमाञ्चो जातोऽस्य इतच् । जात-पुलके "प्रीतिकण्टकितत्वच" इति कुमार ।

कण्टकिन् पु० कण्टक+इनि । मत्स्यभेदे, खर्जूरवृक्षे विक-ङ्कतवृक्षे (टङ्कची) गोक्षुरे, खदिरवृक्षे बदरवृक्षे वंशभेदे (वेड वाश) । वार्त्ताक्यां गोक्षुरिकण्टाञ्च स्त्री० ।

कण्टकिल पु० कण्टक+इलच् । (वेड वाश) । वंशभेदे । [याम्

कण्टकिलता स्त्री० कण्टकिनी लता कर्म० । (शसा) त्रपुषीलता

कण्टकी स्त्री० कण्टक+अर्शआदित्वादच् गौरा० ङीष् । वार्त्ताकीभेदे । [बृहत्याम् ।

कण्टतनु स्त्री० कटि अच् कण्टा कण्टकान्विता तनुर्यस्याः ।

कण्टदला स्त्री० कटि-अच् कण्टं दलं यस्याः । केतक्याम् ।

कण्टपत्र पु० कण्ट कण्टकान्वितं पत्रं यस्य । विकङ्कतवृक्षे ।

कण्टपत्रफला स्त्री० कण्ट कण्टकान्वितं पत्रं फलञ्च यस्याः । ब्रह्मदण्ड्याम् । [विकङ्कतवृक्षे । (टङ्कची)

कण्टपाद पु० कण्ट कण्टकान्वितं पादो मूलं यस्य । विक-

कण्टफल पु० कण्टं कण्टकान्वितं फलं यस्य । गोक्षुरे पनसे धुस्तूरे, लताकरञ्जे, एरण्डभेदे च ।

कण्टल पु० कण्ट+मत्वर्थीयो लच् । बब्बुले (बावला)

कण्टवल्ली स्त्री० कण्टा कण्टकान्विता वल्ली कर्म० । श्रीवल्लीवृक्षे

कण्टाग्नगला स्त्री० कण्टा अन्तर्गता कर्म० । नीलझिण्ट्याम्

कण्टालु पु० कटि+आलु । बृहत्या, वंशभेदे वार्त्ताक्याञ्च ।

कण्ठ पु० कण-ठ तस्य नेत्वम् कठि अच वा । ग्रीवापुरोभागे, मदनवृक्षे, समीपे, होमकुण्डाद्बाह्ये द्व्यङ्गुलिमितस्थाने च ।

कण्ठतलासिका स्त्री० कण्ठतले अश्वकण्ठस्वरूपस्थाने आसे आस ण्वुल् । अश्वपोशाख्यचर्म्मादौ ।

कण्ठाग्नि पु० कण्ठे अग्निः पाकाग्निरस्य । पक्षिणि, तस्य कण्ठाध करणमात्रेणैवाहारे पाकाद्यर्थाग्निमत्त्वात् कण्ठाग्नित्वम् । [अरिष्टे च । लते गोणीभेदे च स्त्री० ।

कण्ठाल पु० कटि-आलच् । शूरणे (ओल) युद्धे, उष्ट्रे, नौकायां,

कण्ठिका स्त्री० कठि-ण्वुल् । (एकनर) कण्ठाभरणभेदे ।

कण्ठी स्त्री० क्षुद्र कण्ठ अल्पार्थे ङीप् । अश्वकण्ठबन्धनरज्ज्वाम्

कण्ठीरव पु० कण्ठात् रवो यस्य । सिंहे, मत्तगजे, कपोते च

कण्ठेकाल पु० कण्ठे कालः सप्तम्या अलुक् । महादेवे ।

कण्डन न० कडि-ल्युट् । मुषलादिना तण्डुलादेर्निस्तुषता सम्पादने (काडान) । [कण्डनी चोदकुम्भश्चेति मनु ।

कण्डनी स्त्री० कण्ड्यतेऽनेन कडि ल्युट् । मुषले उदूखले च

कण्डिका स्त्री० कडि ण्वुल् । वेदैकदेश ।

कण्डु स्त्री० कडि-उ । गात्रघर्षणे, तत्कारके रोगे च (चुलकान) ।

कण्डु(ण्डू)र पु० कण्डुं कण्डूं वा राति रा क । कारवेल्ल-लतायाम् (करेला) मूर्वायिद्याम् (च नकुची) स्त्री० ।

कण्डू स्त्री॰ कण्डूञ् गात्रविघर्षणे कण्ड्वादित्वात् क्विप्। कण्डूयने गात्रघर्षणे। 'कपोलकण्डू'मिति कुमार।

कण्डूकरी स्त्री॰ कृ-टक् उप॰। शूकशिम्ब्याम् (आलकुशी)।

कण्डूघ्न पु॰ कण्डू हन टक्। आरग्वदे गौरसर्षपे च।

कण्डूति स्त्री॰ कण्डूय क्तिन्। कण्डूयने गात्रघर्षणे।

कण्डूयन स्त्री॰ कण्डू यक् ल्युट्। कण्डूम् गात्रघर्षणे।

कण्डूया स्त्री॰कण्डू यक् कण्डूय-अ-स्त्रीत्वात् टाप्। कण्डूम्

कण्डूल पु॰ कण्डू+लच्। कण्डकारके शूरणे। कण्डूयुक्ते त्रि॰

कण्डोल पु॰ कडि-ओल। वंशादिरचिते धान्यस्थापनपात्रे। (डोल) उष्ट्रे च। [पोका)

कण्डोघ पु॰ कण्डूनामोघो यस्मात् ५ब॰। शूककीटे (शूया-

कण्व पु॰ कण-क्वन्। मुनिभेदे। पापे न॰।

कतक पु॰ तक हासे कस्य जलस्य तको हास प्रकाशो यस्मात्। ५ब॰(निर्मली) वृक्षभेदे। यस्य फलसम्पर्कात् जलप्रसाद

कतम त्रि॰ किम्+डतमच्। बहूनां मध्ये एकस्य जातिप्रश्नेऽर्थे डतमच्। बहूनां मध्ये एकस्मिन् ज्ञा तविशिष्टे विशेषधर्म्म ज्ञानाय प्रश्ने। द्वयोर्मध्ये तदर्थे डतरच्। कतर।

कति त्रि॰ किम्+डति। सङ्ख्याभेदपरिज्ञानाय प्रश्ने।

कतिपय त्रि॰कति+अयच् पुक् च। कतिपयार्थे।

कत्तृण कुत्सितं तृणं कोः कदादेशः। तृणे (घाकुलिया) कुम्भि काया (पाना) सुगन्धितृणे च।

कत्तोय न॰ कुत्सितमीषद्वा तोयं यत्र। मद्ये।

कत्थ श्लाघायां भ्वा॰आत्म॰अक॰ सेट्। कत्थते अकत्थिष्ट।

कत्र शैथिल्ये अद॰चुरा॰उभ॰अक॰ सेट्। कत्रयति ते अचक त्रत् त। [अचीकथत् त अचकथत् त।

कथ वाक्यरचनायां अद॰चुरा॰उभ॰सक॰ सेट्। कथयति ते

कथक त्रि॰ कथ ण्वुल्। तत्त्वनिर्णयार्थं वादरूपकथाकर्त्तरि, कथोपजीविनि नाटकवर्णनकर्त्तरि च। [रमनालम्बेति माघ

कथङ्कारम् अव्य॰कथम्+कृ णमुल्। कथं कृत्वेत्यर्थे। 'कथङ्का-

कथञ्चन अव्य॰ कथम्+चन। केनापीत्यर्थे।

कथञ्चित् अव्य॰ कथम्+चित्। कथञ्चनार्थे अतियत्नेनेत्यर्थे च प्राणान् कथञ्चिदपि धारयितुमिति रसमञ्जरी।

कथम् अव्य॰ किम्+प्रकारार्थे थमु कादेश। केन प्रकारेणेत्यर्थे

कथमपि अव्य॰कथम् च अपि च द्व॰। अतियत्नेनेत्यर्थे अति- गौरवेणेत्यर्थे च। [थमु। २त॰। किंप्रकारप्राप्ते।

कथम्भूत त्रि॰ कं प्रकारं भूत प्राप्त किम्+द्वितीयान्तादपि

कथा स्त्री॰ कथ-अ। कथने, 'प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञा॰ कथा विदुः। परम्पराश्रया या स्यात् सा मताख्यायिका बुधै'रित्युक्तलक्षणे वाक्ये प्रबन्धरचनायां कादम्बर्यादिग्रन्थे, पक्षप्रतिपक्षोपन्यासेन विचारणायां, वादरूपे वाक्ये च।

कथाप्रसङ्ग पु॰ कथायां प्रसङ्गो यस्य। वावदूके। गोष्ठीवचने वातूले, विषवैद्ये 'कथाप्रसङ्गेन जनैरुदाहृतादि'ति भारवि

कद रोदने, वैक्लव्ये अक॰ आह्वाने सक॰ भ्वा॰ इदित् पर॰ सेट्। कन्दति अकन्दीत्। [अकादिष्ट। णिच्-कादयति ते।

कद विह्वलीभावे दिवा॰ आत्म॰ अक॰ सेट् घटादि। कद्यते

कदध्वन् पु॰कुत्सितोऽध्वा कदादेशः कर्म॰। कुपथे। [ल्युट्। युद्धे

कदन न॰ कद णिच्-ल्युट्। पापे, मर्द्दने,मारणे च। आधारे

कदम्ब पु॰ कद-अम्बच्। स्वनामख्याते वृक्षे। सर्षपे देवताड वृक्षे। समूहे च न॰। स्वार्थे कन्। तत्रैव न॰।

कदम्बगोलकन्याय पु॰ कदम्बपुष्पस्य गोलके यथा सर्व्वावय वेषु युगपत्पुष्पाणामुत्पत्तिस्तादृशे एकदोत्पत्तौ दृष्टान्तभेदे

कदर पु॰ कं जलं दृणाति पचाद्यच्। श्वेतखदिरे (काटावाब- ला) वृक्षभेदे च। [क्त। विडम्बिते, दूषिते च।

कदर्थित त्रि॰ कुत्सितोऽर्थः कदर्थस्तं करोतीति णिच् कर्म्मणि

कदर्य्य त्रि॰ कुत्सितोऽर्य्यः स्वामी कुगति॰। सति विभवे अदा- तरि, क्षुद्रे। 'आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पातयन्। यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृत' इत्युक्त लक्षणेऽर्थसञ्चयकारके च।

कदल पु॰ कद-कलच्। रम्भावृक्षे। अजादित्वात् टाप्। पृश्नि लतायां (चाकुलिया) शाल्मलीवृक्षे च। [पताकायां,मृगभेदे च

कदली स्त्री॰काय दल्यते त्वगादौ ज्वलवाहुल्यात्। रम्भावृक्षे,

कदलीकुसुम न॰ ६त॰। (मोचा) कदलीपुष्पे।

कदलीदण्ड पु॰६त॰। कदलीमध्यस्थे दण्डाकारे पदार्थे (थोड)

कदा अव्य॰कस्मिन् काले किम्+दा कादेश। कस्मिन् काले इत्यर्थे

कदाख्य पु॰ कुत्सिता आख्या यस्य कदादेश। (कुड) वृक्षे

कदाचन अव्य॰ कदा+चन। अनिर्द्धारिते कस्मिंश्चित् कालेऽर्थे च। कदाचित् अव्य॰ कदा+चित् कदाचनार्थे कदा- पीत्यर्थे च। [तद्वति त्रि॰।

कदुष्ण न॰कुत्सितम् ईषदुष्णं कोः कदादेश। ईषदुष्णे स्पर्शे।

कद्रु पु॰ कद-रु। पिङ्गलवर्णे। तद्वति त्रि॰ नागमातरि स्त्री॰।

कद्रू स्त्री॰ कद्रु+संज्ञायामूङ्। नागमातरि कश्यपपत्नाम्।

कद्रू(द्रु)पुत्त्र पु॰ ६त॰। सर्पे। कद्रु(द्रू) सुतादयोऽप्यत्रार्थे।

कद्वद त्रि॰ कुत्सितं वदति कु+वद-अच् कदादेश। गर्हितवा- क्यवादिनि। [अकानीत्

कन प्रीतौ अक॰ गतौ सक॰ भ्वा॰पर॰ सेट्। कनति अकनीत्

कनक न॰कन-वुन्। स्वर्णे,किंशुकवृक्षे,नागकेशरे धुस्तूरे धुस्तूरे च

**कन्याकुब्ज** पु० कन्याः कुब्जा यत्र । कान्यकुब्जदेशे तत्र हि वायुना 'कन्याशतस्य कुब्जत्वं कृतमि'ति रामायणकथा ।

**कन्याट** पु० कन्या अटयत्र घञ् । वासभवने ।

**कप** चलने (सौत्र) पर०अक०सेट् । कपति अकपीत् अकापीत्

**कप** चलने भ्वादि० इदित् आ०त०अक०सेट् । कम्पते अकम्पिष्ट

**कपट** पुं न० के मूर्द्धनि अपि पट इवाच्छादक । अन्यथास्थितस्य वस्तुनोऽन्यथात्वेनाच्छादने ।

**कपटिन्** त्रि० कपट+इनि । छलयुक्ते । चीनानामगन्धद्रव्ये पु० ।

**कपर्द** पु० पर्द्ध पूरणे क्विप् रात् वलोपे पर् पर्दि० कस्य गङ्गाजलस्य परा पूर्त्तीं दायति शुध्यति क+पर्+दैप्-क । हरजटायाम् । केन सुखेन पूर्त्तिं ददाति दा-क । वराटके अल्पार्थे कन् स्त्रीत्वे टाप् अत इत्त्वम् । कपर्दिकाप्यत्र ।

**कपर्दिन्** पु० कपर्द+अस्त्यर्थे इनि । महादेवे ।

**कपाट** स्त्री० न० कं वातं पाटयति वहिर्गमयति पट णिच् अण् । द्वारावरणेन वातरोधके स्तम्भाख्याते काष्ठादौ । अणन्तत्वात् स्त्रियां ङीप् । कपाटीत्यप्यत्र ।

**कपाल** पु० न० कं जलं पालयति अण् । घटादेरवयवे शिरोऽस्थ्नि, यतीनां भिक्षापात्रे, कर्परे च । सौत्रकप-कालन् । समूहे, कुष्ठरोगभेदे च ।

**कपालभृत्** पु० कपालं ब्रह्मणः शिरोऽस्थिमयं पात्रं बिभर्त्ति भृ-क्विप् । शिवे । [शिवे । दुर्गायां स्त्री० ङीप् ।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि ।

**कपालिका** स्त्री० क्षुद्रं कपालमल्पार्थे कन् अत इत्त्वम् । भग्नमृण्मयखण्डे (खापरा) । [च । तद्वति त्रि० ।

**कपि** पु० सौत्र कप-इ । वानरे, रक्तचन्दने वराहे, कपिलवर्णे

**कपिकच्छू** स्त्री० कपीनामपि कच्छूः यस्याः ५ ब० । (आल्कुशी) कपिकण्डूहेतौ शूकशिम्ब्याम् ।

**कपिका** स्त्री० कप-वुन् । नीलसिन्धुवारवृक्षे ।

**कपिकेतन** पु० कपि केतनं ध्वजरूपं चिह्नं यस्य । अर्ज्जुने कपिध्वजोऽप्यत्र । [तथात्वात्

**कपिचूडा** स्त्री० कपीनां चूडेव । आम्रातकवृक्षे तस्य तत्कुलेन

**कपिचूत** पु० कपीनां चूत इव प्रियः । आम्रातकवृक्षे ।

**कपिञ्ज** पु० कं जलमिव पिञ्जते वर्ण्यते पिजि क नलोपः । (पिलारम) भिङ्गके ।

**कपिञ्जल** पु० कमिव पिञ्जते पिजि-कलच् । गौरतित्तिरौ, चातके च 'कपिञ्जलमालभेते'ति श्रुतिः ।

**कपित्थ** पु० कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् स्था क पृषो० । (कयतबेल) वृक्षभेदे कपित्थबदरामन' इति भागवतम् ।

**कपित्थत्वक्** पु० कपित्थस्य त्वगिव त्वक् वल्कलमस्य । एलवालुकवृक्षे

**कपित्थास्य** पु० कपित्थमिवास्यं यस्य । गोलाङ्गूलाख्ये वानरभेदे

**कपिप्रभा** स्त्री० कपावपि प्रभा स्वगुणप्रसारोऽस्याः । (आलकुषी) कपिकच्छ्वाम् ।

**कपिप्रिय** पु० ६त० । आम्रातकवृक्षे कपित्थे च ।

**कपिरथ** पु० कपि हनुमान् रथ इव वाहनम् यस्य । रामचन्द्रे कपीरथे यस्य । अर्ज्जुने ।

**कपिल** पु० कप-इलच् पादेशः । अग्नौ, वासुदेवे, सांख्यशास्त्रकारके मुनिभेदे, स च कर्द्दमप्रजापतितो देवहूत्यां भगवदंशेन जातः । कुक्कुरे, दानवभेदे, पिङ्गलवर्णे च तद्वति त्रि० । स्वर्णवर्णायां गवि, नदीभेदे, रक्तपुष्पयोगात् शिंशपायां पुण्डरीकनामदिग्गजकरिण्याञ्च स्त्री० ।

**कपिलधारा** स्त्री० कपिलेव शुभ्रा धारा यस्याः । गङ्गायां स्वर्गनद्याम् । कपिलानां धारा दुग्धधारा यत्र । काश्यां प्रसिद्धे तन्नामकतीर्थे ।

**कपिलशिंशपा** स्त्री० कर्म० । पीतपुष्पयुतायां शिंशपायाम् ।

**कपिलाक्षी** स्त्री० कपिलमक्षिवत् पुष्पमस्याः । पीतपुष्पायां शिंशपायाम् । [इन्द्रे ।

**कपिलाश्व** पु० कपिलरूपेणाश्वहरणात् कपिलवर्णाश्वयोगाच्च

**कपिलोमफला** स्त्री० कपिलोमन्यपि फलं कण्डूयनमस्याः । (आलकुषी) दुरालभायाम् ।

**कपिलोह** न० कपितुल्यं पिङ्गलं लोहं धातु । पित्तले ।

**कपिवक्त्र** पु० कपेर्वक्त्रमिव वक्त्रमस्य । नारदे तस्य शापकृतकपितुल्यास्यत्वं पुराणे प्रसिद्धम् । [आम्रातकवृक्षे ।

**कपिवदान्य** पु० कपिषु वदान्यो मधुफलवत्त्वेन तत्प्रदानात् ।

**कपिवल्ली** स्त्री० कपिरिव तल्लोमतुल्या वल्ली । गजपिप्पल्याम्

**कपिश** पु० कपि कपिलवर्णोऽस्यास्ति अस्त्यर्थे श । (शिलारस) सिह्लके । कृष्णपीतमिश्रे वर्णे च । तद्वति त्रि० । नदीभेदे, कपिशा तीर्त्त्वे'ति रघुः । माधव्यां लतायाञ्च स्त्री० ।

**कपिशी** स्त्री० कपिश+गौरा० ङीष् । माधव्याम् मदिराभेदे च

**कपिशीर्ष** न० कपीनां प्रियं शीर्षमत्र शा०क० । प्राकाराग्रे ।

**कपिशीर्षक** न० कपेः शीर्षमिव कायति कै+क । हिङ्गुले ।

**कपीज्य** पु० कपिभिरिज्यते यज-क्यप् । क्षीरिकावृक्षे ।

**कपीतन** पु० कपीनाम् ई लक्ष्मीं तनोति तन-अच् । आम्रातकवृक्षे, शिरीषवृक्षे च ।

**कपीन्द्र** पु० कपिरिन्द्र इव । हनुमति । कपीनामिन्द्रः । सुग्रीवे ।

**कपीष्ट** पु० कपीनामिष्टः । राजादने कपित्थे च ।

**कपूय** त्रि० कुत्सितं पूयते पूयी-विशरणे अच् पृषो० टलोपः ।

कुत्सिते। 'कपूयचरणाः कपूययोनिमापद्यन्ते इति श्रुतिः।

**कपोत** पु० कोवातः पोत इव यस्य। पारावते पक्षिमात्रे च।

**कपोतक** न० कपोत इव कायति प्रकाशते कै-क। सौवीराञ्जने

**कपोतपालिका** स्त्री० पालयति पाल+ण्वुल्-उप०। स्तम्भाग्र प्रसारितदारुभेदे सौधादिप्रान्ते काष्ठादिरचिते पक्षिवासस्थाने विटङ्के (पायराखोप)।

**कपोतपाली** स्त्री० कपोतान् पालयति कर्म्मण्यण् उप०। प्रासादप्रान्ते दारुनिर्म्मिते पक्षिस्थाने विटङ्के (पायराखोप)

**कपोतवर्णी** स्त्री० कपोतस्य वर्ण इव वर्णो यस्याः गौरा० ङीष्। सूक्ष्मैलायाम्।

**कपोताङ्घ्रि** पु० कपोतस्याङ्घ्रिरिव रक्तवर्णत्वात्। नलीनामद्रव्ये

**कपोतारि** पु० कपोतस्यारिः ६त०। श्येनपक्षिणि।

**कपोल** पु० कौत्कम्प-ओलच्। गण्डे। गल्ले (गाल)।

**कफ** पु० केन जलेन फलति फल-ड। शरीरस्थे धातुभेदे श्लेष्मणि। [ण्वुल्। लालायाम् आस्रावने (थुथु)।

**कफकूर्च्चिका** स्त्री० कफं कूर्च्चति विकरोति कुर्च्च-विकारे

**कफणि** पु०स्त्री० केन जलेन फणति स्फुरति इन्। भुजमध्य पर्व्वणि। कूर्परे (कनुइ) स्त्रीत्वे वा ङीप्। [वृद्धिकारके त्रि०।

**कफवर्द्धन** पु०कफं वर्द्धयति वृध-णिच्-ल्यु। पिण्डारकवृक्षे। कफ-

**कफविरोधिन्** पु०न०कफं विरुणद्धि वि+रुध-णिनि। मरिचे, कफविरोधकारके त्रि०। [वर्व्वूरवृक्षे, कफनाशके त्रि०।

**कफान्तक** पु०कफमन्तयति तत्करोतीति अन्त+णिच्-ण्वुल्।

**कफारि** पु० ६त०। शुण्ठ्याम्।

**कफिन्** त्रि० कफोऽस्त्यस्य कफ+इनि। श्लेष्मप्रधाने जने।

**कफोणि** पु० स्त्री० केन जलेन फणति इन् पृषो० ओत्वम्। भुजमध्यपर्व्वणि कूर्परे (कनुइ) स्त्री० वा ङीप्।

**कबन्ध** पु० कं सुखं बध्नाति बन्ध-अण्, कं बध्यते छिद्यतेऽस्मात् बन्ध-घञ्, केन वायुना बध्यते, कोवायुर्बन्धो वा यस्य यथायथं वाक्यम्। उदरे, धूमकेतौ, राहौ, राक्षसभेदे च। जले न०। 'मनुष्याणां पशूनां च हतेषु इतमूर्द्धसु। मदावेगात् कबन्धः स्यादेकोऽसङ्ख्यां क्रियान्वित इत्युक्तलक्षणे शिर-शून्यक्रियायुक्तदेहे अस्त्री०। [शः। कपित्थवृक्षे।

**कंवित्थ** पु० कपयस्तिष्ठन्त्यत्र तत्प्रियत्वात् स्था-क पृषो० षत्व

**कम्** अव्य० कम-णिङभावपक्षे विच्। पादपूरणे, जले, मस्तके, रवे, मङ्गले, निन्दादाञ्च।

**कम** वाञ्छायां भ्वादि० आत्म० सक० सेट्। कामयते अचीकमत अचकमत। [अचकमत।

**कम** कामनायाम् चुरा०आत्म०सक०सेट्। कामयते अचीकमत

**कमठ** पु० कम अठन्। कच्छपे। यतीनां जलपात्रे न०।

**कमण्डलु** पु०न० मण्डनं मण्ड' कस्य जलस्य मण्डं लाति ला-कु। करङ्के, संन्यासिनां जलपात्रभेदे, प्लक्षवृक्षे, पर्ह्वस्पाद्-जातौ च। [न्यग्रोधवृक्षे पु०।

**कमन** त्रि० कामयते कम-ल्यु। कामुके, अभिरूपे, सुन्दरे च।

**कमनच्छद** पु० कमनः सुन्दरः छदोऽस्य। कङ्कपक्षिणि।

**कमनीय** त्रि० कम-अनीयर्। मनोहरे, कामनायोग्ये च।

**कमल** न० कं जलमलति भूषयति कम्+अल-अच्। पद्मे। कम-कलन्। ताम्रे, क्लोमनि, औषधे, जले च न०। मृगभेदे, सारसविहगे च पु०। [पद्मसमूहे

**कमलख(ष)ण्ड** न० कमलानां समूहः कमल+(ष)खण्डच्।

**कमला** स्त्री० कमलं विद्यतेऽस्या अर्शआदित्वात् अच्। लक्ष्म्याम्। कम कलच् वरस्त्रियाम्।

**कमलालया** स्त्री० कमलमालयो यस्याः। लक्ष्म्याम्।

**कमलासन** पु० कमलमासनं यस्य। चतुराननं ब्रह्मणि।

**कमलिनी** स्त्री० कमलानां समूहः देशो वा कमल+इनि। पद्मसमूहे पद्मयुक्तलतायाञ्च।

**कमलोत्तर** न०कमलमिवोत्तरमुत्कृष्टम्। कुसुम्भपुष्पे।

**कमितृ** त्रि० कम-णिङभावपक्षे तृच्। कामुके स्त्रियां ।कमित्री

**कम्प** पु० कपि-चलने घञ्। गात्रादिकम्पे वेपथौ। [चलने

**कम्पन** त्रि०कपि युच्। कम्पयुक्ते। शिशिरे ऋतौ पु०। भावे ल्युट्

**कम्पिल(ल्ल)** पु० कपि-इलच्। (कमलागुंडा) रोचन्याम्। कपि-इल्लच् करञ्जे, 'देवीं कपिल्लवासिनी'मिति श्रुतिः।

**कम्पिल्लक** पु० कम्पिल्ल एव स्वार्थे कन्। (करमचा) करञ्जभेदे।

**कम्प्र** त्रि० कपि-र। कम्पान्विते।

**कम्ब** गतौ भ्वा० पर० सक० सेट्। कम्बति अकम्बीत्।

**कम्बल** पु० कम्ब कलच्। नागभेदे सास्नायां, प्रावारे, कृमौ च। स्वनामख्याते मेषलोमनिर्म्मिते वस्त्राभरणादौ, जले च न०

**कम्बलिन्** पु० कम्बलः गलरोमरूपसास्नास्त्यस्य इनि। वृषभे कम्बलवति त्रि०। [वृषभवाह्ये शकटे गन्त्र्यां च।

**कम्बलिवाह्य** न० कम्बलिना वृषेण वाह्यम् वह-ण्यत्।

**कम्बि** स्त्री०कम-इन् वुक् च। दर्व्याम् (हाता) वा ङीप्। कम्बी

**कम्बु** पु०न०कम-उ वुक्। शङ्खे गजे च। शम्बूके, वलये, नलके च न०। ग्रीवायां स्त्री०। [स्वार्थे कन् कम्बुकाप्यत्र

**कम्बुकण्ठी** स्त्री० कम्बुरिव कण्ठोऽस्याः। कम्बुग्रीवायाम्।

**कम्बुपुष्पी** स्त्री० कम्बु' शङ्ख इव पुष्पमस्याः। शङ्खपुष्प्याम्

**कम्बुमालिनी** स्त्री० कम्बूनां तत्पुष्पाणां मालाऽस्त्यस्या इनि। शङ्खपुष्प्याम्।

कम्बोज पु० कवि ओज। हस्तिभेदे, शङ्खभेदे "पञ्चनदं समारभ्य म्लेच्छाद्विदिशपूर्वत कम्बोजदेश"इत्युक्तदेशे च।

कम्वार्तायिन् पु० कम्बुरिवातायी। शङ्खतुल्यश्वेतपूर्वकाये शङ्खचिल्ले। [र्याम् (गांभार)।

कम्भारी स्त्री० कं जलं विभर्त्ति क+भृ अण् उप०। गाम्भा-

कम्र त्रि० कम-णिङभावपक्षे र। मैथुने च्छावति कामुके मनोहरे च

कर पु० कृ-अप्, कृ अच् वा। हस्ते, किरणे, राजग्राह्ये राजस्वे, वर्षोपले, प्रत्यये, हस्तिहस्ते, हस्तनक्षत्रे च। किञ्चित्कर्म्मोपपदे तत्कर्म्मकारके। यथा कर्म्मकर यशस्कर

करक पु० कृ वुन्। करङ्कवृक्षे, पक्षिभेदे, दाडिमवृक्षे, कोविदारवृक्षे, बकुलवृक्षे, करीरे, नारिकेलास्थ्नि च (नारिकेलेर खोल)। कमण्डलौ पु०न०। कर-स्वार्थे कन्, वर्षोपले (शिल) पु०स्त्री०। स्त्रियां गौरा०ङीष् करकी।

करकङ्कणन्याय पु० कङ्कणशब्दस्य करभूषणार्थकत्वेऽपि यथा करशब्दप्रयोगस्तत्र तत्संलग्नताद्योतनार्थं तद्रूपे दृष्टान्ते।

करकण्टक पु० करस्य कण्टक इव। नखे।

करकाजल न० करकाया जलम् ६त०। (वरफ) करकास्यन्दिजले

करकाम्भस् पु० करकाया अम्भ इवाम्भो यस्य। नारिकेले।

करग्रह पु० करस्य वधूकरस्य वरेण ग्रहो ग्रहणं यत्र। विवाहे

करग्रहारम्भ पु० करस्य राजग्राह्यस्य ग्रहणं प्रजाभ्य आदानं तस्यारम्भः। वार्षिककरस्य प्रथमादानारम्भे (पुण्याह)

करङ्क पु० कीर्यते द्रव्यमत्र कृ-अप् करोऽङ्को गर्भोऽस्य शक०। नारिकेलास्थ्नि (खोल), मस्तकखर्परे (माथारखुली), कमण्डलौ पात्रभेदे च 'ताम्बूलकरङ्कवाहिनी'ति कादम्बरी।

करच्छद पु० कर इवाकरच्छदोऽस्य। शाखोटवृक्षे (सिहोडा)

करज पु० करे जायते जन-ड। नखे व्याघ्रनखाख्यगन्धद्रव्ये (नखी) च। कं शिरः जलं वा रञ्जयति रञ्ज णिच्-अण् नि०। (करमचा) करञ्जवृक्षे। [ख्याते वृक्षे।

करञ्ज पु० कं शिरः जलं वा रञ्जयति अण्। (करमचा) इति

करञ्जफल पु० करञ्जस्य फलमिवाम्लं फलं यस्य। कपित्थे (कयतवेल)। [दु ख्येन दोह्यायां गवि स्त्री० टाप्।

करट पु० कृ-अटन्। गजगण्डे, काके, कुसुम्भवृक्षे च।

करटिन् पु० करट गजगण्ड तत्र अस्त्यर्थे इनि। हस्तिनि।

करटु पु० कृ-अटु। (करकटिया) इति नामके विहगे।

करण न० कृ-ल्युट्। क्रियानिष्पत्तौ साधकतम अव्यवधानेन साधने व्याकरणोक्ते कारकभेदे, वर्णे, देहे, क्षेत्रे, इन्द्रिये, गात्रे च, करणं यत्र वालिमतरति कुमारः। भावे ल्युट्। क्रियायाम् न०। ज्योतिषोक्तेषु ववबालवादिषु-
कादशसु तिर्य्यक्षु, वैश्येन शूद्रायामुत्पादिते जातिभेदे च (करणकायस्थ) पु०।

करणाधिप पु० करणानामिन्द्रियाणामधिपः। जीवे आत्मनि।

करण्ड पु० कृ-अण्डन्। मधुचक्रे (मौचाक), खड्गे, कारण्डवे विहगे, वंशादिरचिते पुष्पपात्रे (साजी), वसङ्के च (कौटा), यकृति रोगे स्त्री० टाप्।

करतल पु० ६त०। हस्तस्य तले, हस्ते च।

करताल न० तल-प्रतिष्ठायां घञ् करे तालो यस्य। वाद्यभेदे (करताल), तद्धि करे स्थापयित्वैव वाद्यते।

करताली स्त्री० करौ ताड्येते यत्र ताड-घञ् ६त० गौरा० ङीष् डस्य ल०। करतलध्वनौ।

करतोया स्त्री० करस्य गौरीविवाहकाले शिवकरस्य तोयात् प्रबहूर्मवारित सम्भूतं तोयं यस्याः। कामरूपदेशे ख्यातायाम् नद्याम्।

करपत्र न० करात् पतति-पत ष्ट्रन्। (करात) क्रकचे दारुभेदके अस्त्रभेदे। करावेव पत्रं वाहनं यत्र। जलक्रीडायाम्। तत्र हि हस्ताभ्यां परस्परजलोत्क्षेपेण क्रीड्यते।

करपत्रवत् पु० करपत्रमिव पत्रमस्त्यस्य मतुप्। ताल वृक्षे। [रवैरण्डे च।

करपर्ण पु० कर हस्त इव पर्णं यस्य। (भेंट) भिण्डातकवृक्षे

करपल्लव पु० करस्य हस्तस्य पल्लव इव। अङ्गुलौ।

करपात्र न० कर एव पात्रं जलनिक्षेपपात्रं यत्र। हस्ताभ्यामुत्क्षिप्य परस्परजलदानक्रीडने। कर्म०। हस्तरूपे पात्रे

करपाल पु० करं पालयति पाल अण्। खड्गे। स्वार्थे कन् टाप् अतइत्वम्। कृपाण्याम्। (शेंटा) स्त्री० ङीप्।

करपीडन न० करस्य वधूकरस्य वरेण पीडनं ग्रहणेन मर्द्दनं यत्र। विवाहे। [गतिर्यस्य। खड्गे।

करवाल पु० करस्य बल शिशुरिव। नखे। करे वालो

करभ पु० कृ-अभच् कर भाति भा क वा। मणिबन्धात् कनिष्ठापर्य्यन्ते करस्य बाह्यदेशे, करिशावके, उष्ट्रशिशौ (नखी) नामगन्धद्रव्ये, उष्ट्रे च। 'करभकण्ठकडार'मिति माघ

करभप्रिया स्त्री० करभस्य उष्ट्रस्य प्रिया। दुरालभायाम्। (धामकुषी)।

करभवल्लभ पु० ६त०। उष्ट्रप्रिये पीलुवृक्षे, कपित्थवृक्षे च।

करभादनी स्त्री० करभैः उष्ट्रैरद्यते अद-कर्म्मणि ल्युट् टित्त्वात् स्त्रियां ङीप्। दुरालभायाम्। (धामकुषी)

करमर्द्द पु० करं मृद्नाति मृद-अण्। (करमचा) वृक्षभेदे। स्तुत् करमर्द्दकोऽप्यत्र। तद्रूपे हि करमर्द्दोरितिशब्दरत्नम्

**करमर्दन** पु० करं मृद्नाति मृद-ल्यु। (करमचा) करमर्दवृक्षे।

**करमाला** स्त्री० कर: कराङ्गुलिपर्व मालेव जपसंख्याहेतुत्वात्। 'आरभ्यानामिकामध्यं दक्षिणायसंयोगतः। तर्जनीमूलपर्यन्तं करमाला प्रकीर्त्तितेत्युक्तलक्षणायां जपसंख्यार्थं कराङ्गुलिपर्वद्राक्षरूपायां मालायाम्। [वृक्षभेदे।

**करमुक्त** न० करेण मुच्यते यत्नं प्रति क्षिप्यते मुच-क्त। (बडशी)

**करम्ब** त्रि० कृ-अम्बच्। मिश्रिते। मिश्रणे पु०।

**करम्बित** त्रि० करम्बो मिश्रणं जातोऽस्य इतच्। मिश्रिते मधुकरनिकरकरम्बितेति जयदेवः। [दधिमिश्रितसक्तुषु।

**करम्भ** पु० केन जलेन रभ्यते मिश्र्यते रभ-घञ् मुम् च।

**कररुह** पु० करे रोहति रुह-क। नखे। [पाणे (तरवार)

**करवाल** पु० करं वालयति रक्षति चु० वल-पालने अण्। ख-

**करवीर** पु० करं वीरयति चु० वीर-विक्रान्तौ अच्। कृपाणे खड्गे, स्वनामख्याते वृक्षे, श्मशाने, देशभेदे च।

**करवीरक** पु० करवीर इव कायति कै-क। अर्जुनवृक्षे। स्वार्थे कन्। करवीरार्थे। [(व्याघ्रहर)

**करवीरभुपा** स्त्री० करवीरस्येव भूषा यस्याः। आढक्याम्।

**करशाखा** स्त्री० करस्य शाखेव। अङ्गुलौ। [निर्गते जलकणे

**करशीकर** पु० करस्य हस्तिहस्तस्य शीकरः। हस्तिहस्तात्

**करसूक** पु० करस्य सूक सूचीव। नखे।

**करसूत्र** न० ६त०। विवाहादौ हस्ते मङ्गलार्थं बध्यमाने सूत्रे।

**करहाट** पु० करं हाटयति दीपयति हट-दीप्तौ णिच्-अण्। पद्मादिमूले, मदनद्रुमे, शिफाकीलौ, देशभेदे च।

**करहाटक** पु० करं हाटयति हट-दीप्तौ णिच् ण्वुल्। मदनवृक्षे। ६त०। हस्ताभरणे सुवर्णे। [(करमचा)

**करामर्द** पु० करमामृद्नाति आ+मृद-अण् उप०। करमर्द

**कराल** त्रि० कृ-अण् करोविक्षेप तस्मै अलति पर्याप्नोति अल पर्याप्तौ-अच्। विकटे भयानके। तैलभेदे (गर्ज्जनतैल)। सर्जरसयुक्ततैले, (तैलधुना) च न०। दन्तुरे, उच्चे च त्रि०। (अनन्तमूल) वृक्षभेदे पु०।

**करास्फोट** पु० करेण आस्फोटः शब्दो यत्र। वक्षस्युत्ते वक्रचितरूपेण स्थापिते एकवाहौ इतरकराघातेन शब्दकरणे (तालठोका)। ३त०। बाह्वास्फोटे।

**करिक** पु० कृ-इक। विट्खदिरे। [च।

**करिणी** स्त्री० करिन्-ङीप्। हस्तिन्यां धेनुकायाम् देवताभेदे

**करिदारक** पु० करिणं दारयति हिनस्ति दृ ण्वुल्। सिंहे।

**करिन्** पु० कर शुण्डादण्ड प्रशंसायाम् इनि। हस्तिनि।

**करीर** पु० कृ ईरन्। घटे। वंशाङ्कुरे, हिमाद्युद्भवस्य करीरमिवेति नैषधम्। शिशपाम्, हस्तिदन्तमूले च स्त्री०।

**करीष** पु० न०। कृ-ईषन्। शुष्कगोमये। [वात्यायाम्।

**करीषङ्कषा** स्त्री० करीषं कषति कष-हिंसायाम् खच् मुम् च।

**करुण** पु० कृ-उनन्। करुण रसे रसभेदे करुणाख्ये वृक्षे च। 'दयाद्रुतकरुणे' इति नैषधम्। दीने, करुणायुक्ते तु स्थिते करुणायति च त्रि०। दयायां स्त्री० टाप्।

**करुणविप्रलम्भ** पु० करुणरसान्वितो विप्रलम्भः। अलङ्कार प्रसिद्धे शृङ्गाररसमध्ये विप्रलम्भभेदे साहि० ३ परि०।

**करुणापर** त्रि० करुणायां पर: आसक्तः करुणा परा वा यस्य। अत्यन्तकरुणायुते। [स्त्रियां करुणामयी।

**करुणामय** त्रि० करुणा+प्राचुर्ये मयट्। प्रचुरकरुणायति

**करूष** पु० कृ+ऊष। देशभेदे। [गजे।

**करेटु** पु० के जले रेटति रेट-कु। (करकटिया) इति ख्याते

**करेणु** पु० कृ-एणु। गजे। हस्तिन्यां स्त्री०।

**करोट** पु० न० के शिरसि रोटते रुट-दीप्तौ अच्। शिरोऽस्थि। इन्। करोटिरप्यत्र स्त्री० वा ङीप्।

**कर्क** हासे भ्वा० पर० अक० सेट्। कर्कति अकर्कीत्।

**कर्क** पु० करोति कार्योणि क्रियते वा यथार्थं वाक्यम् कृ-क तत्र नेत्त्वम्। वह्नौ, श्वेताश्वे, दर्पणे, कुलीरे, कर्कटवृक्षे, कण्टके, मेषादितश्चतुर्थे राशौ च। घटे पु० स्त्री० वा ङीप्।

**कर्कट** पु० कर्क-कर्क-अटन्। क्षुद्रामलके, षट्फले, कर्करेटौ पक्षिणि, जलजन्तुभेदे कुलीरे, (काकडा) मेषादितश्चतुर्थे राशौ, शाल्मलीवृक्षे च। स्वार्थे कन् कर्कटकोऽप्युक्तार्थेषु, वृक्षभेदे च।

**कर्कटशृङ्गी** स्त्री० कर्कट इव शृङ्गं यस्याः। (काकडाशिङ्गा) वृक्षभेदे। स्वार्थे कन् कर्कटशृङ्गिकाप्यत्र।

**कर्कटि** स्त्री० कर्कं कण्टकमटति इन् शक०। (काकुड) इर्वारौ शाल्मलीवृक्षे च। वा ङीप् अल्पार्थे, कर्कटञ्जुमात्र।

**कर्कटु** पु० सौत्र-कर्क-अटु। करेटुपक्षिणि (करकटिया)। [(कुल)

**कर्कन्धू** स्त्री० कर्कं कण्टकं दधाति धा-कू नि० मुम्। बदर्याम्

**कर्कर** पु० कर्क-हासे-अरन्। दर्पणे चूर्णपाषाणखण्डे कङ्करे (काकर) मुद्गरे च। घञ्। कर्कं हासं राति रा-क दृढे कठिने त्रि०।

**कर्कराङ्ग** पु० कर्करं कठिनमङ्गं यस्य। खञ्जने पक्षिणि।

**कर्करान्धुक** पु० कर्कर कठोर अतिशयितान्धकारवत्त्वात् अन्धुः कूप संज्ञायां कन्। अत्यन्तान्धकारवति कूपे।

**कर्करी** स्त्री० कर्कं हासं राति रा-क गौरा० ङीप्। (झारी) सनालजलपात्रे, कन्दोऽभूतादिपक्वनिष्काशनसाधने (झाजरा)

पात्रे च। कर्क+रा-ईक। कर्करीकोऽप्यत्र।
**कर्करेट** पु० कर्केति शब्दं रेटते भाषते रेट-भाषणे ड। (करकटिया) इति ख्याते खगे।
**कर्कश** पु० करे काशते काश-शब्दे अच् पृषो०, कर्क कार्टिन्यम् अस्त्यर्थे श वा कृ क्षेपे विच् कर् कश-हिंसायाम् अच् कर्म्म० वा। कटुङ्गे (करमचा) कासमर्दे, इक्षौ, खड्गे, खरस्पर्शे च। साहसिके, क्रूरे, निर्दये, खरस्पर्शे च त्रि०।
**कर्कशच्छद** पु० कर्कशः छदः पत्रमस्य। (चिचोडा) शाखोट वृक्षे पटोले च। कर्कशदलोऽप्यत्र। कोषातक्यां स्त्री० टाप्।
**कर्कसार** न० कर्कं शुभ्रं श्वेततां सरति गच्छति सृ-अण्। करम्भे (दधिमिश्रितक्तौ)। [कुष्माण्ड्यां स्त्री० वा ङष्।
**कर्कारु** पु० कर्कं शुभ्रं श्वेततामृच्छति ऋ-उण्। कुष्माण्डे।
**कर्कोट** पु० कर्क-ओट। सर्पभेदे, स्वार्थे कन्। 'कर्कोटको नाम सर्पो यो दृष्टिविष उच्यते' इत्युक्तलक्षणे सर्पे, बिल्ववृक्षे, इक्षौ, (काकरोल) ख्याते वृक्षे च। [घोषातक्याम्।
**कर्कोटकी** स्त्री० कर्क-ओट-संज्ञायां कन् गौरा० ङीष्। पीत
**कर्कोटी** स्त्री० कर्क-ओट गौरा० ङीष्। (काकुड) कर्कट्याम् कुष्माण्डाञ्च। स्वार्थे कन्। कर्कोटिकाप्यत्र।
**कर्चूर** पु० कर्ज्ज-ऊर पृषो०। (कचूर) गन्धद्रव्ये, शठ्यां च।
**कर्ज** पीडायाम् भ्वा०पर०सक० सेट्। कर्ज्जति अकर्ज्जीत्।
**कर्ण** भेदने अदन्त चुरादि-उभ०सक० सेट्। कर्णयति ते अचकर्णत् त। आ श्रवणे आकर्णयति ते।
**कर्ण** पु० क्र-नन्, कर्ण-भेदने, अच्, कीर्य्यते शब्दग्रहणाय कृ-नन् वा। श्रोत्रेन्द्रिये अरित्रे कीनिपातके, अङ्गदेशाधिपे पृथासुते सूर्य्यात्मजे, त्रिभुजक्षेत्रे भुजकोटिभिन्नायां तिर्य्यग्रेखायाञ्च।
**कर्णकीटी** स्त्री० कर्णयति भिनत्ति अच् कर्णः स्वल्पः कीट अल्पार्थे ङीप् कीटी कर्म्म० (काणडाड) शतपद्याम्।
**कर्णगूथ** न० ६त०। कर्णमले।
**कर्णजलौका** स्त्री० कर्णे जलौकेव। शतपद्याम् (काणडाड) कर्णजलौकस् इत्यप्यत्र। [आहविलोचनेति भट्टिः।
**कर्णजाह** न० कर्णस्य मूलम्। कर्ण+जाहच्। कर्णमूले 'कर्ण-
**कर्णधार** पु० कर्णं नौकागतिनिरूपणदण्डं (हाल) धारयति धृ-णिच्-अण्। नाविके (काण्डारि)। [कर्णभूषणभेदे।
**कर्णपाली** स्त्री० कर्णं पालयति पाल अण्। (कानबाला)
**कर्णपुष्प** पु० कर्णं इव पुष्पं यस्य। मोरटालतायाम्।
**कर्णपूर** पु० कर्णं पूरयति पूर-अण्। कर्णाभरणे, नीलोत्पले, शिरीषवृक्षे अशोकवृक्षे च एतदाद्यपि स्त्रीकर्णस्य भूषा।
**कर्णपूरक** पु० कर्णं पूरयति ण्वुल्। कर्णदरार्थे।

**कर्णमल** न० ६त०। कर्णस्थे मलाकारे पदार्थे (कानेर खल)
**कर्णवर्जित** त्रि० ३त०। बधिरे (काला) श्रोत्रशून्ये। सर्पे पु०
**कर्णवेध** पु० विध-घञ् ६त०। कर्णवेधनरूपे संस्कारभेदे।
**कर्णवेष्ट** पु० कर्णौ वेष्ट्येते अनेन। कुण्डले। ण्वुल् कर्णवेष्टकोऽप्यत्रैव। भावे ल्युट्। कर्णावरणे न०।
**कर्णशष्कुली** स्त्री० कर्णस्य शष्कुलीव। कर्णगोलके, तन्मध्याकाशे च 'अवलम्बितकर्णशष्कुली'ति नैषधम्।
**कर्णशूल** न० ६त०। कर्णरोगभेदे। [लताभेदे।
**कर्णस्फोटा** स्त्री० कर्णे स्फोटो विदारणं यस्याः। (काणफाटा)
**कर्णाट** पु० 'रामनाथं समारभ्य श्रीरङ्गान्तं किलेश्वरि! कर्णाटदेश इत्युक्तदेशे' काव्यरीतिभेदे, स्त्री० ङीप्।
**कर्णाभरणक** पु० कर्णाभरणमिव कायति पुष्पद्वारा। आरग्वधे वृक्षे। (सोन्दाल) [कर्णचालने।
**कर्णास्फाल** पु० आ+स्फुर-णिच् स्फालादेश ६त०। करिणां
**कर्णि** पु० कर्ण इन्। शरभेदे कण्टकारिकायां स्त्री० वा ङीप्।
**कर्णिका** स्त्री० कर्ण-ण्वुल्। करहमध्ये, करमध्याङ्गुलौ, बीजकोषे पद्मवराटे, लेखन्यां, कुट्टिन्याम् अग्निमन्थवृक्षे, अजशृङ्गीवृक्षे च। कर्ण+भूषणे इकन्। कर्णभूषणभेदे।
**कर्णिकार** पु० कर्णिकामृच्छति ऋ-अण् उप०। (कणियारी) वृक्षभेदे, आरग्वधवृक्षभेदे च (छोट सोन्दाल)।
**कर्णीरथ** पु० कर्णः सामीप्येनास्त्यस्य कर्णी स्कन्धः तत्र ईर् शोभा यस्य न समासान्त कप् स चासौ रथो रथतुल्यं वाहनं कर्म्म०। स्कन्धवाह्ये याने (पालकी) इत्यादौ।
**कर्णीसुत** पु० कर्ण्याः कन्यायाः सुतः। कंसासुरे।
**कर्णेजप** पु० कर्णे जपति जप-अच् सप्तम्या अलुक्। सूचके पिशुने, खले च। [अचकर्त्तत् त।
**कर्त्त** शैथिल्ये अद० चुरा० उभ० सक० सेट्। कर्त्तयति त
**कर्त्तन** न० कृती छेदने कृत-ल्युट्। छेदने। तूलपिण्डात् सूत्रनिष्काशनव्यापारे (काटनाकाटा)
**कर्त्तरी** स्त्री० कृत-घञ् कर्त्तं राति रा-क गौरा० ङीष्। कृपाण्याम्, पत्रीकृतहिरण्यादि छेदनसाधने (कातारी), केशादिकर्त्तनसाधने (काचि) अस्त्रे, 'क्रूरमध्यगतयन्मो मत्तं वा क्रूरमध्यगम्। कर्त्तरी नाम योगोयमिति ज्योतिषोक्ते योगभेदे च।
**कर्त्तृ** त्रि० कृ-तृच्। कारके व्याकरणोक्ते कारकान्तरयोरादि क्रियान्वये स्वतन्त्रे, तत्प्रयोजके च। परमात्मनि पु०।
**कर्त्तृका** स्त्री० कृत-तृच् इड्भाव संज्ञायां कन्। अस्त्रभेदे।
**कर्द्द** कौटिल्यकरणे अद० चुरा० उभ०सक० सेट्। कर्द्दयति कर्द्द०

सेट्। कर्त्तयति ते अचकर्त्तत् त। क्त कर्त्तितः।

कर्त्तरी स्त्री० कर्त्त-अच् गौरा० ङीष्। (कातारि) इति ख्याते अस्त्रभेदे। कृ-तृच् कारिकायां स्त्रियां स्त्री० ङीप्। [अकर्द्दीत्

कर्द्द कुत्सितरवे उदरशब्दे च भ्वा०पर०अक०सेट्। कर्द्दति

कर्द्द पु० कर्द्द-अच्। कर्द्दमे।

कर्द्दट पु० कर्द्द-अटन्। पद्मकेशरे, पङ्के च।

कर्द्दम पु० कर्द्द-अम्। पङ्के, पापे, ब्रह्मणश्छायायामुत्पन्ने प्रजापतिभेदे। मांसे न०, पङ्कवति त्रि०। [पङ्क एव हि प्ररोह·

कर्द्दमक पु० कर्द्दमे कायति प्रकाशते कै-क। शालिभेदे, तस्य

कर्पट पु०न० कृ-कर्म्मणि विच्-पट्-पटः कर्म्म०। लत्तके जीर्णवस्त्रे (नातावानि), मलिनवस्त्रे च। करस्य पटः शक०। धर्म्मादिमार्ज्जनार्थं हस्तन्यस्ते वस्त्रखण्डे काषायरक्ते वस्त्रे च।

कर्पटधारिन् त्रि० कर्पटं मलिनं जीर्णं रक्तं वा वस्त्रं धारयति णिनि। मलिनादिवस्त्रधारके भिक्षुकादौ। [कर्पटोऽप्यत्र

कर्पटिक त्रि० कर्पट-ठन्। कर्पटवस्त्रयुक्ते भिक्षुकादौ। स्त्रि

कर्पर पु० कृप्-अरन् लत्वाभाव। कपाले शीर्षोद्धास्थनि, (माथारखुली), शस्त्रभेदे (कात), कटाहे च।

कर्पराश पु० कर्परस्याश्म। (खापरा) शर्करायाम्।

कर्पराल पु० कर्परमलति अल-अण्। कन्दराले, अक्षोटवृक्षे च

कर्परी स्त्री० कृप-अरन् लत्वाभाव गौ० ङीष्। दारुहरिद्राक्वाथभवे तुत्थे (तुते)। [जातित्वे ङीष्। कर्पासीत्यपि।

कर्पास पु०न० कृ-पास। वस्त्रयोनौ (कापास) वृक्षभेदे।

कर्पासफल न० ६त०। (साकाटी) कर्पासीबीजे।

कर्पूर पु०न० कृप-ऊर लत्वाभाव। स्वनामख्याते गन्धद्रव्ये

कर्पूरमणि पु० कर्पूरवर्णो मणिः। रत्नभेदे, कर्पूराश्मन्यत्र

कर्पूररस पु० कर्पूर एव रसः। रसकर्पूरे।

कर्ब गतौ भ्वा०पर०सक० सेट्। कर्बति अकर्बीत्।

कर्बुर पु० कर्ब-उरच्। राक्षसे, शट्याम्। स्वर्णे, हरिताले च न०।

कर्म्मकर पु० कर्म्म करोति कृ-ट। यमे। भृत्ये त्रि०। स्त्रियां ङीप्। [कर्म्मसमूहे, तत्प्रतिपादके वेदभागे च।

कर्म्मकाण्ड पु० कर्म्मणां समूहः दूर्व्वादित्वात् काण्डच्।

कर्म्मकार पु० कर्म्म+कृ-अण्। लौहकारके जातिभेदे, (कामार) वेतनं विना (बेगार) कर्म्मकारके, वाहके च।

कर्म्मक्षेत्र न० कर्म्मणां तद्विधानायोचितं क्षेत्रम्। भारतवर्षे।

कर्म्मठ त्रि० कर्म्मणि कुशलः कर्म्मन्+ठ। क्रियाकुशले।

कर्म्मण्य त्रि० कर्म्मणि साधुः कर्म्मन्+यत्। कर्म्मणि योग्ये, तत्र प्रवीणे च। वेतने स्त्री०।

कर्म्मदेवता स्त्री० कर्म्मणा यागादिना देवता। यज्ञेन देवत्वं प्राप्ते 'अस्मिन् कल्पेऽश्वमेधादि कर्म्म कृत्वा महत्पदम्। अवाप्य देवैर्याः पूज्यास्तास्ताः कर्म्मदेवताः' इत्युक्तलक्षणे देवे

कर्म्मधारय पु० व्याकरणोक्ते अभेदान्वयिना समानविभक्तिकेन पदेन घटिते समासभेदे। [कर्म्मे कारके च।

कर्म्मन् न० कृ मनिन्। क्रियायाम्, व्याकरणोक्ते कर्त्तुरीप्सिततमे

कर्म्मफल न० कर्म्मणः फलम्। कर्म्मजनिते सुखदुःखादौ, कमरङ्गफले च (कामराङ्गानेबु)

कर्म्मभू स्त्री० कर्म्म कर्षणादि परिकर्म्म, पुण्यादिकर्म्म वा तस्य भूः। कृष्टभूमौ, आर्य्यावर्त्ते, भारतवर्षे च विहितकर्म्माण्यत्रैव सर्व्वे क्रियन्ते नान्यत्र। [जैमिनिप्रणीते ग्रन्थे।

कर्म्ममीमांसा स्त्री० ६त०। कर्म्मकाण्डप्रधानवेदभागविचाररूपे

कर्म्ममूल न० कर्म्मणां मूलम्। कुशतृणे। तेन हि वैदिकादि सर्व्वं कर्म्म निष्पाद्यते।

कर्म्मरङ्ग पु०न० कर्म्मणि भोजनादौ रङ्गो रतिर्यस्मात् रन्ज-घञ् (कामराङ्गा) जम्बीरभेदे, तद्भोजने हि भोजनादौ रुचिर्भवति

कर्म्मविपाक पु० विपच्यते वि-पच-कर्म्मणि घञ् कर्म्मणो विपाकः। शुभाशुभकर्म्मजन्ये तत्फलभूते सुखदुःखादौ।

कर्म्मव्यतिहार पु० वि-अति-हृ घञ्। कर्म्मणा व्यतिहारः ३त०। परस्परैकजातीयक्रियाकरणे, क्रियाविनिमये च यथा य कश्चित् येन कर्म्मणा इतरं संबध्नाति, इतरोऽपि तज्जातीयेनैव कर्म्मणा तं संबध्नाति, तयोः कर्म्मविनिमयो भवति। यथा व्यतीन्यं ताडयत इत्यादौ। [लोदयं कर्म्मकारिणि'

कर्म्मशूर पु० कर्म्मणि शूरः। प्रयत्नेन प्रारब्धकर्म्मसमापके, काफ·

कर्म्मसङ्ग पु० कर्म्मणि सङ्गः आ०(सक्ति) सन्ज घञ्। इदमहं करोमि अनेनैतत् फलं भोक्ष्ये इत्याकारकेऽभिनिवेशे।

कर्म्मसंन्यासिन् पु० विहितकर्म्माणि विधानेन संन्यस्यति सं+नि+अस-णिनि। सर्व्वकर्म्मत्यागिनि यतौ।

कर्म्मसाक्षिन् पु० साक्षात् पश्यति त्रि० साक्षी ६त०। 'सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च च। एते शुभाशुभस्येह कर्म्मणो नव साक्षिणः' इत्युक्तेषु सूर्य्यादिषु नवसु।

कर्म्मसिद्धि स्त्री० ६त०। इष्टानिष्टफलप्राप्तौ "अकर्म्मसिद्धि पुनरापमर्थं' इति कुमार।

कर्म्माध्यक्ष पु० ६त०। क्रियामात्रेऽपि [illegible]।

कर्म्मार पु० कर्म्म ऋच्छति ऋ अण्। कर्म्मकारे (कामार) जातिभेदे, वंशभेदे (बरांश), कर्म्मरङ्गवृक्षे च।

कर्म्मिष्ठ त्रि० अतिशयेन कर्म्मी इष्ठन् इतेर्लुक्। क्रियादक्षे कर्म्मे

कर्म्मेन्द्रिय न० कर्म्मणां क्रियायाः साधनभूतमिन्द्रियम्। वाक्पाण्यादौ, तैर्हि वचनादानादिक्रिया निष्पद्यते।

कलाद पु॰ कलामंशमादत्ते आ-दा-क। स्वर्णकारे तेन हि अलङ्कारगठनार्थं गृहीतधनस्यांशोऽपह्रियते।

कलादक पु॰ कलामत्ति कला+अद-ण्वुल्। स्वर्णकारे गठनार्थं दत्तद्रव्यांशस्य भोजनं तेन हि क्रियते।

कलानिधि पु॰ कला निधीयन्तेऽत्र। कला+नि+धा कि। चन्द्रे

कलानुनादिन् पु॰ कलमनुनदति णिनि। भ्रमरे, चटके च

कलान्तर पु॰अन्या कला अंश॰ मयू॰। वृद्धिभेदे 'मासे शतस्य यदि पञ्च कलान्तरं स्यादिति लीलावती, अन्यस्यां चन्द्र कलायाञ्च, 'ज्योत्स्नान्तराणीव कलान्तराणी'ति कुमारः।

कलाप पु॰ कलामाप्नोति कला-आप्-अण्। समूहे, मयूरपिच्छे, भूषणे, काञ्च्याम्, तूणे, चन्द्रे, व्याकरणभेदे ग्रामभेदे च।

कलापक पु॰ कलाप+क स्वार्थे कन्। कलापार्थे, हस्तिस्कन्धबन्धे, एकवाक्यतापन्ने श्लोकचतुष्के न॰ कलापकं चतुर्भिः स्यादि-त्युक्तेः। [शाखावति वटे च।

कलापिन् पु॰ कलाप+अस्त्यर्थे इनि। कोकिले

कलापिन् पु॰ कलापोऽबर्होऽस्त्यस्य इनि। मयूरे तदर्हेतुल्य-

कलाभृत् पु॰कलां बिभर्त्ति कला+भृ-क्विप्। चन्द्रे। [यां स्त्री॰

कलाय पु॰ कलमयते अय-अण्। (मटर) धान्यभेदे। गण्डदूर्वा-

कलालाप पु॰ कलमालपति आ+लप-अण्। भ्रमरे। [ति॰

कलावत् पु॰ कला+अस्त्यर्थे मतुप् मस्य वः। चन्द्रे। कलावति

कलि पु॰ कल-इन्। विभीतकवृक्षे, विवादे, युद्धे, शूरे, अन्त्ययुगे च। कोरके स्त्री॰ वा ङीप् कली च।

कलिक पु॰ कल+मत्वर्थे ठन्। वकभेदे (कोंचवक) [मूले च

कलिका स्त्री॰ कल-इन् स्वार्थे कन्। (कलि) कोरके, वीणा-

कलिकापूर्व्व न॰ कलिकेव अपूर्व्वमदृष्टं पुण्यापुण्यम्। प्रधान-कर्म्मजन्य प्रधानापूर्व्वस्य हेतुभूतप्रधानकर्म्मजन्ये पुण्यादौ

कलिकार पु॰ कलिं करोति कृ-अण्। भूम्याटपक्षिणि, पूतिकरञ्जे च।

कलिकारक पु॰कलिं करोति कृ-ण्वुल्। नारदे। कलहकारके त्रि॰। कलिकार+स्वार्थे क। भूम्याटपक्षि पु॰। [ङ्गल्याम्।

कलिकारी स्त्री॰कलिकामृच्छति ऋ-अण्। (विषलाङ्गलिया)ला-

कलिङ्ग पु॰ कलिं गच्छति गम-खच् मुम् डिच्च। पूतिकरञ्जे धूम्याटे, कुटजवृक्षे, शिरीषवृक्षे, प्लक्षवृक्षे, 'जगन्नाथात् पश्चिमभागे कृष्णातीरान्तरं शिवे!। कलिङ्गदेश' संप्रोक्त' इत्युक्तदेशे, 'उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ'विति रघु। इन्द्रयवे च। योषिति लिङ्गाधाञ्च (तितलि) स्त्री॰

कलित त्रि॰ कल-क्त। विदिते प्राप्ते, भेदिते, गृहीते, उक्ते। संख्याते, शिथिलते, बद्धे च।

कलिद्रुम पु॰ कलेराश्रयः द्रुमः। विभीतकवृक्षे तत्र हि नलस्य राजश्छिद्रावाप्तये कलिना सुचिरं स्थितमिति भारतकथा।

कलिन्द पु॰ कलिं ददाति द्यति वा खच् मुम् च। अद्रि-विशेषे, यतो यमुनानदी निःसृता, विभीतकवृक्षे, सूर्य्ये च।

कलिन्दकन्या स्त्री॰ इत॰। यमुनायां, कलिन्दजादयोऽप्यत्र।

कलिप्रिय पु॰ कलिः कलहः प्रियो यस्य। नारदे, वानरे च। इत॰ विभीतके। इव॰ प्रियविवादे जने त्रि॰।

कलिल त्रि॰ कल-इलच्। गहने, मिश्रे च। [लाङ्गल्याम्।

कलिहारी स्त्री॰ कलिं हरति हृ-अण्। (विषलाङ्गलीया)

कलुष पु॰स्त्री॰कल-उषच्, लुष हिंसायां क कस्य जलस्य लुषो घातकः इति वा। महिषे। पापे न॰। तद्वति त्रि॰।

कलेवर न॰ कले शुक्रे वरं श्रेष्ठम् तदुत्पन्नत्वेऽपि शुचि। सप्तम्या अलुक्। देहे। [शार्ङ्गिके।

कलोपजीविन् त्रि॰कला इह्विमुपजीवति उप+जीव-णिनि।

कल्क पु॰न॰ कल-क तस्य नेत्त्वम्। घृततैलादिशेषे, दम्भे, विभीतकवृक्षे, विष्ठायाम्, तुरुष्कनामकगन्धद्रव्ये, घृततैलादिपाके देये ओषधिद्रव्ये च 'द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा जलमिश्रितम्। तदेव सूरिभिः पूर्व्वैः कल्क इत्यभिधीयते' इत्युक्तलक्षणे द्रव्यभेदे, शाठ्ये, पापे च। [कथने कलहे च।

कल्कन न॰ कल्कं करोति णिच्-भावे ल्युट्। दम्भे, शाठ्ये,

कल्कि पु॰ कल्क+मत् करोतीति णिच्-इन्। 'शम्बलग्राममुख्यस्य ब्राह्मणस्य महात्मनः। भवने विष्णुयशसः कल्कि' प्रादुर्भविष्यतीत्युक्तलक्षणे हरेरवतारे।

कल्किन् पु॰ कल्क-इनि। रामो रामश्च रामश्च बुद्धः कल्की च ते दशेति विष्णोरवतारभेदे।

कल्प पु॰ कृप-अच् घञ् वा। यज्ञक्रियायामुपदेशके, शिक्षा-कल्पव्याकरणादीनामन्यतमे वेदाङ्गभेदे, बौधायनादिकृते अनुष्ठेयकर्मविधाने, सूत्रात्मके कर्मपद्धतिग्रन्थे, ब्रह्मदिने, प्रलये, विकल्पे, कल्पवृक्षे, न्याये च। उत्तरपदस्थः सादृश्ये कल्पप्। यथा पितृकल्प गुरुकल्पः।

कल्पक पु॰ कृप-णिच् ण्वुल्। नापिते। छेदके, कल्पनाकारके त्रि॰

कल्पतरु पु॰कल्पते फलदानाय अच् कर्म॰। कल्पवृक्षे। [भेदे च

कल्पन न॰ कृप-भावे ल्युट्। कृप्तौ, छेदने, न्यायोक्ते अनुमिति

कल्पना स्त्री॰ कृप-णिच्-युच्। मन्त्रयन्त्रादिना कारणं भली-करणे, न्यायोक्ते अनुमितिभेदे, रचनायाञ्च।

कल्पान्त पु॰ ६त॰। प्रलये।

कल्माष पु॰ कर्म्म शुभकर्म्म स्यति षो-क पृषो॰ रस्य लत्वञ्च। नरकभेदे। पापे न॰। तद्वति, मलिने च त्रि॰।

कल्माष पु॰ कलयति कल-क्विप् कं माषति अभिभवति अच्,

माष उप०। राक्षसे,चित्रवर्णे, कृष्णवर्णे,कृष्णपाण्डुरवर्णे च। तद्वति त्रि० स्त्रियां ङीप्।

**कल्माषकण्ठ** पु० कल्माषः कण्ठो यस्य। शिवे तस्य स्वयं श्वेतत्वात् विषयोगेण कृष्णत्वात् कृष्णपाण्डुरता।

**कल्य** न० कल-यत्, कलासु साधु कला+यत् वा। प्रभाते,मधुनि ज्योतिषोक्ते लग्ने च। वाक्श्रुतिवर्जिते सज्जीभूते,वीतरोगे, दक्षे कल्याणे च जने त्रि०। [उपचारात् तत्कालभक्ष्ये

**कल्यजग्धि** स्त्री० अद-क्तिन् कल्ये प्रातर्जग्धिः। प्रातर्भोजने

**कल्याण** न०। कल्ये प्रातः अण्यते शब्द्यते अण-घञ्। हेम्नि, मङ्गले च। शुभयुक्ते त्रि०। स्त्रियां गौरा० ङीष्।

**कल्याणकृत्** त्रि०कल्याणं शुभं शास्त्रविहितं करोति कृ-क्विप्। शास्त्रविहितकर्मकारके 'न हि कल्याणकृत् कश्चि'दिति गीता

**कल्याणिका** स्त्री० कल्याण+अस्त्यर्थे ठन्। मनःशिलायाम्।

**कल्ल** कूजने अशब्दे च भ्वा०आत्म०अक०सेट्।कल्लते अकल्लिष्ट

**कल्ल** त्रि० कल्ल-अच्। बधिरे श्रवणेन्द्रियशून्ये।

**कल्लोल** पु० कल्ल-ओलच् कम् जलं लोलं चपलं यस्मादिति वा अत्र पक्षे अनुस्वारस्य लत्वम्। महातरङ्गे,हर्षे च। वैरिणि त्रि०

**कव** स्तुतौ वर्णने च भ्वा० आत्म० सक० सेट्। कवते अकविष्ट। [कवकानि चेति स्मृतिः

**कवक** पु० कु-अप् संज्ञायां कन्। ग्रासे, भूच्छत्राके, 'पलाण्डुं

**कवच** पु० कं वातं वञ्चयति वञ्च-क। गर्द्दभाण्डे वृक्षे, पटहवाद्ये च। वर्म्मणि,तन्त्रोक्ते पूजादौ पाठ्ये भूर्जपत्रे लिखित्वा धार्य्ये च देवनाममन्त्रन्यासयुक्ते वाक्यकोषे पु०न०

**कवर** पु०न० कु-अरन्। अम्ले,लवणे केशपाशे च। खचिते, संहते, शबले च त्रि०। वर्बरायां स्त्री० टाप्। कं शिरो वृणोति आच्छादयति क+वृ-अच् गौरा० ङीष्। केशविन्यासे केशवेशे, काकोल्यां हिङ्गुपत्रे वर्बरायाञ्च स्त्री०

**कवर्ग** पु०कुमदितो वर्गः सप्तमीतत्पु०। कादिषु पञ्चसु वर्णेषु। एवं चवर्गादयः। [एवं चवर्ग्य चवर्गीयादयः।

**कवर्गीय** पु०कवर्गे भवः छ। कवर्गमध्यभवे वर्णे। यत्। कवर्ग्य।

**कवल** पु० केन वलते वल-अच्। ग्रासे, (बेलमाछ) मत्स्यभेदे च

**कवलित** त्रि०कवलं ग्रासं करोति णिच्-क्त। भुक्ते,व्याप्ते च

**कवाट** न० कं वातं वटति वट-वेष्टने अण्। द्वाररोधके काष्ठखण्डे। पुंस्त्वेऽपि ङीप्। कवाटी।

**कवि** पु० कु इ। शुक्रे, वाल्मीकिमुनौ, भास्करे, काव्यकर्त्तरि, ब्रह्मणि च। अतीतानागतवर्त्तमानसूक्ष्मार्थदर्शिनि पण्डिते च त्रि०। पत्न्यां स्त्री० वा ङीप् कवी।

**कविक** न० कु इ संज्ञायां कन्। खलीने यद्धि लौहमयं घोटकमुखाभ्यन्तरे प्रग्रहयोजनार्थं दीयते तस्मिन्। [कड़]।

**कविका** स्त्री० कु-इ संज्ञायां कन्। खलीने, मत्स्यभेदे च

**कविज्येष्ठ** पु० कविषु ज्येष्ठः। वाल्मीकिमुनौ।

**कविता** स्त्री० कवेः कर्म भावो वा तल्। कविकृते काव्ये 'भवति कविता कामिनी'ति प्रसन्नराघवम्। [तद्वति त्रि०

**कवोष्ण** न० ईषदुष्णम् कोः कवादेशः। ईषदुष्णे स्पर्शे।

**कव्य** न० कु यत्। पितृुद्देशेन दत्तेऽन्नादौ। [पितृगणभेदे।

**कव्यवाल** पु० कव्यं पितृुद्देश्यकं द्रव्यं वालयति चु० वल-अण्।

**कश** शब्दे भ्वा०अक०पर० सेट्। कशति अकशीत् अकाशीत्

**कशा** स्त्री० कश-अच्। अश्वादेशासनार्थं ताडनसाधने पदार्थे, (कोड़ा, चावुक)।

**कशार्ह** त्रि०कशामर्हति अर्ह-अच्। कशया ताड्ये अदान्तेऽश्वादौ

**कशिपु** पु० कश-उ नि०। भक्ते, वस्त्रे च। समुदितयोर्भोज्यवस्त्रयोः', शय्यायाञ्च 'सख्या क्षितौ किं कशिपोः प्रयासैः' रिति प्रयोगात्।

**कशेरु** पु०न० कं हृणाति श हिंसायां उ एरुङादेशः। तृणभेदे,जलजे मूलभेदे च (केशुर)। स्वार्थे कन्। अत्रार्थे।

**कशेरू** स्त्री० कशेरु+अप्राणिजातित्वात् पक्षात् ऊङ्। जलकन्दे (केशुर)। [मलिने त्रि०।

**कश्मल** न० कश-कल मुट् च। मूर्च्छायां, मोहे, पापे च।

**कश्मीर** पु० कश ईरन् मुट् च। काश्मीराख्ये देशे। [पुंस्त्व

**कश्मीरज** पु० काश्मीरे जायते जन-ड। कुङ्कुमे काश्मीरजन्मा-

**कश्य** न० कश-यत्। अश्वमध्यभागे, मद्यभेदे च। कशामर्हति कशा+यत्। कशार्हे अदान्तेऽश्वादौ।

**कश्यप** पु० कश्यं मद्यं पिबति पा-क। 'ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः। कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यप इति निरुक्ते मुनिभेदे,मृगभेदे मत्स्यभेदे च।

**कष** वधे भ्वा०पर०सक० सेट्। कषति। अकषीत् अकाषीत्

**कष** पु० कष-अच्। (कष्टी) पाषाणभेदे, 'कषपाषाणनिभे नभस्तले' इति नैषधम्। [कण्डूयने च न०

**कषण** पु० कष ल्यु। अपक्वे (काँचा)। भावे ल्युट्। घर्षणे,

**कषाय** पु० कषति कण्ठम् कष-आय। स्नेहानाक्तद्रव्ये रागे, अन्नकरणदोषे,'कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रजायते' इति वेदान्तपरिभाषायाम्। धवहक्षे (धगाछ), रसभेदे (कषा), रक्तपीतमिश्रितवर्णे च। तद्वति त्रि०। क्वाथे पु०। क्षुद्रदुरालभायां स्त्री०।

**कषायित** त्रि० कषायो रक्तपीतवर्णो जातोऽस्य इतच्। जातकषाये 'ग्रमुनैव कषायितस्तनी'ति कुमार।

कषायिन् पु० कषाय+इनि । शालवृक्षे, नकुचवृक्षे, खर्ज्जूरी वृक्षे च । विषयरागवति त्रि०

कष्ट न० कष-क्त कृच्छ्रगहनयो कषइति नेट् । पीडायाम् व्यथायाम् पीडायुक्ते । गहने च त्रि० ।

कस गतौ भ्वा०पर०सक०सेट् । कसति अकसीत् अकासीत् ।

कस शासने गतौ च अदा०इदित आत्म०सक०सेट् । कस्ते अकसिष्ट

कस शासने गतौ च सक०अदा०आत्म० सेट् । कस्ते अकसिष्ट

कसनोत्पाटन पु० कसन कासरोगम् उत्पाटयति ल्यु । वासकवृक्षे, 'वासक कासनाशक' इति वैद्यकोक्तेः । [घ ।

कसेरु पु०कस-उ एरुन्नागम । कशेरौ, शूकरस्य प्रिये जलकन्दभेदे

कस्तीर पु०न०क जलतीरयति अच् नि०सुट् । रङ्गे (राङ्)धातौ

कस्तूरिका स्त्री०कस अर तुट् च् गौरा० ङीष्, कस्तूरी स्वार्थे कन् ह्रस्व अत इत्वम् । मृगमदे । पृषो० अतोहस्त कस्तुरिकाप्यत्र । [मृगनाभिजात गन्धद्रव्ये ।

कस्तूरी स्त्री०कषति गन्धोऽस्या कस अर तुट् च गौरा०ङीष् ।

कह्लार न०के जले ह्लादते ह्लाद-अच् पृषो० दस्य र । श्वेतोत्पले

कांस्य न० कसेन निर्वृ त्तम् कस अञ । वाद्यभेदे,पानपात्रेच । स्वार्थे ष्यञ । ताम्ररङ्गनिर्मिते उपधातौ, 'उपधातुर्भवेत्कांस्य द्वयास्तारारङ्गयोरित्युक्ते । स्वार्थे कन् । उक्तार्थे ।

कांस्यकार पु० कांस्य+कृ-अण् उप० । (कासारि) जातिभेदे

कांक पु० कै-शब्दे कन् तस्य नेत्त्वम् । स्वनामख्याते पक्षिणि । गुञ्जे, अपट्टे तिलके च ।

काककला स्त्री० काकस्य कला अवयवो जङ्घेवावयवोयस्या काकजङ्घावृक्षे । [काकस्य नाम ।

काकघ्नी स्त्री० काक हन्ति ट । महाकरञ्जे, ततफलसेवने हि

काकचिञ्चा स्त्री० काकवर्णा चिञ्चा प्रान्तभाग फले यस्या । गुञ्जायाम् । पृषो० । काक चञ्चि ,काकचिञ्ची,काकचञ्चाप्यत्र

काकच्छद पु० काकस्य छद पक्ष इव छदो यस्य । खञ्जनखगे

काकजङ्घा स्त्री० काकस्यजङ्घेवावयवो यस्या । स्वनामख्याते वृक्षभेदे (केथोयाठेङ्गा)

काकजम्बु स्त्री० काकवर्णा जम्बु । भूमिजम्ब्वाम ।

काकतालीय स्त्री०_ काकगमनसमये तालपतनमतर्कितहेतुक तदिव क्त । अवितर्कितसम्भवे यादृच्छिकागतौ ।

काकतिक्ता स्त्री० काकस्यापि तिक्ता । गुञ्जायाम ।

काकतिन्दुक पु० काकवर्ण तिन्दुक । काकपीलुके (कुचला)

काकनासा स्त्री० काकस्य नासेव फलमस्या । काकजङ्घायाम् (केयोठेङ्गा) काकनासाप्यत्र ।

काकपक्ष पु० काकस्य पक्ष इव । मस्तकपार्श्वद्वयस्थे 'बाटाना तृणिखा प्रोक्ता काकपक्ष'इत्युक्ते केशरचनाभेदे (काणपाट्टा)

काकपद न० काकस्य पदमिव । लिपौ पतितवर्णस्य उपरिलेखने तत्स्थानसूचनार्थ न्यस्ते काकपदाकारे चिह्ने । शीर्षस्थे काकपदाकारे केशपुञ्जे च (शिखा) ।

काकपर्णी पु० क कवर्ण पर्णमस्या । मुद्गपर्ण्याम् ।

काकपीलु पु० काकप्रिय पीलु शाक० । (कुचला) काकतिन्दुके

काकपीलुक पु०काकाना पीलुरिव । (कुचला) काकतिन्दुके ।

काकपुष्ट पु०काकेन पुष्ट । कोकिले,कोकिलया हि काकनीडात व अण्डमपनीय तत्स्थाने स्वडिम्ब स्थाप्यते काकश्च स्वडिम्बबुद्ध्या तत परिपाल्यते इति प्रसिद्धम् ।

काकपुष्प पु० काकवर्ण पुष्पमस्य । ग्रन्थिपर्णे वृक्षे ।

काकभीरु पु० क काकात् भीरु । पेचके ।

काकमाची पु० काकान् मञ्चते मचि अण् नलोप । कटुफल लतायाम् । (गुडकामाइ) । [पृष० । मुद्गपर्ण्याम् । (मुगानी)

काकमुद्गा स्त्री० मुद गच्छति मुद् गम् ड काका मुद्गा यस्या

काकरुहा स्त्री० काकवत् रोहति अन्यवृक्षे मूलशून्यतया जायते । (परगाछा) वन्दाकवृक्षे ।

काकलक पु० कुत्सित कल कायति कै क । ग्रीवायामुन्नतदेशे

काकली स्त्री० कल इ ईषत् कलि कादेश वा ङीष् । सूक्ष्मे मधुरशब्दे ।

काकलीरव पु काकली मधुराव्यक्तो रवो यस्य । कोकिले ।

काका स्त्री० काक काकवर्णो विद्यतेऽस्या अर्श आद्यच् । काकोल्या काकनासायाम् काकमाच्याञ्च ।

काकाक्षिगोलकन्याय पु० काकस्य एक चक्षुर्यथा उभयोरक्ष पर्यायेण चक्षु कार्यकारकमेवमेकस्योभयत्रान्वये दृष्टान्ते ।

काकाङ्गी स्त्री० काकस्याङ्ग नासेव फलमस्या । काकनासाया

काकाण्ड पु० काकस्याण्ड इव फल यस्य । महानिम्बे । कोलशिम्ब्याम् स्त्री० टाप् महाज्योतिष्मत्या च ङीष् ।

काकादनी स्त्री०काकैरद्यतेऽसौ काक+अद ल्युट् । गुञ्जायाम

काकाल पु० काककाकेतिरव लाति ला-क । द्रोणकाके ।

काकिणी स्त्री० कक लौल्ये घञ् तम् अणति अण् पृषो० । (शुद्धि) पणचतुर्थांशे 'वराटकाना दशकद्वय यत् सा काकिणी'ति लीलावती । काकिनीत्यप्यत्र ।

काकी स्त्री० काकस्य जातित्वात् स्त्रिया ङीप् । काकयोनिकाकवर्णत्वात् वायसीलतायाम् ।

काकु स्त्री० कक उण् । शोकभीत्यादिभिर्ध्वनेर्विकारे, अलङ्कारप्रसिद्धे विरुद्धार्थकल्पके नञादौ शब्दे च । [सूर्यवंश्ये नृपे

काकुत्स्थ पु०ककुत्स्थ सूर्यवंशीय नृपभेदस्तस्यापत्यम् अण्

काकुद न० काकुं ध्वनिभेदं ददाति धत्ते दा-क, काकुरुद्यते-ऽस्मिन् घञर्थे क वा शक०। तालुनि जिह्वेन्द्रियाधिष्ठान-स्थाने (तालुया)।

काकेन्दु पु० ककुर्यस्तिन्दु पृषो०। (कुचला) कटुतिन्दुके।

काकेष्ट पु० काकानामिष्टः। निम्बे तस्य हि फलं काकानामिष्टम्

काकोदर पु० कुत्सितमकति अक-अच् को कादेशः काकमो-चक्षतिमदुदरं यस्य। सर्पे। [कन्। (यज्ञडुमर) वृक्षभेदे।

काकोडु(दु)म्बरिका स्त्री० काकप्रिया उडु(दु)म्बरी शाकपा० मध्य० लोपः। [मलयाम्

काकोल पु० कक-लौल्ये स्वार्थे णिच्-ओल। द्रोणकाके, सर्पे, शूकरभेदे च। नरकभेदे, विषभेदे च पु०न०। वायस्याम् अश्वगन्धायाञ्च स्त्री०। [ङीष् अकाङ्क्षि।

काङ्क्ष वाञ्छायाम् भ्वा०उभ०इदित् सक०सेट्। काङ्क्षति अका

काक्ष त्रि० ईषत् कुत्सितमक्षि यस्य को कादेशः। कुत्सिताक्षे जने, ईषद्दर्शने कटाक्षे न०।

काक्षी स्त्री० कक्षे भवा अण् ङीप्। तुवरिकायाम् (फटकर)

काक्षीव पु० ईषत् क्षीवत्यस्मात् क्षीव-घञ् कादेशः। शोभा-ञ्जनवृक्षे (सजना)।

काङ्क्षा स्त्री० काक्षि-अ। इच्छायाम्।

काङ्गा स्त्री० कुत्सितमङ्गमस्याः कादेशः टाप्। वचायाम्।

काच पु० कच्यतेऽनेन कच-बन्धने दीप्तौ च घञ्। शिक्ये, (शिका) मणिभेदे, मृत्तिकाभेदे क्षारे, (काच्) शिकयके च (मोम)।

काचन न० काचयति बध्नाति अनेन कच-स्वार्थे णिच्-ल्युट्। पत्रबन्धनद्रव्ये लाक्षादौ। काचिदित्यर्थे अव्य०।

काचलवण न० काचस्य लवणम्। काचोत्पादनसाधने लवणे, (सोरा)। कृष्णलवणे (कालालोण)।

काचसौवर्चल न० कृत०। काचमृत्तिकासम्भवे लवणे।

काचस्थाली स्त्री० काचस्य स्थालीव (पारुलगाछ)। वृक्ष-भेदे, काचमयपात्रे च।

काचाक्ष पु० काच इवाक्षि यस्य। कपर्दकाक्षे वृहद्बके।

काचित त्रि० काचे शिक्ये चित इत पृषो०। शिक्यधृते पदार्थे

काञ्चन पु०, काचि-दीप्तौ ल्यु। स्वनामख्याते वृक्षे, चम्पके, नागकेशरे, उदुम्बरे, धुस्तूरे च। स्वर्णे पद्मकेशरे, काञ्चनाद-पुष्पे दीप्तौ च न०।

काञ्चनक पु० काञ्चनमिव कायति प्रकाशते कै-क। पक्षिभेदे, कोविदारवृक्षे च। हरिताले न०। [(चापाकला)।

काञ्चनदली स्त्री० काञ्चनमिव दलं यस्याः। स्वर्णकदल्याम्

काञ्चनक्षीरी स्त्री० काञ्चनमिव क्षीरं यस्याः गौरा० ङीष्। क्षीरिण्यां लतायाम्। [(गणियारी)।

काञ्चनपुष्पी स्त्री० काञ्चनमिव पुष्पमस्याः। गणिकारीवृक्षे

काञ्चनार पु० काञ्चनं दीप्तिमृच्छति ऋ अण्। काञ्च-वृक्षे,

काञ्चनाल पु० काञ्चनाय दीप्त्यै अलति पर्याप्नोति अल अच्। कोविदारवृक्षे। [हरिद्रायां, गोरचनायाम् स्वर्णक्षीरीवृक्षे च

काञ्चनी स्त्री० काञ्च्यतेऽनया काचि दीप्तौ करणे ल्युट् ङीप्।

काञ्चि(ञ्ची) स्त्री० काचि-इन् वा ङीप्। स्त्रीकटिभूषणभेदे, (चन्द्रहार गोट) 'एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका। रशना षोडश ज्ञेया" इत्युक्तलक्षणायष्टौ, गुञ्जायाम् 'अयो-ध्या मथुरा माया काशी काञ्ची अवन्तिके'ति पुरीभेदे च।

काञ्ची(ञ्चि)पद न० ६त०। जघने।

काञ्जिक न० अनुज-धात्वर्थनिर्देशे वुन् कुत्सिता अञ्जिका व्यक्तिर्यस्य। आरनाले (काञ्जी)।

काण पु० कण निमीलने घञ्। काके। एकचक्षुर्युते त्रि०।

काण्ड पु० न० कण शब्दे ड तस्य नेत्त्वम् दीर्घः। स्तम्बे, तृणादिगुच्छे, वृक्षस्कन्धे, (गुडी) बाणे, अवसरे, प्रस्तरे, नाडीवृन्दे, नाले, वस्तुपरिच्छेदात्मके ग्रन्थप्रकरणे, निर्ज-नस्थाने च। अर्थोऽहद्वे पु०। [(करेला)।

काण्डकटुक पु० काण्डे स्कन्धेऽपि कटुकस्तिक्तः। कारवेल्ले,

काण्डकीलक पु० काण्डे कीलमिव यस्य कप् समा०। लोध्रे, तस्मिन् कीटदंशनात् हि कीलमिव स्कन्धे जायते।

काण्डतिक्त पु० काण्डे तिक्तः। भूनिम्बे (चिराता)।

काण्डपट पु० काण्ड इव पटः। (कानात), पटभेदे, यस्य सङ्कोचे काण्डरूपता भवति।

काण्डपृष्ठ त्रि० काण्डानि पृष्ठे यस्य। शस्त्राजीवे। 'स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत्। तेन दुश्चरितेनासौ 'काण्डपृष्ठ इति स्मृतः' इत्युक्तलक्षणे जने पु०।

काण्डरुहा त्रि० काण्डात् प्ररोहति। कटुकायाम् (कट्की)।

काण्डीर त्रि० काण्डो बाणोऽस्त्यस्य ईरः। (तीरन्दाज) बाणधरे, अपामार्गे न०। मञ्जिष्ठायां कारवेल्लयाञ्च स्त्री० ङीप् वा।

काण्डेक्षु पु० काण्डेन स्कन्धेन इक्षुरिव। (तालमाखना) तृणभेदे

काण्व पु० कण्वेनाधीतं कण्। यजुर्वेदीयशाखाभेदे। अपत्यार्थे ष्यञ्। कण्वपुत्रादौ त्रि०।

कातर त्रि० ईषत्तरति स्वकार्य्यं कर्त्तुं शक्नोति कु+तॄ अच् को कादेशः। अधीरे, व्यसमाकुले, भीते, विवशे, चञ्चले च। तदध्यासितकातराक्षीति रघुः। के जले आतरति इत्यन न तु विशेषतो मज्जति। उडुपे।

कातृण न० कुत्सितं तृणं कादेशः। कुत्सिततृणे।

भारे, गर्ते च । तत संज्ञायां कन् । नौकादौ गुणाधारे (मास्तुल) काष्ठमये स्तम्भे । [रोमाञ्चे ।

कूपाङ्क(ङ्ग) पु० कूपकारोद्भवचिह्नं कूपाकारमङ्गं यस्मिन् ।

कूपार पु० कु पृथिवीं पिपर्ति पूरयति अण् पूर्वदीर्घ । समुद्रे

कूपी स्त्री०कूप-अच् गौ०ङीष्। स्नेहादिधारणार्थे चर्ममये पात्रभेदे

कूर्च पु०न० कूर्च्यते कुर-चट् नि० दीर्घ । भ्रुवोर्मध्ये, श्मिते लोमोच्चये, श्मश्रुणि, कैतवे, दर्भे, मयूरपुच्छे, कुमसुष्टौ, अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे, अङ्गुष्ठे, शीर्षे, आसनभेदे, तन्त्रोक्ते बीजभेदे च (हूम) । [दयोऽप्यत्र ।

कूर्चशिरस् न० इत० अस्थिस्कन्धे (गुडमुडा) । [शेखरा

कूर्चशीर्ष पु० कूर्चं श्मश्रु तदत् शीर्षमस्य । नारिकेले । कूर्च

कूर्चिका स्त्री० कूर्च+श्मश्रु अस्त्यर्थे ठन् । (क्षीरसा) दुग्धविकारे, सूचिकायां, तूलिकायाम् कुड्मले, कुञ्चिकायाञ्च द्रव्यमार्जनसाधने द्रव्ये,-(कु चि) तृणगुच्छे च ।

कूर्पास पु० कूर्पासवत् वर्मम् ।

कूर्म्म पु० कुत्सित कौ वा ऊर्म्मिर्वेगो यस्य ब० । कच्छपे, 'उन्मीलने कूर्म्म' इत्युक्ते देहस्थे वायुभेदे च ।

कूर्म्मचक्र न० कूर्म्माकार चक्रम् । ज्योतिषोक्ते कृषिकर्म्मोपयोगिनि, तन्त्रोक्ते जपादिकर्म्मोपयोगिनि च कूर्म्माकारे चक्रभेदे

कूर्म्मपुराण न० कूर्म्मेण कूर्म्मावतारेण भगवता उक्तम् पुराणम् । अष्टादशसु पुराणेषु मध्ये पुराणभेदे ।

कूर्म्मपृष्ठक न०कूर्म्मस्य पृष्ठमिव इवार्थे कन् । शरावे (सरा) ।

कूल आवृतौ भ्वा० पर० सक० सेट् । कूलति अकूलीत् ।

कूल न०कूल अच् । नद्यादेर्जलसमीपस्थाने तीरे,स्तूपे,शैलपृष्ठे च

कूलक पु० कूल ण्वुल् । कृमिपर्वते,वल्मीके स्थाने । (उपरदीपि)

• कूलङ्कष पु० कूलं कषति कष-खच् मुम् च । समुद्रे । नद्यां स्त्री०

कूवर पु०न० कूङ् शब्दे कुटादि वरच् । रथस्य चक्रकाष्ठ युगन्धरे कवचे च । रम्ये त्रि० ।

कूष्माण्ड पु० कुत्सित उष्मा अण्डेषु बीजेषु यस्य । (कुमडा) लताभेदे गणदेवताभेदे च । जातिताया गर्भे पुष्पाण्डोऽप्यत्र ।

कृ कृतौ भ्वा०उभ०सक०अनिट । करति ते अकार्षीत् अकृत ।

कृ करणे तना० उभ० सक० अनिट् । करोति कुरुते अकार्षीत् अकृत । कृत्रिम । [अकृत ।

कृ वधे स्वादि उभ० सक० अनिट् । कृणोति कृणुते अकार्षीत्

कृक पु० कृ बाहु । गले ।

कृकण पु० कृ इति कणति कण शब्दे अच । (कयार) क्रकर पक्षिणि कुधाकारके देहस्थ वायुभेदे च ।

कृकर पु० कृ इति करोति अट् । पक्षिणि । कुधाकारे देहस्थे वायौ ।

कृकलास पु० कृक गलं लासयति अण् । सरटे (काकलास) पक्षिणि । [मयूरे, सरटे च ।

कृकवाकु पु० कृकेण वक्ति वच-परिभाषणे ञुण् कश्च । कुक्कुटे,

कृकाटिका स्त्री० कृक कण्ठमटति अट ण्वुल् टाप् कापि-अत इत्त्वम् । ग्रीवायाश्चन्नतदेशे ।

कृच्छ्र न० कृत रक् छोऽन्तादेश । कष्टे,दुःखे, तत्कारणे-पापे, कष्टदायके प्राजापत्यादिव्रते, मूत्रकृच्छ्ररोगे च । तद्वति त्रि० ।

कृत छेदे तुदा० पर० सक० सेट् मुचादि । कृन्तति अकर्त्तीत् कर्त्तिष्यति कर्त्स्यति कृत्त ।

कृत वेष्टे रुधा०पर०सक० सेट् । कृणत्ति कृन्त अकर्त्तीत् ।

कृत न०कृ क्त । 'चत्वार्याहु सहस्राणि वर्षाणान्तु कृत युग' मिति मनूक्ते दिव्यमानेन चतुःसाहस्रमितवर्षे, मानुषमानेन १७२८०००मितवर्षे, सत्ययुगे,पर्याप्ते,अलमर्थे, फले च । रचिते त्रि० ।

कृतक न० कृत-कन् । विड्लवणे । कल्पिते, मिथ्याकल्पिते च त्रि ।

कृतकृत्य त्रि० कृतं कृत्यं कर्त्तव्यं येन । कृतार्थे समाप्तकार्य्ये धन्ये विदुषि च ।

कृतक्षण त्रि० कृत क्षण समयो येन । लब्धावकाशे ।

कृतघ्न त्रि० कृत हन्ति हन क । कृतोपकारस्य जनस्य अपकारे प्रवर्त्तमाने 'कृतघ्ने नास्ति निष्कृति'रिति पुराणम् ।

कृतच्छिद्रा स्त्री० कृत छिद्रं यस्याः । कोषातकीलतायाम् ।

कृतज्ञ त्रि० कृतं कृतोपकारं जानाति ज्ञा-क । कृतोपकार ज्ञातरि प्रत्युपकारके । कुक्कुरे पु० ।

कृतधी त्रि० कृता सम्पादिता धीर्येन । शास्त्राभ्याससंस्कृतान्तःकरणे, स्थिरचित्ते, 'कृतधी कि प्रभाषेत'ति गीता ।

कृतप्रणाश पु० कृतयो शुभाशुभयोर्भोगमन्तरेण प्रणाशो-नाश । कृतघ्नो ।

कृतम् अव्य० कृत मस्तु । अलमर्थे, निषेधे च ।

कृतमाल पु० कृता माला अस्य । आरग्वधे (सोन्दाल) कर्णिकारे च

कृतलक्षण त्रि० कृतानि लक्षणानि यस्य । गुणैर्विख्यात ।

कृतवर्म्मन् पु० हृदिकसुते यादवे क्षत्रियभेदे ।

कृतश्रम त्रि० कृत श्रमो येन । मस्तोकलान्वित ।

कृतवीर्य्य पु० कृत वीर्य्यमनेन । चन्द्रवंश्ये कार्त्तवीर्य्यार्जुनजनके नृपभेदे । वीर्य्यान्वित त्रि० ।

कृतविद्य त्रि० कृता अभ्यस्ता विद्या येन । अधीतविद्ये ।

कृतसापत्निका स्त्री० कृत सपत्न्या दत्ता यस्यै अधीत दारे अन इत्त्वम् । अध्यूढायां स्त्रियां यस्याः विवाहात् पश्चात् तदुपरि अन्या स्त्री ऊढा तस्याम् ।

कृतस्वर पु० कृत स्वरो यत्र । स्वर्णोत्पत्तिस्थाने स्वर्णाकरे ।
कृतहस्त त्रि० कृत अभ्यस्त हस्तो बाणादित्यागमोचणलाघव-
रूपा हस्तशिक्षा येन । सुशिक्षितशरमोचणविद्ये जने ।
कृताकृत न० कृत कार्य्यमकृत कार्य्यञ्च समा० द्व० । कार्य्या-
कार्य्ययोः । कर्म्म० । कृते अकृते च होमादौ । अतएव
फलविशेषस्य मन्त्रेण कृताकृतविज्ञापनाय होमादौ वरणम्
कृताञ्जलि पु० कृतोऽञ्जलिरिव पत्रसङ्कोचो येन । लज्जालु-
वृक्षे । सम्पुटीकृतहस्ते त्रि० ।
कृतात्मन् पु० कृत शिक्षित संस्कृतो वा आत्माऽन्तःकरणं
यस्य । शिक्षितचित्ते, शुद्धान्तःकरणे च ।
कृतात्यय पु० कृतस्य कर्म्मजन्यभोगस्यात्ययोऽवसानम् । भोग
विना कृतकर्म्मनाशे 'कृतात्ययेऽनुशयवानि'ति शारीरकसूत्रम्
कृतान्त पु० कृतः अन्तो विपर्य्ययनाशो निश्चयो विषयपरिच्छेदो
वा येन । ख्यातसिद्धान्ते । कृतो नाशो येन । दैवे,पापे यमे च ।
कृतान्न न० कृतं पक्वञ्च तदन्नञ्च । लड्डुकादौ पक्वान्ने, 'कृतान्न
मुदकं स्त्रिय' इति स्मृतिः ।
कृतार्थ त्रि० कृत अर्थः प्रयोजनं येन । कृतकार्य्ये ।
कृतास्त्र त्रि० कृत शिक्षितमस्त्रं येन । शिक्षितास्त्रे ।
कृति स्त्री० कृ-क्तिन् । पुरुषप्रयत्ने, कर्त्तृव्यापारे, विंशत्यक्षर-
पादके छन्दोभेदे च । [वति,निपुणे,साधौ,कृतार्थे च ।
कृतिन् त्रि० कृतमनेन इष्टादित्वादिनि । पण्डिते,योग्ये,पुण्य
कृत्त त्रि० कृत क्त । छिन्ने, वेष्टिते च ।
कृत्ति स्त्री० कृत क्तिन् । चर्म्मणि, भूर्ज्जपत्रे च ।
कृत्तिका स्त्री० कृत-क्तिन् संज्ञायां कन् । अश्विन्यवधिके
तृतीये नक्षत्रे । [पुत्रकाले सुतो जात । चन्द्रे ।
कृत्तिकासुत पु० कृत्तिकायाः सुतः । स्कन्दे, कृत्तिकातनय-
कृत्तिवासस् पु० कृत्तिश्चर्म्म वासो यस्य, कृत्ति वस्ते वस
असुन् वा । शिवे ।
कृत्य न० कृत क्यप् । कार्य्ये व्याकरणोक्तेषु यत्क्यप्तव्या-
नीयर्तव्यकेलिमाख्येषु प्रत्ययेषु पु० । कर्त्तव्ये त्रि० ।
कृत्यविद् त्रि० कृत्यं कर्त्तव्यं वेत्ति विद्-क्विप् । कार्य्यज्ञे,
विधिज्ञे, कृत्यविदित्युवाचेति रघुः । [देवभेदे च ।
कृत्या स्त्री० कृ क्यप् टाप् । क्रियायाम् अभिचारक्रियाजन्ये,
कृत्रिम न० कृ क्त्रि मप् च । सिह्लकणे, काचलवणे, तुरुष्क-
नामगन्धद्रव्ये, रसाञ्जने च । मिताक्षरोक्ते द्वादशविधपुत्रान्तर्गते
पुत्रभेदे च पु० । क्रियया निष्पन्नमात्रे त्रि० ।
कृत्स्न न० कृत-क्स्न । सर्व्वे, जले, कुक्षौ च । अशेषे त्रि० ।
कृन्तन न० कृत-ल्युट् । नि० नुम्च । छेदने, 'कृन्तन

नखकेशानां छेदनञ्च वनस्पते'रिति स्मृतिः ।
कृप कल्पने भ्वा० आत्म० लुङि लुटि ऌटि लृङि च उभ० द्युतादि
अक० वेट् । कल्पते । अकल्पत् अकल्पिष्ट अकॢप्त । कल्प्ताऽसि
कल्पितासे कल्प्तासे कल्प्स्यति कल्पिष्यते ।
कृप दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कृपयति ते अचिकृपत्-त ।
कृप युतौ चित्रीकरणे वा चुरा० पक्षे भ्वादि० पर० । कल्पयति
ते कल्पति अचीकॢपत् त अकल्पीत् ।
कृप पु० कृप-क । शरद्वत पुत्रे द्रोणश्यालके कृपाचार्य्ये ।
कृपण पु० कृप क्युन् । कृमौ । मन्दे, क्षुद्रे च 'कृपणाः फल-
हेतव' इति गीता । दीने, 'कार्पण्यदोषोपहतस्वभाव' इति
गीता अदातरि च त्रि० । [पक्षेऽक्षायाम् ।
कृपा स्त्री० कृप-अङ् । दयायां फलनिरपेक्षतया दीनजनानु-
कृपाण पु० कृपां नुदति नुद-ड । खड्गे । ङीप् । कृपाणीत्यप्यत्र ।
छुरिकायाम्, कर्त्तर्य्याञ्च ।
कृपालु त्रि० कृपां लाति ला-डु । कृपायुक्ते ।
कृपी स्त्री० द्रोणाचार्य्यस्य पत्न्याम् शरद्वतो दुहितरि ।
कृपीट न० कृप-कीटन् । उदरे, तोये च ।
कृपीटयोनि पु० कृपीटस्य जलस्य योनि । वह्नौ 'आपो
ऽग्निरग्नेराप इति श्रुतेरस्य जलयोनित्वम् ।
कृमि पु० क्रम इन् सम्प्रसारणञ्च । कीटात् सूक्ष्मजन्तौ ।
तज्जातायां लाक्षायाम्, उदरजातकीटयुक्तरोगे च ।
कृमिकण्टक पु० कृमिरिव कण्टकोऽस्य । विडङ्गे उडुम्बर
चित्रायाञ्च । [क । कोषके (रेशमिवस्त्रे) ।
कृमिकोषोत्थ न० कृमेः कोषात् उत्तिष्ठते उत्पद्यते उद्-स्था-
कृमिघ्न पु० कृमिं हन्ति हन क । विडङ्गे, भल्लातकौ, कोलकन्दे,
भल्लातके च । हरिद्रायाम् स्त्री० टाप् । वृषपर्ण्यां स्त्री० ङीप् ।
कृमिज न० कृमिभिर्जन्यते जन कर्म्मणि ड । अगुरुणि चन्दने ।
कृमितोजाते त्रि० । लाक्षायां स्त्री० टाप् ।
कृमिफल पु० कृमयः फलेऽस्य । उडुम्बरे ।
कृमिशैल पु० कृमीणां शैल इव । वल्मीके ।
कृमीलक पु० कृमीन् ईरयति जनयति ईर-ण्वुल् अस्य लः ।
वनमुद्गे । [अकर्षीत् ।
कृश तनूकरणे दिवा० पर० सक० सेट् । कृश्यति अकृशत्-
कृश त्रि० कृश-क्त नि० । अल्पे, सूक्ष्मे च ।
कृशाङ्गी स्त्री० कृशमङ्गमस्याः । प्रियङ्गुवृक्षे । कृशदेहे त्रि०
कृशानु पु० कृश-आनुक् । वह्नौ चित्रकवृक्षे च ।
कृशानुरेतस् पु० कृशानौ वह्नौ रेतोऽस्य । शिवे । देव्या
मोदमगत्स्य शिववीर्य्यस्याग्नौ प्रक्षेप कृतोऽग्निना

कार्त्तिकेयो जातः इति पुराणकथा अनुसन्धातव्या ।

कृष आकर्षणे विलेखने च तुदा० आत्म० सक० अनिट् । कृषते । अकृक्षत अकृष्ट ।

कृष आकर्षणे विलेखने च भ्वा० पर० सक० अनिट् । कर्षति अक्राक्षीत् अकार्क्षीत् अकृक्षत् ।

कृषक पु० कृष क्वुन् । फाले कृषौ । कर्षके त्रि० ।

कृष(श)(स)र पु० तिलतण्डुलसम्पाकः कृश(स)रः परिकीर्त्तितः इत्युक्ते तिलमिश्रिते पक्वे तण्डुलाद्यन्ने ।

कृषि स्त्री० कृष इक् । वैश्यवृत्तिभेदे भूमिकर्षणरूपे शस्योत्पादनव्यापारे । कर्म्मणि इक् । भूमौ ।

कृषिजीविन् त्रि० कृष्या जीवति जीव णिनि । स्वयमन्यस्य वा कृतया कृषिवृत्त्या जीविनि ।

कृषीवल त्रि० कृषिरस्त्यस्य वलच् दीर्घश्च । कर्षके ।

कृष्टपच्य त्रि० कृष्टे चैव स्वयमेव पच्यते पच क्यप् । धान्यादौ

कृष्ण पु० कृष-नक् । भगवतोऽवतारभेदे वासुदेवे देवकीनन्दने । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इत्युक्ते परब्रह्मणि वेदव्यासे अर्ज्जुने मध्यमपाण्डवे च । कृष्णवर्णत्वात् काके कोकिले करमर्द्दके (करमचा) वृक्षे नीले वर्णे च तद्वति त्रि० । कालागुरुणि अशुभकर्म्मणि च न० । द्रौपद्याम्, नीलीवृक्षे, कणायां, द्राक्षायां, नीलपुनर्नवायाम्, कृष्णजीरके, गाम्भार्य्यां कटुकायाम्, राजसर्षपे, पर्पट्यां, काकोल्यां सोमराज्याञ्च कृष्णवर्णत्वात् स्त्री० टाप् । नीलाञ्जने, लौहे मरिचे च पु० ।

कृष्णकलि पु० कृष्णः इव चञ्चलः कलिः कलिकाऽस्य । स्वनामख्याते पुष्पप्रधाने वृक्षे । [त्रि० ।

कृष्णकाय पु० कृष्णः कायो यस्य । महिषे । कृष्णवर्णतनुयुक्ते

कृष्णगन्ध पु० कृष्णः उग्रो गन्धोऽस्य । शोभाञ्जनवृक्षे ।

कृष्णगर्भ पु० कृष्णवर्णो गर्भोऽस्य । कट्फले । [ख्याते पुष्पवृक्षे ।

कृष्णचूडा स्त्री० कृष्णस्य चूड़ा इव चूड़ाऽस्य । स्वनाम-

कृष्णचूर्ण न० कृष्णस्य चूर्णम् । लौहमले (लोहार गु) ।

कृष्णजटा स्त्री कृष्णा जटा यस्याः । जटामांस्याम् ।

कृष्णजीरक पु० कर्म्म० । कृष्णवर्णजीरके (कालजीरे)

कृष्णद्वैपायन पु० द्वीपे भवः फञ् कर्म्म० । वेदव्यासे तस्य पराशरात् यमुनाद्वीपे एव जन्मेति पुराणम् ।

कृष्णधत्तू(धुस्तू)र पु० कर्म्म० (कालधुतरा) वृक्षभेदे ।

कृष्णपर्णी स्त्री० कृष्णं पर्णमस्याः । (कालतुलसी) कृष्णतुलस्याम्

कृष्णपक्ष पु० कर्म्म० । प्रतिपदाद्यमावस्यान्ताः पञ्चदश तिथयः चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः" इत्युक्ते मासार्द्धे काले । [ऽस्य । करमर्द्दे ।

कृष्णपाक पु० पच्यते इति पाकः फलं कृष्णः कृष्णवर्णः पाको

कृष्णपाकफल पु० कृष्णपाकं फलमस्य । करमर्द्दे ।

कृष्णफल पु० कृष्णं पक्कावस्थायाम् फलमस्य । करमर्द्दे, सोमराज्यां स्त्री० टाप् । [कटुकायाम् ।

कृष्णभेद पु० कृष्णोऽर्थेन भेदश्छेदः खण्डोऽस्य । वा ङीप् ।

कृष्णमुद्ग पु० कर्म्म० । (कालमुग) मुद्गभेदे ।

कृष्णरुह स्त्री० कृष्णं यथा रोहति रुह क । जतुकालतायाम्

कृष्णलवण न० कर्म्म० । सौवर्च्चलवणे । (कालानोण) ।

कृष्णलक पु० कृष्णं वर्णं लाति गृह्णाति ला क स्वार्थे कन् । गुञ्जाफले तस्यार्द्धकृष्णत्वात्तथात्वम् 'पञ्चकृष्णलकोमाष' इति मनुः

कृष्णला स्त्री० कृष्णं वर्णमर्द्धफले लाति ला क टाप । गुञ्जायाम्

कृष्णलौह न० कर्म्म० । अयस्कान्ते ।

कृष्णलोहित पु० कृष्णः सन् लोहितः वर्णो वर्णेनेति समा० । रक्तकृष्णमिश्रितवर्णे । तद्वति त्रि० ।

कृष्णवक्त्र पु० कृष्णं वक्त्रमस्य । वानरे ।

कृष्णवर्ण पु० कृष्णो वर्णोऽस्य । राहौ ग्रहे । कृष्णः अशुद्धो वर्णः । शूद्रे । न० । कृष्णवर्णवति त्रि० ।

कृष्णवर्त्मन् पु० कृष्णं वर्त्म धूमप्रसाररूपगतिस्थानमस्य । वह्नौ, राहौ ग्रहे, चित्रकवृक्षे च । कृष्णमपवित्रं वर्त्माचरणं यस्य । दुष्कर्म्मकारके त्रि० ।

कृष्णवल्लिका स्त्री० कर्म्म० । जतुकालतायाम् ।

कृष्णवल्ली स्त्री० कर्म्म० । कृष्णतुलस्याम् कर्कट्याञ्च ।

कृष्णबीज पु० कृष्णं बीजमस्य । रक्तशिग्रौ । कालिङ्गे न० ।

कृष्णवृन्ता स्त्री० कृष्णं वृन्तमस्याः । पाटलावृक्षे माषपर्ण्याञ्च । स्वार्थे कन् कापि अत इत्वम् । गाम्भार्य्याम् ।

कृष्णशा(सा)र पु० कृष्णश्चासौ शारः (सारः) शबलश्च वर्णो वर्णेनेति स० । कालसारमृगे ।

कृष्णशालि पु० कर्म्म० (कालधान) धान्यभेदे ।

कृष्णशिम्बिका स्त्री० कर्म्म० । काकाण्डयाम् ।

कृष्णशिग्रु पु० कर्म्म० । कृष्णशोभाञ्जने (कालसजना) ।

कृष्णशृङ्ग पु० कृष्णं शृङ्गमस्य । महिषे ।

कृष्णसर्षप पु० कर्म्म० । (राइ सर्षा) राजसर्षपे ।

कृष्णसार पु० कृष्णः सारोऽस्य । शिंशपावृक्षे (सिसु)

कृष्णस्कन्ध पु० कृष्णः स्कन्धोऽस्य । तमालवृक्षे ।

कृष्णागुरु न० कर्म्म० । कालागुरुणि, "कृष्णं गुरुगुणाधिकं तत्तु लौहवद् वारि मज्जति" [illegible] धन्वन्तरिः ।

केशरञ्जन पु० केशान् रञ्जयति रञ्ज-णिच् ल्यु । भृङ्गराज-
वृक्षे (भीमराज)
केशराज पु० केशा राजन्तेऽनेन घञ् । भृङ्गराजे (भीमराज)
केश(स)रिन् पु० केश(स)रा सन्त्यस्य इनि । सिंहे, अश्वे पुन्नाग
वृक्षे नागकेशरवृक्षे, बीजपूरकवृक्षे हनुमत्पितरि वानरभेदे च
केशरूपा स्त्री० केशस्येव रूपमस्याः । वन्दाकवृक्षे (परगाछा)
केशव पु० केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वाति
वा-क केश केशिनं वध्यत्वाद्वाच वाति हिनस्ति वा-क वा ।
विष्णौ । 'यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्दन !
तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसीत्युक्तेः' ।
'अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः सर्वज्ञाः केशवं
तस्मात् मा प्राहुर्द्विजसत्तमा इत्युक्तेः सूर्य्यांशुवति परे
श्वरे च । केश+प्रशस्ते व । प्रशस्तकेशवति त्रि० ।
केशवर्द्धिनी स्त्री० केशान् वर्द्धयति वृध-णिच् णिनि ।
सहदेवीलतायाम् ।
केशवेश पु० केशस्य वेशः । कवरीबन्धने । [सहदेवीलतायाम् ।
केशारुहा स्त्री० केशा आरोहन्त्यनया रुह घञर्थे क ।
केशिक त्रि० प्रशस्ताः केशोऽस्त्यस्य ठन् । प्रशस्तकेशयुक्ते जने
केशिका स्त्री० केशिन इव कायति प्रकाशते कै-क । शता-
वरीवृक्षे । [पति । विष्णौ, दैत्यभेदे, सिंहे च पु० ।
केशिन् त्रि० प्रशस्ताः केशाः सन्त्यस्य केश+इनि । प्रशस्तकेश-
केशिनिसूदन पु० केशिनं निसूदयति हिनस्ति नि+सूद-
णिच्-ल्युट् । कृष्णे केशिहादयोऽप्यत्र ।
केश्य न० केशाय हितं केश+यत् । कृष्णागुरुणि । भृङ्गराजे पु०
केसर न० के जले सरति सृ अच् । हिङ्गौ, नागकेशरपुष्पे
कासीसे, स्वर्णे च । नागकेशरवृक्षे, तुरङ्गस्कन्धस्थे केशे
सिंहस्कन्धस्थजटायां पुन्नागवृक्षे, वकुलवृक्षे च पु० ।
किञ्जल्के पु०न० ।
कै शब्दे भ्वा० पर० अक० अनिट् । कायति अकासीत् ।
कैकयी स्त्री० केकयानां देशानां राजा तस्यापत्यम् अणि ङीप् ।
दशरथपत्न्यां भरतमातरि । [केकयदेशनृपे ।
कैकेय पु० केकय+राजनि+अञ् नि० अत एत्व वृद्धि ।
कैकेयी स्त्री० कैकेयस्यापत्य स्त्री अण् । भरतमातरि दशरथपत्न्याम्
कैटभ पु० कीटवत् भाति भा क स्वार्थे अण् । दैत्यभेदे ।
कैटभजित् पु० कैटभं जितवान् जि-भूते क्विप् तुक् च ।
विष्णौ । कैटभार्य्यादयोऽप्यत्र ।
कैटर्य्य पु० किटं त्रासे घञ् कटं राति रा अतितिक्तत्वात् क स्वार्थे
ष्यञ् । निम्बे, भूनिम्बे कट्फले, पूतिकरञ्जे मदनवृक्षे च ।

कैतव न० कितवस्य कर्म्म अण् । कपटतायाम् स्वार्थे अण् ।
द्यूते, वैदूर्य्यमणौ, धुस्तूरपुष्पादौ च । [क्षेत्रसमूहे न०
कैदार पु० केदारस्य क्षेत्रस्यायम् अण् । केदारज शाल्यादिधान्ये।
कैदार(रि)क न० केदार+समूहार्थे वुञ् ठञ् वा । क्षेत्रसमूहे
कैरव न० के जले रौति रु अच् अलुक् स० कैरवी हंसस्तस्य
प्रियम् अण् । कुमुदे, शुक्लोत्पले, शत्रौ च ।
कैरविणी स्त्री० कैरव+इनि । कुमुदवृन्दाये तद्युक्तलतायाञ्च ।
कैरवी स्त्री० कैरवाय हिता अण् । चन्द्रिकायाम् ।
कैरात पु० किरात इव क्रूरः इवार्थे अण् बलवत्सर्पे,
किरातदेशे (स्वर्णादेशे) भव अण् । भूनिम्बे शम्बरचन्दने च न०
कैराल न० केरलदेशे भवम् अण् । (हिङ्गु)
कैलास पु० के जले लासो लसनं दीप्तिरस्य अलुक्स०,
केलस स्फटिकस्येव शुभ्र अण् केलीनां समूहः अण्-
कैलं तेनास्यतेऽत्र आस घञ् वा । शिवकुबेरयोः स्थाने ।
कैलासपति पु० ६त० । शिवे । [(जले) धीवरजातौ ।
कैवर्त्त पु०के जले वर्त्तते वृत-अच् अलुक् स० तत स्वार्थे अण् ।
कैवर्त्तीमुस्तक पु० कर्म० । जलस्थितमुस्तके (केशुर) ।
कैवल्य न० केवलस्य शुद्धस्य उप विरहितस्य भावः । मोक्षे ।
कैशिक न० केशानां समूहः ठक् । केशसमूहे । नाटकप्रसिद्ध
वृत्तिभेदे स्त्री० ङीप् सा० द प० ।
कैशोर न० किशोरस्य भाव अञ् । 'पौगण्ड' दशमावधि,
कैशोरमापञ्चदशादि'त्युक्तायां किशोरावस्थायाम् ।
कैश्य न० केशानां समूहः ष्यञ् । केशसमूहे ।
कोक पु० कोकः कुक आदाने अच् । चक्रवाके, वृके,
ज्येष्ठाम् खर्ज्जूरीवृक्षे, दर्दुरे विष्णौ च ।
कोकनद पु० कोकान् चक्रवाकान् नदति नाशयति अन्तर्भूत-
ण्यर्थे नद-अच् । रक्तकुमुदे, रक्तपद्मे च । [नदति त्रि० ।
कोकनदच्छवि पु० कोकनदस्येव छविर्दीप्तिर्यस्य । रक्तवर्णे
कोकबन्धु पु० कोकयोश्चक्रवाकयोर्मेलनकारित्वात् बन्धुरिव ।
सूर्य्ये । [जातौ स्त्रियां टाप् ।
कोकिल पु० कुक आदाने इलच् । स्वनामख्याते विहगभेदे
कोकिलाक्ष पु० कोकिलस्याक्षीव रक्तमक्षि पुष्पं यस्य । (ताल
माखना) वृक्षभेदे, करवीरभेदे इक्षुगन्धायाञ्च ।
कोकिलावास पु० ६त० । आम्रवृक्षे ।
कोकिलेक्षु पु० कोकिल इव कृष्ण इक्षु । (काजला) इक्षुभेदे ।
कोङ्कण पु० कोमिति कणन्त्यत्र । 'अथाप्यहं समारब्धः
कोटिदेशस्य मध्यगे सह्याचलदेशे हि कोङ्कणः परि-
कीर्त्तित' इत्युक्ते देशभेदे ।

क्रन्दति अक्रन्दीत्। [अक्रदिष्ट क्रदयति।

**क्रद्** वैकल्ये भ्वा० आत्म० अक० सेट् घटादि०। क्रदते

**क्रन्द्** निरन्तरशब्दकरणे चुरा० अक० उभ० सेट्। प्रायेणाङ्-पूर्व्व आक्रन्दयति ते आचक्रन्दत् त।

**क्रन्दन** न० क्रदि-भावे ल्युट्। शोकादिनाश्रुपातने। [क्रपयति

**क्रप** कृपायाम् भ्वा० अक० आत्म० सेट् घटादि। क्रपते अक्रपिष्ट

**क्रम** गतौ वा भ्वा० पक्षे दिवा० पर० सक० सेट्। क्रामति क्रम्यति अक्रमीत् क्रमित्वा क्रान्त्वा।

**क्रम** पु० क्रम-घञ्। नियतपूर्व्वापरभावरूपे विधाने, अनुक्रमे, शक्तौ, आक्रमणे, पादे च।

**क्रमि** पु० क्रम इन्। कृमिपदार्थे।

**क्र(क्रि)मिघ्न** पु० क्रमि हन्ति हन क। विडङ्गे।

**क्रमिज** क्रमेर्जायते जन ड। अगुरुचन्दने। लाक्षायां स्त्री०।

**क्रमु** पु० क्रम-उ। गुवाके (सुपारी)।

**क्रमुक** पु० क्रम उन् तत स्वार्थे कन्। भद्रमुस्तके ब्रह्म-दारुणि, गुवाके, पट्टिकालोध्रे च। [कन्। तत्रैवार्थे।

**क्रमेल** पु० क्रामति क्रम-विच् एलति अच् कर्म०। उष्ट्रे। स्वार्थे

**क्रय** पु० क्री-भावे अच्। मूल्यदानेन द्रव्यग्रहणे।

**क्रयलेख्य** न० ६त० "गृहं क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरा-न्वितम्। पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" इत्यु-क्तलक्षणे क्रयसूचकपत्रे (कबाला)।

**क्रयविक्रयिक** पु० क्रयविक्रयाभ्यां जीवति ठन्। वणिग्जने

**क्रयिक** पु० क्रयेन जीवति ठन्। वणिग्जने।

**क्रय्य** त्रि० क्रयाय क्रेतारः क्रीणीयुरितिबुद्ध्या प्रसारितम् क्री-यत् क्रय्यस्तदर्थे इति नि०। क्रयनिमित्तं हट्टे प्रसारिते द्रव्ये

**क्रव्य** न० क्लव-यत् रलयोरैकत्वात्। आममांसे।

**क्रव्याद्** पु० क्रव्यमत्ति अद क्विप्। राक्षसे, मांसादौ च।

**क्रव्याद** पु० क्रव्यमत्ति अद अण्। राक्षसे, सिंहे श्येने, गव-माषभक्षकेऽग्नौ 'क्रव्यादोऽमृतभक्षणे' इत्यग्निनामभेदे श्रवणात्

**क्रशिमन्** पु० कृशस्य भाव इमनिच्। कृशत्वे।

**क्रान्त** पु० क्रम-क्त। अश्वे। आक्रान्ते अतिक्रान्ते प्राप्ते सङ्क्रान्ते च त्रि०। [अतीतद्रष्टरि।

**क्रान्तदर्शिन्** त्रि० क्रान्तमतीतं पश्यति णिनि। पण्डिते

**क्रान्ति** स्त्री० क्रम क्तिन्। आक्रमणे, गतौ खगोलमध्यस्थ-सूर्यगत्यर्थं तिर्य्यग्गोलरेखायाञ्च 'अयनादयनं यावत् कक्षा तिर्य्यक् तथा परा। क्रान्तिसंज्ञा तया सूर्य्यः सदा पर्य्येति भासयन्नि'त्युक्तकक्षायामपि।

**क्रिमि** पु० क्रम-इनि इत्त्वादे। कृमिपदार्थे। [ङीप्

**क्रिमिघ्न** पु० क्रिमि हन्ति हन-क। विडङ्गे। सोमराज्यां स्त्री०

**क्रिया** स्त्री० कृ-भावे श टाप्। आरम्भे, चेष्टायाम्, इन्द्रिय-व्यापारे, पाकादिशब्दप्रवृत्तिनिमित्ते फलव्यापाररूपे धातोरर्थे, निष्कृतौ, पूजायाम्, शिक्षायां, चिकित्सायां, करणे, गर्भाधानादिसंस्कारे, व्यवहारपादविशेषे च। 'सर्व्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिये'ति स्मृतिः।

**क्रियापाद**: पु कर्म०। व्यवहारे साक्षिलेख्यादिभिः प्रतिज्ञा-तार्थसाधनरूपे तृतीये पादे 'पूर्व्वपक्षः स्मृतः पूर्व्वो द्वितीय-स्तोत्तरः स्मृतः। क्रियापादस्तृतीयः स्यादिति स्मृत।

**क्रियाफल** न० ६त०। 'उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च चतुर्विधम्। क्रियाफलं माङ्करार्थ्या' इत्युक्ते कर्मफले उत्प-त्त्यादौ, यागादिजन्ये पुण्यापुण्यादौ च।

**क्रियायोग** पु० योगार्थं क्रियमाणे देवाराधनादौ। 'यस्तु बाह्यार्थसंयोगः क्रियायोगः स उच्यते। प्रधानं कारणं योगो मुक्तेस्तु निवरोत्तमः। क्रियायोगस्तु योगस्य कारणं परमं मतमि'ति पुराणम्।

**क्रियासमभिहार** पु० सम्+अभि+हृ घञ्। ६त०। क्रि-यायाः पौनःपुन्ये। क्रियासमभिहारेण विराध्यन्तं क्षमेत कः इति माघः। [क्रीणाति क्रीणीते अक्रैषीत् अक्रेष्ट।

**क्री** क्रये (मूल्यदानेन द्रव्यग्रहणे) क्र्यादि० उभ० सक० अनिट्।

**क्रीड** खेलने भ्वा० पर० अक० सेट्। क्रीडति अक्रीडीत्।

**क्रीडन** न० क्रीड ल्युट्। परीहासे, क्रीडायाञ्च।

**क्रीडा** स्त्री० क्रीड अ। परीहासे खेलने च।

**क्रीत** पु० क्री-क्त। द्वादशपुत्रान्तर्गते 'क्रीणीयाद् यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्ये'त्युक्ते पुत्रभेदे। कृतक्रये वस्तुमात्रे त्रि०।

**क्रीतानुशय** पु० क्रीते अनुशय इष्टत्वादिना पश्चात्तापो यत्र। अष्टादशविवादेषु 'क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते। क्रीतानुशय इत्येतद्विवादपदमुच्यते' इत्युक्ते विवादभेदे।

**क्रुड** बाल्ये दिवा० आ० अक० सेट्। क्रुड्यते। अक्रोडिष्ट।

**क्रुञ्च्** पु० क्रुञ्च क्विप्। (कोंच) बकभेदे। जातित्वे ङीप क्रुञ्ची।

**क्रुञ्च** पु० क्रुञ्च कर्मणि घञ्। क्रौञ्चपर्व्वते। अच् टाप। वीणाभेदे

**क्रुध्(धा)** स्त्री० क्रुध-सम्पदादित्वात् क्विप् वा टाप्। कामा-प्राप्तिहेतुके चित्तवृत्तिभेदे कोपे।

**क्रुध** कोपे दिवा० पर० अक० सोपसर्ग सक० अनिट्। क्रुध्यति अत्यमभिक्रुध्यति अक्रुधत्। [क्षीप्

**क्रुन्च** गतौ, वक्रणेऽल्पीभावे च सक० पर० सेट्। क्रुञ्चति अक्रु-

क्रुध्य कोपे क्षेपे च क्र्या०पर० अक० सेट् । क्रुध्यति अक्रुध्यीत्

क्रुश् रोदने आक्रोशे च सक० भ्वा० पर०अनिट् । क्रोशति अक्रुक्षत् । [आहूते त्रि० ।

क्रुष्ट क्रुश-भावे क्त । रोदने रवे च । आङ्+कर्म्मणि क्त ।

क्रूर त्रि०कृत-रक् धातो क्रू । कठिने,निर्दये,परद्रोहकारिणि, नृशंसे, उष्णे च । रक्तकरवीरे श्येनखगे, काङ्कपक्षिणि ज्योतिषोक्ते रविमङ्गलमन्दराहुकेतुरूपे ग्रहे, पूर्व्वालय-भरणीमघारूपे नक्षत्रे च पु० ।

क्रूररावित् पु० क्रूरशब्दं रौति रु णिनि । द्रोणकाके ।

क्रेय त्रि० क्री-यत् । क्रेतव्ये वस्तुमात्रे ।

क्रोड पु० न० क्रुड घञ् । अङ्के (कोल) । शाखोटे शूकरे च पु० । अश्वानामुरसि भुजान्तरे च स्त्री० टाप् । वाराहीकन्दे पु०स्त्री० ।

क्रोडाङ्घ्रि पु० क्रोडे अङ्घ्रिर्यस्य । कच्छपे ।

क्रोध पु० क्रुध-घञ् । परापकाराय चित्तवृत्तिभेदे, परानिष्टाभिलाषे, अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे च ।

क्रोधज पु० क्रोधात् जायते जन-ड । मोहे 'क्रोधात् भवति संमोह इति गीता । 'पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इत्युक्ते व्यसनभेदे च ।

क्रोधन पु० क्रुध-ल्यु । कोपयुक्ते, कोपशीले, तन्त्रोक्तेषु अष्टसु भैरवेषु भैरवभेदे, षष्टिकवत्सरमध्ये ज्योतिषोक्ते 'रोगोपद्रवदुर्भिक्ष विरोधोवहुमङ्गल । क्रोधने विषमं सर्व्वमित्यु क्तफलके वत्सरभेदे च ।

क्रोश पु० क्रुश-घञ् । रोदने आह्वाने च । व्यवहृतहस्तमाने (कोश) क्रोश षट्सहस्रितयेन तथा'मिति लीलावती । मतान्तरे द्विसहस्रहस्तमाने । [स्त्रियां क्रोष्ट्री ।

क्रोष्टु पु० क्रोशति क्रुश-तुन् । शृगाले । स्वार्थे कन् अत्रैवार्थे ।

क्रोष्टुकपुच्छिका स्त्री० क्रोष्टुकस्य पुच्छमिव पत्रमस्याः (चाकुलिया) पृश्निपर्ण्याम् । [शृगाल्यां वाकुस्याञ्च ।

क्रोष्ट्री स्त्री०क्रुश तृच् ङीप् । भूमिकुष्माण्डे, विदार्य्यां,

क्रौञ्च पु० क्रुञ्च+स्वार्थे अण् । (कोंचवक) वकभेदे क्रूरपक्षिणि, दैत्यभेदे, दधिसमुद्रेणावृते द्वीपभेदे, पर्व्वतभेदे च ।

क्रौञ्चदारक(ण) पु० क्रौञ्चं दैत्यं पर्व्वतं वा दारयति द णिच् ण्वुल् युच्या । कार्त्तिकेये स हि 'क्रौञ्चक्रौञ्चौ हतौ दैत्य क्रौञ्चाद्री हेमचन्द्रे । स्कन्देन युद्धा रुधिरं चिरमायी समाश्रितः । स शैलस्तस्य दैत्यस्य ख्यातश्चित्तैव कर्म्मणा । चैततामगमत्तस्य नाम्ना क्रौञ्च' स उच्यते इतिपुराणम् ।

क्रौञ्चादन न० क्रौञ्चानां वकभेदानामदनं भक्ष्यम् । मृणाले, (घेचु) चिञ्चोटके, पिप्पल्याञ्च । पद्मवीजे स्त्री० ।

क्लथ वधे वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् घटादि० । क्लथयति ते क्लथति अचिक्लथत् अक्लाथीत् अक्लथीत् ।

क्लद रोदने अक०आह्वाने सक०इदित्पर०भ्वा०सेट् । क्लन्दति अक्लन्दीत् । [अक्लदिष्ट क्लदयति ते ।

क्लद वैकल्ये दि० आत्म० अक० सेट् घटादि० । क्लद्यते

क्लद रोदने भ्वा० उभ० इदित् अक० सेट् । क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट । [अचिक्लिमत् त ।

क्लप अव्यक्तवाक्ये चुरा० उभ०अक० सेट् घटा० । क्लपयति ते

क्लम ग्लानौ दिवा०पर०अक०सेट् । क्लाम्यति अक्लमीत् । क्लमित्वा-क्लान्त्वा । क्लान्त । [मीत् । क्लमित्वा क्लमित० ।

क्लम ग्लानौ भ्वा० पर० अक० सेट् । क्लामति अक्लमत् अक्ल-

क्लम पु० क्लम-घञ् अवृद्धि । आयासे, श्रमे च । [क्लूप्ता ।

क्लमथ पु० क्लम अथच् । आयासे । [ष्ट क्लवयति क्लवित्वा ।

क्लव भये दिवा० आत्म०अक० सेट् घटादि० । क्लव्यते अक्ल

क्लान्त त्रि० क्लम-क्त । श्रमार्त्ते । [अक्लेदीत् अक्लेत्सीत् ।

क्लिद आर्द्रीभावे दिवा०पर०अक० वेट् । क्लिद्यति । अक्लिदत्-

क्लिद रोदने इदित् भ्वा०उभ०अक०सेट् । क्लिन्दति अक्लिन्दीत्

क्लिन्न त्रि० क्लिद क्त । आर्द्रे ।

क्लिश उपतापे दि० आत्म० अक० सेट् । क्लिश्यते । अक्लेशिष्ट क्लिशित्वा । क्लिशित्वा—क्लिष्ट । [अक्लिक्षत्

क्लिश विबाधे क्र्या० पर० सक० वेट् । क्लिश्नाति अक्लेशीत्-

क्लिशित त्रि०क्लिश-उपतापे क्त । क्लेशयुक्ते वा । इड्भावे क्लिष्टोऽप्यत्र

क्लीतक न० क्लीव क्विप् नि० वलोप क्लीं तकति हसते अच् मधुके (यष्टिमधु) । [भोल्लासोपभौ ।

क्लीतकिका स्त्री० क्लीतक क्रयोऽस्त्यस्याः ठन् अत्यम् ।

क्लीब(व) मदे अप्रागल्भ्ये च भ्वा०आत्म०अक०सेट् । क्लीब(व)ते अक्लीबि(वि)ष्ट । [निरुत्साहे च ।

क्लीव(ब) पु०क्लीब(व)-अच् । नपुंसके,विक्रमहीने,धर्म्मकार्य्ये दौ,

क्लु गतौ भ्वा० आत्म० सक० सेट् । क्लवते अक्लविष्ट ।

क्लेद पु० क्लिद-घञ् । पूतीभावे, चन्द्रे च ।

क्लेश वधे उपतापे भ्वा०आत्म० सक० सेट् । क्लेशते अक्लेशिष्ट

क्लेश पु० क्लिश-घञ् । दुःखे, रोगादौ, योगशास्त्रोक्तेषु अविद्यास्मितादिषु पञ्चसु । [क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामि'ति गीता ।

क्लैव्य(ब्य) न० क्लीव(ब) भावे-ष्यञ् । निर्वीर्य्यत्वे मा क्लैव्यं गच्छ

क्लोमन् न० क्लुङ् गतौ मनिन् । 'अधस्त दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहि शिरामूलं तृष्णाच्छादन मतं

बुधैरित्युक्ते बाहुर्मध्ये स्थानभेदे । [नेति चात्यर्थे ।

क्क अव्य० किम्+अ कादेश । कुत्रेत्यर्थे चिह्नयो । कचित् क्वच

क्वण शब्दे भ्वा०पर०अक०सेट् । क्वणति अक्वाणीत् अक्वणीत

क्वाण पु० क्वण घञ् । वीणाया शब्दे ध्वनिमात्रे च ।

क्वथ निष्पचने भ्वा०पर०सक०सेट् । क्वथति अक्वथीत् । [च

क्वथित त्रि क्वथ क्त । अग्निपक्वे व्यञ्जनादौ, दशमूलपाचनादौ

क्वाथ पु०क्वथ घञ् । दुःखे, द्रव्यमात्रस्यातिशये पाके ।

क्वाथोद्भव न० क्वाथादुद्भवति अच् । तुत्थाञ्जने ।

क्ष्वेल चालने गतौ च भ्वा०पर०सक०सेट । क्ष्वेलति अक्ष्वेलीत् ।

क्ष्वेलयति अचक्ष्वेलत् । [अचक्षञ्जत् त ।

क्षज कृच्छ्रजीवने इदित् चुरा० उभ० अक० सेट् । क्षञ्जयति ते

क्षज वधे भ्वा०आ०सक०सेट् घटा० । क्षजते अक्षजिष्ट । क्षजयति

क्षञ्ज गतौ दाने च भ्वा०आत्म० इदित् सक० सेट् । क्षञ्जते

अक्षञ्जिष्ट । [अक्षणिष्ट ।

क्षण वधे तना०उभ सक०सेट् । क्षणोति क्षणुते । अक्षणीत

क्षण पु० क्षणोति दुःखम् क्षण अच् । उत्सवे, अवसर, मध्ये,

दशपलपरिमिते काले निमेषक्रियाचतुर्थभागे च ।

क्षणद पु० क्षण चालिकादिरूपमुत्सवं वा ददाति दा क ।

गणके । जले न० । रात्रौ स्त्री० ।

क्षणप्रभा स्त्री० क्षण व्याप्य प्रभा यस्याः । विद्युति ।

क्षणभङ्ग पु० क्षणात् भङ्गो यस्य । ध्वंसनाभे, सर्वेषा सावय-

वानां प्रतिक्षणमवयववैलक्षण्यापादकस्यावयवभङ्गस्य स्वी

कारो यस्मिन् मते तादृशे बौद्धादीनां मते ।

क्षणभङ्गुर त्रि० क्षणात् भज्यते भञ्ज कर्मकर्त्तरि घुरच् ।

क्षणैकनाश्ये वस्तुमात्रे ।

क्षणिक त्रि० क्षण व्याप्नोति ठन् । एकक्षणमात्रस्थायिनि

पदार्थे । यथा प्रथमक्षणे उत्पत्ति द्वितीयक्षणे स्थितिस्तृ-

तीयक्षणे नाश इति ते क्षणिका यथा बुद्ध्यादय इति तार्कि

का । कार्यकरणसमर्थानां सत्पदार्थानां भावानामुत्प

त्तिद्वितीयक्षणे नाश इति बौद्धा 'यत् सत्तत् क्षणिक'मित्युक्ते

क्षत न० क्षण भावे क्त व्रणदूषणादौ क्षये । कर्मणि क्त ।

व्रणयुक्ते त्रि० ।

क्षतघ्न पु०क्षत हन्ति हन क । (लक्षरोधा) क्षुपभेदे । लाक्षायाम्

क्षतज न० क्षतात् जायते जन ड । रुधिरे ।

क्षति स्त्री० क्षण क्तिन् । हानौ अपचय क्षये च ।

क्षत्तृ पु० क्षद तृच् । शूद्रात् क्षत्रियायामुत्पन्ने सङ्कीर्णवर्णे

प्रतीहारे, सारथौ भुजिष्यापुत्रे नियुक्ते वेधसि च ।

क्षत्र पु० क्षत किप क्षत् सतत्रायते त्रै क । क्षत्रिये क्षत त्

किल त्रायत इत्युदग्रः क्षत्रस्य शब्द इति रघु ।

क्षत्रबन्धु पु० क्षत्रस्य बन्धुरेव तत्कर्मकर्तृत्वाभावात् न तत्-

कर्त्ता । क्षत्रकार्याक्षमे निन्द्ये क्षत्रिये ।

क्षत्रिय पु० क्षत्रस्यापत्यं घ । क्षत्रजाते राजन्ये क्षतज सत्ते

कर्म वेदाध्ययनसंयुतम् । दानादानरतिर्यस्तु स वै

क्षत्रिय उच्यते इत्युक्ते वर्णभेदे ।

क्षद संवेषणे भ्वा०आत्म०सक०अनिट् । क्षदते अक्षत्त ।

क्षप क्षेपे अद०चुरा०उभ०सक०सेट् । क्षपयति ते अचक्षपत् त

क्षप सहने चुरा० इदित् उभ० सक० सेट् । क्षम्पयति ते

अचक्षम्पत् त ।

क्षप प्रेरणे चुरा०उभ०सक०सेट् । क्षपयति ते अचिक्षपत् त

क्षपणक पु० क्षपयति विषयरागं क्षप युच् संज्ञायां कन् ।

बौद्धसन्यासिनि । एक क्षपणक । नाकादृशैत्युद्भट ।

क्षपा स्त्री० क्षपयति चेष्टाम् क्षै-णिच् पुक् च अच् । रात्रौ ।

क्षपाकर पु० क्षपाया रात्रौ करोदीधितिर्यस्य । चन्द्रे स हि

रात्रौ सूर्यतेजसा दीप्यते ।

क्षपाट पु० क्षपायामटति अट-अच् । राक्षसे 'तत क्षपाटै-

र्पृथुपिङ्गलाक्षैरि'ति भट्टि । [क्षान्त ।

क्षम सहने भ्वादि०आत्म०सक०वेट् । क्षमते अक्षमिष्ट अक्षंस्त

क्षम सहने दिवा० पर०सक०सेट् शमादि० । क्षाम्यति 'काम

क्षाम्यतु य क्षमीति माघ । अक्षमीत् ।

क्षम न० क्षम अच् । युक्ते । शक्ते, हिते क्षमायति च त्रि०

क्षमता स्त्री० क्षम+तल् । योग्यतायां शब्दनिष्ठे अर्थप्रकाशन

सामर्थ्ये च 'क्षमता च लिङ्ग'मिति मीमांसा ।

क्षमा स्त्री० क्षम अङ् । तितिक्षायाम्, 'बाह्ये वाध्यात्मिके चैव

दुःखे चोत्पातिके क्वचित् । न कुप्यति न वा हन्ति सा

क्षमा परिकीर्तिता,' 'आक्रुष्टोऽभिहतो वापि नाक्रोशेन्न

च हन्ति वा । अदुष्टवाङ्मन कायैस्तितिक्षा सा क्षमा-

मतेति चोक्त लक्षणायाम् पृथिव्याम्, भूमौ च ।

क्षमिन् त्रि० क्षम-घिनुण् तच्छीलार्थ । क्षमावति । 'काम क्षाम्य

तु य क्षमीति माघ ।

क्षय पु० क्षि-अच् । नाशे, ह्रासे, अपचये, कासरोगभेदे च

गृहे, विरामे, हिताय म् द्०संवत्सरमध्ये 'देशभङ्गन दुर्भिक्षं

क्षये क्षीयते प्रजा इत्युक्तफलके वत्सरभेदे, रविसंक्रान्ति

द्वययुतशुक्लप्रतिपदादिक चान्द्रमासे माघ 'द्विसंक्रान्ति

मास क्षय कार्त्तिकादौ' । 'चौरादारान्दृष्टमासे मरीचरात्

माघो हिसंक्रान्तिरसौ अवाक्य स्मृते गते च ।

क्षयथु पु० क्षि अथु (कासरोगे) ।

**क्षयनाशिनी** स्त्री० क्षयं कासं नाशयति नश-णिच्-णिनि । जीवन्तीवृक्षे । [सभा० । कृष्णपक्षे ।
**क्षयपक्ष** पु० क्षयस्य (चन्द्रस्य क्षयार्थं) पक्ष अवधवादिवत्
**क्षर** संचलने भ्वा० पर०अक०सेट् । क्षरति अक्षारीत् ।
**क्षर** पु० क्षर-अच् । मेघे । 'कार्यकारणरूपस्तु नश्वरं क्षरमुच्यते' इत्युक्ते नश्वरे त्रि० । 'क्षरः सर्वाणि भूतानि' इति गीता । जले न० । [क्षिति ते क्षरति प्रविभजन् न अक्षारीत् ।
**क्षल** शोधने वा चु०उभ० पक्षे भ्वा०पर०सक० सेट् । क्षाल
**क्षव** पु० क्षु-अप् । क्षुते, (हाँचि) राजिकाभेदे च ।
**क्षवक** पु० क्षु-संज्ञायां कन् । राजिकाभेदे, अपामार्गे च ।
**क्षवथु** पु० क्षु-अथुच् । क्षुते (हाँचि) [इ क्षुतं जायते ।
**क्षवपत्रा** स्त्री० क्षव० पत्रेषु यस्याः । द्रोणपुष्प्याम् गत्ववाभाणे
**क्षात्त्र** न० क्षत्त्रस्य कर्म भावो वा-अण् । 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्त्रकर्म स्वभावजम्' इत्युक्ते क्षत्रियकर्मणि 'क्षात्त्रं द्विजत्वञ्च परस्परार्थमिति भट्टिः' । [सामर्थ्ये तत्परलोकापराङ्मुखे ।
**क्षान्त** त्रि० क्षम क्त । सहिष्णौ क्षेत्रविनयीड्नेऽपि सति
**क्षान्ति** स्त्री० क्षम-क्तिन् । क्षमायाम् सामर्थ्ये सत्यपकारिणोऽप्यपकाराचिकीर्षायाम् ।
**क्षाम** त्रि० क्षै-क्त तस्य म । क्षीणे, दुर्बले च ।
**क्षार** पु० क्षर-ण । (क्षार) इति ख्याते रसे, लवणे, क्षारजाते काचे, गव्यनि, गुडे, धूर्ते च । टङ्कणे (सोहागा) यवक्षारे, विड्लवणे, सर्जिकाक्षारे च न० । [पिटके च
**क्षारक** पु० क्षर-ण्वुल् । (जालि) नवकलिकावृन्दे पक्षिमत्स्यादि
**क्षारदला** स्त्री० क्षारौ दलेषु यस्याः । चुक्रवास्तूकशाके ।
**क्षारभूमि** स्त्री० क्षारयुक्ता भूमिः । यमपुरीसमीपस्थभूमौ 'किमायाचे क्षारभूमौ मायदा यमदूतिकेत्युद्भट' ।
**क्षारमृत्तिका** स्त्री० क्षारसंयुक्ता मृत्तिका । ऊषरस्थाने ।
**क्षारित** त्रि० क्षर-णिच्-क्त । अपवादयुक्ते, आप्तदोषे, स्राविते च
**क्षालित** त्रि० चु० क्षल क्त । निर्णिक्ते धनमयाजने च ।
**क्षि** क्षये भ्वा० पर० अक० अनिट् । क्षयति अक्षैषीत् ।
**क्षि** हिंसायां स्वा० पर० सक० अनिट् । क्षिणोति क्षिणुतः 'क्षियत् क्षिणुत', अक्षैषीत् । [अक्षैषीत् ।
**क्षि** गतौ सक० निवासे अक० तुदा० पर० अनिट् । क्षियति
**क्षि** हिंसायां क्र्या० पर० सक० अनिट् । क्षिणाति अक्षैषीत् ।
**क्षिण** हिंसायां तना० उभ० सक० सेट् । क्षिणोति क्षिणुते अक्षेणीत् अक्षेणिष्ट ।
**क्षिति** स्त्री० क्षि-निवासे आधारे क्तिन् । भूमौ, भावे क्तिन् निवासे । क्षि-क्षये भावे-क्तिन् । क्षये, रोचनाख्यगन्धद्रव्ये च ।
**क्षितिधर** पु० क्षितिं धारयति धृ-णिच् अच् स्तम्भे । पर्वते कूर्मवराहादिदिग्गजेषु च ।
**क्षितिपति** पु० 6त० । राजनि नृपतौ एवं क्षितीशादयोऽप्यत्र
**क्षितिरुह** पु० रोहति रुह-क 7त० । वृक्षे ।
**क्षितिवर्द्धन** पु० क्षितिं वर्द्धयति वृध-णिच् ल्यु । शवे 'करोमि क्षितिवर्द्धनमिति भट्टिः । [अचिरम् ।
**क्षिप** प्रेरणे तुदा० उभ० सक० अनिट् । क्षिपति-ते अक्षैप्सीत्
**क्षिप** नोदने दिवा० पर० सक० अनिट् । क्षिप्यति अक्षैप्सीत् ।
**क्षिपणि(णी)** स्त्री० क्षिप-अनि वा ङीप् । नौकादण्डे (दाँड) शस्त्रे, बडिशे च ।
**क्षिप्त** त्रि० क्षिप-क्त । प्रेरिते, न्यस्ते, विकीर्णे अवज्ञाते, रागद्वेषादिविषयादिविषयासक्ते चित्ते, वायुरोगयुक्ते च ।
**क्षिप्र** न० क्षिप-रक् । ज्योतिषोक्ते नक्षत्रभेदे शीघ्रे च तद्वति त्रि०
**क्षिप्रकारिन्** त्रि० क्षिप्रं करोति कृ-णिनि । (चालाक) शीघ्रक्रियाकारके ।
**क्षिप्रपाकिन्** पु० क्षिप्रं शीघ्रं पच्यते घिणुन् । (गन्धभादिलिया) द्रुमभेदे । शीघ्रपाकवति त्रि० ।
**क्षिव** निरसने भ्वा० पर० सक० सेट् । क्षेवति अक्षेवीत् ।
**क्षिव** निरसने दिवा० पर० सक० सेट् । क्षीव्यति अक्षेवीत् । क्षेविता ष्ठ्यूता । [क्षेट ।
**क्षी** हिंसायां भ्वा० उभ० सक० अनिट् । क्षयति-ते अक्षैषीत्
**क्षीज** अव्यक्तशब्दे भ्वा० पर० अक० सेट् । क्षीजति अक्षीजीत्
**क्षीण** त्रि० क्षि-क्त । दुर्बले, क्षामे च 'चतुर्दश्यष्टमे याने क्षीणो भवति चन्द्रमा इति स्मृतिः ।
**क्षीब(व)** मदे भ्वा० आत्म० अक० सेट् क्षीब(व)ति अक्षीबी(वी)त्
**क्षीब(व)** त्रि० क्षीब(व) क्त नि० । मत्ते । [जले च ।
**क्षीर** न० क्षी-सम्पादित्वात् क्विप् तामीरयति ईर-अण् । दुग्धे
**क्षीरकण्ठ** पु० क्षीरं कण्ठे यस्य । स्तनन्धये बालके । [जलाङ्ग
**क्षीरकन्द** पु० क्षीरमिव कन्दो यस्य । क्षीरविदार्याम्, क्षीरव
**क्षीरकाण्डक** पु० क्षीरान्वितं काण्डं यस्य कप् । स्नुहीवृक्षे, अर्कवृक्षे च ।
**क्षीरदल** पु० क्षीरं दले यस्य । अर्कवृक्षे ।
**क्षीरनाश** पु० क्षीरं नाशयति नश-णिच्-अण् । काखोटवृक्षे (सेओडा) तत्फलादिनिर्यासयोगेन शीघ्रमेव दुग्धं दधिवत् घनीभवतीति तस्य दुग्धनाशकता ।
**क्षीरपर्णी** स्त्री० क्षीरं पर्णे यस्याः ङीप् । अर्कवृक्षे ।
**क्षीरवल्ली** स्त्री० क्षीरा क्षीरवती वल्ली । क्षीरविदार्याम्

गर्त्त पु० गृ तन् । भूमिच्छिद्रे, स्त्रीनितम्बस्थे कूपाकारेऽंशे, रोगभेदे च 'धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्त्तास्ताः' इत्युक्ते खाते स्त्री० टाप् ।

गर्त्तिका स्त्री० गर्त्तोऽस्त्यस्या ठन् । तन्तुवयनशालायां (तांतघर)

गर्द्द रवे वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट् । गर्द्दयति-ते गर्द्दति अजगर्द्दत्-त अगर्द्दीत् । [विडङ्गे च न०

गर्द्दभ पु० गर्द्द अभच् (गाधा) गर्द्दभे, गन्धभेदे च । श्वेतकुमुदे,

गर्द्दभशाक पु० स्त्री० गर्द्दभस्य भक्ष्यं शाकं । ब्रह्मयष्टिद्रुमे (वामनहाटी) भार्ग्याम् स्त्री० ङीप् ।

गर्द्दभाण्ड पु० गर्द्दभं गन्धविशेषमण्डति अम ड शस्य नेत्वम् । प्लक्षादिवृक्षे तत्तुल्याकारे द्रुमे (पाकुड) प्लक्षे ।

गर्द्दभाह्वय पु० गर्द्दं गन्धविशेषमाह्वयति ह्वे-श । गर्द्दभ इति आह्वयो यस्य वा । कुमुदे ।

गर्द्दभी स्त्री० गर्द्द-अभच् गौ० ङीष् । गोमयकीटे, श्वेतकण्टकार्य्यां, अपराजितायाञ्च । गर्द्दभ+पु० योगे ङीष् । रासभ्याम्

गर्द्ध लिप्सायां चु० उभ० सक० सेट् । गर्द्धयति ते अजगर्द्धत् त

गर्द्ध पु० गृध-घञ् अच् वा । अतिशयस्पृहायां, गर्द्दभाण्डद्रुमे च

गर्द्धन त्रि० गृध-युच् । लुब्धे ।

गर्ब्ब गतौ भ्वा० पर० सक० सेट् । गर्ब्बति अगर्ब्बीत् ।

गर्ब्ब दर्पे अद० चुर० आत्म० सेट् । गर्ब्बयते अजगर्ब्बत ।

गर्ब्ब पु० गर्ब्ब-दर्पे घञ् । अहङ्कारे ।

गर्भ पु० गृ-भन् । भ्रूणे देहजन्मकारके शुक्रशोणितानुबन्धजन्ये 'गर्भाशयगतं शुक्रमार्त्तवं जीवसङ्क्रमम् । प्रकृतिः सविकारा च तत्सर्वं गर्भसंज्ञित'मित्युक्ते मांसपिण्डे, शिशौ कुक्षौ, नाटकसन्धिभेदे, पनसकण्टके, अपवरके, 'भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् । तावद्गर्भं विजानीया'दित्युक्ते भाद्रकृष्णचतुर्द्दश्यां गङ्गाजलप्लावनस्थाने, अन्ने, अग्नौ, पुत्रे, च ।

गर्भक पु० गर्भे केशमध्ये कायति कै-क । केशमध्यस्थे माल्ये ।

गर्भगृह न० गर्भ इव गृहम् । गृहमध्यभागे ।

गर्भघातिनी स्त्री० गर्भं हन्ति हन-णिनि । लाङ्गलिकावृक्षे ।

गर्भद पु० गर्भं ददाति दा-क । पुत्रजीवद्रुमे । क्षुपभेदे स्त्री० टप् ङीप् । गर्भदात्रीत्यप्यत्रार्थे । [(पटेयान) ।

गर्भपाकिन् पु० गर्भे पाकोऽस्त्यस्य इनि । षष्टिकधान्ये

गर्भपातक पु० गर्भं पातयति पत णिच्-ण्वुल् । रक्तशोभाञ्जने (लालसजना) । [कर्णिकारीद्रुमे ।

गर्भपातनी स्त्री० गर्भं पात्यतेऽनया पत-णिच्-ल्युट् ङीप् ।

गर्भपातिनी स्त्री० गर्भं पातयति-पत-णिच्-णिनि ङीप् ।

विशल्यावृक्षे । [गर्भाया स्त्रियाम्

गर्भवती स्त्री० गर्भोऽविद्यतेऽस्या मतुप् मस्य वः । आपन्न

गर्भशय्या स्त्री० गर्भस्य शय्येव स्थानम् । 'शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रकीर्त्तिते'त्युक्तलक्षणे गर्भोत्पत्तिस्थाने । 'गर्भशय्यां गतोऽवे'ति वेणीसंहार । .[गर्भस्य पतने

गर्भस्राव पु० स्रु-घञ् ६त० । प्रसूतिकालात् पूर्वं रोगादिना

गर्भस्राविन् पु० गर्भं स्रावयति स्रु णिच्-णिनि । हिन्तालवृक्षे

गर्भागार न० गर्भ इवागारम् । गृहमध्यभागे वासगृहे । गर्भ इवागारम् । गर्भस्थाने ।

गर्भाधान न० गर्भं शुद्धतया आधीयते येन । दशविधसंस्कारान्तर्गते गर्भधारणस्य संस्कारपूर्व्वक गर्भनिषेके ।

गर्भाशय पु० गर्भ आशेतेऽत्र शी-अच् । गर्भवेष्टनचर्म्मणि जरायौ

गर्भाष्टम पु० गर्भात् गर्भग्रहणसमयादष्टमः । गर्भग्रहणावधिकेऽष्टमे मासि वर्षे वा 'गर्भाष्टमेऽब्दे कुर्व्वीते'ति मनुः ।

गर्भिणी स्त्री० गर्भोऽस्त्यस्या इनि । गर्भवत्यां सगर्भायां स्त्रियाम्

गर्भोपघातिनी स्त्री० गर्भमुपहन्ति उप+हन-णिनि । गर्भघातिन्यां गवि । [तृणभेदे च ।

गर्मुत् स्त्री० गृ-उति मुट् च । स्वर्णे, लतायां, (मयना)

गर्व मदे भ्वा० पर० सक० सेट् । गर्वति अगर्वीत् ।

गर्व पु० गर्व-घञ् । अभिमाने, 'ऐश्वर्य्यरूपतारुण्यकुलविद्यावलैरपि । इष्टलाभादिनाऽन्येषामवज्ञा गर्व्व ईरित'इत्युक्तेऽवस्थाभेदे च । [अजगर्हत । पक्षे भ्वादिरूपम् ।

गर्ह निन्दायां वा चुरा० पक्षे भ्वा० आत्म० सक० सेट् । गर्हयते

गर्ह कुत्सायां भ्वा० आत्म० सक० सेट् । गर्हते अगर्हिष्ट ।

गर्ह्य त्रि० गर्ह-ण्यत् । निन्द्ये, अधमे च ।

गर्ह्यवादिन् त्रि० गर्ह्यं वदति वद-णिनि । कुत्सितवादिनि कद्वदे

गल भक्षणे स्रावे च भ्वा० पर० सक० सेट् । गलति अगालीत्

गल स्रावणे चुरा० आत्म० सक० सेट् । गालयते अजीगलत

गल पु० गल-अच् । कण्ठे (गला) सर्ज्जरसे (धुना) वाद्यभेदे, शकुलमत्स्ये च ।

गलक पु० गल-वुन् । खल्पशकुलमत्स्ये । [मांसपिण्डे

गलकम्बल पु० गले कम्बल इव । सास्नायां गवां गलस्थिते

गलगण्ड पु० ७त० । (गरगण्ड) । रोगभेदे ।

गलग्रह पु० 'आरम्भानन्तरं यत्र प्रत्यारम्भो न दृश्यते । गर्गादिमुनयः सर्व्वे तमेवाहुर्गलग्रह'मित्युक्ते प्रत्यारम्भाभाववति पदार्थे, 'कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहाः' इत्युक्ते तिथ्यष्टके च

गलन्तिका स्त्री० गल-शतृ ङीप् अल्पार्थे कन् जलधारिधारा युतायां (झारा) कर्कर्यां 'देवे देया गलन्तिकेति स्मृतिः ।
गल(वे)स्तनी स्त्री० गले स्तनौ यस्याः वा अलुक्स० । छाग्याम् ।
गलहस्त पु० गले हस्त । अपसारणार्थं गलेऽर्पिते हस्ते (गलाटिपि)
गला स्त्री० गल-अच् । लज्जालुलताभेदे, अजशृङ्गप्याञ्च ।
गलित त्रि० गल-क्त । पतिते स्खले, च्युते, हस्तादितो भ्रष्टे च ।
गलेगण्ड पु० गले गण्ड इव यस्य । पक्षिभेदे (हाड़गेला)
गलोद्देश पु० गलस्य उद्देशः समीपम् । गलसमीपस्थेऽवयवे ।
गल्भ धार्ष्ट्ये, प्रागल्भ्ये, भ्वा० आ० सक० सेट् । गल्भते अगल्भिष्ट
गल्या स्त्री० गलानां कण्ठानां समूहः । कण्ठसमुदाये ।
गल्ल पु० गल-ल तस्य नेत्त्वम् । (गाल) गण्डे ।
गल्लक पु० गलति क्विप् गल् तं लाति गृह्णाति ततः स्वार्थे कन् । चषके मद्यपानपात्रे । [भेदे च
गवय पु० गु-अयच् । गोसदृशे गलकम्बलहीने पशुभेदे वानर-
गवल पु० गुङ् शब्दे अल् तं लाति ला-क । वनमहिषे । तत्सम्बन्धित्वात् तच्छृङ्गे न० ।
गवाक्ष पु० गवां किरणानामक्षि इव । जालाकारे कुलवधूदृष्टिस्थाने वातायने ।
गवाक्षी स्त्री० गां भूमिमक्ष्णोति अक्ष् ङीप् । (गोमुक) लताभेदे, (पेचोडा) शाखोटे, अपराजितायाञ्च । [ङीप् ।
गवादन न० गोभिरद्यते अद-ल्युट् । घासे । इन्द्रवारुण्यां स्त्री०
गवेडु पु० गवे दीयते दीङ् रवणे कु पृ० दस्य ड अलुक् स० । (गडगडे) धान्यभेदे । [कनि स्त्रीत्वेन टाप् अन्वेषणार्थे ।
गवेधु पु० गवे धीयते धाञ्-धारणे कु । (गडगडे) धान्यभेदे,
गवेधुका स्त्री०न० । गवामीषः गौरवः तथाभूतः इव कायति कै क गौरा० ङीष । (गोरखचाकुलिया) लताभेदे ।
गवेष अन्वेषणे, अद० चुरा० उभ० सेट् । गवेषयते अजगवेषत ।
गवेषणा स्त्री० गवेष-युच् टाप् । अन्वेषणे । ल्युट् अन्वेषार्थे न० ।
गव्य त्रि० गोर्विकारः गवि भवं, गोर्हितं, गोरिदं, वा सर्वत्र यत् गोसम्बन्धिनि, गोर्हितादौ च । ज्यायां रागद्रव्ये च न० ।
गव्यूति स्त्री० गोर्यूतिः । क्रोशद्वये क्रोशे च ।
गह गहने अद० चु० उभ० सक० सेट् । गहयति ते अजगहत् त
गहन न० गाह-युच् पृ० ह्रस्वः । कानने, गह्वरे, दुःखे च । दुर्गमे, दुष्प्रवेशे च त्रि० । 'गहना कर्मणो गतिरि'ति गीता
गह्वर पु० गाह-वरच् नि० । निकुञ्जे । दम्भे, वने, रोदने, विषमस्थाने, अनेकार्थसङ्कटे च न० । गुहायां न० स्त्री० स्त्रीत्वपक्षे ङीप् ।
गा गतौ भ्वा० आत्म० सक० अनिट् । गाते अगास्त ।
गा स्तुतौ सक० जन्मनि अक० जुहो० । जगाति अगासीत् ।
गाङ्गेय पु० गङ्गा+ढक् । भीष्मे, कार्त्तिकेये च । 'दं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्बं पर्वते न्यस्तं हिरण्यं समपद्यते'त्युक्ते स्वर्णे, तन्नामनामके धुस्तूरे, सुतके, कसेरुणि च
गाङ्गेरुकी स्त्री० गाङ्गं जलमीरयति क्षिपति ईर-उ स्वार्थे कन् गौरा० ङीप् । नागवलायाम् ।
गाजर न० गां जरयति जॄ-णिच्-अच् । गृञ्जने (गाजोर) ।
गाढ न० गाह-क्त । अतिशये दृढे । तद्युते, अवगाढे, सेविते च त्रि० । तपःस्विगाढां तमसां प्राप्येति रघुः ।
गाणिक्य न० गणिकानां समूहः ष्यञ् । वेश्यासमूहे ।
गाण्डि पु० गण्ड-इन् पृ० वृद्धिः । ग्रन्थौ ।
गाण्डि(ण्डी)व पु० न० । गाण्डिर्ग्रन्थिरस्यास्ति वा पृषोदर-दीर्घः । अर्जुनचापे, चापमात्रे च । [मात्रे, अर्जुनवृक्षे च
गाण्डी(ण्डि)विन् पु० गाण्डी(ण्डि)व+इनि । अर्जुने, धानुष्क
गात्र शैथिल्ये अद० चु० आत्म० अक० सेट् । गात्रयते अजगात्रत
गात्र न० गा ष्ट्रन् । देहे, गजापरजङ्घादौ च ।
गात्रभङ्ग पु० भञ्ज-घञ् गात्रस्य भङ्गोऽवसादो यस्याः । स्त्रूकशिम्ब्याम् । इत० । अङ्गभङ्गे (गामोडा) स्त्री० ।
गात्रानुलेपनी स्त्री० गात्रमनुलिप्यतेऽनया लिप-ल्युट् । अनुलेपनवर्त्तिकायाम् ।
गाथक त्रि० गै-थकन् । गायके गानोपजीविनि ।
गाथा स्त्री० गै-थन् । आर्याच्छन्दसि प्राकृतादिभाषारचिते पद्ये, श्लोके च । [अगाधिष्ट । अजगाधत्
गाध प्रतिष्ठायां ग्रन्थे लिप्सायाञ्च भ्वा० आ० अक० सेट् । गाधते
गाध पु० गाध-घञ् । स्थाने, लिप्सायां, तलस्पर्शे च । [नृपभेदे
गाधि पु० गाध इन् । चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि
गाधिज पु० गाधेर्जायते जन-ड । विश्वामित्रे ।
गाधेय पु० गाधि+अपत्ये ढक् । विश्वामित्रे मुनौ ।
गान न० गै-ल्युट् । गीतौ, ध्वनौ च ।
गान्दिनी स्त्री० गङ्गायां, यादववंश्यस्य अक्रूरस्य मातरि च ।
गान्धर्व त्रि० गन्धर्वस्येदम् अण् । गन्धर्वसम्बन्धिनि । 'इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेय' इत्युक्ते विवाहभेदे, भारतवर्षीयोपद्वीपभेदे च पु० । सामवेदस्तोमभेदे अग्नीशयाख्ये, पदस्वरसंघातकालेन सङ्गतया । "प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते'इत्युक्ते गाने च न० ।
गान्धार पु० मध्यं सौरभमृच्छति अण् प्रज्ञाद्यण् । सिन्दूरे गीतिविषये रागभेदे, स्वरभेदे च । कन्दार इति ख्याते देशोद्भवे त्रि० । गन्धके न० ।

गान्धारराज पु० गान्धाराणां जनपदानां राजा टच् । दुर्य्योधनमातामहे सुबले तत्सुते शकुनौ च ।

गान्धारी स्त्री० गन्धारस्य अपत्यम् अण् । दुर्य्योधनस्य मातरि धृतराष्ट्रस्य पत्न्याम् ।

गान्धिक पु० गन्धेन जीवति ठक् । गन्धवणिजि ।

गायत्री स्त्री० गायन्तं त्रायते त्रै क । वेदोक्ते, मन्त्रभेदे, षड्-वर्णपादके छन्दोभेदे च ।

गायन त्रि० गै-ल्युट् । गानोपजीविनि । स्त्रियां ङीप् ।

गारुड न० गरुडो देवताऽस्य । मरकतमणौ, विषमन्त्रे, स्वर्णे च । तेन प्रोक्तमित्यण् । गरुडेनोक्ते पुराणभेदे च ।

गारुडिक पु० गारुडेन विषमन्त्रेण जीवति ठक् । विषवैद्ये ।

गारुत्मत न० गरुत्मान् देवतास्य अण् । मरकतमणौ ।

गार्द्धपक्ष पु० गृध्रस्येव गार्द्ध्रं अण् स पक्षः पत्रं यस्य । गृध्रपक्षरचितपत्रके बाणे । [गार्भिण्यमप्यत्र ।

गार्भिण न० गर्भिणीनां समूहः अञ् । गर्भिणीसमूहे । यञ् ।

गार्हपत्य पु० गृहपतिना नाम्ना युक्तः । यज्ञियाग्निभेदे ।

गार्हस्थ्य न० गृहस्थस्य भावः कर्म वा । गृहस्थस्यावश्यकर्त्तव्ये कर्म्मणि, तद्धर्म्मे च ।

गालव पु० गल घञ् तं वाति वा-क । मुनिभेदे लोध्रवृक्षे च ।

गालि पु० स्त्री० गल-इन् । शापे आक्रोशे च । [अगाढ

गाह विलोडने भ्वा० आत्म० सक० सेट् । गाहते अगाहिष्ट-

गि(गी)रा स्त्री० गॄ क्विप् वा टाप् । वाक्ये ।

गिरि पु० गॄ-कि । पर्व्वते । 'भद्रोऽर्कशाङ्कर्य्यावेरी सत्रकेशी दिगम्बरः । सर्व्वत्र समभावेन भावयेद्यो नरोत्तमः । दृष्ट-देवीधिया नारीं स गिरिः परिकीर्त्तितः' इत्युक्तलक्षणे संन्यासिनि, परिव्राजकोपाधिभेदे च । यथा आनन्दगिरिः । गिलति लोकम् गॄ अच् । बालमूषिकायां स्त्री० वा ङीप् ।

गिरिकदली पु० ७त० । बहुबीजायाम् वनरम्भायाम् ।

गिरिकर्णी स्त्री० गिरेर्बालमूषिकेव कर्णं पत्रं यस्याः । अपराजितायाम् । स्वार्थे कन् गिरिकर्णिकाप्यत्र ।

गिरिका स्त्री० गिर+संज्ञायां कन् । बालमूषिकायाम् ।

गिरिज न० गिरौ जायते जन-ड । अभ्रे, शिलाजतुनि, लौहे, गैरिके च । मधूकभेदे पु० । पार्व्वत्यां मातुलुङ्ग्यां च स्त्री० ।

गिरिदुर्ग न० गिरिरिव दुर्गम् । राज्ञां शत्रुभ्यो निःशङ्कया वासस्थानं दुर्गम् (गड) । पर्व्वतरूपे तादृशे स्थाने, 'सर्व्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेदिति मनुः ।

गिरिनिम्ब पु० ७त० महानिम्बे ।

गिरिपीलु पु० ६त० (फालसा) इति वृक्षभेदे ।

गिरिपुष्पक न० गिरेः पुष्पमिव स्वार्थे कन् । शैलेये, शिलाजतुनि

गिरिभिद् पु० गिरिं भिनत्ति भिद् क । पाषाणभेदके वृक्षे, इन्द्रे च

गिरिमल्लिका स्त्री० गिरौ मल्लीव स्वार्थे कन् । कुटजवृक्षे ।

गिरिश पु० गिरौ शेते शी ड, गिरिरस्त्यस्य लोमा० श वा । शिवे । [शिनि । अपराजितायाम् ।

गिरिशालिनी स्त्री० गिरिणा बालमूषिकाकर्णेनेव शलते शल-

गिरिसुत पु० ६त० । मैनाकपर्व्वते । पार्व्वत्याम् स्त्री० ।

गिरीश पु० गिरेः कैलासस्य ईशः । महादेवे ।

गिल पु० गिलति गॄ मूल० क लत्वम् । जम्बीरे ।

गिलित त्रि० गॄ क गिलो जातोऽस्य तारका० इतच् । भक्षिते

गीत न० गै क्त । गाने तत्त्वज्ञादिके शब्दभिधाने ।

गीता स्त्री० गै-कर्म्मणि क्त । गुरुशिष्यकल्पनया उपदेशात्मके कथाविशेषे सा च भगवद्गीतारामगीतादिभेदात् बहुला किन्तु भगवद्गीतायामेव प्रसिद्धिः । गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्मात् विनिःसृतेति श्रीधरस्वामिधृतवचनम् ।

गीति स्त्री० गै क्तिन् । गाने, आर्य्याछन्दोभेदे च ।

गीर्णि स्त्री० गॄ-क्तिन् । गिलने, स्तुतौ च ।

गीर्व्वाण पु० गीरेव वाणो यस्य । देवे ।

गीष्पति पु० गिरां पतिः इदुपधत्वात् षत्वम् । बृहस्पतौ । वा रत्वे विसर्गे च । गीर्पतिः गीःपतिरप्यत्र ।

गु अव्यक्ते शब्दे भ्वा० आत्म० अक० अनिट् । गवते अगोष्ट ।

गु विष्ठोत्सर्गे तुदा० कुटा० पर० अक० अनिट् । गुवति अगुत

गुग्गुल(लु) पु० गुज क्विप् गुक् व्याधि ततो गुडति रक्षति उ-गुड-क वा डलयोरैक्यम् । स्वनामख्यातनिर्य्यासके वृक्षभेदे, रक्तशोभाञ्जने च ।

गुच्छ पु० गु-सम्प० क्विप् गुतं छ्यति छो-क । कलिककुसुमादि-समूहवति स्तवके, काण्डरहिते मूलत एव शाखाप्रधान-संघातके धान्यमल्लिकादौ स्तम्बे, द्वात्रिंशद्यष्टिके हारभेदे, मयूरपुच्छे च । स्वार्थे कन् । उक्तार्थेषु । संज्ञायां कन् । रीठाकरञ्जे ग्रन्थिपर्णे न० ।

गुच्छकरञ्ज पु० गुच्छाकृतिः करञ्जः । करञ्जभेदे ।

गुच्छदन्तिका स्त्री० गुच्छीभूता दन्ता पुष्परूपा अन्यस्याः ठन् । कदल्याम् तस्या हि मोचकरूपे पुष्पे गुच्छाकृतिदन्तरूपत्वम् । [भिल्लेरप्यस्य गुच्छात्मत्वम् ।

गु(गु)च्छपत्र पु० गुच्छाकृतीनि पत्राण्यस्य । तालवृक्षे तस्य हि

गु(गु)च्छपुष्प पु० गु(गु)च्छाकृतीनि पुष्पाण्यस्य । सप्तच्छदवृक्षे । संज्ञायां कन् । रीठाकरञ्जे धातक्यां स्त्री० ङीप् ।

मितगृहे, वन्याम्, गृध्रनखीवृक्षे, (गुड़कामाची)।

**गु(गू)वाक** पु० गु-पिनाकादित्वात् आक नि० (सुपारी) क्रमुके।

**गुह** संवरणे भ्वा०उभ०सक०वेट्। गूहति ते अगूहीत् अघुक्षत् अगूहिष्ट अगूढ।

**गुह** पु० गुह-क। कार्त्तिकेये, अश्वे, राममित्रे शृङ्गवेराधिपे चण्डालनाथे, गर्त्ते, विष्णौ च। सिंहपुच्छीलतायाम् अश्वलिमे देवखाते पर्व्वतगर्त्ते, हृदये च स्त्री०। गुहां प्रविष्टाविति श्रुति।

**गुहाशय** पु० गुहायां गर्त्ते आशेते शी-अच्। अज्ञाने। 'सिंहव्याघ्रतरक्षूनलतरक्षुद्वीपिनस्तथा। बभ्रुजम्बुकमार्ज्जारा इत्याद्याः स्युर्गुहाशया इत्युक्तेषु सिंहादिषु, हृदये, बुद्धौ च स्थिते जीवे, ईश्वरे च 'गुहाशयं गह्वरेष्ठ'मिति श्रुतिः।

**गुहिल** न० गुह-इलच् कित्। धने, वने च।

**गुह्य** त्रि० गुह-क्यप्। कच्छपे, दम्भे, परमात्मनि च। रहसि, भगे, लिङ्गे च न०। रहस्ये, गुह्यामर्हति दण्डादित्वात् यत्। अप्रकाश्ये च त्रि०। [कुबेरधनरक्षके देवयोनिभेदे।

**गुह्यक** पु० गुह्यं कं सुखं यस्य, गुह्यं कुत्सितं कायति कै-क वा।

**गुह्यकेश्वर** पु० ६त०। कुबेरे।

**गुह्यपुष्प** पु० गुह्यं पुष्पमस्य। अश्वत्थवृक्षे। [जुगाव। गूनः

**गू** विष्ठात्यागे तुदा०कुटा०पर०अक०सेट्। गुवति अगुवीत्

**गू** स्त्री० गच्छत्यपानेन देहात् गम-क्वु टिलोपश्च। विष्ठायां, मले च। गूधातोः क्विप्प्रत्ययान्ततकथनं पुंलिङ्गताकथनञ्च भ्रमादिकम्।

**गूढ** त्रि० गुह-क्त। गुप्ते, संवृते, गहने च। रहसि न०।

**गूढज** पु० गूढं गुप्तं यथा तथा जात -गूढ सन् वा जातः जन ड। द्वादशपुत्रमध्ये पुत्रभेदे। [हितकेनापि न दुश्चरम्

**गूढनीड** पु० गूढं नीडं वासस्थानं यस्य। खञ्जनखगे तस्य वासस्थानं

**गूढपत्र** पु० गूढं पत्रमस्य। अङ्कोठे, करीरे च।

**गूढपाद्(द)** पु० गूढाः पादा अस्य वा पाद्भावः। सर्पे।

**गूढपुरुष** पु० कर्म०। गुप्तचरे, प्रणिधौ।

**गूढपुष्प** पु० गूढानि संवृतानि पुष्पाण्यस्य। प्लक्षवृक्षे।

**गूढफल** पु० गूढं यथा तथा फलति अच्। बदरे।

**गूढमैथुन** पु० गूढं केनाप्यदृश्यं मैथुनं यस्य। काके।

**गूढवल्लिका** स्त्री० कर्म०। अचोरवृक्षे।

**गूढसाक्षिन्** पु० कर्म०। 'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते' इत्युक्ते साक्षिभेदे।

**गूढाङ्ग** पु० गूढान्यङ्गान्यस्य। कच्छपे।

**गूढोत्पन्न** पु० 'उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्यात् यस्य तल्पजः' इत्युक्ते पुत्रभेदे।

**गूथ** पु० न०। गू-थक्। विष्ठायाम्।

**गूर** उद्यमे चुरा०आ०अक०सेट्। गूरयते अजूगुरत।

**गूर** वधे गतौ च दिवा०आत्म०सक०सेट्। गूर्यते अगूरिष्ट।

**गृ** सेके भ्वा०पर०सक०अनिट्। गरति अगार्षीत्।

**गृज** ध्वनौ भ्वा०पर० अक०सेट्। गर्जति अगर्जीत्।

**गृज** ध्वनौ भ्वा०पर०अक०सेट् इदित्। गृञ्जति अगृञ्जीत्।

**गृञ्जन** पु० गृञ्ज्यते भक्ष्यत्वेन वार्य्यते रोगेषु गृञ्जि-ल्युट्। 'गन्धकतिरसैस्तस्य पलाण्डुनालः भक्ष्यश्च गृञ्जने' युक्तालक्षणे मूलभेदे (गाजर) इति ख्याते मूलभेदे च। विषदग्धपशुमांसे न०। [अगर्द्धीत्। गर्द्धित्वा-गृद्धा।

**गृध** अभिकाङ्क्षायां दिवा० पर०सक० सेट्। गृध्यति अगृधत्-

**गृध्नु** त्रि० गृध-क्नु। लुब्धे।

**गृध्र** पु० गृध-क्रन्। (शकुनि) खगभेदे।

**गृध्रनखी** स्त्री० गृध्रस्य नखस्येव पत्रादि अस्याः ङीप्। बदर्य्याम् (कुलेखाड़ा) कुलिकावृक्षे च।

**गृध्रराज** पु० ६त०। गरुडात्मजे जटायुखगे।

**गृष्टि** स्त्री० सकृत् गर्भं गृह्णाति ग्रह-क्तिच्-पृ०नि०। सकृत्प्रसूतायां गवि, वराहक्रान्तायां, बदरायामोषधौ, काश्मर्य्यां च।

**गृह** ग्रहणे चुरा०आत्म०सक० सेट्। गृहयते अजगृहत

**गृह** न० ग्रह गेहार्थे क। इष्टकादिरचिते गेहे। ग्रह-ग्रहणे अच्। कलत्रे 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतिः। नामनि, मेषादिभवने राशौ च। अर्द्धर्चादित्वादयमुभयलिङ्गः तत्र एकगृहे न० पुंलिङ्गस्तु बहुवचनान्त एव 'तत्रागारं धनपतिगृहा'-निति मेघदूतम्। कलत्रेऽपि दारशब्दवत् ब०व०।

**गृहकच्छप** पु० गृहे कच्छप इव। पेषणशिलायाम्।

**गृहकन्या** स्त्री० गृहे कन्येव। घृतकुमार्य्याम्।

**गृहकारक** पु० गृहं करोति कृ-ण्वुल्। (घरामि) गृहनिर्म्माणकारके वर्णसङ्करभेदे। [चित्रकण्ठे (घुघु)

**गृहनाशन** पु० गृहं नाशयति नश-णिच् ल्यु। वनकपोते

**गृहगोधा** स्त्री० गृहस्य गोधेव। (टिकटिकी) ज्येष्ठ्याम्। स्वार्थे कन् तत्रैवार्थे।

**गृहपति** पु० ६त०। गृहस्वामिनि, गृहस्थे, मन्त्रिणि, धर्म्मे च।

**गृहभूमि** स्त्री० गृहयोग्या भूमिः। वास्तुभूमौ।

**गृहमणि** पु० गृहे मणिरिव। प्रदीपे।

**गृहमृग** पु० गृहस्य मृग इव। कुक्कुरे। [गृहस्थे।

**गृहमेधिन्** पु० गृहैर्दारैर्मेधते सङ्गच्छते मेध-सङ्गमे णिनि।

**गृहमेधीय** पु० गृहमेधिनोऽयं छ । गृहस्थकर्त्तव्ये धर्म्मे ।
**गृहयालु** त्रि० गृह-आलु । ग्रहीतरि । [समीपस्थोपवने ।
**गृहवाटिका** स्त्री० गृहसमीपे वाटिका आरामः । गृह-
**गृहस्थ** पु० गृहेषु दारेषु तिष्ठति अभिरमते स्था-क । गृहिणि
**गृहागत** पु० गृहमागतः आ+गम-क्त । आगन्तुके, अतिथौ ।
गृहागते त्रि० । [पक्षे उपवने ।
**गृहाराम** पु० गृहे गृहसमीपे आरामः । गृहसमी-
**गृहावग्रहणी** स्त्री० गृहमवगृह्यते अनेन अव+ग्रह-करणे
ल्युट् ङीप् । देहल्याम् (देओयाल) ।
**गृहिणी** स्त्री० गृह-अस्त्यर्थे इनि । भार्य्यायाम् गेहकर्म्म-
कुशलायाम् । 'गृहिणी सचिवो मिथः सखी'ति रघु० ।
**गृहिन्** पु० गृहा दाराः सन्त्यस्य इनि गृहस्थे ।
**गृहीत** त्रि० ग्रह-क्त । स्वीकृते, ज्ञाते, प्राप्ते, धृते च ।
**गृहेनर्द्दिन्** पु० गृहे एव नर्द्दति न युद्धे, पात्रेसमितादि०
स० । कापुरुषे रणभीरौ गृहे आस्फालयितरि ।
**गृह्य** पु० ग्रह-पदास्वैरीत्यादिना क्यप् । गृहासक्ते मृगे पक्षिणि
च सलहारे, वेदोदितकर्म्मप्रयोगज्ञापके गोभिलसूत्रादौ
ग्रन्थभेदे च । अस्वैरिणि आयत्ते, स्वपक्षीये पक्ष्ये च
त्रि० । गृहे भवः यत् । गृहभवे, वस्तुनि त्रि० । स्वार्थे कन्
तत्रैवार्थे । नगरवाह्यस्थे ग्रामे स्त्री० टाप् गृह्या ।
**गॄ** विज्ञापने चुरा०आत्म०सक०सेट् । गारयते अजीगरत ।
**गॄ** शब्दे क्र्यादि० पर० प्रादि० सक० सेट् । गृणाति अगारीत्
**गॄ** निगरणे तु० पर०सक०सेट् । गिरति-गिलति अगारीत्-
अगालीत् । [गेदत् । गेदित्वा गेत्वा ।
**गेद्** गतौ भ्वा० आत्म० सक० सेट् । गेदते अगेदिष्ट । अजि-
**गेन्दु(न्दु)क** पु० गच्छतीति ग इन्दुरिव इवार्थे कन् । कन्दुके
वस्त्रनिर्म्मिते गोलाकारे क्रीडनके । पृषो० वा ह्रस्वे गेन्दुकश्च
**गेय** त्रि० गै-भव्यगेयेत्यादिना कर्त्तरि यत् । गायने । भावे यत् ।
गीतौ 'गेये केन विनीतौ वा'मिति रघु० । कर्म्मणि यत् ।
गातव्ये त्रि० पृथ्वीहूँ गेयं सामेति भाष्यम् ।
**गेव** सेवने भ्वा० आ० सक० सेट् । गेवते अगेविष्ट । अजिगेवत्
**गेप** अन्वेषणे भ्वा० आत्म० सक० सेट् । गेपते अगेपिष्ट । अजिगेपत्
**गेह** न० गो गणेशो गन्धर्वो वा ईहः ईप्सितो यत्र । गृहे ।
**गेहेनर्द्दिन्** पु० गृहेनर्द्दिवत् सर्व्वम् । [रणभीरौ ।
**गेहेशूर** पु० गृहएव शूरः । पात्रेसमितादि स० । कापुरुषे
**गै** गाने भ्वा० पर० सक० अनिट् । गायति । अगासीत् ।
**गैरिक** न० गिरौ भवः ठक् । (गिरि इति ख्याते पर्व्वतजाते
धातुभेदे, स्वर्णे च ।

**गैरिकाक्ष** पु० गैरिकमिवाक्षि पुष्पमस्य । जलमधूके वृक्षे ।
**गैरी** स्त्री० गिरौ जाता अण् । (विपलाङ्गली) लाङ्गलीवृक्षे ।
**गैरेय** न० गिरौ भवः ढक् । (शैलज) शिलाजतुनि ।
**गो** पु० गम-डो । वृषभे, स्वर्गे, किरणे, वज्रे जले, पशौ, चन्द्रे, वायौ,
सूर्य्ये, ऋषभनामौषधौ च । सौरभेय्याम् दृष्टौ, वाणे,
दिशि, मातरि, वाचि, भूमौ च स्त्री० ।
**गोकण्टक** पु० गोर्धेनोः पृथिव्या वा कण्टकः । क्षुरे, विप-
मोन्नते स्थपुटे, विकङ्कतवृक्षे च (वैंइच) ।
**गोकर्ण** पु० गोरेव कर्णो यस्य । सर्पे, 'कृत्यन्ति गोकर्ण-
शरीरभर्त्तां' इति चौर० । गोरिव कर्णावस्य । अश्वतरे,
मृगभेदे, गणदेवताभेदे, अङ्गुष्ठाभिकानामिकायुतविस्तृताङ्गुष्ठमाने,
शैवे तीर्थभेदे च ।
**गोकर्णी** स्त्री० गोः कर्ण इव यस्याः । मूर्व्वालतायाम् ।
**गोकील** पु० गो० पृथिव्याः कील इव । लाङ्गले, मुसले च ।
**गोकुल** न० गवां कुलं यत्र । गोस्थाने गोष्ठे, 'गोकुले कन्दु-
शालायां'मिति स्मृतिः । व्रजनामके प्रसिद्धे स्थाने 'गोकुले
रामकेशवा'विति पुराणम् । ६त० । गोसमूहे ।
**गोखुर** पु० गो० खुर इव । गोक्षुरवृक्षे ६त० । गवां क्षुरे ।
**गोग्रन्थि** पु० गोर्ग्रन्थिरिव । करीषे (घुघा) गवां ग्रन्थिः पङ्क्ति-
र्यत्र । गोष्ठे । गोर्ग्रन्थिरिव, गोजिह्विकौषधौ ।
**गोघ्न** पु० गौर्हन्यते यस्मै हन-सम्प्रदाने टक् । अतिथौ तदा-
गमने हि मधुपर्कार्थं गोवधो विहितः । कर्त्तरि टक् ।
गोघातके त्रि० ।
**गोचर** पु० गावः इन्द्रियाणि चरन्त्यस्मिन् नि० घ । इन्द्रिय-
विषये रूपरसादौ । गावश्चरन्त्यस्मिन् । गवां प्रचार-
स्थाने, देशमात्रे, ज्योतिषोक्ते जन्मराश्यवधिके तत्तत्
स्थाने सूर्य्यादिग्रहगमनेषु च । 'गोचरे वा विलग्ने वा ये
ग्रहारिष्टसूचकाः' इति ज्योतिषम् ।
**गोचर्म्मन्** न० ६त० । गवां चर्म्मणि, 'सप्तहस्तेन दण्डेन त्रिंशद्दण्डै-
र्निवर्त्तनम् । दश तान्येव गोचर्म्मे'त्युक्ते भूमिपरिमाणभेदे च
**गोच्छाल** पु० गां भूमिमाच्छादयति छद णिच् अण् पृ० ।
भूकदम्बे (बाकुलिया) । [त्वम् । गोजीरादिषु ।
**गोजा** स्त्री० गवि पृथिव्यां मोक्षादिरूपेण जायते विट् आ-
**गोजिह्वा** स्त्री० गोर्जिह्वेव । (गोजिया) लताभेदे । स्वार्थे कन्
अत्रैवार्थे । [गवादनी । अच् (गरगज) शीर्णवृन्ते पु०
**गोडुम्बा** स्त्री० गां भूमिं तुम्बति अर्द्दते तुबि च पृ० । (गोमुक)
**गोणी** स्त्री० गुण वर्ज्जने नि० गुण गोण+आवपनेऽर्थे ङीप् ।
धान्याधारे (गुण, छल ते आवपनार्थे हिङ्गुरखे, मायलो,

'हिन्दूपा गोरगुराह्ने ति मानभेदे, द्रोणीपरिमाणे च ।

**गोऽरड** पु० गौरण्ड इव । नीचजातिभेदे (गांड) रड्कनाभौ च तद्वति

**गोतम** पु० महाव पुत्रे स्वनामख्याते मुनिभेदे ।

**गोतीर्थ** न० गोरेतक तनुस्त्विव तीर्थमिव । गोष्ठे ।

**गोत्र** पु० गां पृथिवीं त्रायते त्रै क । पर्व्वते । नामनि, कानने, क्षेत्रे पथि, छत्रे सजातीयगणे, पौत्रादपत्ये वंशे कपिशङ्गपाद्येषु काश्यपादिषु शाण्डिल्यादिषु चतुर्विंशतौ मनुषु च । वित्ते वृन्दनिधाने ।

**गोत्रज** त्रि० गोत्रे समाने गोत्रे जायते जन-ड । एकगोत्रोत्पन्ने

**गोत्रभिद्** पु० गोत्रान् पर्व्वतान् भिनत्ति भिद-क्विप् । इन्द्रे ।

**गोत्रा** स्त्री० गोत्रा पर्व्वता सन्त्यस्या अर्श आदित्वादच् । धरायाम् । गो+त्रल् समूहे त्रल् । गोसमूहे । [दन्ते पु०

**गोदन्त** न० गोर्दन्त इवावयवो यस्य । हरिताले । ६त० । गवां

**गोदान** न० गाव केशा दीयन्ते छिद्यन्तेऽत्र दो-ल्युट् । केशान्तसंस्काराख्ये संस्कारभेदे 'अथ स गोदानविधेरनन्तर'मिति रघुः ।

**गोदारण** न० गां भूमिं दारयति द णिच् ल्यु । लाङ्गले, कुद्दाले च । [गोर्धायाहननमन्त्र

**गोदावरी** स्त्री० नदीभेदे । गोदावरि । सरस्वति । इति वचे

**गोधन** न० गवां धनं समूह । गोसमूहे । गौरेव धनमस्य । गो-रूपधनशालिनि त्रि० । गौरेव धनम् । गोरूपे धने न० ।

**गोधा** स्त्री० गुध्यते वेष्ट्यतेऽङ्गमनया करणे घञ् । धनुर्गुणाघातवारणाय प्रकोष्ठे बद्धे चर्म्मणि । कर्त्तरि अच् । (गोसाप) इति ख्याते सर्पभेदे 'शशक शल्लको गोधेति' मनुः । स्वार्थे कन् अत इत्त्वे ।

**गोधापदी** स्त्री० गोधेव पादो मूलमस्याः स्वाङ्गत्वात् जातित्वाद्वा ङीपि पद्भाव । (गोयालिया) लताभेदे । स्वार्थे कन् अत इत्वे

**गोधास्कन्ध** पु० गोधेव स्कन्धोऽस्य । विट्खदिरे ।

**गोधि** पु० गुध-इन । ललाटे, गोधायां च ।

**गोधिनी** स्त्री० गुध णिनि । वृहतीभेदे ।

**गोधूम** पु० गुध-ऊम । व्रीहिभेदे (गोहुम) नागरङ्गे च ।

**गोधूलि** पु० गोभ्य उत्थिता धूलिर्यत्र काले । (सन्ध्यातपाक्षपित पश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । यद्वे गवां खुरपुटोद्गतरजोभिर्धूलिरित्युक्ते काले ।'

**गोनर्द** पु० गां जलं नर्दयति नर्द अण् । सारसपक्षिणि, पर्व्वतभेदे च । कैवर्त्तीमुस्तके न० ।

**गोनर्दीय** पु० गोनर्दे तन्नामके देशे भव । पाणिनौ मुनौ ।

**गोनस** पु० गोरिव नासाऽस्य नसादेशः । सर्पभेदे ।

**गोप** पु० गां भूमिं वा पाति रक्षति पा क । (गोयाला) जातिभेदे । ग्रामाधिकृते भूरक्षके उपकारके च त्रि० ।

**गोपघोण्टा** स्त्री० गोपप्रिया घोण्टा । हारीतोक्ते 'वदरीसदृशाकारो वृक्ष सूक्ष्मफलो भवेत् । अटव्यामेव सा घोण्टा गोपघोण्टेति कीर्त्तिता'इत्युक्ते च ।

**गोपति** पु० ६त० । गवां पत्यौ वृषे, (षाड) वृषपतौ शिवे, भूमिपतौ, नृपे श्रीकृष्णे, किरणपतौ सूर्य्ये, स्वर्गपतौ इन्द्रे, ऋषभनामौषधौ च ।

**गोपदल** पु० गोपदमात्रस्थानं लाति ला क । गुवाके ।

**गोपभद्र** पु० न० गोपेभ्यो भद्रं यस्मात् ५ब० । शालूके । [गाम्भार्य्याम्

**गोपभद्रिका** स्त्री० गोपेभ्यो भद्रं यस्मात् ५ब० कप अत इत्त्वम् ।

**गोपवल्ली** स्त्री० गा पाति पा-क कर्म्म० । मूर्व्वालतायां श्यामालतायां (श्यामालता) ।

**गोपा** स्त्री० गां पाति पा क टाप् । श्यामालतायाम् ।

**गोपानसी** स्त्री० गवां किरणानां पानं रोधनं गोपानं स्यति सो-क गौरा० ङीष् । काष्ठेषु छादनार्थं बद्धे वक्रकाष्ठे (मुदनी) वलभ्याधारे पटलाधारे वंशपञ्जरे च । [कश्ये च

**गोपाल** पु० गां धेनुं पृथ्व्यादिकं भूमिं वा पालयति । गोपार्य्यै,

**गोपालकर्कटी** स्त्री० । पालं त्रस्य् गोपालस्य गोरक्षकस्य प्रिया कर्कटी । क्षुद्रकर्कट्याम् ।

**गोपुच्छ** पु० गो पुच्छ इव पुच्छो यस्य । गोलाङ्गूले वानरे । गोपुच्छाकारत्वात् हारभेदे । ६त० । गोलाङ्गूले न० ।

**गोपुर** न० गावः पर्य्यन्ते यत्र दृ मूल० क । पुरद्वारे कैवर्त्तीमुस्तके च

**गोप्य** पु० गुप-यत् । स्वीये दासीपुत्रे । रक्षणीयमात्रे गुह्ये च त्रि०

**गोमती** स्त्री० नदीभेदे वेदमन्त्रभेदे च । [ध्याङ्गुगोमत त ।

**गोम** लेपने अद० चुरा० उभ० सक० सेट् । गोमयति ते

**गोमन्त** पु० विन्ध्यपर्व्वतस्य पश्चान्नपर्व्वते ।

**गोमय** पु० न० गवां पुरीषम् गो+मयट् । गोपुरीषे (गोबर) ।

**गोमयच्छत्र** न० गोमये तदाधारस्थाने छत्रमिव । शिलीन्ध्रे (छातिया) । [(छिगोका) कीटभेद

**गोमयोत्था** स्त्री० गोमयादुत्तिष्ठति उद्+स्था क टाप् । (गुब

**गोमायु** पु० गां विकृतां वाचं मिनोति मा-उण् । शृगाले, गन्धर्वभेदे च ।

**गोमिन्** त्रि० गो+अस्त्यर्थे मिनि । गवां स्वामिनि । शृगाले पु०

**गोमुख** पु० गोरिव मुखमस्य । वाद्यभेदे नक्रे कुटिलागारे वाद्यभाण्डे चौरकृतसन्धिभेदे लेपने तन्त्रोक्ते जपमालाच्छादनार्थे पट्टवस्त्रादिनिर्म्मिते वस्त्रभेदे च । हिमालयस्यैकदेशात् गङ्गापतनमुखाया स्त्री० ङीप् ।

**गोमुखिका** स्त्री० गोमुख साधनत्वेनास्त्यस्य ठन् । गोमुखजातायाम्

लतया गोमत्वतुल्यमध्यवेशविशेषरति काव्यभव्ये च।

**गोमेद** पु० मणिभेदे द्वीपभेदे च। 'गोमेदे गोपतिर्नाम इत्युपक्रम्य यत्रावाटे हता गावो दग्धा कोपाग्निना सदा। तस्मिन्स्मा मद्दोदग्धा गोमेदः स ततोऽभवदिति पुराणेऽस्य गोमेदता निरुक्ता।

**गोमेध** पु० गौः मेध्यते यत्र मेध आधारे घञ्। यज्ञभेदे।

**गोरक्ष** पु० रक्षतीति रक्ष-अच्। नारङ्गवृक्षे (गोरक्षचाकुलिया)। लताभेदे च। गोरक्षके त्रि०।

**गोरक्षकर्कटी** स्त्री० कर्म०। क्षुद्रकर्कट्याम् (राखालकाँकुड़)।

**गोरक्षजम्बू** स्त्री० गोरक्षे गोपे जम्बुरिव। घोण्टाफले गोधूमे च। [(गोरक्षचाकुलिया) क्षुपभेदे।

**गोरक्षतण्डुली** स्त्री० गोरक्ष तण्डुल बीज यस्याः।

**गोरक्षतुम्बी** स्त्री० गोरक्षी तुम्बी। कुम्भाकारतुम्ब्याम्।

**गोरोच** न० गौ किरण इव रोचते रुच-अच्। हरिताले

**गोरोचना** स्त्री० गोभ्यो जाता रोचना हरिद्रा। स्वनामख्याते गन्धद्रव्ये 'गोरोचनालक्तककुङ्कुमेनेति तन्त्रम्।

**गोर्द** न० गुर अर्दादिवत् नि०। मस्तिष्के मस्तकस्थे घृते

**गोल** पु० गुड वन् डलयोरैक्यम्। सर्व्वतोवर्त्तुले, मदनद्रुमे, भर्त्तरि मृते जारजे पुत्रे, ज्योतिषोक्ते भूगोले खगोले, एकराशौ षड्ग्रहयोगे च। मण्डले न०। स्वार्थादौ कन् मृते भर्त्तरि जारजाते पुत्रे, मणिके (जाला) गुडे, पिण्डे, गन्धरसे कलाये च।

**गोला** स्त्री० गां दीप्तिं लाति ला क। गोदावरीनद्याम् सख्याम्, कुनट्याम् पत्राञ्जने, मणिके मण्डले, बालक्रीडनके च

**गोलाङ्गूल** पु० गौरिव कृष्णं लाङ्गूलमस्य। कृष्णमुखे वानरभेदे न्यायभेदे च। [गिलोड्यां च (छातिया)

**गोलास** पु० गवि गोमये लासो जन्म यस्य। गोमयकीटे,

**गोलिह** पु० गोभिर्लिह्यते लिह घञर्थे क। घण्टापाटलौ (घण्टापारुलि)। [पि इलि)।

**गोलीढ** पु० गोभिर्लिह्यते लिह-क्त। घण्टापाटलौ (घण्टा-

**गोलोक** पु० न० इत०। वैकुण्ठस्य दक्षिणभागस्थे स्थानभेदे, विष्णुनिवासस्थाने पु०।

**गोलोमिका** स्त्री० गोर्लोमेव लोमास्य ङीप् ततः स्वार्थे कनि ह्रस्वो ह्रस्व। (मायुरी) (गोधूमा) इति च ख्यातायां मञ्जरिकायाम् क्षोद्रकपुष्पायाञ्च।

**गोलोमी** स्त्री० गौरिव गोलोमसदृशं लोमास्य ङीप्। श्वेतदूर्वायाम्। गोलोमतः जाता अण् वचायाम्। गोलोम्नामियम् अण्। वेश्यायाम्।

**गोवन्दनी** स्त्री० गवि भूमौ वन्द्यते ल्युट्। प्रियङ्गौ, पीतचण्डोलभेदे च। [भेदे ग्रामादिद्वारा तस्य हि गोवर्द्धकत्वम्।

**गोवर्द्धन** पु० गा वर्द्धयति वृध णिच् ल्यु। वृन्दावनस्थे पर्वत-

**गोवर्द्धनधर** पु० गोवर्द्धनं पर्व्वतं धारयति धृ अच्। श्रीकृष्णे नन्दनन्दने। [गवाध्यक्षे त्रि०।

**गोविन्द** पु० गां विन्दति विद-श। श्रीकृष्णे, वृहस्पतौ च।

**गोविश्** पु० न० इत०। गोमये।

**गोशीर्ष** न० गोः शीर्षमिव गोशीर्षं पर्वतं तत्र जातत्वात्। मलयैकदेशे जाते चन्दने। इत० गोमस्तके न०।

**गोशीर्षक** पु० गोशीर्षमिव कायति कै-क। द्रोणपुष्पीवृक्षे ऋषभाद्रिजाते गोरोचनातुल्ये चन्दनभेदे च। [शृङ्गे

**गोशृङ्ग** पु० गोः शृङ्गमिव शृङ्गमस्य यस्य। वर्व्वुरवृक्षे। इत०। गो-

**गोष** संघाते भ्वा० आत्म० अक० सेट्। गोषते अगोषिष्ट।

**गोष्ठ** न० गावस्तिष्ठन्त्यत्र घञर्थे क षत्वम्। गवां स्थाने।

**गोष्ठी** स्त्री० गावोऽनेका वाचस्तिष्ठन्त्यत्र घञर्थे क षत्व गौरा० ङीप्। सभायाम्।

**गोष्पद** न० गोः पदम्, गावः पद्यन्ते यस्मिन् देशे वा सुट्। गोः पदजाते गर्त्ते, गोपदप्रमाणे च। गोभिः सेविते देशे। गोप्रधाने देशे त्रि०।

**गोसख्य** पु० गाव सचन्ते, सच अच्। गोपे।

**गोसम्भवा** स्त्री० गौरिव सम्भवो लोमादिरूपाकारो यस्याः। श्वेतदूर्वायाम्। गोजाते त्रि०।

**गोसव** पु० गावः सूयन्ते वध्यन्तेऽत्र सु अप्। गोमेधयज्ञे।

**गोस्तन** पु० गोः स्तन इव गुच्छो यस्य। चतुर्यष्टिकहारे।

**गोस्तनी** स्त्री० गोरिव स्तनं फलमस्याः। द्राक्षाभेदे।

**गोस्थानक** न० गवां स्थानं स्वार्थे कन्। गोष्ठे।

**गोहरितकी** स्त्री० गोः हरितकीव हितकारित्वात्। बिल्ववृक्षे

**गोहित** पु० गवां हितं यस्मात् ५ब०। बिल्वे, घोषलतायाञ्च। गोहितकारके त्रि०।

**गौड** पु०। 'वङ्गदेशं समारभ्य भुवनेशान्तगः शिवे। गौडदेशः समाख्यात इत्युक्ते देशे। तद्देशस्थे जने बहुव०। 'सारस्वताः कान्यकुब्जा गौडा मैथिलकोत्कलाः पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिन इत्युक्ते विन्ध्यपर्व्वतोत्तरभागवासिषु ब्राह्मणभेदेषु च।

**गौडवास्तु(स्तू)क** पु० न० 'तदेव चेत् हृद्यतृपल दृश्य आरोहवास्तुकमित्युक्ते शाकभेदे। [काव्यरीतिभेदे च।

**गौडी** स्त्री० गुडस्य विकारः अण्। सुराभेदे अलङ्कारोक्ते

**गौण** त्रि० गुणादागत अण्। गुणयोगात् प्रवृत्ते शब्दे प्रधानस्य

छन्नामनश्च विशेयो नवैते ग्रहवक्ष्यद्यत्युक्ते सूर्यादि क्रमेण वह्निभेदे ।

**ग्राम** पु० ग्रस मन् आदन्तादेश विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि । स तु ग्राम इतिप्रोक्तः शूद्राणां वास एव वा' 'तथा शूद्रजनप्राया सुसमृद्धकृषीवला' क्षेत्रोपयोगभूमध्ये वसतिःग्रामसंज्ञिकेत्युक्तलक्षणे विप्रादीनां वासस्थाने, यथा कुटुम्बिनः सर्वेप्येकीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते' इत्युक्ते स्वरभेदे, किञ्चिच्च शब्दोत्तरपदे तदर्थसंघाते च यथा शब्दग्राम अर्थग्राम इत्यादि

**ग्रामघट्टा** स्त्री० ग्रह-बाहुल्यार्थे क्वप् । ग्रामबहिर्भूतायां येन याम् ।

**ग्रामणी** पु०ग्रामं नयति नी-क्विप् णत्वम् । नापिते । पत्यौ, प्रधाने च त्रि० । ग्रामगम्यायां वेश्यायां,नीलिकायाञ्च स्त्री० ।

**ग्रामता** स्त्री० ग्रामाणां समूहः तल् । ग्रामसमूहे ।

**ग्रामधर्म्म** पु० ग्रामे भवः अण् कर्म्म० । मैथुने व्यवाये ।

**ग्राममुख** पु० ग्रामस्य मुखं यत्र । हट्टे ।

**ग्राममृग** पु० ६त० । कुक्कुरे । [विधि

• **ग्रामयाजक** पु०६त० । ग्रामस्य नानावर्णानां याजके अपकृष्ट

**ग्रामान्त** न० ६त० । ग्रामस्य समीपस्थे ग्रामनिकटे ।

**ग्रामीण** पु० ग्रामे भवः खञ् । कुक्कुरे, काके, ग्राम्यसूकरे च । ग्रामोद्भवे त्रि०। ग्रामीणस्य प्रथमतः इति भाषापरि० नीलिकौषधौ, पालङ्क्यशाके च स्त्री० ।

- **ग्राम्य** त्रि० ग्रामे भवः यः । प्राकृते मूढे, ग्रामभवे, ज्योतिषोक्ते मिथुनादिराशिभेदे 'छागमेषवृषाश्वाद्या ग्राम्याः प्रोक्ता' इत्युक्तेषु पशुभेदेषु अश्लीलव्यञ्जके भगद्धादिवाक्ये, च । तुलायां नीत्याञ्च स्त्री० ।

**ग्राम्यकन्द** पु०-कर्म्म० । कन्दभेदे (ग्रामेर चोल) ।

**ग्राम्यकर्कटी** स्त्री० कर्म० । कुष्माण्डे ।

**ग्राम्यकुङ्कुम** न० कर्म० । कुसुम्भे ।

**ग्राम्यपशु** पु० कर्म० । 'गौमेषोऽश्वो मनुष्यश्च अश्वाश्वतर गर्द्दभा' इत्युक्तेषु सप्तसु पशुषु ।

**ग्राम्यवल्लभा** स्त्री० ६त० । पालङ्क्यशाके (पालङ्)

**ग्राम्याश्व** पु० कर्म० । गर्दभे ।

**ग्रावन्** पु० ग्रसते ग्रस-ड ग आवनति वन-संभक्तौ विच् कर्म० । प्रस्तरे पर्वते, मेघे च । दृढे त्रि० ।

**ग्रास** पु० ग्रस घञ् । पिण्ड कारे ग्रासादे कवले 'कुक्कुटाण्ड-प्रमाणं वा यावद्वा प्रविशेन्मुखम् । एत ग्रास विजानीयादि त्युक्ते षण्मुखपूरणयोग्याद्यादौ ।

**ग्राह** पु० ग्रह भावे घञ् । आदाने ग्राने, ग्रहणे च । कर्त्तरि ण । जलजन्तुभेदे (हाङ्गर) । [नरि त्रि० ।

**ग्राहक** पु० ग्रह ण्वुल् । श्येनपक्षिणि विषवैद्ये च । ग्रही

**ग्राहिणी** स्त्री० ग्रह-णिनि । क्षुद्रदुरालभायाम् (चिमड) ताम्रमूलाख्ये, ग्रहीतायाञ्च । [कारके च त्रि० ।

**ग्राहिन्** पु० ग्रह णिनि । कपित्थे । ग्राहके, मलबन्ध-

**ग्राहिफल** पु० ग्राहि मलबन्धकं फलं यस्य । कपित्थवृक्षे ।•

**ग्राह्य** त्रि० ग्रह-ण्यत् । ग्रहीतुमुचिते, ग्रहणयोग्ये,उपादेये, स्वीकार्य्ये, ज्ञेये च ।

**ग्रीवा** स्त्री० गृ-व नि० । कन्धरायाम् ।

**ग्रीष्म** पु० ग्रस-म नि० । निदाघे, घर्मजनके आतपादौ तदा-धारकाले ज्यैष्ठाषाढमासे ऋतुभिः च तद्वति त्रि० ।

**ग्रीष्मजा** स्त्री० ग्रीष्मे जायते जन-ड । (लोणा शाक) लवलाम् नवमल्लिकायाञ्च ।

**ग्रीष्मपुष्पी** स्त्री० ग्रीष्मे पुष्पं यस्याः । कल्पपुष्पवृक्षे ।

**ग्रीष्मभवा** स्त्री० ग्रीष्मे भवति भू अच् । नवमल्लिकायाम् ।

**ग्रीष्मसुन्दर** पु० ७त० । (गिमा) शाकभेदे ।

**ग्रुच** चौर्य्ये गतौ च भ्वा० पर० सक० सेट् । ग्रोचति अग्रुचत् अग्रोचीत् । ग्रुचित्वा ग्रुक्त्वा ।

**ग्रैव** न० ग्रीवायां भवम् अण् । ग्रीवाभरणे ।

**ग्रैवेय** न० ग्रीवायां भवं ढञ् । ग्रीवाभूषणे ढकञ् ग्रैवेयकमप्यत्र । 'ग्रैवेयकं नोज्ज्वलम्'मिति साहि० ।

**ग्लस** भक्षणे भ्वा० आत्म० सक० सेट् । ग्लसते अग्लसिष्ट । ग्लसिता-ग्लस्ता ।

**ग्लह** आदाने वा चुरा० उभ० पक्षे भ्वा० सक० वेट् । ग्लाहयति ते ग्लहति अजग्लहत् त अग्लहीत् ।

**ग्लह** पु० ग्लह-अ । द्यूतादौ कृते पणे, द्यूते च ।

**ग्लास्नु** त्रि० ग्लै-स्नु । ग्लानियुक्ते ।

**ग्लुच** चौर्य्ये गतौ च भ्वा० पर० सक० सेट् । ग्लोचति अग्लुचत्-अग्लोचीत् । क्त्वा वेट् । [अग्लुचत्-अग्लुञ्चीत् ।

**ग्लुन्च** चौर्य्ये गतौ च भ्वा०पर०सक०सेट् क्त्वा वेट् । ग्लुञ्चति

**ग्लेप** दैन्ये गतौ चाले च भ्वा० आत्म० सक० सेट् । ग्लेपते अग्लेपिष्ट । अजिग्लेपत् ।

**ग्लेव** सेवने भ्वा० आ०सक०सेट् । ग्लेवते अग्लेविष्ट । अजिग्लेवत

**ग्लेष** अन्वेषणे भ्वा० आ० सक० सेट् । ग्लेषते अग्लेषिष्ट अज ग्लेषत् । [अग्लासीत् ।

**ग्लै** क्षमे हर्षक्षये च भ्वा० पर० अक० अनिट् । ग्लायति

**ग्लौ** पु० ग्लै-डौ । चन्द्रे, कर्पूरे च ।

घनामय पु० घनो दृढ आमयो यस्मात् ५ब०। खर्ज्जूरवृक्षे।
घनामल पु० घनोऽमल विशेषणस०। वास्तूकशाके।
घनोपल पु० ६त०। घनस्य उपल इव सङ्घत्य कठिनत्वात्। करके (शिल)।
घस्र गतौ भ्वा० पर० सक० सेट्। घस्रति अघस्रीत्।
घरट्ट पु० घ-अच् घरोऽट्टः यस्मात् ५ब०स०। (जाता) 'प्रति हट्टपथे घरट्टजादि'ति नैषधम्।
घर्घर पु० घुन घुन घरति दह् लुक् अच्। वस्त्रादिध्वनौ नदभेदे हारे, स्वरभेदे च। क्षुद्रघण्टिकायाम् स्त्री०।
घर्घरिका स्त्री० घर्घर+अल्पार्थे कन्। क्षुद्रघण्टायाम् वाद्यभेदे। भृष्टधान्ये, नदभेदे च पु०।
* घर्व गतौ भ्वा० पर०सक० सेट्। घर्वति अघर्वीत्।
घर्म्म पु० घृ सेके मक् नि०गुण। अस्मात् निष्यन्दि-नि-जले, आतपे, ग्रीष्मे च। [हसौ व्रणभेदे।
घर्म्मविचर्च्चिका पु० घर्म्मोत्था विचर्चिका। (घामाचि) राजिका
घर्घाल पु० घर्घाय अलति पर्य्याप्नोति अल-अच्। भिल्ला पुलके (खोंडा)
घर्षणी स्त्री० घृष कर्म्मणि ल्युट ङीप्। हरिद्रायाम्।
घष(स) क्षरणे भ्वा० आत्म० अक० सेट् इदित्। घंष(स)ते अघंष(सि)ष्ट। [घस्यति।
घस भक्षणे भ्वा०पर०सक० अनिट्। घसति। अघसत्। घस्ता
घस्मर त्रि० घस क्मरच्। भक्षणशीले।
घस्र पु० घंस रक्। दिवसे। हिंस्रे त्रि०।
घाट पु० घट०-अच्। ग्रीवायाः पश्चाद्भागे। तत्रैवार्थे स्त्री० टाप्। स्वार्थे कन् अत्रैवार्थे।
घाण्टिक पु० घण्टया चरति ठक्। 'राज्ञां प्रबोधसमये घण्टा शिल्पास्तु घाण्टिका' इत्युक्तलक्षणेषु राज्ञां प्रबोधनाय घण्टां वादयित्वा स्तुतिपाठकेषु, धुस्तूरे च। घण्टावादके त्रि०।
घात पु० हन घञ्। प्रहारे, मारणे, अङ्कस्य पूरणे, गुणने च। करणे घञ्। बाणे।
घातिन् त्रि० हन ताच्छील्यार्थे णिनि। हननकरणशीले।
घातुक त्रि० हन-उकञ्। हिंस्रे क्रूरे च।
घार पु० घृ सेके घञ्। सेचने। [अश्मभेदे (घिचोड़)।
घार्त्तिक पु० घृतेन निर्मितं तस्य विकारो वा ठक्। घृतपूरे
घास पु० घस-कर्म्मणि घञ्। गवादीनां भक्ष्ये तृणभेदे।
घिण्ण ग्रहणे भ्वा० आ० सक० सेट् इदित्। घिण्णते अघिण्णिष्ट
घु ध्वनौ भ्वा० आत्म० अक० अनिट्। घवते अघोष्ट।
घुट आवर्त्तने भ्वा० आत्म० अक० सेट्। घोटते अघुटत् अघोटिष्ट। [जुघोट।
घुट प्रतिघाते तु० कुटा० पर० सक० सेट्। घुटति अघुटीत्
घुट पु० स्त्री० घुट अच्। चरणग्रन्थौ गुल्फे। इन्। तत्रैवार्थे स्त्री० वा ङीप्। स्वार्थे कन् अत्रैवार्थे। [जुघोड।
घुड व्याघाते तु० कु० पर० सक० सेट्। घुडति अघुडीत्
घुण भ्रमणे तु० पर० सेट्। घोणते अघोणिष्ट।
घुण भ्रमणे तु० पर० सेट्। घुणति अघोणीत्।
घुण ग्रहणे भ्वा० आत्म० सक० सेट्। घुणते अघोणिष्ट।
घुण पु० घुण-क। स्वनामख्याते काष्ठभक्षककृमौ।
घुण्ट पु० घुट क नि० मुम्। गुल्फे। स्वार्थे कन्। तत्रैवार्थे।
घुर ध्वनौ भीमभवने च तु०पर०अक०सेट्। घुरति अघोरीत्।
घुर्घुर पु० घुरित्यव्यक्तं ध्वनिं घुरति घुर-क। (घुर्घुरिया) कीटभेदे शूकरशब्दे च 'स घुर्घुरायितघुरीति सा० ३परि०
घुष कान्तौ करणे भ्वा०आत्म०सक०सेट् इदित्। घुंषते अघुंषिष्ट
घुष वधे भ्वा०पर०सक०सेट्। घोषति अघुषत्।
घुष स्वनौ आविष्करणे च वा चु० उभ० पक्षे भ्वा०पर०सक० सेट्। घोषयति ते घोषति अजूघुषत् त। अघुषत्।
घुसृण न० घुस क्वणच्। कुङ्कुमे। 'घुसृणैरिव जलाशयोदरे' इति नैषधम्।
घूक पु० घू इति कायति कै क। उलूके पेचके।
घूकारि पु० ६त०। काको तस्य पेचकवैरित्व लोकसिद्धम्।
घूकावास पु० ६त०। शाखोटवृक्षे तस्य निबिडपत्रशाखा युतत्वेन कोटरवत्त्वात् दिवाभीरोर्घूकस्यावासस्थानत्वात्।
घूर हिंसायां सक० जीर्णतायाम् अक० दि० आत्म० सेट्। घूर्य्यते अघूरिष्ट। घूर्ण। [घूर्णित।
घूर्ण भ्रमणे तु०उभ०सक०सेट्। घूर्णति ते अघूर्णीत् अघूर्णिष्ट
घृ सेके भ्वा० पर०सक०अनिट्। घरति अघार्षीत्। [घारित
घृ सेके चु०उभ०सक०सेट्। घारयति ते अजीघरत् त। घारयित्वा
घृ भासे अक०सेके सक०जु०पर०अनिट्। जिघर्त्ति अघार्षीत्।
घृण दीप्तौ तना०उभ०अक०सेट्। घर्णोति घर्णुते अघर्णीत्।
घृण ग्रहणे भ्वा०आत्म०सक०सेट् इदित्। घृणते अघृणिष्ट।
घृणा स्त्री० घृ सेके नक्। कारुण्ये, दयायां, जुगुप्सायाम्।
घृणि पु० घृ-नि नि० गुणाभावः। किरणे, ज्वालायां, तरङ्गे, सूर्य्ये च।
घृत न० घृ भासे भावे क्त। दीप्तौ। कर्त्तरि क्त। दीप्ते त्रि०। सेकार्थस्य कर्त्तरि क्त। जले पक्वनवनीते आज्ये च न०।
घृतकुमारी स्त्री० घृतप्रधाना कुमारी। स्वनामख्यातायामोषधौ तस्या हि दले दलिते घृतमिव क्षरति।

**घृतपूर** पु० घृतेन पूर्य्यते पूर-घञ् । पक्वान्नभेदे (घिओड) ।
**घृताची** स्त्री० अप्सरोभेदे ।
**घृष** सङ्घर्षे सक० हर्षे अक०भ्वा०आत्म० सेट् । घर्षते अघर्षिष्ट
**घृष्टि** पु० घृष-क्तिच् । वराहे । क्तिन् । घर्षणे, स्पर्द्धायां, विष्णुक्रान्तायां, वाराह्याञ्च स्त्री० ।
**घृष्टिला** स्त्री० घृष्टिं लाति ला-क । पृश्निपर्ण्याम् । (चाकुलिया)
**घोट(क)** पु० घुट-अच् ण्वुल् वा । अश्वे । [लोके प्रसिद्ध ।
**घोटकारि** पु० ६त० । महिषे तस्य महिषेण सह वैरिभावश्च
**घोणा** स्त्री० घुण अच् । अश्वनासिकायां, नासामात्रे च ।
**घोणिन्** पु० घोणा नासाऽस्त्यस्य प्रोत्थादित्वात् इनि । वराहे तस्य दीर्घनासत्वात् तथात्वम् ।
**घोण्टा** स्त्री० घुण-ट तस्य नेत्वम् ।(सेयाकुल) बदरीभेदे ।
**घोर** पु० घुर-अच् । शिवे, ऋषिभेदे, सांख्योक्तेषु रज प्रधानेषु आकाशादिविशेषधर्मेषु । विषे न० । दारुणे, भयानके, दुर्गमे च त्रि० ।
**घोररासन** पु० घोरं रासनं शब्दोऽस्य । शृगाले ।
**घोरा** स्त्री० घुर-अच् । देवताडीलतायां, भयानकायां रात्रौ, सांख्योक्तायां राजस्यां मनोवृत्तौ, ज्योतिषोक्ते 'रवावुषभे सङ्क्रमे भास्करस्य भवेद्घोरनाम्नीत्युक्ते रविसंक्रान्तिभेदे च।
**घोल** पु०न० घुड-कर्म्मणि घञ् डस्य ल । तक्रे मथितदधि ।
**घोष** पु० घोषन्ति गावोऽत्र घुष-आधारे घञ् । आभीरपल्लयाम् भावे घञ् । ध्वनौ, अम्बुदनादे च । कर्त्तरि अच् । अपामार्गे, व्याकरणोक्ते वर्णविशेषोत्पत्तौ वाह्यप्रयत्नभेदे च । कांस्ये न० ।
**घोषणा** स्त्री० घुष-णिच् युच् । लोके ख्यापनार्थमुच्चैः शब्दकरणे ।
**घोषा** स्त्री० घुष्यते भ्रमरैरिव कर्म्मणि घञ् । शतपुष्पायां, मधुरिकायां, कर्कटशृङ्ग्यां, कोषातक्याञ्च ।
**घ्रा** गन्धग्रहणे भ्वा०पर०अक०ग्रहणार्थे सक०अनिट् । जिघ्रति अघ्रात्-अघ्रासीत् । घ्राण -घ्रात । [आघ्राते त्रि०
**घ्राण** न० घ्रायतेऽनेन घ्रा ल्युट् । नासिकायाम् । घ्रा क्त ।
**घ्राणतर्पण** पु०घ्राणं नासिकां तर्पयति तृप्-णिच् ल्यु । सुगन्धौ

## ङ

**ङ** पु० ङु-ड । विषये, विषयस्पृहायाम् ।
**ङु** ध्वनौ भ्वा० आत्म० अक० अनिट् । ङवते अङ्गोष्ट ।

## च

**च** अव्य० चि-ड । अन्वाचये (एकस्य प्राधान्येनेतरस्यानुषङ्गे योक्तौ) यथा भिक्षामट गाञ्चानय अत्र भिक्षाटनस्य प्राधान्यं गवानयनस्यानुषङ्गिकत्वम् । समुच्चये (परस्परा पेक्षारहितस्यानेकस्य एकस्मिन् कर्म्मादौ अन्वये) यथा पिता पुत्रश्च ग्रामं गच्छति । अत्रैकस्मिन् गमने कर्म्मणि पितुरिव पुत्रस्यापि अन्वयः । इतरेतरयोगे (परस्पर सापेक्षाणामेकस्मिन् कर्म्मादावन्वये) तत्र च द्वन्द्वसमास एव यथा पितापुत्रौ गच्छत । अत्रोभयोरपि एकस्मिन् प्रत्येक रूपेण गमने परस्परसापेक्षतयैवान्वयः अन्वाचयादयमेतावान् विशेषः । सापेक्षता च स्वघटितनामोत्तरवर्त्तिविभक्त्यन्वयित्वेन । समाहारे (मिलितानामन्वये) यथा हस्तपाद वादयति अत्र हस्तादीनां मिलितानामेवान्वयः इतरेतरयोगे तु प्रत्येकस्यान्वयः एवमन्यत्र तद्वर्त्तिपदसमुदायोपस्थाप्यत्वात् पदार्थव्यतिरेकेण तत्र प्रधानं तस्य चैकत्वात् तस्यैकवचनता । व्यासवाक्ये च चकारेणोभयत्र इतरेतरयोगस्य समाहाररूपसहत्वस्य प्राधान्यं द्योत्यते । पक्षान्तरे, अवधारणे, हेतौ, तुल्यत्वे, विनियोगे, पादपूरणे च । चण्डेशे, चन्द्रे, कच्छपे, चौरे च पु० । दुर्जने निर्बीजे च त्रि० ।
**चक** भ्रान्तौ भ्वा० पर० अक० सेट् इदित् । चङ्कति अचङ्कीत् ।
**चक** प्रतिघाते सक० तृप्तौ अक० भ्वा० उभ० सेट् घटा० । चकति-ते अचकीत् अचाकीत् अचकिष्ट । चकयति ।
**चकास** दीप्तौ अदा० जुहो० पर० अक० सेट् । चकास्ति अचकासीत । अचचकासत् ।
**चकित** न० चक भावे क्त । भये, । कर्त्तरि क्त । भीते त्रि० । षोडशाक्षरपादके छन्दोभेदे स्त्री० ।
**चकोर** पु० चक तृप्तौ ओरन् । स्वनामख्याते-पक्षिभेदे चकोर चारुचकोरीति मुरारिः ।
**चक्क** व्यथने चुरा० उभ० सक० सेट । चक्कयति ते अचचक्कत् त
**चक्र** पु० क्रियतेऽनेन कृ घञर्थे क नि० द्वित्वम । चक्रवाके पक्षिणि, (चका) रथाङ्गे,(चाका) सैन्ये, समुदाये, राष्ट्रे, ग्रामभेदे, कुम्भकारोपकरणे, 'कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारितागुणः' इति नैषधम् अस्त्रभेदे । युद्धभेदे, जलावर्त्ते, ग्रामजाले, तगरपुष्पे, व्यूहभेदे, तन्त्रोक्तेषु मूलाधारादिषु स्थितेषु षट्सु पद्मेषु, सर्वतोभद्रादिषु देशाभ्यन्तरेषु 'श्रीचक्रमेतदुदितम्' इति तन्त्रम् । मन्त्रदीक्षोपयोगिषु अकडमादिषु, वीरादिचक्रेषु, 'प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमा' इति तन्त्रम् अलङ्कारोक्ते काव्यबन्धविशेषे च न० । अर्द्धर्चादित्वात् द्विलिङ्गत्वेऽपि लक्ष्यभेदेनैवास्य लिङ्गनियम
**चक्रक** पु० चक्रमिव कायति कै क । स्वापेक्षापेक्षणेक्षितमिव गमनेऽनिष्टप्रसङ्गरूपे तर्कभेदे ।

चक्रकारक न० नखः तत्तुल्येन चक्रवत् वेष्टनं करोति कृ ण्वुल् । तत० । व्याघ्रनखाख्ये गन्धद्रव्ये ।

चक्रकुल्या स्त्री० चक्रस्य तद्वद्वेष्टनाकारस्य कुल्येवाधारः । (चाकुलिया) पृश्निपर्ण्याम् । [चक्रमर्द्दे । (दादमर्द्दन)

चक्रगज पु० चक्रे चक्राकारे दद्रुरोगे गजइव मर्द्दकत्वात् ।

चक्रगुच्छ पु० चक्रमिव वेष्टनाकारो गुच्छः स्तवको यस्य । अशोकवृक्षे । [विष्णौ, सर्पे च ।

चक्रधर पु० चक्रमस्त्रभेदं चक्राकारमङ्कं वा धारयति धृ-अच् ।

चक्रधारा स्त्री० चक्रस्य धाराग्रम् । चक्रस्य यदग्रेऽस्य तीक्ष्णता सा चाग्रे एकैकदेशमेव धारा । [नखाख्ये गन्धद्रव्ये ।

चक्रनख पु० चक्राकारो नख इव क्षुभ्नादि० न णत्वम् । व्याघ्र-

चक्रपद्माट पु० पद्म पद्मानमटति अण् पद्माटो गजश्चक्रे चक्राकारे दद्रुरोगे पद्माट गजइव मर्द्दकत्वात् । चक्रमर्द्दे वृक्षे (दादमर्द्दन) [पृश्निपर्ण्याम्

चक्रपर्णी स्त्री० चक्रमिव पर्णमस्याः ङीप् । (चाकुलिया)

चक्रपाणि पु० चक्रं प्रहरणं पाणौ यस्य । विष्णौ ।

चक्रपाद पु० चक्रं पाद इव गतिसाधनत्वात् यस्य । रथे चक्रमिव पादोऽस्य । हस्तिनि ।

चक्रपुष्करिणी स्त्री० हरिचक्रेण निखाता पुष्करिणी । काशीतीर्थस्थे मणिकर्णिकाख्ये चक्रतीर्थे । [योग ।

चक्रबन्धु पु० चक्रयोः मेलकत्वात् बन्धुरिव । सूर्ये दिवा हि तयो

चक्रभेदिनी स्त्री० चक्रौ भिनत्ति परस्परं वियोजयति भिद णिनि । रात्रौ तत्र हि तयोर्वियोगः लोकप्रसिद्धः ।

चक्रभ्रम पु० चक्रमिव भ्रमति अच् । कुन्दाख्ये शिल्पिना यन्त्रभेदे

चक्रमर्द्द पु० चक्रं चक्राकारं दद्रुरोगं मृद्नाति मृद अण् । (दादमर्द्दन) क्षुपभेदे । ण्वुल् चक्रमर्द्दकोऽप्यत्र ।

चक्रला स्त्री० चक्रं रोगभेदं लाति ला क । उच्चटायाम् मुस्ताभेदे

चक्रवर्त्तिन् पु० चक्रे भूमण्डले, वर्त्तितुं चक्रं सैन्यचक्रं वा सर्वभूमौ वर्त्तयितुं शीलमस्य वृत वृत णिच् वा णिनि । समुद्रपर्यन्तक्षितेरधीश्वरे, वास्तूकशाके च । चक्रात् वर्त्तिनि त्रि० । जतुकाया जटामांस्याम् अलक्तके च स्त्री० ङीप् ।

चक्रवाक पु० चक्रशब्देन उच्यते वच परिभाषणे कर्मणि घञ् । स्वनामख्याते खगे । [पर्व्वते । मण्डले न०

चक्रवाड(ल) पु० चक्रमिव वाडते वेष्टयति अच् । लोकालोक

चक्रवृद्धि स्त्री० वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृते'ति स्मृत्युक्ते वृद्धिभेदे (सुदेर सुद) ।

चक्रव्यूह पु० चक्रमिव व्यूहः सैन्यस्थितिरचनाविशेषः । दुर्भेद्य मण्डलाकारे सैन्यस्थापने ।

चक्रा स्त्री० चक्र स्पृशो टक् । नागरमुस्तायां कर्कटशृङ्ग्याम् ।

चक्राङ्ग पु० चक्रस्याङ्गमङ्कं चक्रमिवाङ्गं यस्य । हंसे । चक्रमङ्गमस्य । रथे । [मोचिकायां, मञ्जिष्ठायाञ्च

चक्राङ्गी स्त्री० चक्रं ठकिकरमङ्गमस्याः । कटुरोहिण्यां, हिम-

चक्रिन् पु० चक्र+अस्त्यर्थे इनि । विष्णौ, सर्पे, चक्रवाके, कुम्भकारे सूचके तैलिकभेदे चक्रवर्त्तिनि, चक्रमर्द्दे व्यालनखे, खरे, ग्रामजालिके च । चक्रयुते त्रि० ।

चक्रीवत् पु० चक्रवत् भ्रमणमस्यास्ति मतुप् मस्य वः नि० ऋत ईत्वम् । गर्द्दभे, नृपभेदे च ।

चक्ष कथने त्यागे च अदा० आत्म० सक० सेट् । चष्टे । अख्यत अख्यत आख्यत अक्षासीत् अचक्षास्त । त्यागे तु समचक्षिष्ट । [(चाकना) ।

चक्षण न० चक्ष ल्युट् न ख्यादेश । मद्यपानरोचके अवदंशे

चक्षुःश्रवस् पु० चक्षुषा शृणोति श्रु असुन् चक्षुरेव श्रवः कर्णौ यस्य वा । सर्पे ।

चक्षुष्य पु० चक्षुषे हित यत् । केतके पुण्डरीकवृक्षे, शोभाञ्जने रसाञ्जने च । सौवीराञ्जने, स्थलपद्मे, खर्परीतुत्थे च न० । प्रियदर्शने, चक्षुर्हिते च त्रि० । कुलत्थिकायां, सुभगायाम्, अजशृङ्ग्यां, वनकुलत्थिकायाञ्च स्त्री० ।

चक्षुस् न० चक्ष-उसि शिच्च तेन न ख्यादेशः । लोचने ।

चघ घातने स्वादि० पर० सक० सेट् । चघ्नोति अचघीत् अचाघीत्

चङ्कुर पु० सौ० चकि उरच् । रथे, वृक्षे च । यानमात्रे न० ।

चङ्क्रमण न० क्रम यङ् ल्युट् । पुनः पुनर्भ्रमणे अतिशयभ्रमणे इतस्ततो भ्रमणे, कुटिलभ्रमणे च ।

चञ्चरी स्त्री० चञ्च गतौ घञ् तं लाति ला-क रस्य लः चञ्च+ अस्त्यर्थे र वा गौरा० ङीष् । भ्रमर्यां तिन्तिडीवृक्षे च ।

चञ्चरीक पु० चर ईकन् पर्फरीकादित्वात् नि० । भ्रमरे ।

चञ्चल पु० चञ्च अलच् चञ्च गतिं वा लाति ला-क वा । कामुके, वायौ च । चपले, अस्थिरे च त्रि० । विद्युति लक्ष्म्याञ्च स्त्री० ।

चञ्चा स्त्री० चञ्च अच् । नलनिर्मित कटभेदे (चाच) चञ्चेवति इवार्थे कन् 'लुप् मनुष्ये' इति तस्य लुप् । तृणमयपुरुषे ।

चञ्चु पु० चञ्च उ । एरण्डके, रक्तैरण्डे, नाडीचशाके च । पक्षिणामोष्ठे (ठोट) । चाव वा जड इत्येके । चञ्चुः ।

चञ्चुसूचि पु० स्त्री० चञ्चुः सूचिरिव यस्य । कारण्डवपक्षिणि स्त्रीत्वपक्षे वा ङीप् । वा कप् अत्रैव ।

चट भेदे भ्वा० पर० सक० सेट् । चटति अचटीत् अचाटीत् ।

चट वधे भेदे च चु० उभ० सक० सेट् । चाटयति ते अचीचटत् त

धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु ।

**चतुर्विंशति** स्त्री० चतुरधिका विंशति । (चब्बिश) चतुर्युत-विंशतिसंख्यायाम्, तत्संख्याते च ।

**चतुर्विद्य** पु० चतस्रो विद्या वेदज्ञानरूपा यस्य । चतुर्वेदवेत्तरि । प्रशस्यानि द्विपदवृद्धि । चातुर्वैद्योऽप्यत्र ।

**चतुर्विधशरीर** न० कर्म० । जरायुजाण्डजस्वेदजोद्भिज्जेषु शरीरेषु । चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रश इति

**चतुर्व्यूह** पु० सृष्ट्यादिकार्थाय चत्वारो व्यूहा विभागा यस्य । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धात्मके विष्णौ । [चतुर्वेदे च

**चतुष्क** न० चतुर्भिः स्तम्भैः कायति कै-क । चतुःस्तम्भयुक्तमण्डपे

**चतुष्टय** त्रि० चत्वारोऽवयवा विधा यस्य तयप् । चतुर्विभागवति चतुष्के च । स्त्रियां ङीप् 'प्रहस्तिरासीच्छब्दानां चरिताथी चतुष्टयी'ति कुमार । [ङीप् । (सुसनी) शाकभेदे ।

**चतुष्पर्णी** स्त्री० चत्वारि चत्वारि प्रत्येकपत्रे पत्राण्यस्याः

**चतुष्पथ** पु० चत्वारः पन्थानः ब्रह्मचर्यादय आश्रमा यस्य अच् समा० । ब्राह्मणे । चतुर्णां पथां समाहारः अच् । (चौमाथा) चतुर्मुखे पथि ।

**चतुष्पद** पु० चत्वारि पदानि चरणा यस्य । गवादौ पशौ । ज्योतिषोक्ते करणभेदे, मेषवृषसिंहधनुरन्त्यार्द्धमकरपूर्वार्द्धरूपराशिभेदे च । पादशब्दस्य पद्भावे चतुष्पादप्यत्र ।

**चतुष्पदी** स्त्री० चत्वारः पादा अस्याः पादस्य पद्भावे ङीपि पद्भावः । चतुश्चरणात्मके पद्ये । [वल) क्षुद्राम्लिकायाम्

**चतुष्पर्णी** स्त्री० चत्वारि चत्वारि प्रतिपर्व पर्णान्यस्याः । (आम-

**चतुस्त्रिंशत्** त्रि० चतुरधिका त्रिंशत् । चतुरधिकायां त्रिंशति (चौंतिश) तत्संख्याते च चतुश्चत्वारिंशदादयोऽप्येवम् ।

**चत्वर** न० चत-ष्वरच् । स्थण्डिले, यागार्थं संस्कृतभूमौ, अङ्गने च (उठान) । [(चल्लिश) सङ्ख्याभेदे तत्संख्याते च ।

**चत्वारिंशत्** स्त्री० चत्वारि दशतः परिमाणमस्य नि० ।

**चत्वाल** पु० चत-वालच् । होमकुण्डे, दर्भे च ।

**चद** याचने भ्वा० उभ० द्विक० सेट् । चदति ते अचदीत् ।

**चदि** आह्लादे दीप्तौ च भ्वा० पर० अक० सेट् इदित् । चन्दति अचन्दीत् ।

**चन** हिंसायां शब्दार्थनिशाने च भ्वा० पर० सक० सेट्, घटा० चनति । अचानीत्-अचनीत् । चनयति ।

**चन** शब्दे तुदा० पर० सक० सेट् । चनति । अचानीत्-अचनीत् । चानयति । [अप्यर्थे च ।

**चन** अव्य० चन शब्दे अच् । असाकल्ये यथा किञ्चन ।

**चन्च** गतौ भ्वा० पर० सक० सेट् । चञ्चति अचञ्चीत् 'चञ्च

द्भुजभ्रमिते'ति देवी० । [वानरभेदे, ओषधिभेदे च ।

**चन्दन** चदि णिच् ल्युट् । मलयजाते गन्धसारे, रक्तचन्दने,

**चन्दनधेनु** स्त्री० चन्दनेनाङ्किता धेनुः । 'पतिपुत्रवती नारी म्रियते भर्तुरग्रतः । चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय दीयते' इति स्मृत्युक्तायां चन्दनाङ्कितायां देयधेन्वाम् ।

**चन्दनपुष्प** न० चन्दनस्येव पुष्पमस्य । लवङ्गे ।

**चन्द्र** पु० चदि रक् । इन्दौ, मृगशिरोनक्षत्रे, कर्पूरे, काम्पिल्ले, हीरके, जले, काम्ये, सुन्दरे, स्वर्णवर्णे, मयूरचन्द्रके, शोभनमुक्ताफले च । आह्लादकद्रव्ये त्रि० । स्वर्णे, शुभे च न० ।

**चन्द्रक** पु० चन्द्र इव कायति कै-क इवार्थे कन् वा । मयूरस्य पत्रस्थिते चन्द्राकृतौ पदार्थे, मत्स्यभेदे (चांदा) शिग्रुवीजे, शुभ्रमरिचे च ।

**चन्द्रकला** स्त्री० ६त० । चन्द्रस्य षोडशे भागे, द्रविडवाद्यभेदे च

**चन्द्रकान्त** पु० चन्द्रः कान्तोऽभीष्टो यस्य । स्वनामख्याते मणिभेदे तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वम् । कैरवे, श्रीखण्डचन्दने च न० । रात्रौ, ज्योत्स्नायां, चन्द्रपत्न्यां, चन्द्रमल्ल्यां च स्त्री० ।

**चन्द्रकान्ति** न० चन्द्रस्येव कान्तिरस्य शुभ्रत्वात् । रजते स्त्री ६त० चन्द्रस्य दीप्तौ । [पददीर्घ । मयूरे ।

**चन्द्रकावत्** पु० चन्द्रक+अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्व

**चन्द्रकिन्** पु० चन्द्रक+अस्त्यर्थे इनि । मयूरे ।

**चन्द्रकूट** पु० कामरूपस्थे पर्वतभेदे ।

**चन्द्रगुप्त** पु० प्रकृतनन्दस्य मुरानाम्न्यां दास्यां जाते चाणक्येन योगानन्दं सपुत्रं हत्वा कृतराज्याभिषेके राजभेदे ।

**चन्द्रपुष्पी** स्त्री० चन्द्र इव शुभ्रं पुष्पमस्याः । श्वेतकण्टकार्याम्

**चन्द्रबाला** स्त्री० चन्द्रस्य कर्पूरस्य बालेव तुल्यगन्धित्वात् । स्थूलैलायाम् । अत्यन्तवमध्य इत्यन्ये ।

**चन्द्रभागा** स्त्री० काश्मीरदेशस्थे नदीभेदे ।

**चन्द्रमण्डल** न० ६त० । चन्द्रस्य मण्डलाकारे बिम्बे ।

**चन्द्रमस्** पु० चन्द्रमाह्लादं मिमीतेमि असिमादेश चन्द्रं कर्पूरं माति तुलयति मा-असि वा । चन्द्रे ।

**चन्द्रमौलि** पु० चन्द्रो मौलौ यस्य । चन्द्रशेखरे शिवे ।

**चन्द्रवल्लरी** स्त्री० ६त० । सोमलतायाम् । [मा० सोमलतायाम्

**चन्द्रवल्ली** स्त्री० चन्द्र इव वल्ली सुधातुल्यमधुरत्वात् ।

**चन्द्रव्रत** न० चन्द्रस्य चन्द्रलोकप्राप्त्यै व्रतम् विधम । चान्द्रायणरूपे व्रते ।

**चन्द्रशाला** स्त्री० चन्द्र शालेवाधारो यस्याः । ज्योत्स्नायां । चन्द्र इवाह्लादिका शाला । प्रासादोपरिस्थे गृहे (चिलेकोठा)

रूपे पन्थे, तदध्येतरि जने गोत्रे च। भावे ल्युट्। गतौ भक्षणे, आचारे, गीते च न०।

चरणग्रन्थि पु० ६त०। गुल्फे।

चरणायुध पु० चरणाभ्यामायुध्यति आ+युध क। कुक्कुटे।

चरणव्यूह पु० चरणानां वेदशाखानां व्यूहो विशेषेणोहो-निरूपणं यत्र। व्यासकृते ग्रन्थभेदे।

चरम त्रि० चर-अमच्। अन्ते अवसाने, पश्चिमे च।

चरमाचल पु० चरम पश्चिम अचल कर्म्म०। अस्ताचले। चरमशैलादयोऽप्यत्र।

चराचर न० चर-अच् नि०। जगति। समा०द्व०। जङ्गमेऽजङ्गमे

चरित(त्र) न० चर-क्त (इत्र वा)। अनुष्ठाने, सञ्चारे, व्रत-कर्म्मादौ, चेष्टिते, लीलादौ च।

चरु पु० चर उ। हव्यान्ने होमार्थं पाच्यान्ने 'अनवस्रावितान्तरूष्मपाक ओदनश्चरुरिति याज्ञिकाः। चरुपाकपात्रे भाण्डे च। [एक च०। कपर्दके पु०। [चित्-त। चर्चित चर्चा।

चर्च अध्ययने चुरा० उभ० सक० सेट्। चर्चयति-ते अचच-

चर्च उक्तौ भर्त्सने च तु० पर० सक० सेट्। चर्चति अचर्चीत्।

चर्चरी स्त्री० चर्च अरन् गौरा० ङीष्। गीतिभेदे, कुटिल केशे, हर्षक्रीडायाम्, साटोपवाक्ये, छन्दोभेदे च।

चर्चा स्त्री० चर्च-अ। विचारे, चिन्तायां, चन्दनादिना देह-लेपने च। [लेपने

चर्च्चित त्रि० चर्चा जाताऽस्य इतच्। चन्दनादिना कृतगात्रानु-

चर्ब गतौ भक्षणे च भ्वा० पर० सक० सेट्। चर्बति अचर्बीत्।

चर्म्मकार पु० चर्म्म तन्मयं पादुकादिकं करोति कृ-अण्। (चामार) पादुकाकारे एवं चर्म्मकृदादयोऽप्यत्र।

चर्म्मण्वती स्त्री० चर्माण्यस्याम् मतुप् नि०। नदीभेदे।

चर्म्मदण्ड पु० चर्म्मणा कृतो दण्डः। कशायाम् (कोंड़ा)

चर्म्मन् न० चर मनिन्। रक्ता॰राया क ती, इन्द्रियभेदे येन स्पर्श उपलभ्यते त्वच् 'शरीरावरकं शर्म्म चर्म्म इत्यभिधीयते' इत्युक्ते (ढाल) फलके च।

चर्म्मपादुका स्त्री० चर्म्मनिर्म्मिता पादुका। उपानहि (जुता)

चर्म्मप्रभेदिका स्त्री० प्रभिनत्ति प्र+भिद-ण्वुल् ६त०। चर्म्म-भेदनेऽस्त्रभेदे।

चर्म्मप्रसेविका स्त्री० चर्म्मणा प्रसीव्यते सिव ण्वुल्। अग्नि सन्दीपनार्थं चर्म्मनिर्म्मिते भस्त्राख्ये यन्त्रे।

चर्म्मिन् पु० चर्म्म-फलकमस्यास्ति व्रीह्यादित्वादिनि। फल-काक्षधरे स्वपक्षधरे, भूर्जवृक्षे, भृङ्गरीटे, कदल्याम्।

चर्य्या स्त्री० चर-यत्। नियमापरित्यागे गुरूपदिष्टमर्य्यादानुगमे

चर्व्व भक्षे (दन्तैश्चूर्णने) वा चुरा० उभ० पक्षे भ्वा० पर०। चर्व्वयति-ते चर्व्वति अचचर्व्वत्-त अचर्व्वीत्।

चर्षणि पु० कृष अनि ष्ट० आदेश्च चम्। जने 'स चर्षणीनामुदगादि'ति भागवतम्। [चल चालः।

चल गतौ भ्वा० पर० सक० सेट् ज्वला द०। चलति अचालीत्

चल विलासे तु० पर० अक० सेट्। चलति अचालीत्।

चल प्रेषणे चुरा० उभ० सक० सेट्। चालयति अचीचलत्-त

चल त्रि० चल ज्वलादित्वात् वा अच्। तरले, चञ्चले, कम्प-युक्ते। भावे क। कम्पे। [चलादयोऽप्यत्र।

चलदल पु० चलानि चञ्चलानि दलान्यस्य। अश्वत्थवृक्षे चल-

चला स्त्री० चल अच्। लक्ष्म्यां सिह्लके च।

चलाचल त्रि० चल अच् नि०। अत्यन्तचञ्चले। काके पु०

चवि स्त्री० चर्व्व इन् ष्ट०। (चइ) चव्ये। [मध्यमार्थे।

चविका स्त्री० चर्व्व क्वुन् ष्ट०। चव्ये (चइ) इकन् ष्ट०। चविक-

चव्य न० चर्व्यते चर्व्व-यत् ष्ट०। (चइ) इत्ये वचायां, कार्पासाम्ब

चव्यजा स्त्री० चव्यमिव जायते जन-ड। गजपिप्पल्याम्।

चष भक्षे भ्वा० उभ० पर० सक सेट्। चषति-ते अचाषीत्-अचषीत् अचषिष्ट।

चष वधे भ्वा० पर० सक० सेट्। चषति अचाषीत्-अचषीत्।

चषक पु०न० चष-करणे क्वुन्। मद्यपानपात्रे। कर्म्मणि क्वुन्। मधुनि, मद्यभेदे च न०।

चषाल पु० चष-आलच्। यज्ञियपशुबन्धनार्थे काष्ठे यूपमध्य-देशे वलयाकारे काष्ठमये लौहमये वा पदार्थे।

चह प्रतारणे भ्वा० पर० सक० सेट्। चहति अचहीत्।

चह प्रतारणे अद० चुरा० उभ० सक० सेट्। चहयति-ते अचचहत् त। [चहत् त।

चह प्रतारणे चुरा० पर० सक० सेट् घटा० चहयति अची-

चाकचक्य न० चक दीप्तौ चक प्रकारे द्वित्वं चकचकस्य भावः'। उज्ज्वलतायाम्। चाकचक्यादिधर्म्मसंदर्शनहेतुरिति वेदान्तपरिभाषा। [भमौ च।

चाक्षुष न० चक्षुषा निर्वृत्तम् अण्। चक्षुर्विषये ज्ञाने, मनौ

चाक्रिक पु० चक्रेण समूहेन चरति ठक्। ऽपृय स्तुतिपाठक घाण्टिकार्थे।

चाङ्गेरी स्त्री० चङ्ग शोभने दन्ते ईर्त्तो चाङ्गं शोभनदन्तता मीरयति ईर-अण् गौरा० ङीष्। (आमरुल) क्षुपभेदे।

चाट पु० चट-भेदे अच्। चाटो विश्वासप्रदानेन परधनापहर्त्तरि चौरे "चाटचारभटादीषु दत्तं भवति निष्फलमि"ति स्मृतिः।

अष्टदयाक्षरपादके छन्दोभेदे च ।

**चित्रवीर्य्य** पु० चित्रमाश्चर्य्यं वीर्य्यमस्य । रक्तैरण्डे ।

**चित्रशिखण्डिज** पु० चित्रशिखण्डिनोऽङ्गिरसो जायते जन-ड । वृहस्पतौ ।

**चित्रशिखण्डिन्** पु० चित्र शिखण्ड अस्त्यस्य इनि । 'मरीचिरङ्गिरा अत्रि' पुलस्त्य पुलह क्रतु । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिन' इत्युक्तेषु सप्तसु मुनिषु

**चित्राङ्ग** पु० चित्रमङ्गमस्य । रक्तचित्रके सर्पे च । [भेदे च

**चित्राङ्गद** पु० शान्तनुराजसुते विचित्रवीर्य्यभ्रातरि, गन्धर्व-

**चित्राङ्गी** स्त्री० चित्रमङ्गमस्याः । मञ्जिष्ठायां कर्णजलौकसि च

**चित्रायस** न० कर्म० अच्समा० । तीक्ष्णलौहे (इस्पात) ।

**चिद्रूप** पु० चिदेव रूपमस्य । आत्मनि, स्फूर्त्तिमति च ।

**चिदाकाश** न० चिद् आकाशमिव निर्लेपत्वात् सर्वाधारत्वा च्च । शुद्धे ब्रह्मणि ।

**चिदाभास** पु० चित आभास' प्रतिबिम्बः । बुद्धावासन्नतिबिम्बे जीवे बुद्धिस्थचिचिदाभासाविति वेदान्त' । [ईश्वरदार्य्यसारणे

**चिन्ता** स्त्री०चिति-अ ।आगन्तुभूतज्ञानजन्ये संस्कारोद्बोधे पूर्व-

**चिन्तामणि** पु० चिन्ताविषयस्य (तदुद्भवार्थे) मणि' । चिन्तामणौ चिन्तितवस्तुदायके मणौ, स्पर्शमणौ च । 'यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां व्रजे'दिति ।

**चिन्त** पु० चित-न पृ० तस्य न' । (चिंता) मत्स्यभेदे ।

**चिन्मय** पु० चिदेव चित्+मयट् । चैतन्यरूपात्मके परमेश्वरे 'चिन्मयस्याद्वितीयस्ये'त्यादि । [स्वार्थे कन् । अर्थेवार्थे

**चिपिट** पु० चि-पिटच् किच्च । (चिड़ा) इति ख्याते पृथुके

**चिर** न० चि-रक् । दीर्घकाले । तद्वर्त्तिनि पदार्थे त्रि० ।

**चिरक्रिय** त्रि० चिरकालेन क्रिया यस्य । दीर्घसूत्रे ।

**चिरजीवक** पु० चिरं जीवति जीव ण्वुल् । जीवकद्रुमे ।

**चिरजीविन्** पु० चिरं जीवति णिनि । काके, जीवकद्रुमे, मार्कण्डेये, 'अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविन' इत्युक्तेषु सप्तसु च । चिरजीविनि त्रि० ।

**चिरञ्जीविन्** पु० चिरं जीवति जीव-णिनि । चिरजीविशब्दार्थे

**चिरण्टी** स्त्री०चिरेण अटति पितृगृहात् भर्तृगेहम् अट-अच् पृ० । यौवनस्थायां पितृगेहस्थायां स्त्रियाम् ।

**चिरतिक्त** पु०चिरस्थितो तिक्तो रसो यस्य । (चिराता) भूनिम्बे ।

**चिरत्न** त्रि० चिरे भव' त्न । चिरन्तने पुरातने ।

**चिरन्तन** त्रि० चिरम्+टयु तुट् च । पुरातने । स्त्रियां ङीप् ।

**चिरपाकिन्** पु० चिरेण पाकोऽस्यास्ति दुष्करत्वात् । कपित्थे

**चिरपुष्प** पु० चिराणि पुष्पाण्यस्य । बकुलद्रुमे ।

**चिरम्** अव्य० चि-रमुक् । बहुकालार्थे ।

**चिररात्र** पु० चिरा रात्रि अच् । बहुकाले ।

**चिररात्राय** अव्य० चिररात्रात् अयते अय-अण् । बहुकाले

**चिरबिल्व** पु० चिर बिनत्ति बिल-भेदने व । करञ्जद्रुमे ।

**चिरसूता** स्त्री० चिरं प्रसूता । बहुकालप्रसववत्यां गवादौ । स्त्र र्थे कन् अत्रार्थे ।

**चिरस्य** अव्य० चिरमस्यति अस क्यप् यक० । दीर्घकाले ।

**चिरात्** अव्य०चिरमतति अत-क्विप् । दीर्घकाले, गरुड़े पु० ।

**चिराय** अव्य० चिरमयते अण् । चिरकाले दीर्घकाले ।

**चिरायुस्** पु० चिरमायुर्यस्य । देवे । चिरजीविनि त्रि० ।

**चिरि** हिंसे स्वादि० पर०सक०सेट । चिरिणोति अचिरायीत् ।

**चिरेण** अव्य० चिर+एनप् । दीर्घकालार्थे । [चिर्भिटोप्यत्र ।

**चिर्भटी** स्त्री० चिरेण भटति अच् ङीप् पृ० । कर्कटाम् ।

**चिल** वासे तु० पर० अक० सेट् । चिलति अचेलीत् ।

**चिलिचिम** पु० चिल इन् चिलिं वासं चिनोति चि-मक् । (चेङ्गुड़गुड़िया) मत्स्यभेदे ।

**चिल्ल** शैथिल्ये भावकृतौ च भ्वा० पर० अक० सेट् । चिल्लति अचिल्लीत् । [चिल् । क्लिन्ननेत्रे त्रि० ।

**चिल्ल** पु० चिल्ल-अच् । (चिल) पक्षिभेदे । क्लिन्न+न क्लिन्नस्य

**चिल्लक** पु० चिल्ल-ण्वुल् । लोध्रे । झिल्लिकायां स्त्री० ।

**चिल्लाभ** पु० चिल्ल इव सहसापहार्य्यादिदादाभाति भा-क । धन्विभेदके चौरे । [वास्तूकशाके च ।

**चिल्ली** स्त्री० चिल्ल-अच् गौरा० ङीष् । झिल्लीकीटे, लोध्रे,

**चिवु(क)** न०चीव-संवरणे उ पृ० ह्रस्व । ओष्ठाधोभागे । स्वार्थे कन् तत्रैवार्थे । मुचकुन्दद्रुमे पु० ।

**चिह्न** लक्षणे अ० चु० उभ०सक० सेट् । चिह्नयति ते अचिचिह्नत् त । [लक्ष्मणे ।

**चिह्न** न० चिह्न-अच्,चह-न उपधाया इत्वम् वा । लाञ्छने

**चीक** मर्षणे वा चु०उभ०पक्षे भ्वा०पर० सक०सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।

**चीन** पु० चि-नक् पृ० दीर्घ । 'भारतवर्षात् ईशान्यां चीनदेश प्रकीर्त्तित' इत्युक्ते देशे, तद्देशस्थे जने ब०व० । तन्निर्मिते तद्देशजातवस्त्रभेदे च । तद्देशोद्भवसक्ते न० 'चीन-पीठकानद्यमदयान्दोमने'त्युक्त' । कङ्गुधान्यभेदे, मृगभेदे, सूत्रे, वस्त्रभेदे च पु० । पताकायां, सीसके च न० । स्वार्थे कन् । कङ्गुधान्यभेदे । [धान्यभेदे ।

**चीत्कार** पु० चीदित्यव्यक्तशब्दस्याकार' कृ-घञ् । गर्दभादेः

चीनपिष्ट न॰ पिष–क्त पिष्टं चूर्णं ६त॰। (चीनेर सिन्दूर) सिन्दूरभेदे। [अचिचीभत् त।

चीभ प्रशंसायां भ्वा॰आत्म॰सक॰ सेट्। चीभति अचीभीत्।

चीर न॰ चि क्रन् दीर्घश्च। वल्कखण्डे 'चीराणि किं पथि न स-न्ती'ति भागवतम्। लेखनभेदे चूडायां, सीसके दृश्य-स्य खण्डे, वस्त्रभेदे च। [कम्। चञ्चुशाके

चीरपत्रिका स्त्री॰ चीरमिव पत्रमस्याः स्वार्थे कन् अत

चीरपर्ण पु॰ चीरमिव पर्णमस्य। शालवृक्षे।

चीरितच्छद पु॰ चीरवदाचरितं छदो दलं यस्य। पालङ्कशाके

चीर्ण त्रि॰ चर नक् पृ॰ अत ईत्वम्। कृते, पीलिते, सञ्चिते च

चीव ग्रहणे संवृतौ च भ्वा॰उभ॰सक॰सेट्। चीवति ते अची-वीत् अचीविष्ट। अचिचीवत् त।

चीव दीप्तौ चुरा॰ उभ॰सक॰सेट्। चीवयति ते अचीचिवत् त।

चीवर न॰ चि ष्वरच् दीर्घश्च। भिक्षुवस्त्रे कौपीनादौ।

चुक्क पीडने चु॰उभ॰सक॰सेट्। चुक्कयति ते अचुचुक्कत् त।

चुक्र पु॰ चक रक् अत उत्त्वम्। अम्लवेतसे (चुकापालङ्ग) शाकभेदे, शुक्रभेदे च। स्वार्थे कन् (आमरुल) शाके, तिन्तिडाञ्च स्त्री॰। [चिञ्चायां काञ्जिकभेदे च स्त्री॰।

चुक्राम्ल पु॰ चुक्रमिवाम्लम्। वृक्षाम्ले। अम्ललोणिकायां

चुक्रिका स्त्री॰ चुक्रैव स्वार्थे कन्। (चुकापालङ्ग) शाकभेदे।

चु(चू)चुक न॰ चु(चू)चु इत्यव्यक्तं शब्दं कायति यत्र कै-क। कुचाग्रे स्तनवृन्ते। [सेट्। चुच्यति अचुच्यीत् चुक्र।

चुच्य स्नाने मन्थने पीडने सुरादिसम्पादने च भ्वा॰पर॰सक॰

चुट अल्पीभावे भ्वा॰पर॰अक॰ सेट्। चोटति अचोटीत्।

चुट अल्पीभावे भ्वा॰पर॰अक॰ सेट् इदित्। चुण्टति अचुण्टीत्

चुट छेदने वा॰चु॰उभ॰ पक्षे तुदा॰कुटा॰पर॰सक॰ सेट् चोटयति ते अचूचुटत् त पक्षे चुटति अचुटीत् चुचोट।

चुट छेदने चुरा॰ उभ॰ सक॰ सेट् इदित्। चुण्टयति ते अचुचुण्टत् त। [चुट्टत् त।

चुट्ट अल्पीभावे चुरा॰ उभ॰ अक॰ सेट्। चुट्टयति ते अचु

चुड छेदने चुरा॰ उभ॰ सक॰ सेट् इदित्। चुण्डयति ते अचुचुण्डत्-त। [अचुण्डीत्।

चुड अल्पीभावे भ्वा॰ पर॰ अक॰ सेट् इदित्। चुण्डति

चुड्ड(ड्ड) क्रीडायां हावे च भ्वा॰ पर॰सक॰सेट्। चुड्डति अचुड्डीत्

चुण छेदने तु॰कु॰पर॰सक॰सेट्। चुणति अचुणीत् चुचोण।

चुत क्षरणे भ्वा॰ प॰अक॰ सेट्। चोतति अचुतत् अचोतीत्

चुद नोदने चु॰ उ॰सक॰ सेट्। चोदयति-ते अचूचुदत् त। चोदना चूडा।

चुप मन्दगतौ भ्वा॰ पर॰ अक॰ सेट्। चोपति अचोपीत्।

चुम्ब चुम्बने वा॰चु॰उभ॰ पक्षे भ्वा॰पर॰ सक॰ सेट् इदित्। चुम्बयति ते चुम्बति अचुचुम्बत्-त अचुम्बीत्।

चुम्बक पु॰ चुबि ण्वुल्। स्वनामख्याते अयस्कान्ते मणौ। धूर्त्ते, चुम्बनकर्त्तरि, ग्रन्थैकदेशाभिज्ञे च त्रि॰।

चुर स्तेये (परद्रव्यापहरणे) वा॰ चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट्। चोरयति ते चोरति अचूचुरत् त अचोरीत्

चुरा स्त्री॰ चुर क टाप्। चौर्य्ये।

चुल समुच्छ्राये चुरा॰ उभ॰सक॰सेट्। चोलयति ते अचूचुलत् त

चुलुक पु॰ चुल-उकक्। प्रसृतौ निविडपङ्के भाण्डभेदे च। आश्मातसञ्जमयोग्ये जले न॰।

चुलुकिन् पु॰ चलुक+अस्त्यर्थे इनि। शिशुमाराकारे मत्स्यभेदे

चुलुम्प लौल्ये भ्वा॰ पर॰ अक॰ सेट्। चुलुम्पति अचुलुम्पीत्

चुल्ल भावकृतौ भ्वा॰पर॰अक॰सेट्। चुल्लति अचुल्लीत्। [त्रि॰

चुल्ल पु॰ क्लिन्नस्य चुलादेशः लच्‌प्रत्ययः क्लिन्ने नेत्रे तद्युक्ते जने

चुल्लि(ल्ली) स्त्री॰ चुल्ल इन् वा ङीप् चुद लिक् वा। पाकार्थ-मग्निस्थापनस्थाने (चुला) चुल्ली चिर रोदितोद्धुरट। अच्। चुल्लाग्नल।

चूडा स्त्री॰ चुद अङ् नि॰, चुल समुच्छ्राये दीर्घ अड डस्य ल वा। मयूरशिखायां मस्तकमध्यस्थशिखामात्रे, त्रुटिकायां, बाहुभूषणे शिखायाम्, (अग्रे), भूषणमात्रे, कूपे, [दश-विधसंस्कारान्तर्गते संस्कारभेदे च। 'प्रथमेऽब्दे तृतीये वा चूडाकार्य्येति मनुः।

चूडामणि पु॰ ६त॰। शिरोरत्ने चूडामणीकृतविधुरिति।

चूडाम्ल न॰ चूडायामप्यम्लम्। वृक्षाम्ले।

चूडाल न॰ चूडा शिखास्त्यस्य ल। मस्तके। शिखायुक्तजने त्रि॰ श्वेतगुञ्जायां, नागरमुस्तायाम् उच्चटाख्ये च स्त्री॰ट प्।

चूण सङ्कोचे चुरा॰ उभ॰ सक॰ सेट्। चूणति अचूणीत्।

चूत पु॰चुष क्त पृ॰। आम्रे, नवचूतप्रसवोगमिष्यतीति कुमार च्यु क्त पृ॰) गुह्यद्वारे न॰। स्वार्थे कन आम्रे, कूपके च।

चूर दाहे दिवा॰ आत्म॰ सक॰सेट्। चूर्य्यते अचूरिष्ट। चूर्ण

चूर्ण पेषणे चु॰ उभ॰सक॰ सेट्। चूर्णयति ते अचुचूर्णत् त।

चूर्ण पु॰ चूर्ण घञ्। पेषणजाते रजसि भूतौ (आबीर) ख्याते द्रव्ये, ताम्बूलचर्वणोपयोगिद्रव्ये च चूर्णमानीकृत। [illegible]

चूर्णक पु॰ चूर्ण-ण्वुल्। सक्तुषु। स्वार्थे कन् [illegible]। 'अक ठोराक्षर स्वल्पसमास चूर्णकं [illegible] गद्यभेदे च

चूर्णकार पु॰ चूर्णं करोति कृ अण्। [illegible] जातिभेदे

चूर्णकुन्तल द॰ [illegible]। शिर

छागल पु० छगलस्य अपत्यम् अण् । स्वनामख्याते पशौ, छगलस्यापत्यम् अण् । ऋषिभेदे ।

छागवाहन पु० छागो वाहनमस्य । अग्नौ ।

छात त्रि० छो-कर्मणि कर्त्तरि वा क्त । छिन्ने, दुर्बले च । छाततराम्बुच्छटेति काव्य० प्र० ।७०।

छात पु० गुणेर्दोषापकर्षं छत्र तच्छीलमस्य ण । शिष्ये 'वरटा कपिला पीता प्रायोहिमवतो वने । कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृत'मित्युक्ते मधुभेदे न० ।

छादन पु० छद-णिच् ल्यु । नीलाम्लानवृक्षे । भावे ल्युट् । छादने । करणे ल्युट । पत्रे न० ।

छान्दस पु० छन्दोवेदमधीतेऽण् । वेदाध्ययनकर्त्तरि ।

छान्दोग्य न० छन्दोग+आम्नायादर्थे ञ्य । सामगानां धर्मे आम्नाये, (मन्त्रब्राह्मणात्मके शास्त्रे) सङ्घे च ।

छाया स्त्री० छो-य । आतपाभावे, कान्तौ, प्रतिबिम्बे, पालने, उत्कोचे पङ्क्तौ, संज्ञाप्रतिरूपायां सूर्यभार्यायाम् पञ्चविंशाक्षरपादके छन्दोभेदे च ।

छायातनय पु० ६त० । शनैश्चरे 'छायासुतादयोऽप्यत्र ।

छायापुरुष पु० छायया पुरुष इव । आकाशे द्रष्टव्ये निजच्छायासदृशे छायात्मके पुरुषे ।

छायावृक्ष पु० छायाप्रधानो वृक्षः शाक० । वटादौ वृक्षे ।

छिक्कनी स्त्री० छिक् इत्यव्यक्तं नासिकाशब्दं करोति शब्दायते अच् गौरा० ङीष् । (नाक्छिकनी) वृक्षभेदे ।

छिक्का स्त्री० छिक् इत्यव्यक्तं शब्दं करोति क ड । क्षुते ।

छित्वर त्रि० छिद-ष्वरप् पृ० तकुच । वैरिणि धूर्त्ते छेदके च । स्त्रियां ङीप् । छेदने न० । [अच्छिदत् अच्छैत्सीत्, छिदा ।

छिद् द्वैधीकरणे रुधा० उ० सक० अनिट् । छिनत्ति छिन्ते अच्छैत्सीत्-

छिदिर पु० छिद-किरच् । कुठारे पावके, रज्जुभेदे नाराचे च

छिदुर त्रि० छिद कुरच् । वैरिणि धूर्त्ते छेदके, छेदनद्रव्ये च

छिद्र भेदने अद० चुरा० उभ० सक० सेट् । छिद्रयति ते अचिच्छिद्रत् त । [ज्योतिषोक्ते लग्नतोऽष्टमस्थाने च ।

छिद्र न० छिद-रक् छिद्र अच् वा । दूषणे, गर्त्ते, अवकाशे

छिद्रान्तर पु० छिद्रमन्तर्मध्यं यस्य । नडे ।

छिद्रित त्रि० छिद्र ता । विद्धे कृतच्छिद्रे ।

छिन्नपत्री स्त्री० छिन्नं पत्रं यस्याः । अम्बष्ठायाम् । (आकनादी)

छिन्नमस्ता स्त्री० छिन्नं मस्तं यस्याः । महाविद्यायां विद्याभेदे

छिन्नरुह पु० छिन्नोऽपि रोहति रुह क । तिलवृक्षे । गुडूच्यां, भल्लक्यां, केतक्याम् स्त्री० ।

छिन्नोद्भवा स्त्री० छिन्नादुद्भवति उद्+भू-अच् । गुडूच्याम् ।

छुछुन्दरी स्त्री० छुछु इत्यव्यक्तं रणति अच् पृ० । (छुछु) जन्तुभेदे गन्धमूषिके ।

छुट छेदने वा चुरा० उभ० पक्षे तु० कुटा० पर० सक० सेट् । छोटयति ते छुटति । अचुच्छुटत् त अच्छुटीत् ।

छुड छेदने तु० कु० पर० सक० सेट् । छुडति अच्छुडीत् चुच्छोड

छुप स्पर्शे तु० पर० सक० अनिट् । छुपति अच्छौप्सीत् ।

छुप पु० छुप-क । क्षुपे, स्पर्शे, चपले, युद्धे च ।

छुर छेदे भ्वा० पर० सक० सेट् । छोरति अच्छोरीत् ।

छुर लेपने तु० कु० पर० सक० सेट् । छुरति अच्छुरीत् ।

छुरिका स्त्री० छुर-क्वुन् । अस्त्रभेदे (छुरि) । छुर क गौ० ङीप् । छुरीत्यप्यत्र ।

छृद सन्दीपने वा चु० उ० पक्षे भ्वा० पर० सक० सेट् । छर्दयति ते छर्दति । अचच्छर्दत्-अचिच्छृदत् त अच्छर्दीत् ।

छृद देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट् । छृणत्ति छृन्ते अच्छृदत् अच्छर्दीत् ।

छृप याचने दिक० शब्दे अक० वा चुरा० उभ० पक्षे भ्वा० पर० सेट् । छर्पयति ते छर्पति । अचिच्छृपत् त-अचच्छर्पत् त । अच्छर्पीत् । [नागरे च त्रि० ।

छेक पु० छो ईकन् । गृहासक्ते पशुपक्षि, मृगे च । विदग्धे,

छेकानुप्रास पु० छेकस्य विदग्धस्य प्रियोऽनुप्रासः शाक० । अनुप्रासभेदे शब्दालङ्कारे । [ङ्कारभेदे ।

छेकोक्ति स्त्री० छेकाया विदग्धाया उक्तिः । वक्रोक्तिरूपेऽल-

छेद छेदने अद० चु० उभ० सक० सेट् । छेदयति ते अचिच्छेदत् त

छेद पु० छिद-घञ् । छेदने खण्डे, भाजके च 'छेद गुणं गुणं छेदमिति लीलावती । कर्म्मणि घञ् । खण्डे, 'कलाढ्य-च्छेदविभक्तारागा मिति कुमार ।

छैदिक पु० छेद नित्यमर्हति ठक् । वेतसे ।

छो छेदने दि० पर० सक० अनिट् । छ्यति अच्छात् अच्छासीत् ।

छोटिका स्त्री० छुट-ण्वुल् । तर्जन्यङ्गुष्ठजनिते शब्दे ।

छ्यु गतौ भ्वा० आत्म० सक० अनिट् । छ्यवते अच्छ्योष्ट ।

## ज

ज पु० जि-जन-वा ड । पिते विष्णौ, जनके, वेगे, मुक्तौ विषे, छन्दोग्रन्थोक्ते गुरुमध्यगे वर्णत्रये च ।

जक्ष भक्षणे सक० हासे अक० अदा० सचा० पर० सेट् । जक्षिति अजक्षीत् ।

जगच्चक्षुः पु० जगतां चक्षुरिव सर्व्वपदार्थदर्शकत्वात् । सूर्ये

जगत् पु० गम-क्विप् नि० । वायौ । जङ्गमे त्रि० विश्व लोके न० ।

जगत्प्राण पु० जगतां प्राणो जीवनहेतुत्वात् । वायौ ।
जगत्साक्षिन् पु० जगतां साक्षीव सर्व्वस्य साक्षाद्दर्शनात् । सूर्य्ये ।
जगती स्त्री० गम-क्विप् नि० । पृथिव्यां, भुवने, जने, जम्बु-
 क्षेत्रे, वास्तुभेदे, द्वादशाक्षरपादके छन्दोभेदे च ।
जगदाधार पु० ६त० । वायौ, जगतामाश्रये च 'कालो हि
 जगदाधार' इति स्मृति । [ह्वानी'मिति स्मृति
जगद्धात्री स्त्री० धा तृच् ६त० । दुर्गाभेदे । 'अहङ्कारा जग-
जगद्योनि पु० जगतां योनिरुत्पत्ति यस्मात् । शिवे, विष्णौ,
 हिरण्यगर्भे, कुमारे च । ६त० पृथिव्याम् । [भैरवभेदे च ।
जगन्नाथ पु० ६त० । विष्णौ, तदीयक्षेत्रभेदे, विमलापीठस्थे
जगल पु० गल-अदने यङ् अच् नि० । मद्यकल्के (मदेर गोडा)
 मदनवृक्षे पिष्टमद्ये धूर्त्ते च ।
जग्ध त्रि० अद्-क्त । भुक्ते ।
जग्धि स्त्री० अद्-क्तिन् । भोजने, सहभोजने च ।
जघन न० वक्रं हन्ति हन-यङ् अच् पृ० । स्त्रीणां श्रोणिपुरो
 भागे, श्रोणौ च । 'पीनस्तनजघनाया' इत्युद्भट० ।
जघनेफला स्त्री० जघने इव मध्यभागे फलमस्या अलुक्स० ।
 काकोदुम्बरिकायाम् ।
जघन्य त्रि० हन-यङ् अच् पृ०, जघनमिव इवार्थे यत् वा ।
 अधमे, चरमे, गर्हित च । शूद्रे पु० । जघनमनुशेरितं
 यस्य । पुंसां लिङ्गे ।
जघन्यज पु० जघन्ये चरमे जायते जन-ड । शूद्रे, कनिष्ठे त्रि० ।
जङ्गम त्रि० गम-यङ्-अच् । गतिशक्तियुत ।
जङ्गल न० गल यङ्-अच् पृ० । वने, रहसि च । मांसे पु० ।
जङ्घा स्त्री० जघन्यते कुटिलं गच्छति गत्यर्थकाय हन्ते
 कौटिल्ये यङ-अ पृ० । गुल्फजान्वोरन्तराले अवयवे ।
जङ्घाकरिक त्रि० कृ अप् कर' विक्षेप ६त० तत अस्त्यर्थे
 ठन् । जङ्घाबलेनोपजीवति धावके (धाउडे)
जङ्घाल त्रि० जङ्घा वेगवती अस्त्यस्य लच् । धावके जङ्घाजो-
 विनि । 'हरिणैणकुरङ्गर्क्ष्यपृषतन्यङ्कुशम्बरा । राजीवश्च
 तथा मुण्डी जङ्घाला परिकीर्त्तिता'-इत्युक्तेषु मृगेषु पु० ।
जङ्घिल त्रि० अतिशयवेगवती जङ्घास्त्यस्य इलच् । वेगव-
 ज्जङ्घाविशिष्टे धावके ।
जज युद्धे भ्वा० पर० अक० सेट् । जजति अजाजीत्-अजजीत्
जञ्ज योधने भ्वा० पर० सक० सेट् इदित् । जञ्जति अजञ्जीत्
जट संहतौ भ्वा० पर० अक० सेट् । जटति अजाटीत् अजटीत् ।
जटा स्त्री० जट अच् । अन्योन्यसंलग्ने केशे व्रतिनां शिखा-
 याम्, मूलादे शटायाम् इक्षादेर्मूले, (जड) जटामांसी,
 वेदस्य पाठभेदे, रुद्रजटायाम् लतायाम् शतावर्य्याञ्च ।
जटाजूट पु० ६त० । जटानां जूटे (बन्धे) समूहे च 'जटा-
 जूटसमायुक्तामिति दुर्गाध्यानम् । [गन्धद्रव्यभेदे ।
जटामांसी पु० जटा मन्यते मन-स दीर्घश्च । ख्यातनामख्याते
जटायु(स्) पु० जटा याति या कु, जट संहतौ अच् जट
 संहतमायुरस्य वा । ख्यातनामख्याते खगभेदे, गुग्गुलौ च ।
जटाल पु० जटाऽस्त्यस्य लच् । गुग्गुलौ, वटे, कर्पूरे, मुष्कके
 च । जटायुक्ते त्रि० । जटामांस्यां स्त्री० ।
जटावल्ली स्त्री० जटेव वल्ली । रुद्रजटायाम् । [वा ङीप् ।
जटि(टी) पु० जट-इन् । वटवृक्षे, समूहे च । जटामांस्यां स्त्री०
जटिन् पु० जटा अस्त्यस्य इनि । वृक्षे (पाकुड़) अश्वत्थपुष्प
 पलयुक्ते वृक्षभेदे । जटावति त्रि० ।
जटिल पु० जटा अस्त्यर्थे इलच् । सिंहे, ब्रह्मचारिभेदे च ।
 जटायुक्ते त्रि० । जटामांस्यां, पिप्पल्यां, वचायां, दमन
 वृक्षे च स्त्री० । [भेदे स्त्रियां (जडुल) ।
जटु(डु)ल पु० जट-उलच् पृ० टस्य ड वा । देहस्थे कृष्णचिह्न
जठर पु० जायते अन्तर्गर्भो यस्मिन् जन-अर ठान्तादेश ।
 कुक्षौ । वृद्धे, कठिने च त्रि० ।
जड त्रि० जलति घनीभवति जल-अच् लस्य ड । इष्टानि-
 ष्टानभिज्ञे, हिमार्त्ते, मूके, बुद्धिहीने, अप्रकाशे, वेदग्र-
 हणासमर्थे मूर्खे च । जले, सीसके च न० । जडयति नम-
 स्करोति णिच्-अच् । मूकशिम्ब्यां भूम्यालक्याञ्च स्त्री० टाप् ।
जतु न० जन-उ तोऽन्तादेश । अलक्ते, लाक्षायाञ्च ।
जतुका स्त्री० जतु+इवार्थे कन् । (चामचिका) पक्षिभेदे गन्ध
 द्रव्यभेदे, जन्या, पर्पट्यां, तिर्य्यक्फलायां, निशान्धायाञ्च ।
जतुकारी स्त्री० जतु करोति कृ अण् ङीप् । जतुकालतायाम्
जतुरस पु० ६त० । अलक्तके ।
जत्रु न० जन रु तोऽन्तादेश । स्कन्धवक्षसो सन्धौ, कण्ठ-
 स्याधोभागस्थयोरस्थ्नोश्च ।
जन जनने जुहो० पर० अक० सेट् घटा० । जजन्ति । अजजनत्
 अजनीत् अजानीत् । जनयति जनित । [यति जात
जन जनने दि० आ० अक० सेट् घटा० । जायते अजनिष्ट । जन-
जन पु० जन अच् । लोके पामरलोके, महर्लोकादूर्ध्वलोके च
जनक पु० पु० जन णिच्-ण्वुल् । पितरि मिथिलाधिपे राज
 भेदे च । कारणे त्रि० । [रामपत्न्याम्
जनकसुता स्त्री० जनकस्य सुततया ख्याता । सीतायां
जनता स्त्री० जनानां समूह तल् । जनसमूहे ।
जननि(नी) स्त्री० जन-अनि वा ङीप् । मातरि, जनिकाय-

गन्धद्रव्ये, दयायां, कटुकायां, मञ्जिष्ठायाम्, अलक्तके, जटामांस्याञ्च ।

**जनपद** पु० जना पद्यन्ते गच्छन्ति यत्र पद-घ । देशे ।

**जनमेजय** पु० जन+एज-णिच्-खश् मुम् च । परीक्षिद्राजपुत्रे, नृपभेदे । ष० । जन्मेजयोऽप्यत्र ।

**जनयितृ** पु० जन-णिच्-तृच् । पितरि । मातरि स्त्री० ङीप् ।

**जनलोक** पु० महर्लोकोपरि भुवनभेदे ।

**जनवल्लभ** पु० ६त० । श्वेतरोहितवृक्षे । जनप्रिये त्रि० ।

**जनश्रुति** स्त्री० जनेषु श्रुतिरेव न दृष्टिर्यस्याः । सत्यमिथ्यासाधारणलोकप्रसिद्धौ किम्वदन्त्याम् ।

**जनस्थान** न० दण्डकारण्यस्य समीपे स्थानभेदे, जनाधारस्थाने च । जनस्थाने भ्रान्तमित्युक्तेः ।

**जनान्तिक** न० ६त० । जनसमीपे, अप्रकाशे, त्रिपताककरेण अन्यानपवार्य्यान्तिके जनान् । अन्योन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकमित्युक्ते नाटकेऽभिनयकर्त्रोरन्योन्यगुप्तभाषणे च ।

**जनार्द्दन** पु० जनैरर्द्द्यते याच्यते स्वाभिष्टमसौ अर्द्द-याचने कर्म्मणि ल्युट् जनं जननमर्द्दयति वा अर्द्द-हिंसायां ल्यु वा । विष्णौ ।

**जनाश्रय** पु० जनानां लोकानामाश्रयः । मण्डपे ।

**जनि(नी)** स्त्री० जन-भावे इन् वा ङीप् । उत्पत्तौ अभूतप्रादुर्भावे, जायते गर्भोऽस्याम्, नार्य्याम् । मातरि, स्नुषायां, जायायाञ्च । जायते आरोग्यमनया । ओषधिभेदे जतुकायाञ्च ।

**जनुस्** न० जन-उसि । उत्पत्तौ ।

**जनु(नू)** स्त्री० जन उ वा ऊङ् । उत्पत्तौ ।

**जनेष्ट** पु० जनानामिष्टः । कुन्दवृक्षे । वृद्धिनामौषधौ, जातीपुष्पे हरिद्रायां जतुकायाञ्च स्त्री० । [त्माभिमानिनि जीवे ।

**जन्तु** पु० जन तु । जननशीले प्राणिनि अविद्यादोषात् देहा-

**जन्तुका** स्त्री० जन्तुभिः कायति प्रकाशते कै-क । लाक्षायां, तस्या हि कीटैः प्रकाश । हिङ्गुले च ।

**जन्तुघ्न** पु० जन्तून् कृमीन् हन्ति टक् । बीजपूरे । विडङ्गे, हिङ्गुनि च न० । प्राणिघातके त्रि० ।

**जन्तुफल** पु० जन्तवः फलेऽस्य । उडुम्बरे ।

**जन्तुमारी** स्त्री० जन्तून् कृमीन् मारयति मृ णिच् अण् उप० निम्बूके (निमकी) । [तत्र हि बहुकीटाना स्थिति ।

**जन्तुला** स्त्री० जन्तून् कीटान् लाति ला-क । काशतृणे

**जन्मन्** न० जन-मनिन् । उत्पत्तौ, आद्यक्षणसम्बन्धे, गर्भवासयोनिनि सारकेण देहग्रहणे, न्यायायुक्ते अपूर्व्वदेहादिभिः सम्बन्धे, ज्योतिषोक्ते जन्मनक्षत्रे, लग्नावधिके दशमे जनिनि च नक्षत्रे, जन्मलग्ने च ।

**जन्ममास** पु० ६त० । 'आरभ्य जन्मदिवस यावत् त्रिंशद्दिनानि च । जन्ममासः स विज्ञेयः वर्ज्जितः सर्व्वकर्म्मसु' इत्युक्ते जन्मदिनावधिके त्रिंशद्दिनात्मके मासे ।

**जन्मान्तर** न० अन्यत् जन्म मयू० । भवान्तरे परलोके ।

**जन्माष्टमी** स्त्री० श्रीकृष्णस्य जन्मतिथौ सुख्यचान्द्रेण भाद्रस्य कृष्णाष्टम्याम् ।

**जन्मिन्** पु० जन्मास्त्यस्य व्रीह्यादि० इनि । प्राणिनि जीवे ।

**जन्य** त्रि० जन कर्त्तरि यत् । जायमाने । जन-णिच्-यत् । उत्पाद्ये, जनके च । जनीं वधूं वहति नयति वा यत् । नवोढाज्ञातिभृत्यस्निग्धेषु त्रि० । अङ्गे, परीवादे, प्रीतौ, युद्धे, देहे च पु० । भावे यत् । जनने न० । मातृवयस्यायां स्त्री० । [पीत् अजपीत् ।

**जप** उच्चारणे वाचि च भ्वा० पर० सक० सेट् । जपति अजा-

**जप** पु० जप-अच् । वेदमन्त्रादेरावृत्तौ अस्फुटोच्चारणे 'जपस्तन्नामधेयं ध्येयरूपीकरणं मने' इत्युक्ते मन्त्रादिभाषणे च ।

**जपा(वा)** स्त्री० जप-अच् वा पस्य व । स्वनामख्याते वृक्षे तत्पुष्पे च

**जम** भैथुने भ्वा० पर० सक० सेट् । जमति अजमीत् ।

**जभ** मैथुने भ्वा० पर० सक० सेट् इदित् । जम्भति अजम्भीत् ।

**जभ** जृम्भणे भ्वा० आत्म० अक० सेट् इदित् । जम्भते अजम्भिष्ट

**जभ** नाशे चुरा० उभ० सक० इदित् । जम्भयति-ते अजजम्भत् त

**जभ** जृम्भणे भ्वा० आत्म० सेट् । जभते अजभिष्ट । [जान्त्वा

**जम** अने भ्वा० पर० सक० सेट् । जमति अजमीत् । जमित्वा-

**जमदग्नि** पु० परशुरामस्य पितरि मुनिभेदे ।

**जम्पती** पु० द्वि० व० । जाया च पतिश्च द्व० जायाया जम् । दम्पत्योः स्त्रीपुरुषयोः । [पङ्के, शैवाले, केतक्याञ्च ।

**जम्बाल** पु० जम्ब-घञ् जम्बमालाति आदत्ते आ+ला क ।

**जम्बालिनी** स्त्री० जम्बाल+अस्त्यर्थे इनि । नद्याम् ।

**जम्बीर** पु० जम-विच् वीर-विक्रान्तौ क कर्म० । (गोंड़ानेबु) वृक्षभेदे, मरुवके, शिमाज्जके च ।

**जम्बु(म्बू)** स्त्री० जम-कू नि० बुक् ह्रस्व० वा ऊङ् (जाम) । इति ख्याते वृक्षे । तस्याः फले अण् तस्य वा लुप् । जाम्बवम् । वा पुंस्त्वे । जम्बु वायस ।

**जम्बुक** पु० जम्बुरिव कायति कै-क । (शोभाञ्जन) इति ख्याते वृक्षे, श्योनाकभेदे च । स्वार्थे कन् जम्बुशब्दार्थे

**जम्बुद्वीप** पु० जम्बुवृक्षचिह्नितो द्वीपः शाक० । सप्तद्वीपमध्ये स्वनामख्याते द्वीपभेदे ।

जम्बुक पु० जम्ब उलूकादि० नि० । शृगाले नीचे, वरुणे, जम्बुकार्थे च (गोलाप-जाम) वृक्षभेदे स्त्री० ।

जम्भ पु० जभि घञ् । दैत्यभेदे, दन्ते जम्बीरे, अंशे, हनौ, तूणे च । भावे घञ् । भक्षणे जृम्भणे च । टाप् । जृम्भायां स्त्री० ।

जम्भभेदिन् पु० जम्भं दैत्यं भिनत्ति भिद-णिनि । इन्द्रे जम्भभेदनादयोऽप्यत्र ।

जम्भला स्त्री० जम्भं जृम्भां लाति ला क । राक्षसीभेदे तस्याः स्मरणे ज्वरनाशात् ज्वरनाशे च तत्पूर्वाङ्गजृम्भाया अपि नाश 'समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी'ति ।

जय पु० जि भावे अच् । शत्रूणामभिभावने नारायणपार्श्वचरे 'एतौ द्वौ पार्षदौ मह्यं जयो विजय एव चे'ति भागवतम् । विराटपुरस्थे गुप्तपाण्डके युधिष्ठिरे च ।

जयढक्का स्त्री० जयसूचिका ढक्का । वाद्यभेदे ।

जयद्रथ पु० जयन् रथो यस्य । सिन्धुराजे दुर्योधनभगिनी-पतौ स्वनामख्याते नृपे, सूर्य्ये, भीमे च ।

जयन्त पु० जि झच् । इन्द्रस्य पुत्रे चन्द्रे, शिवे, विराटपुरस्थे गुप्तपाण्डके भीमे च ।

जयन्ती स्त्री० जयति रोगान् अन्यान् ग्रहान् वा जि-शतृ ङीप् । जरायाम् नादेय्याम् दुर्गाभेदे 'जयन्ती मङ्गला काली'ति मन्त्रः । पताकायाम् जयन्तीवृक्षे, 'रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी । अर्द्धरात्रादधश्चोर्द्धम् कलयापि यदा भवेत् जयन्ती नाम सा प्रोक्ते'त्युक्तलक्षणे योगभेदे च ।

जयपत्र न० । जयसूचकं पत्रम् । 'पूर्वोत्तरक्रियायुक्तं निर्णयान्ते यदा नृप । प्रदद्यात् जयिने लेख्यं जयपत्रं तदुच्यते' इत्युक्ते पत्रे ।

जयपाल पु० जयेन मलजयेन पालयति पाल अच् । स्वनामख्याते सारकफलके वृक्षे । ६ त० । विष्णौ, नृपे च ।

जया स्त्री० जि-अच् । हरितक्याम्, जयन्त्याम्, दुर्गायाः, तत्सहचर्य्याम्, गणिकारिकायां, विजयायां (भङ्गा) पताकाभेदे, नीलदूर्व्वायाम्, शान्तावृक्षे ज्योतिषोक्ते 'त्रयोदश्यष्टमी चैव तृतीया च जया मते'त्युक्ते तिथिसमुदाये च ।

जय्य त्रि० जेतुं शक्यः जि-यत् क्षय्यजय्यौ तदर्थे नि० । जेतुं शक्ये

जरठ त्रि० जॄ-अठच् । कर्कशे, कठिने, पाण्डौ, जीर्णे च ।

जरण पु० न० । जॄ णिच् ल्यु । जीरके, हिङ्गुनि, सौवर्चले, कृष्णजीरके च । कासमर्द्दे पु० । कृष्णजीरके स्त्री० ।

जरत् त्रि० जॄ अतृन् । वृद्धे, जीर्णे, जरायुक्ते, पुरातने च । स्त्रियां जरती ।

जरत्कारु पु० मनसादेव्याः पत्यौ मुनिभेदे । मनसादेव्यां स्त्री०

जरद्गव पु० जरन् गौः षच् समा० । वृद्धोक्षे, गृध्रभेदे च ।

जरन्त पु० जॄ-झच् । महिषे । जीर्णे त्रि० ।

जरा स्त्री० जॄ-अङ् । शैथिल्यापादकावस्थाभेदे ।

जरायु पु० जरामेति उण् । गर्भावरकचर्म्मणि गर्भाशये, जटायौ पक्षिणि च ।

जरायुज त्रि० जरायुतो जायते जन-ड । 'पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः' इत्युक्ते पश्वादिमनुष्यान्तेषु 'यत्तु चर्म्माकृति सूक्ष्मं जरायु सा निगद्यते । शुक्रशोणितयोर्योगस्तस्मिन् सञ्जायते यतः । तत्र गर्भो भवेद्यस्मात् तेन प्रोक्तो जरायुज' इत्युक्ते गर्भे च ।

जरासन्ध: पु० 'जरया सन्धितो यस्मात् जरासन्धस्ततोऽभवत्' इत्युक्तनिरुक्तौ नृपभेदे ।

जरूथ पु०न० जॄ-ऊथन् । स्थूलमांसे ।

जर्च(र्त्स) (र्झ) उक्तौ भर्त्सने च तु० पर० सक० सेट् । जर्चति(र्त्सति)(र्झति) अजर्चीत्(र्त्सीत्)(र्झीत्) ।

जर्जर पु०न० । जर्ज-अरन् । शक्रध्वजे, शैलजे, गन्धद्रव्ये च । जीर्णे त्रि० ।

जर्जरीक त्रि० जर्ज-ईकन् पर्फरीकादि० नि० । बहुच्छिद्रे द्रव्ये । जीर्णे त्रि०

जर्झ उक्तौ निन्दायाञ्च तु० पर० सक० सेट् । जर्झति अजर्झीत् ।

जर्त्तिल पु० जॄ-णिच् कर्म्म० । अरण्यतिले ।

जल्ह भर्त्सने उक्तौ रक्षणे च भ्वा० पर० सक० सेट् । जल्हति अजल्हीत् ।

जल आच्छादने चुरा० उभ० सक० सेट् । जालयति-ते अजीजलत् त ।

जल तीक्ष्णतादिभवने भ्वा० पर० अक० सेट् ज्वलादि । जलति अजालीत् । जल जाल ।

जल त्रि० जल-अच् । जडे । उदके, ह्रीवेरे गन्धद्रव्ये, ज्योतिषोक्ते लग्नावधिके चतुर्थस्थाने, पूर्व्वाषाढानक्षत्रे च न० ।

जलकण्टक पु० जलस्य कण्टक इव । शृङ्गाटके । (पानिफल) कुम्भीरे च ।

जलकपि पु० जले कपिरिव । शिशुमारे जलजन्तुभेदे (शोशक)

जलकरङ्क पु० जलस्य करङ्क इवाधारः । नारिकेले, मेघे च । जले करङ्क इव । शङ्खे जललतायाञ्च ।

जलकाक पु० जले काक इव । (पानकौडी) पक्षिभेदे ।

जलकुन्तल पु० जलस्य कुन्तलः केश इव । शैवाले ।

जलचर पु० जलेचरति चर-टक् । ग्राहादिषु जलजन्तुषु ।

जलज पु० जले जायते जन ड । शैवाले वानीरवृक्षे हिज्जलवृक्षे, मत्स्ये ज्योतिषोक्तेषु कर्कटमीनमकरान्त्यार्द्धराशिषु च । सारभेदे, पद्मे च न० । शङ्खे पु०न० । जलजातमात्रे त्रि० ।

जलजन्तु पु० ६ त० जलस्थेषु ग्राहादिषु प्राणिषु । (जोंक)

जलजन्तुका स्त्री० जलजन्तु+अल्पार्थे कन् । जलौकायाम्

जहदजहल्लक्षणा स्त्री० जहच्च अजहच्च स्वार्थो यया तादृशी लक्षणा। वाच्यार्थैकदेशत्यागेनैकदेशवृत्तौ लक्षणायाम् यथा सोऽयं देवदत्त इत्यत्र तत्कालैतत्कालरूपार्थत्यागेन केवलदेवदत्तमात्रार्थबोधनात् वाच्यार्थैकदेशवृत्तिता।

जहल्लक्षणा स्त्री० जहत् स्वार्थो यया उत्तरपदलोप कर्म०। जहत्स्वार्थायां लक्षणायाम्। यथा आयुर्घृतम्।

जह्नु पु० चन्द्रवंशीये राजर्षिभेदे येन गङ्गावतरणकाले गङ्गा पीतेति पुराणम्। [गङ्गायाम्।

जह्नुतनया स्त्री०जह्नोस्तनयेव तदुदरं गत्वा ततो निःसरणात्।

जह्नुसप्तमी स्त्री० वैशाखशुक्लसप्तम्याम्।

जागर पु० जागृ अप्। निद्राभावे जागरणे, कवचे च।

जागरित न० जागृ क्त। इन्द्रियैर्विषयोपलब्धियोग्यावस्थायाम्। जीवो हि स्वप्नादिहेतुकर्मनाशे इन्द्रियविषयान् अनुमेयांश्च स्थूलविषयान् व्यवहारिकांश्च पदार्थान् यस्यामवस्थायामनुभवति तज्जागरितम्। कर्त्तरि-क्त। जागरणयुक्ते त्रि०। [विश्वसंज्ञे जीवे।

जागरितस्थान पु० जागरितं स्थानमस्य। वेदान्तोक्ते

जागरूक त्रि० जागृ ऊक। जागरणशीले, अप्रमत्ते च।

जागर्या स्त्री०जागृ-श। जागरणे।च। जागरायत्न। [रीत्

जागृ निद्राभावे अदा०पर०अक० सेट् अक्ता०। जागर्ति अजागरीत्

जागृवि पु० जागृ क्विन्। वह्नौ, नृपे च।

जाग्रत् न० जागृ-शतृ। इन्द्रियादिभिः विषयज्ञानयोग्यावस्थायाम्। तद्वति त्रि० स्त्रियां ङीप्।

जाङ्गल पु० जङ्गले भव, तत् शीलितं यस्य वा अण्। कपिञ्जले मृगे निर्जलदेशे हरिणादिषु मांसेषु कुरुदेशसमीपस्थे देशे च तद्देशस्थे त्रि० म० व०।

जाङ्गलि पु० जङ्गल परिशीलितमस्य जङ्गल इञ्। विषवैद्ये।

जाङ्गलिक पु० जाङ्गल्या विषविद्यया चरति ठक्। विषवैद्ये।

जाङ्गली स्त्री० आङ्गलेरियम् अण् ङीप्। विषविद्यायाम्, शूकशिम्बायां।

जाङ्गुली स्त्री० गमन्यङ् उलच् नि० ङीप्। विषविद्यायाम्।

जाङ्घिक त्रि० जङ्घाभ्यामाजीवति वेतनादि० ठक्। धावके, जङ्घाजीविनि। उष्ट्रे पु०। [त्रि०।

जात न० जन-क्त। समूहे, व्यक्ते, जन्मनि च। उत्पन्ने,प्रशस्ते

जातक न० जातस्य हितम् कन्। जातस्य शुभाशुभनिर्णायके हृदयजातकादौ ग्रन्थे, जातकर्माख्ये संस्कारभेदे च।

जातकर्मन् न० जातस्य कर्म मन्त्रात् प्राक् नाड्यन्तादि। संस्कारभेदे।

जातमात्र त्रि० जात एव मयूर०। सद्योजाते बालकादौ।

जातरूप न० जातं रूपमस्य। प्रशस्तवर्णे, स्वर्णे।

जातवेदस् पु०जातान् प्राणिन विन्दते जठरानलत्वेन विद-लाभे असुन्। वह्नौ, चित्रकवृक्षे च।

जाति स्त्री० जन-क्तिन्। जन्मनि, अनुगतैकाकारबुद्धिजनन समर्थे,अवयवव्यङ्ग्ये सकृदुपदेशव्यङ्ग्ये च धर्मभेदे, यथा गोत्व-मनुष्यत्वादि ब्राह्मणत्वशूद्रत्वादि च। व्याकरणोक्ते गोत्वा-द्यपत्यात्मके गोत्रे, वेदशाखाभेदे च। न्यायोक्ते साधर्म्य वैधर्म्याभ्यां प्रत्यवस्थानरूपे वादिवाक्येषु दूषण-दानरूपे वाक्ये, षड्जादिषु सप्तसु स्वरेषु, अलङ्कारभेदे, चुल्ल्याम्, आमलक्या, काम्पिल्ले, छन्दसि, जातिफले, मालत्यां,(चामेली) पुष्पप्रधानवृक्षे च।

जातिकोष न० जात्या कोषमिव (जायफल) आत्मनाम् जय-न्त्याम् स्त्री० ङीप्।

जातिब्राह्मण पु० जात्या ब्राह्मण। 'तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव स' इत्युक्ते निन्द्ये विप्रे।

जातिशस्य न० जात्या ,शस्यम (जायफल) जातिफले।

जातिस्मर त्रि० जातिं पूर्वजन्म स्मरति स्मृ-अच्। अतीत जन्मवृत्तान्तस्मृतियुक्ते जने।

जाती स्त्री० जन क्तिच् ङीप्। मालत्याम् (चामेली) तत्पुष्पेऽपि लताभेदे च यस्याः फल (जायफल)।

जातीफल न० ६त०। (जायफल) इतिख्याते फले।

जातीय त्रि० जातौ भव छ। समानजातियुक्ते सजातीय किञ्चिद्भेदात् जातीयप्रत्यय। प्रकारार्थे। यथा तार्किक जातीय तार्किकप्रकार। [अविकल्पे, निषेधे च।

जातु अव्य० जै-क्ते तुन्। कदाचिदर्थे, गर्हे निन्दायाम्

जातुधान पु० जातु कदाचिद्दूर्घ्यं माय धन सन्निधानमस्य। राक्षसे। [निर्मिते पदार्थे।

जातुष त्रि० जतुनो विकार अण् षुगागम। जतुविकार-

जातूकर्ण्य पु० मुनिभेदे।

जातेष्टि स्त्री० यज क्तिन् इष्टि जातस्य संस्कारार्थं कर्त्तव्या इष्टिः यागभेदे। जातकर्माख्ये संस्कारभेदे।

जातोक्ष पु० जात प्राप्तव्यावस्थ उक्षा टच् समा०। युवबृषे

जात्य त्रि० जातौ भव यत्। कुलीने, श्रेष्ठे, कान्ते च।

जात्यन्ध त्रि०जातौ जन्म प्रभृत्य अन्धः। 'जात्यन्धोऽवधि रस्तथेति मनुः।

जात्युत्तर न० जात्या व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानरूपम्। न्यायोक्ते असदुत्तरे।

जानकी स्त्री० जनकस्येयम् दुहितृत्वेन अण् । सीतायाम् ।

जानपद त्रि० जनपदे भवः, तत आगतो वा अण् । देशस्थे देशादागते च । जनपदानां वृत्तौ स्त्री० ङीप् ।

जानु न० जन-ञुण् । ऊरुजङ्घयोर्मध्यभागे (आंठु)-स्वार्थे कन् अत्रैवार्थे । [रामे ।

जामदग्न्य पु० जमदग्नेरपत्यम् यञ् । जमदग्निसुते परशु-

जामातृ पु० जायां माति मिनोति मिमीते वा तृच् । दुहितृपत्यौ, पत्न्यौ, स्वामिनि च ।

जामि स्त्री० जन-मिण् नि० वृद्धिः । भगिन्यां दुहितरि, स्नुषायां, कुलस्त्रियां, सन्निहितस्त्रियाम्, 'जामयो यानि गेहानी'ति मनुः

जाम्बवत् पु० रामायणप्रसिद्धे भल्लूकराजे ।

जाम्बवती स्त्री० जाम्बवतोऽपत्यं स्त्री । कृष्णस्य भार्याभेदे जाम्बवत्कन्यायाम् 'जाम्ब! जाम्ब! महाबाहो! शृणु जाम्बवतीसुते'ति सूर्यशतः । नागदमन्याञ्च ।

जाम्बूनद न० जम्बूनदे भवम् अण् । स्वर्णे 'तीरमृत् तद्रसं प्राप्य सुखवायुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणमित्युक्तो सुवर्णभेदे (तद्रसं जम्बुरसम्) धुस्तूरे च

जायक न० जयति गन्धान्तरं जि-ण्वुल् । पीतवर्णे सुगन्धिकाष्ठे

जाया स्त्री० जन-यक् । 'पतिर्भार्यां संप्रविश्य गर्भोभूत्वेह जायते जायायास्तद्धि जायात्वं यदस्यां जायते पुन'रित्युक्तायां स्त्रियाम्, ज्योतिषोक्ते लग्नतः सप्तमे स्थाने च ।

जायाजीव पु० जायया जीवति जीव-क । नटे ।

जायानुजीविन् पु० जायामनुजीवति अनु+जीव-णिनि । नटे, वेश्यापतौ, बके, दुःस्थे च ।

जायु पु० जयति रोगान् जि उण् । औषधे ।

जार पु० जीर्यतेऽनेन जॄ करणे घञ् । उपपतौ ।

जारज त्रि० जारात् जायते जन-ड । अनियुक्तायामुपपतिजाते कुण्डे, गोलके च पुत्रे ।

जारणी स्त्री० जार्यतेऽनया जॄ-करणे ल्युट् । कृष्णजीरके

जाल पुं० न० जल संवरणे घञ्, जल-घातने, णिच्-अच्, जटेर्नियते वत्वम् न । छद्मवहने गवाक्षच्छिद्रे 'मकरजालैर्विनिःसृतत्व'मिति भट्टिः । मत्स्यधारणार्थे सूत्रादिनिर्मिते सन्नाहरज्जौ, आनाये, अस्फुटकलिकायां, पुष्पमुकुले, कूटपटलादिधारणार्थे वागुरायां च । समूहे इन्द्रजाले च न० । स्वार्थे कन् । गवाक्षच्छिद्रे पु० । मौचकफले न० कलिकाविशेषे, जारके च न० ।

जालकारक पु० क-ण्वुल् इ० । जालस्य मक्षिकादिघातनाय मायक एकी-मर्कटे (माकड्सा) मायाजालविस्तृत कर्कटे त्रि० ।

जालन्धर पु० त्रिगर्तदेशस्थे देशे तद्देशस्थे जने ब०व० ।

जालपाद् पु० जालमिव पादावस्य पाद्भावः । हंसे (मराल) पक्षिभेदे च । [भेदे ।

जालवर्वुरक पु० जालाकारो वर्वुरकः । (कांटाबाबला) ईश

जालिक पु० जालेन चरति जाल+ठक् । वागुरिके जालजीविनि, कैवर्त्ते, मर्कटके च । जालोपजीविनि त्रि० ।

जालिनी स्त्री० जाल+अस्त्यर्थे इनि । चित्रशालायां, कोषातक्याम्, (फिंगा) तस्याः फलकोषे हि जालवत्त्वम् ।

जाली स्त्री० जालं विद्यतेऽस्याः अच् गौरा० ङीप् । (फिंगा) लताभेदे । [रामधन्याञ्च ।

जाल्म त्रि० जालयति अपवारयति म । पामरे, मूर्खे, क्रूरे,

जाबाल पु० जबालाया अपत्यम् अण् । मुनिभेदे ।

जाह्नवी स्त्री० 'जह्नुहारा पुरादाता जह्नुर्जङ्घीय कोपनः । तस्य कन्यास्वरूपा च जाह्नवी तेन कीर्त्तिते'त्युक्तनिर्वचनाया गङ्गायाम् ।

जि जये भ्वा० पर० सक० अनिट् । जयति अजैषीत् ।

जिगीषा स्त्री० जि-सन् अ । जयेच्छायां, प्रकर्षे, उद्यमे च ।

जिज्ञासु त्रि० ज्ञातुमिच्छुः ज्ञा-सन् उ । ज्ञातुमिच्छौ, मुमुक्षौ च

जित न० जि-भावे क्त । जये । कर्मणि क्त । अभिभूते पराजिते जयलब्धे, वशीकृते, आयत्तीकृते च ।

जितकाशिन् त्रि० जितेन जयेन काशते प्रकाशते णिनि । जिताहवे, जयिनि च । [जितेन्द्रिये ।

जितात्मन् त्रि० जित वशीकृत आत्मा इन्द्रियं मनो वा येन ।

जितेन्द्रिय त्रि० जितानि वशीकृतानीन्द्रियाणि येन । 'श्रुत्वा दृष्ट्वा तथा स्पृष्ट्वा भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रिय' इत्युक्ते हर्षविषादशून्ये शान्ते जने । कामदहिकर्षे पु० ।

जित्म पु० जि-क्यप् । इदञ्च लक्ष्मविपर्यासार्थं न लकारे (मर) । अस्य स्त्रीत्वोक्ति प्रामादिकी ।

जित्वर त्रि०-क्वरप् । जयशीले । स्त्रियां ङीप् ।

जिन पु० जयति संसारं जि-नक् । बुद्धे, विष्णौ च । जित्वरे त्रि० ।

जिम अदने भ्वा० पर० सक० सेट् । जेमति अजेमीत् ।

जिरि हिंसायां स्वा०पर०सक०सेट् । जिरिणोति अजिरायीत्

जिष सेचने भ्वा० पर० सक० सेट् इदित् । जिन्वति अजिन्वीत्

जिष सेके भ्वा० पर० सक० सेट् । जेषति अजेषीत् ।

जिष्णु पु० जि-ग्स्नु । अर्जुने, इन्द्रे, विष्णौ, सूर्ये, वसुषु च । जित्वरे त्रि० ।

जिह्म त्रि० हा-मन् द्वित्वादि नि० । कुटिले, मन्दे, शठे च

**जिह्मग** पु॰ जिह्मं गच्छति गम-ड। सर्पे,मन्दगच्छे च। मन्दगे, कुटिले च त्रि॰।

**जिह्वा** स्त्री॰ लेढि अनया लिह व नि॰। *रसग्रानेन्द्रिये रसनायाम्। [विसर्गरेखाचिह्ने विसर्गभेदे

**जिह्वामूलीय** पु॰ जिह्वामूले भवः छ। कखाभ्यां प्राक् अर्द्ध-

**जिह्वारद** पु॰ जिह्वैव रदो दन्तश्चर्वणसाधनं यस्य। दन्तहीने जिह्वयैव चर्वणकारे खगे। [वृद्ध, जरति,चर्मपुटे च।

**जीन** त्रि॰ ज्या-वयोहानौ कर्त्तरि क्त संप्रसारणं दीर्घश्च।

**जीमूत** पु॰ ज्या-क्विप् जीः तया जरया मूतो बद्धः मू-बन्धने क्त, जयति नभः, जीयते वायुना वा जि-क्त मूट् दीर्घश्च वा। मेघे, मुस्तके, पर्वते, भृतिकरे, देवताडवृक्षे, इन्द्रे घोषातकीलतायाञ्च। [(जीरा) ख्याते पदार्थे

**जीर** पु॰ ज्या-रक्। जीरके,खड्गे,अणौ च। संज्ञायां कन्।

**जीर्ण** पु॰ जॄ-क्त। जीरके। शैलजे न॰। जरायुक्ते त्रि॰। स्थूलजीरके स्त्री॰।

**जीर्णपर्ण** पु॰ जीर्णानि पर्णान्यस्य। कदम्बे। पुरातनपत्र-युक्ते त्रि॰। कर्म॰। पुरातनपत्रे न॰।

**जीर्णि** स्त्री॰ जॄ क्तिन्। जीर्णतायाम्।

**जीर्णोद्धार** पु॰जीर्णस्य भग्नमन्दिरादेरुद्धारो यत्र। संस्कारभेदे

**जीव** प्राणधारणे भ्वा॰ पर॰अक॰सेट्। जीवति अजीवीत्। णिच् अजिजीवत् त अजीजिवत् त।

**जीव** पु॰ जीव-क। देहाभिमानिनि आत्मनि मनुष्यादिकीट-पर्यन्ते चेतने 'प्राणान् चेतनरूपेण धारयन् जीव उच्यते' इत्युक्ते प्राणिनि। करणे घञ्। जीवनोपाये। जीव-णिच् अच्। वृक्षभेदे। भावे घञ्। प्राणधारणे।

**जीवक** पु॰ जीवयति जीव-णिच् ण्वुल्। औषधभेदे। पीत-साले वृक्षे क्षपणे च। सेवके, वृद्ध्याजीविनि, जीव्यात् आशिषि वुन्। आशास्यमानजीवने जने त्रि॰।

**जीवघन** पु॰ जीवस्य घनीमूर्त्तिः सैन्धवशिलाशकलवत् यस्य। हिरण्यगर्भे। [चकोरपक्षिणि

**जीवजीव** पु॰ जीवान् जीवयति दर्शनेन तृप्तिकरत्वात् क।

**जीवञ्जीव** पु॰ जीवान् जीवयति खश्। चकोरे, वृक्षभेदे च

**जीवन** न॰जीव्यतेऽनेन जीव-ल्युट्। वृत्तौ, जले, मज्जनि, हैयङ्गवीने च। भावे ल्युट्। प्राणधारणे। जीवयति णिच्-ल्यु। पुत्रे जीवकौषधे, वायौ, क्षुद्रफलकवृक्षे च पु॰

**जीवनयोनि** स्त्री॰ ६त॰। न्यायोक्ते देहे प्राणसञ्चारकारणे अतीन्द्रिये यत्नभेदे।

**जीवनहेतु** पु॰ ६त॰। 'विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः। धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः' इत्युक्तेषु विद्यादिषु जीवनोपायेषु दशसु।

**जीवनी** स्त्री॰ जीव्यतेऽनया जीव ल्युट् ङीप्। जीवन्त्याम्, काकोल्यां, स्वर्णहरितकीभेदे, शम्या,गुडूच्याम् बन्दायाञ्च

**जीवन्तिका** स्त्री॰ जीव-झ ङीप् स्वार्थे कन् ह्रस्वे अत इत्त्वम्। गुडूच्याम्, जीवाख्यशाके, वन्दायां, हरितक्याञ्च

**जीवन्ती** स्त्री॰ जीव-झ ङीप्। जीवन्त्यां, मधुस्रवाख्यौषधौ, शम्यां, गुडूच्यां, वन्दायां, हरितक्याञ्च।

**जीवन्मुक्त** त्रि॰ जीवन्नेव मुक्तः त्यक्तसंसारः। कृतात्मसाक्षात्-कारे प्रारब्धकर्मक्षयपर्य्यन्तं सुषुप्तिवत् व्यवहर्त्तरि आत्मज्ञे जीवे 'सुषुप्तवद् जाग्रति यो न पश्यति द्वयञ्च पश्यन्नपि चाद्वयत्वतः। तथाच कुर्व्वन्नपि निष्क्रियश्च यः स आत्म-विन्नान्य इतीह निश्चय' इत्युक्ते ब्रह्मात्मज्ञानयुक्ते।

**जीवन्मुक्ति** स्त्री॰ जीवतएव मुक्तिः कर्तृत्वभोक्तृत्वादिबन्धात्। जीवतो बन्धनिवृत्तौ।

**जीवपुत्रक** पु॰ जीवयतीति क जीवं पुत्र इव हर्षहेतुत्वात् स्वार्थे कन्। (जीयापुता) वृक्षभेदे।

**जीवपुष्पा** स्त्री॰ जीवं पुष्पं यस्याः। बृहज्जीवन्त्याम्।

**जीवप्रिया** स्त्री॰ ६त॰। हरितक्याम्। [वृद्धिनामौषधे च

**जीवभद्रा** स्त्री॰ जीवानां भद्रं यस्याः ५ब॰। जीवन्तीलतायां

**जीववल्ली** स्त्री॰ जीवयतीति जीवा कर्म॰। क्षीरकाकोल्याम्

**जीवस्थान** न॰ ६त॰। मर्म्मणि।

**जीवा** स्त्री॰ जीव-अच् जीवयतेरच् वा टाप्। धनुषो गुणे, जीवन्तिकायामौषधौ, वचायां, शिञ्जिते, भूमौ, जीवनोपाये च। [मञ्जीवमौषधे च

**जीवातु** पु॰न॰। जीव आतु। अन्ने, जीविते,जीवनौषधे, मृत-

**जीवात्मन्** पु॰ कर्म॰। देहाभिमानिनि जीवे।

**जीवाधार** पु॰६त॰। हृदये, देहे च। [आजीवने

**जीविका** स्त्री॰ जीव-अ कन् अत इत्त्वम्। जीवनोपाये

**जीवितकाल** पु॰ जीव-भावे क्त तस्य कालः। जीवनावधि-काले आयुषि।

**जीवितेश** पु॰ ६त॰। यमे, प्राणस्वामिनि, 'जीवितेशवसतिं जगाम सेति रघु'। जीवातौ, चन्द्रे सूर्य्ये च। प्रियनाथे त्रि॰

**जीवोपाधि** पु॰६त॰। स्वप्नसुषुप्तिजाग्रदवस्थासु।

**जीव्या** स्त्री॰ जीवाय हिता यत्। हरितक्याम्, जीवन्त्यां, गोक्षुरदुग्धायाञ्च।

**जु** रंहसि भ्वा॰पर॰अक॰अनिट्। जवति। अजौषीत्। जन-

**जु** गतौ सौ॰आत्म॰सक॰अनिट्। जवते। अजोष्ट।

**तथागत** पु० यथा पुनरावृत्तिर्न भवति तथा गतो ज्ञातः। बुद्धमुनौ

**तथाच** अव्य० तथेति चिनोति चि-ड। पूर्वोक्तार्थदृढीकरणे

**तथाहि** अव्य० तथा च हि च द्व०। निदर्शने प्रसिद्धमेवेत्यर्थे

**तथ्य** न०। तथा तत्र साधु यत्। सत्ये। तद्वति त्रि०।

**तद्** त्रि० तन-अदि डिच्च। पूर्वोक्ते बुद्धिस्थे, परामर्शयोग्ये विप्रकृष्टविषये च। ब्रह्मणि न०। 'ओं तत्सदिति निर्द्देशो ब्रह्मणः' इति गीता।

**तदा** अव्य० तस्मिन् काले दाच्। तस्मिन् काले इत्यर्थे।

**तदात्मन्** त्रि० स आत्मा यस्य। तत्स्वरूपे।

**तदात्व** न० तदेत्यस्य भाव तदा+त्व। तत्काले।

**तदानीम्** अ० तस्मिन् काले-तद्+दानीम्। तदेत्यर्थे।

**तद्गत** त्रि० तस्मिन् गत आसक्त। तत्परे एकान्तचित्ततया तत्रासक्त

**तद्गुण** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे।

**तद्गुणसंविज्ञान** पु० तत्र बहुव्रीहौ गुणस्य गुणीभूतस्य (विशेषणस्य) संविज्ञानं विशेष्यपारतन्त्र्येण बोधनं यत्र। व्याकरणोक्ते बहुव्रीहिसमासभेदे भवति च लम्बकर्णमानयेत्यादौ गुणीभूतस्य कर्णस्यानयनम्।

**तद्धन** त्रि० तदेव धनं यस्य। कृपणे स हि सर्व्वमेव धनमप्ययोग्यतयावधार्य्य आत्मनि तद्धनत्वमेवाभिमन्यते।

**तद्धर्म्मन्** त्रि उद्देश्यान्तरं विनाऽपि स एव धर्म्मो यस्य अनिच् समा०। स्वधर्म्मोऽयमिति बुद्ध्या धर्म्माय प्रवर्त्तमाने जने।

**तद्धित** पु० तेभ्यो विग्रहस्थतत्तत्प्रकृतीनां स्वविशिष्टतया प्रयोगेभ्य हित। व्याकरणोक्ते प्रत्ययभेदे। [न्द्रीत्।

**तद्रि** अवसादे मोहे च चौ०पर०अक०सेट् इदित्। तन्द्रति अत-

**तद्वत्** अव्य० तेन तुल्य या तुल्या सा चेत् क्रियेत्यर्थे वति। तत्सदृशक्रियावति। तस्य तत्र वा तुल्यमित्यर्थे वति। तत्तुल्येऽर्थे यथा तद्वत् शिवस्य विभुता, तद्वत् शिवे भक्तिरित्यादि। तद् अस्त्यर्थे मतुप् मस्य व। तद्विशिष्टे त्रि०।

**तन** विस्तृतौ तना०उभ०सक०सेट्। तनोति तनुते अतानीत्-अतनीत् अतत-अतनिष्ट ततान तेने। तनित्वा-तत्वा।

**तन** उपकारे श्रद्धायां शब्दे आघाते च वा० चुरा०उभ० पक्षे भ्वा०सक०सेट्। तानयति ते तनति, अतीतनत् न अतानीत अतनीत। उपसर्गात् दैर्घ्ये। आतानयति दीर्घो भवति।

**तनय** पु० तनोति कुलम् तन-कयन्। पुत्रे। दुहितरि, अर्क-कुल्यायां लतायां, घृतकुमार्य्याञ्च स्त्री० टाप्।

**तनिमन्** पु० तनोर्भाव इमनिच्। तनुत्वे, कार्श्ये च।

**तनु** स्त्री० तन उ। देहे, मूर्त्तौ वा ऊङ्, तनूश्च। अल्पे, विरले, कृशे च त्रि०। स्त्रियां वा ङीप तन्वी तनुः।

**तनुच्छाय** पु० तन्वी छाया यस्य। बर्बुरवृक्षे। इत०। देहच्छायायां स्त्री० न०। [स्त्री० देहजातमात्रे त्रि०।

**तनु(नू)ज** पु० तनो तन्वा वा जायते जन-ड। पुत्रे। दुहितरि

**तनुत्र** न० तनु देहं त्रायते त्रै-क। कवचे। ल्युट्। तनुत्राणमप्यत्र

**तनुत्वचा** स्त्री० तन्वी त्वचा वल्कलं यस्याः। क्षुद्राग्निमन्थे।

**तनुपत्र** पु० तनूनि कृशानि पत्राणि यस्य। इङ्गुदीवृक्षे।

**तनुभस्त्रा** स्त्री० तनोर्देहस्य भस्त्रेव। नासिकायाम्। कर्म्म०। क्षुद्रभस्त्रायाम्।

**तनुभृत्** पु० तनु देहं बिभर्ति आत्मत्वेनाभिमन्यते भृ क्विप्। जीवे 'या दुस्त्यजा तनुभृतामिति भागवतम्।

**तनुमध्या** स्त्री० तनु कृशं मध्यं यस्याः। कृशमध्यायां स्त्रियां, षडक्षरपादके छन्दोभेदे च। [च

**तनुवार** न० तनु देहं वृणोति वृ अण् उप०। कवचे सन्नाहे

**तनुबीज** पु० तनूनि कृशानि बीजानि यस्य। बीजबदरे।

**तनुस** न० तन-उसि। देहे।

**तनूनपात्(द्)** पु० तनूं न पातयति पत णिच् क्विप्। अग्नौ, जठरस्थलेऽपि भुक्तान्नपाचनादस्य देहापातकत्वम्। तनूं न पाति रक्षति पा शतृ। वह्नौ। अत्र पक्षे तनूनपान्नौ इत्यादिभेद तन्वा ऊर्नं कृशं पाति तनूनपं घृतादि तदत्ति अद क्विप्। वह्नौ अस्मिन् पक्षे तनूनपादौ इत्यादिभेद।

**तनूरुह** न० तनौ रोहति रुह क। लोमनि पक्षिणां पक्षे च तनुभृत्फुल्लतनूरुहीकृतामिति नैषधम्। [तङ्क्त

**तन्च** गतौ भ्वा० पर० सक०। तञ्चति अतञ्चीत्। तञ्चित्वा

**तन्च** सङ्कोचने रुधा०पर० सक०वेट्। पाणिनीयमते अनुनासिकमध्यादयं वेदेव वोपदेवमते उदित्करण प्रामादिकम्। तनक्ति अतञ्चीत् अताङ्क्षीत्।

**तन्ज** सङ्कोचने रुधा० पर० सक०। पाणिनीयमते (तनञ्चू) इत्यत्र तन्ज इति पाठान्तरम् अनुनासिकाद्यत्वात् अस्य ऊदित्त्वात् वेट्त्व। तनक्ति अतञ्जीत् अताङ्क्षीत्।

**तन्तु** पु० तन-तुन्। सूत्रे अपत्ये सन्ततौ, सूत्रे च।

**तन्तुकीट** पु० तन्तो कीट। (गुटिकीका) कीटभेदे।

**तन्तुनाभ** पु० तन्तुर्नाभावस्य अच् समा०। (माकडशा)लूतायाम

**तन्तुनिर्य्यास** पु० तन्तुरिव निर्य्यासो यस्य। तालवृक्षे।

**तन्तुपर्व्वन्** न० तन्तो यज्ञोपवीतस्य दानरूपं पर्व्व। चान्द्रश्रावणपौर्णमास्याम् तद्दिने हि सामगाय यज्ञोपवीतदानो त्सव प्रकृतो विहित।

**तन्तुभ** पु० तन्तुना सन्तत्या भाति भा-क। सर्षपे वत्से च।

**तन्तुर(ल)** न० तन्तुर्विद्यतेऽस्य र लच् वा। मृणाले।

तन्तुवाप पु० तन्तून् वपति वप-अण् उप० । तन्तुवाये (ताति)
तन्तुवाय पु० तन्तून् वयति वे-अण् । (ताति) जातिभेदे ।
तन्तुविग्रहा स्त्री० तन्तवो विग्रहे यस्याः । कदल्याम् । तत्-त्वचि हि बहुसूत्राणि प्रादुर्भवन्ति । [गृहे
तन्तुशाला स्त्री० तन्तूना वयनाय शाला । (तातघर) तन्तुवयन
तन्तुसन्तत त्रि० तन्तुभि सन्तत व्याप्तम् । सूतवस्त्रे ।
तन्तुसार तन्तव इव सारो मज्जास्य । गुवाकवृक्षे ।
तन्त्र न० तन-ष्ट्रन् । सिद्धान्ते, औषधौ, कुटुम्बकार्ये, प्रधाने, तन्तुवाये, परिच्छदे, हेतौ, उभयार्थे प्रयोजके, इति कर्त्तव्यतायाम् राष्ट्रे, परच्छन्दे करणे, अर्थसाधके, तन्तौ, स्वराष्ट्रचिन्तायाम् परिजने, तन्तुवायशलाकायाम् प्रबन्धे, शपथे, धने, गृहे, वयनसाधने, कुले, वेदशाखाभेदे, वेदादिशास्त्रे, स्वनामख्याते शिवाद्युक्ते शास्त्रे च ।
तन्त्रक न० तन्त्रादचिरादपहृतम् कन् । नवीने वस्त्रे ।
तन्त्रता स्त्री० तन्त्रस्य भाव तल् । अनेकोद्देशेन सकृत्प्रवृत्तौ यथा तर्पणपूजनादावनेककर्म्मोद्देशेन सकृत्तत्त्व मे कृते सर्व कर्म्माङ्गस्नानसिद्धि ।
तन्त्रवाप(य) पु० तन्त्राणि तन्तून् वप(य)ति वप-वे-वा अण् उप० । तन्तुवाये (ताति) । [गुडूच्याम्
तन्त्रिका स्त्री० तन्त्र्यते तन्त्र ई तत स्वार्थे कन् अतो ह्रस्व ।
तन्त्री स्त्री० तन्ति ई । गुडूच्याम्, वीणाभेदे, देहशिरायाम्, रज्ज्वाम् नदीभेदे, युवतीभेदे च ।
तन्द्रा स्त्री० चौ० तद्रि-अ । आलस्ये निद्रायाम् प्रमीलायाम्
तन्द्रालु त्रि० चौ०तद्रि आलुच् । निद्राशीले ।
तन्द्रि(न्द्री) स्त्री०चौ०तद्रि-इन् वा ङीप । आलस्ये निद्रायाम्
तन्मय त्रि० तदेव मयट् । तद्भावापन्ने अभेदे ।
तन्मात्र त्रि० तदेव मयट् । तदात्मके । सा मात्रा यस्मिन् । सांख्योक्तेषु 'तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता । तन्मात्राण्यविशेषाणि अविशेषास्ततोहि ते । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिण, इत्युक्तेषु पञ्चसु शब्दादि-कारणीभूतेषु भूतेषु ।
तन्वी स्त्री० तनु+ङीप् । सूक्ष्मवर्ण्याम् । तनुलगुणयुक्तायाम् स्त्र्याङ्गस्त्रियाञ्च । [अतपिष्ट ।
तप दाहे भ्वा०उभ० सक० सेट् । तपति-ते अतापीत् अतपीत्
तप उपतापे सक० ऐश्वर्ये अ० दि०आ०अनिट । तप्यते अतप्त ।
तप दाहे चु० उ०सक०सेट् । तापयति-ते अतीतपत्-त ।
तप उपतापे सक० ऐश्वर्ये अक० भ्वा० पर० अनिट । तपति अताप्सीत् ।

तप पु० तप अच् । ग्रीष्मे उष्णस्पर्शात्मके ऋतौ ।
तपती स्त्री०तप-शतृ ङीप् । छायानाम्न्याम् सूर्यपत्न्याम्, नदीभेदे सूर्यसुतायाञ्च यद्योगात् कुरवस्तापत्या उच्यन्ते ।
तपन पु० तप-ल्यु । सूर्ये तापे भल्लातकवृक्षे, नरकभेदे ग्रीष्मे ऋतौ अर्कवृक्षे, क्षुद्राग्निमन्थवृक्षे, सूर्यकान्तमणौ च ।
तपनतनय पु० ६त० । यमे । यमुनायाम्, शमीवृक्षे च स्त्री०।
तपनी स्त्री० तप-ल्यु गौरा० ङीप् । गोदावरीनद्याम् ।
तपनीय न० तप-अनीयर् । स्वर्णे । स्वार्थे कन् । अत्रैवार्थे ।
तपस् पु० तप-असुन् । चान्द्रे माघे मासि, शिशिरे ऋतौ, जनलोकोपरिस्थे लोकभेदे च । आलोचने च तपोऽकुरुतेति श्रुति स्वाश्रमविहितधर्मे, वैधे क्लेशजनके चान्द्रायणादौ कर्म्मणि, ज्योतिषोक्ते लग्नतोनवमस्थाने च न० ।
तपस्य पु० तपसि तपश्चरणाय साधु अनतिशीतोष्णत्वात् यत् । फाल्गुने मासि । तपसि माघे भव यत् । कुन्दवृक्षे तपश्चरणे साधुर्यत् । तपस्यभिरते त्रि० । [याञ्च
तपस्या स्त्री० तपश्चरति तपस्+क्यङ् अ । तपश्चरणे, व्रतचर्या-
तपस्विन् त्रि० तपस्+अस्त्यर्थे विनि । तापसे, चान्द्रायणादिव्रतधारिणि, अनुकम्प्ये, दीने, प्रशस्ततपोवति च । दत-करञ्जे, मत्स्यभेदे, चटके च पु० ।
तपस्विनी स्त्री० तपस्+विनि ङीप । तपोयुक्तायां स्त्रियां, जटामांस्यां, कटुरोहिण्याम् दीनायाम अनुकम्प्यायाम्,स्त्रियाञ्च
तपात्यय पु० तपस्य ग्रीष्मस्यात्ययोऽवसान यत्र काले । वर्षा-काले 'तपात्यये वारिभिरुक्षिते'ति कुमार ।
तपोधन पु०तपोधनमतोनेष्टत्वात् यस्य । तापसे, दमनवृक्षे च
तपोवन न० ६त० । तापससेव्ये वनभेदे तन्नामके तीर्थभेदे च
तप्तकुम्भ पु० तप्त कुम्भो यत्र । नरकभेदे ।
तप्तकृच्छ्र न० 'षट्पलन्तु पिबेदम्बुत्रिपलन्तु पय पिबेत् । पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्र विधीयते इत्युक्ते व्रतभेदे, 'अपो पतदर्कं वायुं तप्त प्रतित्र्यह पिबेत्' स तप्तकृच्छ्र इति गौतमोक्ते तु उभयमपि । [यत्र । नरकभेदे ।
तप्तपाषाणकुण्ड न० तप्ता पाषाणा यत्र तादृशं कुण्डं
तप्तवालुक न० तप्ता वालुका यत्र । नरकभेदे ।
तप्तमुद्रा स्त्री० तप्ता मुद्रा चिह्नम् । वैष्णवोचितधर्मरूपे ग्नि तापितलौहशलाकादिना कृते भगवदायुधाकारे 'तप्ता धातु-मयीं मुद्रां तापयित्वा स्वकां तनुं । चक्रादिभि पुंतं भूप । धारयेत् वैष्णवो नर इति ब्रह्माण्डोक्ते चिह्नभेदे ।
तप्तसुराकुण्ड न०तप्तायां सुराया कुण्डं यत्र । नरकभेदे ।
तप्तसूर्म्मिकुण्ड न० तप्तसूर्मी कुण्ड यत्र । नरकभेदे ।

मनितशस्त्रज्ञानार्थे ऊहे, उत्प्रेक्षायाञ्च । [अततर्कीत्-त ।

**तर्क** दीप्तौ अक० वितर्के सक० चुरा०उभ० सेट् । तर्कयति ते

**तर्कविद्या** स्त्री० तत्० । गौतमोक्तानां प्रमाणप्रमेयादीनां षोडशानां पदार्थानां विद्यायां, काणादाद्युक्तषट्पदार्थादिविद्यायाञ्च ।

**तर्कारी** स्त्री० तर्कमृच्छति ऋ अण् । जयन्तीवृक्षे । — —

**तर्कु** पु० कृत उ नि० । (टेको) इति ख्याते यन्त्रभेदे ।

**तर्कुलासक** पु० तर्कुं लासयति चालयति लस-णिच् ण्वुल् । तर्कुचालके यन्त्रे (चरका) ।

**तर्ज** भर्त्सने भ्वा० पर० सक० सेट् । तर्जति अतर्जीत् ।

**तर्ज** भर्त्सने चु०आ० सक० सेट् । तर्जयते अततर्जत ।

**तर्जनी** स्त्री० तर्ज्यतेऽनया तर्ज ल्युट् । अङ्गुष्ठान्तिकस्थे अङ्गुलौ

**तर्ण** पु० तृण-अच् । वत्से । णत्व । गोवत्से, 'तृणाद-नाया तर्णकपङ्क्तिरित छन्दोम० । सद्योजाते शिशौ च ।

**तर्द** हिंसे भ्वा०पर०सक०सेट् । तर्दति अतर्दीत् ।

**तर्दू** स्त्री० तर्द तृद-वा ऊ । काष्ठनिर्म्मितायां दर्व्याम् ।

**तर्पण** न० तृप-ल्युट् । तृप्तौ । णिच् ल्युट् । प्रीणने, गृहस्थ कर्त्तव्ये पञ्चयज्ञान्तर्गते पितृयज्ञे, यज्ञकाष्ठे च ।

**तर्पिणी** स्त्री० तर्पयति प्रीणयति णिनि । पद्मचारिण्योषधौ

**तर्व** गतौ भ्वा०पर०सक०सेट् । तर्वति अतर्वीत् ।

**तर्म्मन्** न० तृ-मनिन् । यूपाग्रभागे । [साम्ना दिति भागवतम्

**तर्ष** पु० तृष-घञ् । अभिलाषे तृष्णायाञ्च 'निवृत्ततर्षैरुपगीय

**तर्हि** अव्य० तद्+र्हिल् । तस्मिन् काले इत्यर्थे ।

**तल** प्रतिष्ठायां वा चुरा०उभ०पक्षे भ्वा०पर० अक० सेट् । तालयति ते तलति । अतीतलत् त अतालीत् ।

**तल** पु०न० तल-अच् । स्वरूपे यथा भूमितलं करतलम् । अधोभागे, चपेटे, तालवृक्षे च । खड्गमुष्टौ आधारे, स्वभावे च पु० । वने न० । ज्यामातवारणे, गर्त्ते च स्त्री०न० ।

**तलप्रहार** पु० तलेन चपेटेन प्रहारः प्र+हृ घञ् । (चापड़-मारा) चपेटाघाते ।

**तलातल** न० अतलादिषु मध्ये पञ्चमे पाताले ।

**तलित** न० तल+तारका० इतच् । भृष्टमांसे । [स्थिते च त्रि०

**तलिन** न० तल इनन् । शय्यायाम्, विरले, स्तोके, तुच्छे,

**तलुन** पु० तॄ उनन् रस्य लः । वायौ । यूनि, तरुणे च त्रि० युवत्यां स्त्री० ङीप् ।

**तल्प** पु०न० तल-पक् । शय्यायाम्, अट्टालिकायां, दारेषु च ।

**तल्पकीट** पु० इत० । (छारपोका) कीटभेदे ।

**तल्लज** पु० तत् लज्जते अच् तस्य लत्वम् । प्रशस्ते उत्तरपद स्थोऽयम् प्रशंसावचनैश्चेति समासेऽपि नियतलिङ्ग एव तेन ब्राह्मणीतल्लज इत्येव ।

**तष्ट** त्रि० तक्ष क्त । तनूकृते द्विधाकृते, शुषिते च ।

**तष्टृ** पु० तक्ष तृच् । (छुतार) जातिभेदे, विश्वकर्म्मणि, सूर्य्ये च

**तस** अलङ्कारे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । तंसयति-ते तंस त अततंसत्-त अतंसीत् ।

**तस** उत्क्षेपे दिवा०पर०सक० सेट् । तस्यति अतसीत् अतासीत् । तसित्वा तस्त्वा ।

**तस्कर** पु० तत् करोति तद्+कृ अच् नि० । चौरे, प्रकाशाप्रकाशाभ्यां परद्रव्यापहारके, दमनकवृक्षे, इक्षाधारे च । चौर-पत्न्यां स्त्रियां स्त्री० ङीप् ।

**ताच्छील्य** न० तत् शीलमस्य ष्यञ् । नियततत्स्वभावे ।

**ताट(ड)ङ्क** पु० ताड्यते ताड वा डस्य ट अङ्क चिह्न यस्य शक० । कर्णभूषणभेदे ।

**ताटस्थ्य** न० तटस्थस्य भावः ष्यञ् । औदासीन्ये, नैकट्ये च ।

**ताडका** स्त्री० । राक्षसीभेदे । [(कोड़ा) (चाबुक) ।

**ताडनी** स्त्री० ताड्यतेऽनया तड आघाते ल्युट् । कशायाम्

**ताडपत्र** न० ताडयति अच् ताड पत्रमिव । कर्णभूषणभेदे ।

**ताडि(डी)** स्त्री० पु० तड-इ । (ताड़ियाल) ख्याते वृक्षभेदे ।

**ताण्डव** न० तण्डुना मुनिना प्रोक्तमनुष्ठानं यस्य अण् । 'पुन्नृत्यं ताण्डवं प्रोक्तं स्त्रीनृत्यं लास्यमुच्यते' इत्युक्ते पुंसां नृत्ये, तृणभेदे उद्धतनृत्ये च ।

**ताण्डवप्रिय** पु० ताण्डवं प्रियं यस्य । शिवे, नृत्यप्रियमात्रे त्रि०

**तात** पु० तन क्त दीर्घश्च । पितरि । अनुकम्प्ये पूज्ये च त्रि० ।

**तात्पर्य्य** न० तत्परस्य भावः ष्यञ् । वक्तुरिच्छायाम्, अभि-प्राये, तत्परतायाञ्च । [तदुद्देश्ये च ।

**तादर्थ्य** न० तस्मै इदम् तदर्थं तस्य भावः ष्यञ् । तदर्थत्वे,

**तादात्म्य** न० स आत्मा स्वरूपं यस्य तस्य भावे ष्यञ् । अभेदे, स्वरूपे च । [तादृक् । ञ्स । तादृश । एतादृशार्थे

**तादृश** त्रि० तस्येव दर्शनमस्य दृश कञ् । तथाविधेऽर्थे । क्विप् ।

**तान** पु० तन-घञ् । विस्तार्य्यन्ते प्रयोगाय मूर्च्छनाशेषसंश्रया । तानास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवाः' इत्युक्ते गानाङ्ग स्वरभेदे तानप्रदायित्वमिवोपगन्तुमिति कुमार विस्तारे च । ज्ञानविषये न० ।

**तान्त्रिक** त्रि० तन्त्रं सिद्धान्तं तन्त्रामैकशास्त्रं वाधीते वेद वा ठक् । ज्ञातसिद्धान्ते, मन्त्रवादिनि, तन्त्रशास्त्राभिज्ञे च ।

**ताप** पु० तप-घञ् । सन्तापे, कष्टे च ।

**तापस** न० तपसि साधु यत् । तमालपत्रे (तेजपात) । तप

अभ्यस्य अच् । तपस्विनि त्रि० । दमनकवृक्षे, वकवृक्षे च पु० ।
तापसतरु पु० तापसोपयुक्तस्तरुः । इङ्गुदीवृक्षे तत्तैलादिना तापसानां सर्वकर्मनिर्वाहात् ।
तापसप्रिय पु० तापसानां प्रियः छायाप्रदत्वात् । प्रियालवृक्षे
तापिञ्छ(ञ्ज) पु० तापिनं आच्छयति जयति वा छद जि-वा ड पृषो० । तमालवृक्षे । [पश्चिमवाहिनदीभेदे ।
तापी स्त्री० तापयति णिच् गौरा० ङीष् । विन्ध्याचलस्थे
तामरस न० तामरे जले सरति सृ-ड । पद्मे ताम्रे, स्वर्णे, धुस्तूरे, द्वादशाक्षरपादके छन्दोभेदे च ।
तामलकी स्त्री० ताम क्विप् ता कर्म० । भूम्यामलक्याम् ।
तामस पु० तमसि अन्धकारे अविद्यायां वा रतः अण् । सर्पे, उलूके, खले च । तमसा गुणभेदेन निर्वृत्तम् अण् । सांख्योक्ते तमोजन्ये अहङ्कारादौ त्रि० । तमसः राहोरपत्यम् अण् । राहुसुतेषु ज्योतिषोक्तेषु केतुषु । तमसा व्याप्ता अण् ङीप् । रात्रौ, जटामांस्याम्, तमोधिकायां स्त्रियाञ्च स्त्री० ।
तामिस्र पु० तमिस्रास्त्यस्मिन् अ । सांख्योक्ते अष्टादशविधे विपर्ययरूपाज्ञानभेदे, भोगेच्छाप्रतिघातजे क्रोधे तमिस्रा प्रायेऽपि राक्षसे च । अन्धकारमये नरकभेदे न० ।
ताम्बूल न० तम अच् वुगागम दीर्घश्च । (पान) ख्याते नागवल्लीदले गुवाके च ।
ताम्बूलकरङ्क पु० ६त० । (पानबाटा) ताम्बूलाधारपात्रे ।
ताम्बूलपत्र पु० ताम्बूलमिव पत्रमस्य । पिण्डालौ ।
ताम्बूलवल्ली स्त्री० तम क्विप् ताम् बुल मज्जने क ष० दीर्घ कर्म० ताम्बूलाख्या वल्ली । (पान) नागवल्ल्याम् स्वार्थे कन् अत्रैवार्थे । [विक्रयोपजीविनि जातिभेदे ।
ताम्बूलिक त्रि० ताम्बूलं पण्यमस्य ठक् । (तामूलि) ताम्बूल
ताम्बूलिन् त्रि० ताम्बूल+अस्त्यर्थे इनि । (तामूलि) जातिभेदे
ताम्र न० तम रक् दीर्घश्च । धातुभेदे (तांबा) कुष्ठरोगभेदे च तद्वर्णे पु० तद्वति त्रि० ।
ताम्रकर्णी स्त्री० ताम्रौ आरक्तौ कर्णौ यस्याः । पश्चिम दिग्गजस्त्रियाम् । [जातिभेदे ।
ताम्रकार पु० ताम्रं ताम्रमयं करोति कृ अण् । (कांसारि)
ताम्रकूट न० ताम्रस्य ताम्रवर्णस्य कूटमिव (तामाक्) इति ख्याते पदार्थे "भविता ताम्रकूटस्य धूमकुर्मि" इति तन्त्रम्
ताम्रचूड पु० ताम्रा चूडा यस्य । कुक्कुटे ।
ताम्रत्रपुज न० ताम्रञ्च त्रपु च ताभ्यां जायते जन-ड । कांस्ये तस्योभयधातुजन्यत्वात् ।
ताम्रपट्ट न० ताम्रमयः पट्टः । (पाटा) ताम्रमये लेखनपत्रे ।
ताम्रपत्र पु० ताम्रवर्णं पत्रमस्य । जीवशाके । कर्म० । ताम्रमये लेखनपत्रे न० । [महोदधे'रिति रघुः ।
ताम्रपर्णी स्त्री० नदीभेदे 'ताम्रपर्णीसमेतस्य मुक्तासारं
ताम्रपल्लव पु० ताम्राणि पल्लवानि यस्य । अशोकवृक्षे ।
ताम्रपाकिन् पु० पच्यते पाकः फलमुकुलादि ताम्रः पाकः अस्त्यस्य इनि । गर्दभाण्डवृक्षे ।
ताम्रपुष्प पु० ताम्राणि रक्तानि पुष्पाण्यस्य । भूमिचम्पके ।
ताम्रपुष्पिका स्त्री० ताम्राणि पुष्पाण्यस्याः ङीप् स्वार्थे कन् ह्रस्व । रक्तत्रिवृति (लालतेओडि) । [धातक्याम् ।
ताम्रपुष्पी स्त्री० ताम्राणि पुष्पाण्यस्याः ङीप् । अजायाम्,
ताम्रफल पु० ताम्रं फलमस्य । अङ्कोठवृक्षे । [आम्रपुष्पी ।
ताम्रमूला स्त्री० ताम्रं मूलमस्याः टाप् । दुरालभायाम्
ताम्रवल्ली स्त्री० कर्म० । मञ्जिष्ठायाम् ।
ताम्रबीज पु० ताम्रं बीजं यस्य । कुलत्थे ।
ताम्रवृक्ष पु० कर्म० । रक्तचन्दनवृक्षे कुलत्थे च ।
ताम्रवृन्ता पु० ताम्रं वृन्तमस्य । कुलत्थे, स्त्रीत्वमपि टाप् ।
ताम्रशिखिन् पु० ताम्रवर्णा शिखाऽस्त्यस्य इनि । कुक्कुटे ।
ताम्रसार पु० ताम्रवर्णः सारोऽस्य । रक्तचन्दनवृक्षे । कर्म० । तत्सारे न० । [रक्तचन्दने च
ताम्रसारक पु० ताम्रः सारोऽस्त्यस्य ठन् । रक्तखदिरे
ताम्रिक पु० ताम्रघटनं शिल्पमस्य ताम्रस्येदम् वा ठञ् । कांस्यकारे (कांसारि) जातिभेदे, ताम्रनिर्मिते ताम्रमिते पदार्थे च
ताय पालने विस्तारे च भ्वा० आत्म० सक० सेट् । तायते अतायि अतायिष्ट । णिच् अततायत्-त ।
तार पु० तॄ-णिच् अच्, मेरवे णिच् करणादौ अच् वा । वानरभेदे, शङ्करतायाम्, प्रणवे, देवीमन्त्रे, (मुक्ता) तरणे, गिरीजातध्वनौ च । नक्षत्रे नेत्रमध्यस्थकनीनिकायाञ्च स्त्री०न० । रूप्ये न० । शुद्धमुक्तायाम्, अत्युच्चे निर्मले च त्रि० महाविद्याभेदे वालिपत्न्यां, बृहस्पतिभार्यायाञ्च स्त्री० ।
तारक पु० तारयति तॄ णिच्-ण्वुल् । कर्णधारे, भेलके, दैत्यभेदे च । नक्षत्रे, नेत्रमध्यस्थकनीनिकायाम् स्त्री० टाप् क्षिपा० नेत्रम् तारका । तारणकर्त्तरि त्रि० तत्र स्त्रियां तारिका । [तारकशब्दार्थेऽपि ।
तारकजित् पु० तारकं जितवान् जि भूते क्विप् । कार्त्तिकेये
तारकित न० तारकाः जाता अस्य इतच् । नक्षत्रपूर्णे आकाशे
तारण पु० तारयत्यनेन ल्युट् । भेलके । ६० वर्षमध्ये 'यत्र भवति सामाद्य तारणे शरदन्दितैः' इत्युक्ते वत्सरभेदे च । तारयितरि त्रि० ।

तारतम्य न० तरतमयोर्भाव ष्यञ् । न्यूनाधिक्य । निर्द्धन निधनमेतयोर्द्वयोस्तारतम्यविविक्तचेतसामि'त्युद्भट ।

तारपुष्प पु० तार निर्म्मलं शुभ्रत्वात् पुष्पमस्य । कुन्दवृक्षे ।

तारमाक्षिक न० तारस्य रूप्यस्य माक्षिकम् उपधातुभेद । रजततुल्ये उपधातुभेदे ।

तारशुद्धिकर न० तारस्य रजतस्य शुद्धि धात्वन्तरयोगात् जातमलशुद्धिं करोति क्त टक । सीसके तत्सम्पर्काद्धि रजतस्य मलशुद्धिर्लोकसिद्धा । [सुग्रीवे च ।

तारापति पु० ६त० । शिवे, चन्द्रे, बृहस्पतौ, वालिवानरे,

तारापीड पु० ता रापीडमिव यस्य । चन्द्रे, कादम्बरीकथा प्रसिद्धे नृपभेदे च । [त्वात् । कर्पूरे ।

ताराभ्र पु० तारो निर्म्मल चन्द्र इव अभ्र मेघरूप शुभ्र

तारिणी स्त्री० तारयति तॄ+णिच् णिनि । शिवपत्न्यां द्वितीयायां महाविद्यायाम्, तारणकर्त्तरि स्त्रियाञ्च ।

तार्किक त्रि० तर्क वेत्त्यधीते वा ठञ् । तर्कशास्त्राध्येतरि तद्भिज्ञे च । तर्कशास्त्रञ्च गौतमकणादबृहस्पत्यादिप्रणीत शास्त्रम् ।

तार्क्ष पु० । कश्यपमुनौ । [रथे, अश्वकर्णवृक्षे, रसाञ्जने च ।

तार्क्ष्य पु० तार्क्षस्यापत्यम् यञ् । गरुडे, अरुणे, सर्पे, अश्वे, सुवर्णे,

तार्त्तीयीक त्रि० तृतीय+स्वार्थे ईकक् । तृतीये ।

ताल पु तल प्रतिष्ठायाम् णिच् अच् वा । स्वनामख्याते वृक्षे, वितस्ति-मात्रे अङ्गुष्ठमध्यमाभ्यां, परिमिते दीर्घपरिमाणभेदे, करतले, करास्फोटे, (ताल) कांस्यमयवाद्यभेदे, (करताल) खड्गमुष्टौ च । वैद्यकमते न० तालोन्मादमभिर्जानुभ्रमणात् परिकीर्त्तित' इत्युक्ते द्वादशधा हस्तेन जानुमण्डल परिभ्रमणोपलक्षिते कालरूपे मानभेदे, गीतादौ द्वित मात्रादिकालक्रियामाने च ।

तालक न० तल ण्वुल । द्वारपिधानयन्त्रे, हरिताले, आढक्याञ्च

तालध्वज पु० तालचिह्नितो ध्वजो यस्य । बलभद्रे ।

तालनवमी स्त्री० भाद्रशुक्लनवम्याम् । तद्दिने देवेभ्यो विधानेन तालदान स्मृतौ विहितम ।

तालपत्र न० तालस्य पत्रमिव । कर्णभूषणभेदे ताडङ्के ।

तालपत्रिका स्त्री० तालस्य पत्रमिव पत्रमस्या ङीप् स्वार्थे कन् ह्रस्व । तालमूलीवृक्षे ।

तालपत्री स्त्री० तालस्य पत्रमिव पत्रमस्या । मूषिकपर्ण्याम्

तालपर्णी न०स्त्री० तालस्य पर्णमिव पर्णमस्य । मुरानामगन्धद्रव्य । स्त्रीत्वे ङीप् । आढक्यां स्त्री० ङीप् ।

तालमूली स्त्री० तालस्य मूलमिव मूलमस्या । मुषल्याम् स्वार्थे कन । तालमूलिकाप्यत्र ।

तालवृन्त न० ताले करतले वृन्तं बन्धनमस्य, तालस्येव वृन्तमस्य वा । व्यजने (पाखा) स्वार्थे कन् । अत्रार्थे ।

तालाङ्क पु० तालस्तालचिह्नित अङ्क ध्वजोऽस्य । बलदेवे ।

तालिक पु० तालेन करतलेन निर्वृत्त ठक् । चपटे (चापड़) (हाततालि) । ताली+स्वार्थे कन् । तालमूल्याम् स्त्री० ।

ताली स्त्री० तालेन तत्क्रियाविशेषेण निर्वृत्ता अण् । (ताड़ी) तालजातसुरायाम् । तल स्वन्ताद् अच् गौरा० ङीष् । (ताड़ियात) वृक्षभेदे, तालमूल्याम्, (भूम्यामला) वृक्षभेदे, आढक्याम्, (अहर) तालीशपत्राख्ये वृक्षे, तालकोद्घाटन यन्त्रे (काटि) कुञ्चिकायाञ्च ।

तालीश न० तालीव रोगान् श्यति शो-ड । स्वनामख्याते वृक्षे

तालीशपत्र न० तालीश तालीवत् रोगनाशक पत्र यस्य । स्वनामख्याते वृक्षे, भूम्यामलक्याञ्च ।

तालु न० तरन्त्यनेन वर्णा तॄ ञुण रस्य ल । जिह्वेन्द्रियाधिष्ठाने (तेलो) स्थानभेदे । स्वार्थे कन् तालुकमप्यत्र ।

तालुजिह्व पु० तालु एव जिह्वा यस्य । कुम्भीरे तस्य जिह्वा शून्यत्वेऽपि तालुनैव रसास्वादात् ।

तावत् अव्य० तत्परिमाणमस्य नि० । साकल्ये, अवधौ, माने, अवधारणे, प्रशंसायां पक्षान्तरे, वाक्यभूषणे, तदेत्यर्थे च । 'भर्त्तापि तावत् क्रथकैशिकाना'मिति रघु । तत्परिमाणवति त्रि० स्त्रियां ङीप् तावती । [तैकत् त

तिक गतौ भ्वा० आत्म०सक०सेट् । तेकते अतेकिष्ट णिच् अत

तिक आस्कन्दे वधे च स्वा०पर०सक०सेट् । तिक्नोति अतेकीत्

तिक्त पु० तिज क्त । वरुणद्रुमे, कुटजे, रसभेदे (तेत) च । तद्वति त्रि० । पर्पटौषधौ न० । कटुकायां पाठायां, छिक्कन्याञ्च स्त्री० टाप् ।

तिक्तक पु० तिक्त+संज्ञायां कन् । भूनिम्बे, (चिराता) चिरतिक्ते कृष्णखदिरे, निम्बे, इङ्गुदीवृक्षे, तिक्तार्थे, पटोले च । कटुतुम्ब्यां स्त्री० टाप् । [न्तायाम् ।

तिक्तगन्धिका पु० तिक्तो गन्धो लेशोऽपि यस्या । वराहक्रा-

तिक्तगुञ्जा स्त्री० गुञ्जेव तिक्ता राजदन्ता० । करञ्जे ।

तिक्ततण्डुला स्त्री० तिक्तस्तण्डुलोऽन्त र्यस्य यस्या । पिप्पल्याम्

तिक्ततुम्बी स्त्री० कर्म०। कटुतुम्ब्याम् (तितलाउ) [अपामार्गाञ्च

तिक्तदुग्धा स्त्री० तिक्त दुग्ध निर्यासो यस्या । क्षीरिण्याम,

तिक्तफल पु० तिक्त फलमस्य । (काकरोल) कर्कोटके ।

तिक्तपर्व्वन् स्त्री० तिक्त पर्व्व ग्रन्थिर्यस्या । ग्रन्थिदूर्व्वायाम्

तिक्तपुष्पा स्त्री० तिक्तानि पुष्पाण्यस्या । (आकनादी) पाठायाम्

तिक्तफल पु० तिक्तानि फलानि यस्य । कतकवृक्षे (निर्म्मालि)

तिक्तभद्रक पु० भद्रं करोति णिच् ण्वुल् तिक्तोऽपि भद्रक कर्म्म० । पटोले ।
तिक्तरोहिणी स्त्री० तिक्ता सती रोहति रुह णिनि कर्म्म० । कटुकायाम् (कट्को) स्वार्थे कन् अनार्थे ।
तिक्तवल्ली स्त्री० कर्म्म० । मूर्व्वालतायाम् ।
तिक्तवीजा स्त्री० तिक्तानि वीजानि यस्याः । कटुतुम्ब्याम् ।
तिक्तशाक पु० तिक्त शाकोऽस्य । वरणद्रुमे,खदिरवृक्षे च
तिक्तसार पु० तिक्तः सारो निर्यासोऽस्य । खदिरे ।
तिक्तिका स्त्री० तिक्ता स्वार्थे कन् ह्रस्वे अतइत्वम् । कटुतुम्ब्याम् । [अतेगीत ।
तिग आस्कन्दे हिंसायाञ्च स्वा० पर०सक० सेट् । तिग्नोति
तिग्म न० तिज मक् जस्य गः । तीक्ष्णे, तद्वति त्रि० ।
तिग्मरश्मि पु० तिग्मारश्मयोऽस्य । सूर्य्ये । तिग्मं'शादयोऽप्यत्र
तिघ घातने स्वा०पर०सक० सेट । तिघ्नोति अतेघीत् ।
तिज तीक्ष्णीकरणे,चु उभ०सक०सेट् । तेजयति ते अतीतिजत् त
तिज क्षमायां स्वार्थे सन् निशाने न सन् भ्वा०आत्म०सक०सेट् । तितिक्षते तेजते । अतितिक्षिष्ट अतेजिष्ट । [चालन्य स
तितउ पु० तन डउ सन्वच्च डउ इति निर्द्देशात् न सन्धि ।
तितिक्षा स्त्री० तिज क्षान्तौ स्वार्थे सन् अ टाप् । क्षमायां परापमानादिसहने, शीतोष्णादिद्वन्द्वसहने च ।
तितिक्षु त्रि० तिज सन् उ । प्रायवियोगफलकभिक्षुगीत दि सहनशीले । [(तित्तिर) पक्षिभेदे ।
तित्ति(त्ती)रि पु० तित्ति इत्यव्यक्तशब्दं राति रा क, डि वा ।
तिथि(थी) पु० स्त्री० अत इथिन् ट वा ङीप् । प्रञ्चदशसु चन्द्रकलाक्रियारूपासु प्रतिपदादिषु, पञ्चदशसङ्ख्यायाञ्च ।
तिथिक्षय पु० तिथीनां तिथ्युपलक्षित चन्द्रकलानां क्षयः क्षयो यस्मिन् । दर्शे अमावास्याया सू ।इत० । तिथीनां नाशे
तिथिप्रणी पु० तिथीन् प्रणयति स्वगत्या निष्पादयति प्र+णी क्विप् । चन्द्रे 'कायन्नसौं तिथिप्रण्य' इति भट्टिः ।
तिन्तिडीक न० तिम आर्द्रीभावे अलीकादयश्चेति नि० । वृक्ष (तेतुल)वृक्षभेदे पु० । कक्तोले । तिन्तिडापयार्थे स्त्री० । इष्ट वा ह्रस्वे तिन्तिडीकादयोऽप्यत्र ।
तिन्दु पु० तिज दु दृगयादि० नि० । (तेंडु) ख्याते वृक्षे स्वार्थे कन् (गाव) इति ख्याते वृक्षे पु०स्त्री०स्त्रीत्वे ङीप् ।
तिप क्षरणे भ्वा०आत्म०अक० सेट् । तपते अतेपिष्ट अतिप्त ।
तिम आर्द्रीभावे भ्वा०पर०अक०सेट । तेमति अतेमीत् ।
तिम आर्द्रीकरणे दिवा०पर०सक०सेट् । तिम्यति अतेमीत ।
तिमि पु० तिम इन् । मत्स्ये समुद्रे, तद्रूपे महाकारे मत्स्यभेदे च । 'अस्ति मत्स्यस्तिमिर्नाम शतयोजन तिमिङ्गिल । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवेति रामायणम् ।
तिमिङ्गिल पु० तिमिं मत्स्यं गिरति गृ निगरणे खश् मुम् च । मत्स्यभेदे, तं गिरति तिमिङ्गिलगिल महामत्स्ये
तिमित त्रि० तिम कर्त्तरि क्त । निश्चले क्लिन्ने च (भिजे)
तिमिर न० । तिम किरच् । अन्धकारे, नेत्ररोगभेदे च ।
तिमिष पु० तिम इषक् । धान्यकर्क्कट्याम्, नाटाद्रे च ।
तिरश्चीन त्रि० तिर्य्यञ्च्+स्वार्थे ख । तिर्य्यग्भूते । 'गत तिरश्चीनमनूरुसारथेरिति माघः । [तिर्य्यगर्थे च
तिरस् अव्य० तृ असुन् । अन्तर्द्धाने, तिरस्कारे अवज्ञायाम्,
तिरस्करिणी स्त्री० तिरस्+कृ णिनि नि० । जवनिकायां (परदा) 'तिरस्करिण्यो जलदा भवन्तीति कुमार ।
तिरस्कार पु० तिरस्+कृ घञ् । अनादरे, अधिक्षेपे च ।
तिरीट पु० तृ इटक् । लोध्रवृक्षे ।
तिरोधान न० तिरस्+धा ल्युट् । अन्तर्द्धाने ।
तिरोहित त्रि०तिरस्+धा क्त । अन्तर्हिते, आच्छादिते च ।
तिर्य्यच् अव्य० तिरस्+अञ्चु क्विप् तिर्य्यादेश । वक्रे तिरश्चि च । पशुषु, पक्षिषु, वक्रगामिनि च त्रि० ।
तिल गतौ भ्वा०पर०सक०सेट । तेलति अतेलीत् ।
तिल स्नेहे तु०पर०अक०अनिट् । तिलति अतेलीत ।
तिल स्नेहे चुरा० उभ०अक०सेट् । तेलयति ते अतीतिलत् त
तिल पु० तिल क । स्वनामख्याते वृक्षे तत्फलेऽपि पु० ।
तिलक पु० तिल क्वुन् तिल+स्वार्थे संज्ञे वा कन् वा । तिलवृक्षे, अश्वभेदे रोगभेदे मरुवके च । सौवर्चले, मादकहाट्टे न० । स्वनामख्याते भालादौ धार्य्ये चन्दनादिविशेषके पु०न० । प्रधाने त्रि० । रघुकुलतिलक इति नाटकम् ।
तिलकट न० तिलस्य रजः तिल+कटच् । तिलचूर्णे ।
तिलकल्क पु० तिलस्य कल्कः । पिण्याके (खल) ।
तिलकालक पु० तिल इव कालकः कृष्णः । देहस्थे तिलाकारे चिह्ने, रोगभेदे च ।
तिलकिट्ट न० ६त० । (काट) तैलमले, पिण्याके च (खल) ।
तिलतैल न० तिलस्य स्नेहः तिल+तैलच् । तिलस्नेहे । तिलरसोऽप्यत्र । [तिलतैल [तिलतायां धेनौ
तिलधेनु स्त्री० तिलनिर्म्मिता धेनुः । दानार्थं विधानेन तिल
तिलपर्णी स्त्री० तिलस्येव पर्णान्यस्याः ङीप् । रक्तचन्दने ।
तिलपिञ्ज पु० निष्फलस्तिलः तिल+पिञ्ज । निष्फलतिले भेद । तिलपेजोऽप्यत्र । [अजगरे सर्पभेदे ।
तिलित्स पु० तेजस तिलिं तिलं स्नेहं त्सरति छद्मना गच्छति च ।

**तिलोत्तमा** स्त्री० 'तिलं तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत् तस्या नामेत्युक्तनिर्वचने अप्सरोभेदे ।

**तिलौदन** न० तिलमिश्रित ओदनो यत्र । कृशरे ।

**तिल्य** न० तिलानां भवनं क्षेत्रम् यत् । तिलभवनयोग्ये क्षेत्रे

**तिल्ल** गतौ भ्वा०पर०सक०सेट । तिल्लति अतिल्लीत् [अत्रैव ।

**तिल्व** पु० तिल्यतेऽनेन तिल स्नेहने वन्। लोध्रे स्वार्थे कन् ।

**तिष्ठद्गु** अव्य० तिष्ठन्ति गावो यत्र नि०। दोहनकाले 'आ तिष्ठद्गु जपन् सन्ध्या'मिति भट्टिः । अव्ययीभावनिष्पन्नतयाऽव्ययत्वमेव पुंलिङ्गतोक्तिः प्रामादिकी ।

**तिष्य** पु० तुष्यन्त्यस्मिन् तुष-क्यप नि० । पुष्यनक्षत्रे त्विष दीप्तौ यक् अप्रादि० नि० । कलियुगे । तिष्ये नक्षत्रे जात अण् तस्य लुक् । पुष्यनक्षत्रजाते त्रि० ।

**तिष्यफला** स्त्री० तिष्ये कलियुगेऽपि फलं यस्याः ५ब० । 'तिष्यामलके शस्ते'त्युक्ते आमलक्याम् । [तीकते त ।

**तीक** याचने भ्वा०आत्म०द्विक०सेट । तीकते अतीकिष्ट अति

**तीक्ष्ण** न० तिज कस्न दीर्घश्च । मरणे, युद्धे, विषे, लौहे, शस्त्रे, शीघ्रे, सामुद्रलवणे, मुष्कके, यवक्षारे उष्णे (झाल) रसे च, तद्वति त्रि० । यवक्षारे, श्वेतकुशे कुन्दुरुके । ज्योतिषोक्ते आर्द्राश्लेषाज्येष्ठामूलनक्षत्रे च पु० । तीव्रे आत्मत्यागिनि, निरालस्ये मुमुक्षौ योगिनि च पु० ।

**तीक्ष्णक** पु० तीक्ष्ण+स्वार्थे कन् । गौरसर्षपे, मुष्कके च ।

**तीक्ष्णकण्टक** पु० तीक्ष्णः कण्टकोऽस्य । धुस्तूरे, बर्बुरे, इङ्गुदीवृक्षे यमे च । कन्थारीवृक्ष स्त्री० टाप् ।

**तीक्ष्णकन्द** पु० तीक्ष्णः कन्दो मूलमस्य । पलाण्डौ । [अत्रैवार्थे

**तीक्ष्णगन्ध** पु० तीक्ष्णः गन्धोऽस्य । शोभाञ्जनवृक्षे । वा कप् ।

**तीक्ष्णगन्धा** स्त्री० तीक्ष्णः गन्धोऽस्याः । वचायां, राजिकायाम् कन्थार्याम्, सूक्ष्मैलायाम् जीवन्त्याञ्च ।

**तीक्ष्णतण्डुला** स्त्री० तीक्ष्णास्तण्डुला यस्याः । पिप्पल्याम् ।

**तीक्ष्णतैल** न० तीक्ष्णस्य स्नेहः तैलम्। स्नुहीक्षीरे सर्जरसे मद्ये च

**तीक्ष्णपत्र** पु० तीक्ष्णानि पत्राण्यस्य । तुम्बुरुवृक्षे ।

**तीक्ष्णपुष्प** न० तीक्ष्णं पुष्पमस्य । लवङ्गे । केतक्यां स्त्री० टाप् ।

**तीक्ष्णफल** पु० तीक्ष्णं फलमस्य । तुम्बुरुवृक्षे ।

**तीक्ष्णमूल** पु० तीक्ष्णं मूलमस्य । शोभाञ्जने, कुलञ्जने च ।

**तीक्ष्णरस** पु० तीक्ष्णो रसोऽस्य । यवक्षारे ।

**तीक्ष्णशूक** पु० तीक्ष्णः शूकोऽस्य यस्य । यवे

**तीक्ष्णसारा** स्त्री० तीक्ष्णं कठिनं सारोऽस्याः । शिंशपायाम् (शिशु) । [अत्यम्लपर्ण्याञ्च ।

**तीक्ष्णा** स्त्री० वचायाम् कपिकच्छ्वाम् महाज्योतिष्मत्याम्

**तीक्ष्णायस** न० तीक्ष्णमयः अच् समा० । (इस्पात) लौहभेदे ।

**तीम** क्लेदने दिवा० पर०अक० सेट । तीम्यति अतीमीत् ।

**तीर** पारगतौ कर्म्मसमाप्तौ अद० चुरा० उभ० अक० सेट् । तीरयति ते अतितीरत् त ।

**तीर** न० तीर-अच् । नद्यादेः कूले, शायके च । सीसके पु०

**तीरभुक्ति** पु० (त्रिहुत) विदेहदेशे ।

**तीर्ण** त्रि० तॄ क्त । उत्तीर्णे अभिभूते आप्लुते च ।

**तीर्थ** न० तॄ थक् । शास्त्रे, यज्ञे क्षेत्रे उपाये स्त्रीरजसि नद्यादेरवतरणे, घट्टादौ, 'कृततीर्थः पयसामिवाशयः' इति भारविः । विद्यादिगुणयुक्तपात्रे, उपाध्याये मन्त्रिणि योनौ दर्शने, ब्राह्मणे, आगमे, निदाने अवतौ उपकूप जलाशये, दैहिके मानसिके भौमिके च त्रिविधे पवित्र स्थाने च । तत्र दैहिकानि तीर्थानि अङ्गुल्यग्रे दैवं तीर्थं कलाङ्गुल्योर्मूले कं यम् (प्राजापत्यम्) । मध्येऽङ्गुष्ठाङ्गुल्यो पैत्र मूलेऽङ्गुष्ठस्य ब्राह्ममित्युक्तानि मानसानि, यथा 'सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्व्वभूतदया तीर्थं सर्व्वत्रार्ज्जवमेव च । दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्य्यं परं तीर्थं तीर्थञ्च प्रियवादिता । ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परे'त्युक्तानि । भौमानि यथा 'यथा शरीरस्योद्देशाः केचित् मेध्यतमाः मताः । तथा पृथिव्या उद्देशाः केचित् पुण्यतमाः स्मृताः । प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसः । परिग्रहात् मुनीनाञ्च तीर्थानां पुण्यता स्मृतेत्युक्तानि । [मकपिलादिषु ।

**तीर्थङ्कर** पु० तीर्थं हितशासनमागमं करोति कृ टक । जैन

**तीव** स्थौल्ये भ्वा० पर० अक० सेट । तीवति अतीवीत् ।

**तीवर** पु० तृ ष्वरच् नि० । समुद्रे व्याधे, वर्णसङ्करजाति भेदे (तिओर) ।

**तीव्र** पु० तीव रक् । शिवे । लौहे, सीसके, तीक्ष्णे च न० । तद्वति तु कष्टे, अत्यन्ते नितान्ते च त्रि० । कटुरोहिण्यां राजिकायां, गण्डदूर्व्वायां महाज्योतिष्मत्यां नदीभेदे च स्त्री०

**तीव्रकण्ठ** पु० तीव्रः कण्ठो यस्मात् ५ब० । सेवनेन कण्ठपीडके शूरणे (ओल) तस्य कण्ठोद्वेजिताजनक प्रसिद्धा ।

**तीव्रगन्धा** स्त्री० तीव्रो गन्धो यस्याः । यवान्याम् ।

**तीव्रज्वाला** स्त्री० तीव्रं यथा तथा ज्वालयति उद्दीपयति सेवनेन स्वकं पित्त च । धातक्याम् । तत्सेवने गात्रे मदजनकत्वं लोकप्रसिद्धम् ।

**तीव्रवेदना** स्त्री० कर्म्म० । अत्यन्तपीडायां यातनायाम्

तु वृत्तौ अक० हिंसायां पूर्त्तौ च सक० अदा० पर० अनिट्। तौति तवीति। अतौषीत्।

तु अव्य० तुद- मित० डु। समुच्चये, अवधारणे नियोगे, प्रशंसायाम्, विनिग्रहे, उत्तमाद्धानिष्टकौ, पादपूरणे च।

तुगा(क्षी) स्त्री० तुज-तुन्ज वा घञ्। वंशरोचनायाम्।

तुङ्ग पु० तनुज घञ्। पर्वते, पुन्नागवृक्षे, नारिकेले, ज्योतिषोक्तेषु सूर्यादीनाम् अंशविशेषोपलक्षितमेषादिषु राशिषु च। उन्नतायुक्ते उच्चे प्रधाने च त्रि०। किञ्जल्के न०।

तुङ्गभद्र पु० मदोत्कटे हस्तिनि। दक्षिणदेशस्थे नदीभेदे स्त्री०।

तुङ्गिनी स्त्री० तुन्ज-पिशुन् जस्य ग। महाशतावर्य्याम्।

तुच्छ न० तुद-सम्प० क्विप् तुदा व्यथया छ्यति छो-क। तुषाले शस्यशून्ये धान्ये (तुष)। हीने अल्पे, शून्ये च त्रि०।

तुच्छद्रु पु० कर्म०। एरण्डवृक्षे तस्य निःसारत्वात् तुच्छत्वम्।

तुच्छधान्यक न० कर्म०। तुषाले (भुषी)।

तुज दीप्तौ चु० उभ० अक० सेट् इदित्। तुञ्जयति-ते अतुतुञ्जत्-त

तुज प्राणे वधे च भ्वा० पर० अक० सेट् इदित्। तुञ्जति अतुञ्जीत्

तुज हिंसे भ्वा० पर० सक० सेट्। तोजति अतोजीत्।

तुट कलहे तु० कु० पर० अक० सेट्। तुटति अतुटीत् तुतोट।

तुड भेदे तु० कु० पर० सक० सेट्। तुडति अतुडीत् तुतोड।

तुडि निष्पीडने भ्वा० आ० सक० सेट् इदित्। तुण्डते अतुण्डिष्ट

तुड द्विधाकरणे भ्वा० पर० सक० सेट्। तोडति अतोडीत् अतुतोडत् त।

तुड्ड अनादरे भ्वा० पर० सक० सेट्। तुड्डति अतुड्डीत्।

तुण कुटिलीकरणे तु० पर० सक० सेट्। तुणति अतोणीत्।

तुणि पु० तुण-इन्। तुन्नवृक्षे (तुन्)

तुण्ड न० तुडि तोडने अच्। मुखे।

तुण्ड(ण्डि)केरी स्त्री० प्रशस्तं तुण्डं(ण्डि) कन् तद् ईरयति ईर्ष्ये वा ईर-अण्। कार्पास्याम् तस्याः फलस्य विदारे हि विकीर्णसूक्ष्मांशुकार्पासोत्पत्तेः। बिम्बिकायाम् (तेलाकुचा) तत्फलेन हि शुकादीनां मुखरागात्। स्वार्थे कन् ह्रस्वः। तुण्ड(ण्डि)केरिकाप्यत्र।

तुण्ड(ण्डि)केशी स्त्री० तुण्डं(ण्डिं) मुखं कायति कै-क तुण्ड(ण्डि)क चोष्ठ तत्र ईष्टे तत्तुल्यशोभाधारणात् ईश-अच् गौरा० ङीष्। बिम्बिकायाम् (तेलाकुचा)।

तुण्डि पु० तुण्ड-इन्। मुखे, चञ्चौ च। बिम्बिकायां, नाभ्यां, नाभौ च स्त्री० वा ङीप्। स्वार्थे कन् तत्रार्थे। [(भुडिदुमे)

तुण्डिभ त्रि० तुण्डि+अस्त्यर्थे भ किच्चा० लच् वा। तुन्दिले

तुत्थ पूरणे चु० उभ० सक० सेट्। तुत्थयति ते अतुतुत्थत्-त।

तुत्थ पु० तुद-थक्। अग्नौ। तुत्थ-अच्। (तुते), अञ्जनभेदे न०। नील्याम्, सूक्ष्मैलायाञ्च स्त्री०। स्वार्थे कन् अत्रैव।

तुत्थाञ्जन न० कर्म०। अञ्जनभेदे (तुते)। तद्वर्णत्वात् मयूरकण्ठे

तुद व्यथने तुदा० उभ० सक० अनिट्। तुदति ते अतौत्सीत् अतुत्त

तुन्द न० तुद-अदने अन्दादि० नि०। उदरे कुक्षौ।

तुन्दकूपी स्त्री० ह्रस्वः कूपः कूपी तुन्दस्य कूपीव। नाभौ। स्वार्थे कन्। तुन्दकूपिकाप्यत्र।

तुन्दमृज त्रि० तुन्दमुदरं मार्ष्टि मृज-क। अलसे, मन्दे च।

तुन्दि पु० तुद-इन् नि०। गन्धर्वभेदे, उदरे च। नाभौ स्त्री० वा ङीप्। स्वार्थे कन् अत्रार्थे।

तुन्दिक त्रि० तुन्दमतिशयितमस्त्यस्य ठन्। वृहत्कुक्षौ। [कुक्षौ च

तुन्दिभ(ल) त्रि० तुन्दि-अस्त्यर्थे भ लच् वा। वृहन्नाभौ-वृहत्-

तुन्दिलफला स्त्री० तुन्दिलं वृहत्फलमस्याः। त्रपुष्याम् (शशा)

तुन्न पु० तुद क्त। (तुंद) वृक्षे। व्यथिते, छिन्ने च त्रि०। स्वार्थे कन् अत्रैवार्थे। [सौचिकि (दरजी)।

तुन्नवाय पु० तन्नं छिन्नं वयति वे-अण्। सौचिके स्वा-

तुम्प वधे सक० पर० सेट्। तुम्पति अतुम्पीत्। [अतुम्पीत्।

तुम्प वधे सक० क्लेशे अक० तु० पर० सेट्। तुपति तुम्पति

तुम्फ वधे भ्वा० पर० सक० सेट्। तुम्फति अतुम्फीत्।

तुम्फ वधे सक० क्लेशे अक० तुदा० पर० सेट्। तुफति तुम्फति अतुम्फीत्।

तुप वधे भ्वा० पर० सक० सेट्। तोपति अतोपीत्।

तुप वधे सक० क्लेशे अक० तु० कु० पर० सेट्। तुपति अतोपीत्

तुप अर्द्दने चुरा० उभ० सक० सेट्। तुम्पयति ते अतुतुम्पत् त

तुफ वधे सक० क्लेशे अक० तु० कु० पर० सेट्। तुफति अतोफीत्।

तुफ वधे भ्वा० पर० सक० सेट्। तोफति अतोफीत्।

तुब अर्द्दने वा चुरा० उभ० सक० पक्षे भ्वा० पर० सेट् इदित्। तुम्बयति ते तुम्बति अतुतुम्बत्-त अतुम्बीत्।

तुभ हिंसे भ्वा० आत्म० लुङि उभ० सक० सेट्। तोभते। अतुभत् अतोभिष्ट। [अतोभीत्

तुभ हिंसे दिवा० क्र्या० च पर० सक० सेट्। तुभ्यति तुभ्नाति

तुमुल पु० मौ० तु-मुलच्। कलिद्रुमे (बयड़ा) व्याकुले युद्धे च। सङ्कुले युद्धे न०।

तुम्ब पु० तुम्बति अर्दयति तुबि-अर्द्दने अच्। अलाबु। गौरा० ङीष् वा ङीष् तुम्बील्यप्यत्र, वृहत्फलायाम् अलाबुलतायाम्, रुचि च स्त्री०। [गौ० ङीष्। तुम्बुरीत्यप्यत्र स्त्री०।

तुम्बुरु पु० तुबि-उरच्। गन्धर्वभेदे, धन्याके च। धान्याक

तुर त्वरे जु० पर० सक० सेट्। तुतोर्त्ति अतोरीत्। [दर्शने

**तुर** न तुर क। तूर्णे शीघ्रे। वग स्त्रीत्वमपि तुरापाडिति

**तुरग** पु तुरेण वगेन गच्छति गम–ड। घोटके, चित्त च।

**तुरगस्कन्ध** पु० तुरग+समूह स्कन्धच। अश्वसमूहे। ६त०। अश्वस्कन्ध। [अश्वगन्धायाम्।

**तुरगी** स्त्री तुरगस्तुरगगन्धोऽस्त्यस्याः अच गौरा० ङीप्।

**तुरङ्ग** पु० तुरेण गच्छति गम ख मुम् वा डिच्च। घोटके चित्ते ङित्त्वाभाव तुरङ्गमोऽप्यत्र।

**तुरि(री)** स्त्री० तुर इन वा ङीप। तन्त्रवायस्य कार्पासादिनिर्मिते वयनसाधने (माकु) तन्तटचात्तुरीतुरीति नैषधम।

**तुरीय** त्रि० चतुर+पूरण तीय नि०। चतुर्थे वदान्तोक्तेशुद्धे निर्गुणे ब्रह्मणि।

**तुरीयवर्ण** पु० कर्म०। शूद्रे। [द्योऽप्यत्र।

**तुरङ्गवदन** पु० तुरङ्गस्येव वदनमस्य। किन्नरे तुरङ्गवक्त्रा

**तुरङ्गारि** पु० ६त०। करवीरे वृक्षे, महिषे च।

**तुरासाह** पु०तुरा वग सहते तुर वगवन्तम् आसाहयते अभिभवति वा क्विप् उत्पदे षत्वम्। इन्द्रे।

**तुरुष्क** पु० तुर इषिक स्वार्थे कन् इडसोरिति पत्वम्। गन्धद्रव्यभेदे (शिलारस)।

**तुर्य्य** त्रि० चतुर्णां पूरण यत नि०। चतुर्थे। ●

**तुर्व्व** हिंस भ्वा०पर सक०सेट। तूर्व्वति अतूर्व्वीत। तूर्त्त।

**तुर्वसु** पु० ययातिनृपतिपुत्रभेदे।

**तुल** उन्माने सा चुरा उभ०पक्षे भ्व पर सक०सेट। तोलयत ते तोलति अतूतुलत त। तुलयति तु तुलायद्त णिच

**तुलसी** स्त्री तुलाम्स्यति षम अथ् गक। "यस्या दवि तुला नास्ति विश्वषु पात्रिखेषु च। तुलसी तेन सा ख्यात" तुलसीस्वनामख्याते वृक्षे।

**तुला** स्त्री० तुल भिदा०अङ। सादृश्ये माने, स्वर्णादा दार वस्त्रादि पलशते भाण्डे, मेषावधित सप्तम राशौ तोलन दण्डे दिव्यप्रमाणरूपे विषवर्ज ब्राह्मणस्य सर्वेषाम्तु तुला स्मृते'ति नारदोक्ते परीक्षाभेदे च।

**तुलाकोटि(टी)** स्त्री तुलया तुला वा कोटयति कुट परितापे इ वा ङीप। नूपुरे तुलाकोटिकाणैरित्युद्भट।

**तुलाधर** त्रि० तुलाया मानदण्डस्य धर धृ अच। वाणिजके, तुलाराशौ तुलादण्डधारके गुण च।

**तुलापुरुष** पु० षोडशमहादानान्तर्गते दानभेदे विष्णस्त मत्स्यतुलादानादिपद्धतौ। [तुलादण्डे

**तुलामान** न० तुलार्थ तोलनार्थं मानं मीयतेऽनेन मा ल्युट्।

**तुलावीज** न० तुलाया वीज सदम् गुञ्जायाम तदादेश्यैव हि मानं शास्त्रे दर्शित यथा दशार्द्धपञ्च षड्वन्ति माषमिति।

**तुलित** त्रि० तुला+तत्करोति णिच्–कर्मणि क्त। परिमिते सदृशीकृते।

**तुल्य** त्रि० तुलया सम्मित यत। सदृशे। [मिरेवत्र माने

**तुल्यपान** न० तुल्येन सजातीयेन सह मानम्। सजातीयैस्स

**तुल्ययोगिता** स्त्री० अलङ्कारोक्त अर्थालङ्कारभेदे।

**तुवर** पु० तरति हिनस्ति रोगान पृषो० तु ष्वरच् नि० गुणाभाव। धान्यभेदे कषायरसे च तद्वति त्रि०। आढक्याम सौराष्ट्रमृत्तिकायाञ्च स्त्री०। पित्त्व त ङीप। स्वार्थे कन तुवरिकाप्यत्रैव। [रक्तचक्रमर्द्दने

**तुवरीशिम्ब** पु० तुवर्य्या आढक्या इव शिम्बा यस्य।

**तुष** तोषे दिवा पर अक०अनिट। तुष्यति अतुषत।

**तुष** पु० तुष क। विभीतकवृक्षे (वयडा) धान्यादि स्वनामख्याते द्रव्ये च।

**तुषानल** पु तुषस्यानल। तुषजात अग्नौ। [तद्वति त्रि०।

**तुषार** पु० अन्तर्भूतण्यर्थे तुष अ रक। हिमे, कर्पूरे शीते च

**तुषित** पु० तुष कितच्। 'तोष प्रतोष सन्तोषो भद्र शान्तिरिभसति। इध्म कविर्विभु स्वाहा सुदेवो रोचनो द्विषट्। तुषिता नाम ते देवा आसन् स्वायम्भुवोऽन्तरे' इत्युक्तेषु द्वादशसङ्ख्येषु मतान्तरे षट्त्रिंशत्सङ्ख्यकेषु गणदेवषु।

**तुष्टि** स्त्री० तुष क्तिन्। सन्तोषे 'अकृतार्थस्य लोकस्य कृतार्थोऽस्मीति या मति'रित्युक्तायां बुद्धौ तुष्टिर्नवधेति साङ्ख्योक्तासु आध्यात्मिकबाह्यभेदेन नवभेदासु सिद्धिषु मातृकाभेदेषु च।

**तुस** ध्वाने भ्वा पर०सक०सेट्। तोसति अतोसीत।

**तुह** वध भ्वा०पर सक०सेट। तोहति। अतुहत अतोहीत्।

**तुहिन** न० तुह इनन्। हिम चन्द्रतपसि च।

**तुहिनांशु** पु० तुहिनमंशवो यस्य। चन्द्रे। हिमांशुप्रभृतयोऽप्यत्र

**तूड** अनादरे भ्वा०पर सक०सेट। तूडयति अतूडीत। णिच अटतूडत त।

**तूण** सङ्कोचे अद०चु०उभ०सक०सेट। तूणयति ते। अतुतूणत त

**तूण** सङ्कोचे चु उभ०सक०सेट। तूणयति ते अतूतुणत् त।

**तूण** पूरणे चु०आ०सक०सेट। तूणयते, अतूतुणत् त।

**तूण(णी)** पु०स्त्री० तूण क स्त्रीत्वपक्षे गौ०ङीप। वाणाधार स्वनामख्याते इषुधौ। तूण इ वा ङीप सङ्कोचे स्त्री०।

**तूणीर** पु० तूणीं सङ्कोच राति इना त रा क। तूणे, इषुधौ

**तूर** हिंसे सक० त्वरे अक०दिवा आत्म० सेट। तूर्य्यते अतूरिष्ट

**तूर्ण** न०त्वर क्त ऊठ तस्य न। शीघ्र, सत्वर तद्वति त्रि।

**तूर्य्य** न० तूर यत्। वाद्यभेदे।

तूल पूरणे चुरा०आ०सक०सेट् । तूलयते अतूतुलत ।

तूल इयत्तापरिच्छेदे निष्कासने च भ्वा० पर० सक० सेट् । तूलति अतूलीत् ।

तूल पु०न० । तूल क । कार्पासभेदे (तुला) "तूलराशिमिवानल" इति स्मृतिः । आकाशे, (तुद) वृक्षभेदे च न० । कार्पासा स्त्री० । स्वार्थे कन् अत्रैव न० । [योटपाल ।

तूलकार्मुक न० ६त० । तूलस्फोटनार्थे धनुषि । तूलचापाद-

तूलनाली स्त्री० तूलनिर्म्मिता नाली । पिञ्जिकायाम् (पाइज) स्वार्थे कन् अत्रैवार्थे । [(तुलार गाछ)

तूलपिचु पु० पिच-मर्द्दने कुन् तूलप्रधान पिचु । तूलवृक्षे

तूलवृक्ष पु० तूलप्रधान वृक्ष शाक० । शाल्मलिवृक्षे ।

तूलि(ली) स्त्री० तूल-इन् वा ङीप् । चित्रसाधने स्वनाम-ख्याते पदार्थे ।

तूलिका स्त्री०तूल+अस्त्यर्थे ठन् । (तोषक) शय्योपकरणभेदे । तूलयति ण्वुल् । चित्रसाधने तूली)द्रव्ये "उन्मीलित तूलि कयेव चित्र"मिति कु० सुवर्णादेरावर्त्तनपटोत्तोपयोगिपदार्थे वीरणादिशलाकायाञ्च ।

तूलिनी स्त्री० तूल+इनि । शाल्मलिवृक्षे ।

तूलिफला स्त्री० तूलि तूलवत् फल यस्या । शाल्मलिवृक्षे ।

तूवर पु० तु-वरं दीर्घश्च । काले ऽजातशृङ्गे गवि, अजातश्मश्रुके पुरुषे, कषायरसे च । तद्वति त्रि० । आढक्या, सौराष्ट्र मृत्तिकायाञ्च स्त्री० ङीप् ।

तूष तुष्टौ भ्वा०पर०सक० सेट् । तूषति अतूषीत् ।

तूष्णीशील त्रि० तूष्णीं शील यस्य । मौनावलम्बिनि ।

तूष्णीक त्रि० तूष्णीं शील यस्य मौनेऽर्थे कन् मलोपश्च, मौनावलम्बिनि । [तूष्णीकामम्यत ।

तूष्णीम् अव्य० तूष-नीम् । मौने । अकथुमतिकर्म्मे कामि ।

तूस न०तुस-तनु दीर्घश्च । जटायां,सहतकेशेषु,कूर्च्चे, छन्दसि च

तृक्ष गतौ भ्वा०पर०सक०सेट् । तृक्षति अतृक्षीत् ।

तृण भक्षे तना० उभ० सक० सेट् । तृणोमि तर्णोति तृणुते तर्णुते । अतर्णीत् अतर्णिष्ट । तर्णित्वा तृण्ट्वा ।

तृण न० तृह नक् हलोपश्च । नडादौ, खटे (खड़)

तृणकाण्ड न० तृणानां समूह दूर्वा० काण्डच् । तृणसमूहे

तृणकेतु पु० तृणेषु केतुरिव श्रेष्ठत्वात् । वंशवृक्षे, तालवृक्षे, असारत्वेन तृणद्रुमत्वच्छजातिमत्त ।

तृणजाति स्त्री० तृणमेव जाति । उलपादौ (खड़) ।

तृणद्रुम पु० तृणजातीया द्रुमा असारत्वात् शाक० । नारिकेले, ताले, गुवाके, ताल्यां, केतक्यां, खर्ज्जूरे, खर्ज्जूर्याञ्च ।

तृणधान्य न० तृणमिव धान्य अकृष्टजन्यत्वात् शाक० । नीवारे, श्यामाकादौ च ।

तृणराज पु०तृणेषु राजते राज-अच् ६त०टच् वा । तालवृक्षे

तृणबीज न०६त० । श्यामाके धान्ये ।

तृणसारा स्त्री० तृणमेव सारोऽस्याः । कदल्याम् तस्याः सर्व्वथाऽसारत्वात्तथात्वम् । [धारपत्रयुक्ते तृणभेदे

तृणेक्षु पु० तृणमिक्षुरिव तीक्ष्णधारत्वात् । वल्वजायाम् तीक्ष्ण-

तृणौकस् न०तृणनिर्म्मितमोक । तृणनिर्म्मित गृहे(खड़ेरघर)

तृणौषध न० तृणात्मकमौषधम् । एलवालुकाख्ये गन्धद्रव्ये

तृण्या स्त्री० तृणानां समूह य शा० य । तृणसमूहे ।

तृतीय त्रि० त्रयाणां पूरण त्रि+तीय सम्प्रसारणञ्च । त्रया-णां पूरणे येन त्रित्वसंख्या पूर्य्यते तस्मिन् पदार्थे ।

तृतीयप्रकृति स्त्री० स्त्रीषु पुंवत्प्रेष्या तृतीया प्रकृति प्रकार । नपुंसके क्लीबे ।

तृतीया स्त्री० चन्द्रमण्डलस्य तृतीयकलायाः सूर्य्यमण्डल प्रवेशनिर्गमान्यतररूपक्रियाऽसिक्रायां तिथौ ।

तृतीयाकृत त्रि०तृतीयं कृतं त्रिगुणार्थे तृतीय+डाच्+कृ क्त । त्रिवारकृष्टे क्षेत्रे ।

तृद् अनादरे रु०उभ०सक० सेट् । तृणत्ति तृन्ते । अतर्दीत् अतृदत् अतर्दिष्ट । तर्द्दित्वा-तृत्त्वा ।

तृन्प(म्प) प्रीणने तु०पर०सक०सेट् । तृपति तृम्पति अतर्पीत् ।

तृन्फ(म्फ) प्रीणने तु०प०सक०सेट् । तृफति तृम्फति अतर्फीत्

तृन्ह हिंसे तु०प०सक०सेट् क्वावेट् । तृहति अतृहत् ।

तृप प्रीणने स्वा०पर०सक०सेट् । तृप्नोति अतर्पीत् ।

तृप सन्दीपने प्रीणने च वा चुरा० उभ० पक्षे भ्वा०पर०सक० सेट् । तर्पयति ते तर्पति अततर्पत् त अतीतृपत् त । अतर्पीत् । [अताप्सीत्-अतृपत् ।

तृप प्रीणने दि०पर०सक० वेट् । तृप्यति अतर्पीत् अताप्सीत्-

तृप प्रीणने तु०सु०पर०सक०सेट् तृम्पति अतर्पीत् ।

तृप्ति स्त्री० तृप-क्तिन् । अतिशयभक्षणेन भक्ष्येच्छानिवृत्तौ ।

तृफ प्रीणने तु० पर०सक०सेट् । तृफति । अतर्फीत् ।

तृ(त्रि)फला स्त्री० त्रयाणां फलानां समाहार वा सम्प्रसार-णञ्च । हरितक्यामलकीबिभीतकरूपफलत्रये ।

तृष तृष्णायां दिवा०पर०सक०सेट् । तृष्यति अतृषत् अतर्षीत्

तृष्(षा) स्त्री० तृष क्विप् । भावुरिमते हलन्तत्वात् वा टाप् । तृष्णायां, अप्सलताम्, लाङ्गलिकीवृक्षे च ।

तृषाभू स्त्री० ६त० । क्लोमनि हृदयस्थे स्थानभेदे ।

तृषित त्रि० तृषा जाताऽस्य तार० इतच् । तृष्णान्विते ।

जातिपुष्पदले तत्पुष्पेण वासितं हि गन्धतैलं भवति ।

तैलम्पाता स्त्री० तिलस्य पातोऽत्र अ नि० मुम् च् । स्वधा-
याम्, पद्मपूलचिते श्राद्धे च । [गन्धद्रव्यभेदे ।

तैलसौधन न० तैलं साधयत्यनेन सिध-णिच्-ल्युट् (काकला)

तैलीन त्रि०तिलानां भवनं क्षेत्रं ख । तिलभवनयोग्ये क्षेत्रे ।

तैष पु० तिष्यनक्षत्रयुक्ता पौर्णमासी तैषी साऽस्मिन् मासे अण् ।
चान्द्रपौषमासे । [पौषस्य पौर्णमास्याम् ।

तैषी स्त्री० तिष्येण नक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्र

तोक न० सौ०तु-क तस्य नेत्त्वम् । अपत्ये पुत्रे,दुहितरि च ।

तोटक न० द्वादशाक्षरपादके छन्दोभेदे । [अनुतोटत् ।

तोड अनादरे भ्वा०पर०सक०सेट् । तोडति अतोडीत् । णिच्

तोडी(री) स्त्री० तुड-अच् गौरा०ङीष् वा डस्य र । स्वनाम
ख्याते तैलसाधने धान्यभेदे । [चावनटरङ्गे च ।

तोत्त्र न० तुद-ष्ट्रन् । गवादिताडनदण्डे (पाचुनि) -गजादि

तोदन न०तुद्यतेऽनेन ल्युट् । तण्डे सखे । भावे ल्युट् । व्यथायाम्

तोमर पु०न०तु विच् तोर्गतो म्रियतेऽनेन मृ-अच् । हस्तक्षेप्ये
शल्याये दण्डाकारेऽस्त्रभेदे (सांगाशा) । [त्रि च ।

तोमरिका स्त्री० तोमर+अस्त्यर्थे ठन् । आढक्याम् । [मिश्र

तोय न० सौ० तु विच्‌ तवे पूर्त्यै याति या-क । जले पूर्वाषाढा

तोयकाम पु०।तोयं कामयते कम-अण् । जलवेतसे । जला-
भिलाषुके त्रि० ।

तोयकृच्छ्र न० जलमात्रपानरूपे व्रतभेदे । [जलदातरि त्रि०

तोयद पु० तोयं ददाति दा+क । मेघे,मुस्तके च । घृते न०।

तोयधि पु० तोयानि धीयन्तेऽत्र धा कि । समुद्रे तोयनिध्या
दयोऽप्यत्र । [शाकल्याम् ।

तोयपिप्पली स्त्री० तोये पिप्पलीव । (कांचड़ा) शाकभेदे

तोयपुष्पी स्त्री० तोयेन बहुजलदानेन पुष्पाण्यस्या । पाटला
वृक्षे । [सु । कतके (निर्मली)

तोयप्रसादन पु० तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-

तोयफला स्त्री० तोयप्रधानं फलं यस्याः । इर्वारौ कर्कटीभेदे

तोयवल्ली स्त्री० तोयसन्निहितस्थाने वल्ली । कारवेल्ले (उच्छे)

तोयसूचक पु०तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल् । भेके

तोरण पु०न० तुर युच् । वहिर्द्वारे, स्तम्भोपरिस्थे त्रिशाकारे
काष्ठे द्वारवाह्यभागे च । कन्धरायां न० ।

तोल पु० न० तुल अच् । सुवर्णादीनांपरिमाणे कर्षे । स्वार्थे कन्
ल्युट् वा । तोलकमप्यत्र ।

तौर्य न० तूर्ये तूर्यादौ वाद्ये भवम् अण् । तूर्यादिध्वनौ ।

तौर्यत्रिक न०त्रय परिमाणमस्य कन् तौर्यप्रधानं त्रिकम् ।
नृत्यगीतवाद्येषु समुदितेषु 'वनेऽपि तौर्यत्रिकमि'ति नैषधम्

तौलिक पु० तूल्या जीवति ठक् । चित्रकरे ।

त्यज हानौ दाने च भ्वा०पर०सक०अनिट् । त्यजति अत्याक्षीत् ।

त्यद् त्रि० त्यज-अदि डिच्च । तच्छब्दार्थे 'योषा सोषा भवाम्य
हमि'ति वेदभाष्यम् ।

त्यागिन् त्रि० त्यज-घिणुन् । दातरि, शूरे, वर्ज्जनशीले,
कर्मफलत्यागिनि च 'यस्तु कर्मफलत्यागी स त्यागीत्यभि-
धीयते' इति गीता ।

त्रक गतौ भ्वा० आत्म० सक० सेट् । त्रकते अत्रकिष्ट ।

त्रख गतौ भ्वा० पर०सक०सेट् । त्रखति अत्रखीत् अत्राखीत्

त्रखि गतौ भ्वा०पर०सक०सेट् इदित् । त्रङ्खति अत्रङ्खीत् ।

त्रगि गतौ भ्वा० पर०सक० सेट् इदित् । त्रङ्गति अत्रङ्गीत् ।

त्रदि चेष्टायां भ्वा०पर०अक०सेट् इदित् । त्रन्दति अत्रन्दीत् ।

त्रप लज्जायां भ्वा०आ०अक० वेट् वा अ० । त्रपते अत्रपिष्ट
अत्रप्त । णिच् । त्रपयति त्रापयति । त्रपा

त्रपा स्त्री० त्रप-भावे अङ् । लज्जायाम् । अश्व । कुलटायाम् ।
कुले कीर्त्तौ च । [सीसके,रङ्गे च ।

त्रपु न० अग्नि दृष्ट्वा त्रपते लज्जते इव लज्जया द्रवीभवति वा

त्रपुटी स्त्री०त्रप-उटच् गौरा०ङीष् । सूक्ष्मैलायाम् ।

त्रपुष स्त्री० त्रपते क्विप् त्रप् उष-दाहे क कर्म० । कर्कटीभेदे
गौरा० ङीष् । (खीरा) (शशा) ख्याते वृक्षे ।

त्रपुस् न० त्रप-उसि । रङ्गे ।

त्रय न०स्त्री० त्रयाणामवयव त्रयोऽवयवा येषां वा अयच् ।
त्रिसङ्ख्यायाम् 'सन्ततमपरावन्त्ये'ति मनुः । स्त्रीत्वपक्षे
ङीप् । 'अस्तौ नरपितित्रयो'ति माघ । त्रित्वसङ्ख्या-
विशिष्टे त्रि० स्त्रियां ङीप् । ऋगादिवेदत्रये, 'त्रयीव
नीताङ्गगुणेन विस्तर'मिति नैषधम् । मध्यादिमूर्त्तित्रये,
दुरन्ध्याम्, सुमतौ, सोमराजीवृक्षे च ।

त्रयीधर्म्म पु० त्रय्या वेदत्रयेण विधीयमानो धर्म्मः शाक० ।
वैदिके धर्म्मे ज्योतिष्टोमादौ ।

त्रयोदशन् त्रि० त्रयश्च दश च, त्रयाधिका वा दश । त्रयोऽधिक
दशसङ्ख्यान्विते । तत्पूरणे त डट् । त्रयोदश त्रि०। चन्द्रस्य
त्रयोदशकलाक्रियारूपे तिथौ स्त्री० ङीप् ।

त्रस इतो धार्ये निषेधे च चुरा०उभ० सक० सेट् । त्रासयति
ते अतित्रसत् त ।

त्रस भारे वा० चुरा०उभ० पक्षे भ्वा०पर०सक०सेट् इदित् ।
त्रंसयति ते त्रंसति अतत्रंसत् त अत्रंसीत् ।

त्रस भये वा दिवा० पक्षे भ्वा० कम्पा०पर०अक०सेट् । त्रसति

त्रस्यति अत्रसीत् अत्रासीत् त्रेसतु तत्रसतुः ।

त्रस न० त्रस-भये भावे घञर्थे क । वने । त्रस धृतौ अच् । जङ्गमे त्रि० ।

त्रसरेणु पु० त्रस चलो रेणु क० । 'जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते' इत्युक्ते गवाक्षान्तर्गतसूर्य्यकिरणेषु दोधूयमाने परमाणुषट्कात्मके द्व्यणुकत्रयात्मके रजसि ।

त्रस्त त्रि० त्रस क्त । भीते चकिते । शीघ्रे न० ।

त्रस्नु त्रि० त्रस-क्नु । भीरौ त्रासयोगे ।

त्रापुष त्रि० त्रपुणा निर्वृत्तम् अण् । रङ्गमये पात्रादौ ।

त्रायन्ती स्त्री० त्रै-पर्स० क्विप् त्रा अयति भा० इ-ई-वा शतृ । (बला) ख्यातायाम् लतायाम् ।

त्रायमाणा स्त्री० त्रायते त्रै शानच् । (बला) ख्यातायां लतायाम् ।

त्रि त्रि० ब०व० तॄ ड्रि । त्रित्वसंख्याविशिष्टे । स्त्रियाम् तिस्रः देश । त्रिधा इत्यादि ।

त्रिंश त्रि० त्रिंशत्+पूरणे डट् । त्रिंशत्पूरणे, त्रिंशत्तमे, 'त्रिंशांशकस्तथा रामे भौम' इत्यभिधीयते इति ज्योतिषम् ।

त्रिंशक त्रि० त्रिंशता क्रीतं वुन् । त्रिंशत्संख्यान्वितद्रव्येण क्रीते वस्तुनि । [र्था, तत्संख्यान्विते च ।

त्रिंशत् स्त्री० त्रयोदशत परिमाणमस्य नि० । त्रिदशकसंख्या-

त्रिंशत्पत्र न० त्रिंशत्संख्यानि पत्राणि दलानि प्रतिपुष्पमस्य । कुमुदे ।

त्रिक न० त्रयाणां संघः कन् । त्रित्वसंख्यायाम् पृष्ठवंशाधोभागे, कटिभागे, त्रिफलायाम् (हरितक्यामलकीवयस्था-फलत्रये) त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये) । वातादिषु मिलितेषु च । त्रिषु कायति कै-क । गोक्षुरे क्षुपे पु० ।

त्रिककुद् पु० त्रीणि ककुदतुल्यानि शृङ्गाण्यस्य ककुदस्य चान्त्यलोपः । त्रिकूटाख्ये पर्वतभेदे । [गोक्षुरक्षुपे ।

त्रिकट पु० त्रीन् वातादिदोषान् 'कटति आवृणोति अच् ।

त्रिकटु न० त्रयाणां कटुरसानां समाहारः । मिलितेषु शुण्ठीपिप्पलीमरिचेषु । [क्षुपे, मत्स्यभेदे च (टेङ्गरा) ।

त्रिकण्टक पु० त्रयः कण्टकाः कण्टका अस्य । गोक्षुरे, स्नुही

त्रिकाल न० त्रयाणां कार्य्यकालभूतभविष्यत्कालानां समाहारः । भूतभविष्यद्वर्त्तमानकालत्रये प्रातर्मध्याह्नसायाह्नरूपकालत्रये च । 'त्रिकालं पूजयेद्देवीमिति तन्त्रम् ।

त्रिकालज्ञ पु० त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा क । सर्व्वज्ञे त्रिकालविदादयोऽप्यत्र । [पर्व्वते ।

त्रिकूट पु० त्रीणि कूटान्यस्य । लङ्कापुरसन्निहिते सुवेलाख्ये

त्रिकोण त्रि० त्रयः कोणा यस्य । त्रिकोटियुक्ते पदार्थे, ज्योतिषोक्ते लग्नात् नवमपञ्चमस्थाने न० । 'त्रिकोणगान् ग्रहः पश्यन्ती'ति ज्योतिषम् ।

त्रिकोणफल न० त्रिकोणं त्रिकोणाकारं फलम् । शृङ्गाटके (पानीफल) । [कन् तत्रैव ।

त्रिगर्त्त पु० छायाम्लेच्छजनपदे देशे । तद्देशस्थे जने ब०व० । स्वार्थे

त्रिगुण न० त्रयाणां गुणानां समाहारः । सांख्योक्ते प्रधाने । त्रिभिर्गुण्यते गुण संख्याने घञ् । त्रिभिर्गुणिते त्रि० ।

त्रिगुणाकृत त्रि० त्रिगुणं कृतं कर्षणं डाच् कृ क्त । त्रिधा-कर्षणेन कृष्टे क्षेत्रादौ ।

त्रिगुणात्मक न० त्रयो गुणाः सत्त्वादयः आत्मा स्वरूपं यस्य कप् । सांख्यमतोक्ते प्रधाने, वेदान्तोक्ते अज्ञाने च ।

त्रिजटा स्त्री० रामायणप्रसिद्धे राक्षसीभेदे ।

त्रिणाचिकेत पु० त्रिः कृत्वो नाचिकेतोऽग्निश्चितो येन । अध्वर्युभेदे 'पञ्चाग्नयो ये च त्रिणाचिकेता' इति श्रुति

त्रिणे(ने)त्र पु० त्रीणि नेत्राण्यस्य । शिवे । पूर्व्वपदात् संज्ञायामिति णत्वे प्राप्ते गिरिनद्यादित्वात् वा णत्वमिति बोध्यम् । कुब्जादि०नेत्रस्थे ।

त्रितय न० त्रयाणामवयवः त्रयोऽवयवा येषाम् वा तयप् । त्रयपदार्थे त्रित्वसंख्यायाम् । त्रित्वसंख्यान्विते त्रि० ।

त्रिदण्ड न० त्रयाणां दण्डानां समाहारः । वाङ्मनःकाय-दण्डेषु, तथादण्डोपलक्षिते संन्यासाश्रमे च ।

त्रिदण्डिन् त्रि० त्रिदण्डमस्त्यस्य इनि । 'वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते' इति मनूक्ते संन्यासिभेदे ।

त्रिदला स्त्री० त्रीणि त्रीणि दलानि प्रतिपत्रं यस्याः । (गोयालिया) गोधापदीलतायाम् ।

त्रिदश पु० त्रिर्दशा दशा जन्मसत्ताविनाशाख्या न तु वृद्धिपरिणामक्षया मर्त्त्यानामिव दशा येषाम् । देवेषु । अथ वा त्र्यधिकाद्विरावृत्ताश्च दश परिमाणमेषां डट् शाक० अधिकात्तरपदलोपः एकस्यैव त्रिशब्दस्य तन्त्रतयोच्चारणात् उभयार्थपरत्वम् । त्रयस्त्रिंशत्संख्यकपरिमिते देवे यथा अर्का द्वादश, रुद्रा एकादश, वसवोऽष्टौ, विश्वे देवौ द्वाविति । अथवैव तत्र शुत्वगुणः त्री च दश चेति छान्दोग्येऽभिहितात् त्र्यधिकदशतात्पर्यार्थं त्री चेति द्विवचनान्ततया निर्देशः ।

त्रिदशाधिप पु० ६त० । इन्द्रे ।

त्रिदशाध्यक्ष पु० त्रिदशानां दशानां जापतत्त्वभरधुरीणो त्रिदशानां देवानां वाऽध्यक्षः । सर्व्वाधिपेषु ब्रह्मणि, विष्णौ च

शिवे, विष्णौ च । [रजतताम्राभिधधातुत्रये ।
त्रिलौहक न० त्रयाणां लौहानां धातूनां समाहारः । सुवर्ण
त्रिवर्ग पु० त्रयाणां धर्मार्थकामानां वर्गः । धर्मार्थकाम-
रूपेषु पुरुषार्थेषु, त्रिफलायां, कटुत्रिके, साङ्ख्योक्ते सत्त्व-
रजस्तमोरूपगुणत्रये । 'क्षय स्थानं च वृद्धिश्च त्रिवर्गो
नीतिवेदिनामि'त्युक्ते क्षयस्थानवृद्धिरूपेषु पदार्थेषु च ।
त्रिवर्णक पु०त्रयो वर्णाः शुभ्रेऽस्य कप् । गोक्षुरे । समा०द्वि०
पात्रा०स्वार्थे कन् । त्रिफलायां त्रिकटौ ब्राह्मणक्षत्रियवैश्य
रूपे द्विजातिवर्णत्रये च न० । [त्रिवर्षवयस्कायां गवि ।
त्रिवर्षिका स्त्री० त्रीणि वर्षाणि वयोऽस्याः स्वार्थे कन् ।
त्रिविक्रम पु०त्रीन् लोकान् विशेषेण सामर्थ्येन क्रामति वि+
क्रम अच । विष्णौ 'त्रिरित्येव त्रयो लोकाः कीर्त्तिता मुनि
सत्तम क्रमते तांस्त्रयो सर्वान् त्रिविक्रमो जनार्द्दन' इति
हरिवंश बलिबन्धनसमये हि तस्य तथारूपत्वम् ।
त्रिवीज पु० त्रीणि त्रीणि वीजानि प्रतिफलं यस्य । श्यामाके
त्रिवृत्(ता) पु० त्रीन् अवयवान् वृणोति वृ क्विप् त्रिभिरवयवै
र्वृता वा । (तेओडि) ओषधिभेदे, वर्त्तनं वृत् तिस्रः वृतो
यत्र । त्रिगुणे त्रि०। 'विप्रस्योर्द्धवृतं त्रिवृदि'ति स्मृतिः । गायत्रीं
त्रिवृतमेकैकां करोतीति श्रुत्युक्तेषु मिश्रितेषु तेजोजलान्नेषु च
त्रिवृत्पर्णी स्त्री० त्रिवृत त्रिदोषघ्नम् पर्णमस्याः । (हेलञ्चा) हिल
मोचिकायाम् । [युक्तप्रवाहे च दक्षिणे उत्तरे च प्रयागे ।
त्रिवेणी स्त्री० तिस्रः वेण्यः प्रवाहाः यत्र कप् । संयुक्तप्रवाहे
त्रिवेणु पु० त्रयो वेणवोऽत्र । रथस्थस्य अवयवभेदे ।
त्रिवेदिन् पु० त्रयो वेदाः पाठ्यत्वेन सन्त्यस्य इनि । ऋगादि
वेदत्रयपाठके ।
त्रिशङ्कु पु० सूर्यवंशीयनृपभेदे । त्रिषु अवयवेषु शङ्कुरिव ।
शलभे, मार्जारे चातके, खद्योते च ।
त्रिशाखपत्र पु०तिस्रः शाखा इव तादृशं पत्रं यस्य । बिल्वे
त्रिशिख पु०तिस्रः शिखा प्रतिपत्रमस्य । बिल्वे । राक्षसभेदे
च । त्रिशूले, मण्डलान्तरे च न० । शिखात्रयवति
मायावकादौ त्रि० ।
त्रिशिरस् पु०त्रीणि शिरांस्यस्य । राक्षसभेदे ज्वरे, कुबेरे च
त्रिशीर्षक न०त्रीणि शीर्षाण्यस्य कप् । त्रिशूले ।
त्रिशूल न० त्रीणि शूलानि शिखाग्राणि यत्र । स्वनाम
ख्याते अस्त्रभेदे । मात्रे त्रि० स्त्रियां ङीप्
त्रिशूलिन् पु० त्रिशूलमस्त्यस्य इनि । शिवे । त्रिशूलधारि
त्रिशृङ्ग पु० त्रीणि शृङ्गाण्यस्य । त्रिकूटपर्वते ।
त्रि(स)ष्टुप् स्त्री० त्रिषु स्थानेषु स्तुभ्नाति स्तुभ क्विप् षत्वम्
ते संप्रसारणं च । एकादशाक्षरपादके छन्दोभेदे ।
त्रिसन्ध्य न० तिसृणां सन्ध्यानां समाहारः । त्रिकाले प्रातः
मध्याह्नसायाह्नरूपकालत्रये । त्रिसन्ध्यं च पठेन्नित्यमिति ।
त्रि(ष)सवन न० त्रीणि सवनानि यत्र काले वा षत्वम् ।
त्रिकाले । समाहारद्विगुः । त्रैकालिके स्नानत्रये च ।
'वाग्यतस्त्रि(ष)सवनं चरेदि'ति स्मृतिः ।
त्रिस्रोतस् स्त्री० त्रिषु लोकेषु स्रोतो यस्याः । गङ्गायाम्
त्रिहल्य त्रि० त्रिवारं हलेन कृष्टं यत् । त्रिवारकृष्टे क्षेत्रे
त्रिहायणी स्त्री०त्रयो हायना वयोमानमस्याः ङीप् णत्वम् ।
त्रिवर्षायां गवि । [अत्रुटीत् ।
त्रुट छेदने दिवा०तुदा०कु०पर० सक० सेट् । त्रुट्यति त्रुटति
त्रुट छेदने चुरा०आ०सक० सेट् । त्रोटयते अतुत्रुटत ।
त्रुटि(टी) स्त्री० त्रुट-इन् कित् वा ङीप् । लेशे, संशये सूक्ष्मै
लायां, निमेषद्वयरूपे कालभेदे, हानौ च ।
त्रुन्प(म्प) वध भ्वा०पर०सक०सेट् । त्रुम्पति अत्रुम्पीत ।
त्रुन्फ(म्फ) वधे भ्वा०पर०सक०सेट् । त्रुम्फति अत्रुम्फीत ।
त्रुप(फ) वधे भ्वा०पर०सक०सेट् । त्रोप(फ)ति अत्रोपी(फी)त्
त्रेता स्त्री० त्रीन् इता नि०। दक्षिणाग्निगार्हपत्याहवनीयात्मके
समुदिते अग्नित्रये, सत्ययुगानन्तरवर्त्तिनि युगभेदे, द्यूत-
क्रीडाधारस्थानस्य यस्मिन् पार्श्वे त्रयोऽङ्कास्तस्य पार्श्वस्य
उत्तानतया पतने द्यूतविशेषे वराटकानां मध्ये त्रयाणामु
त्तानतया पतने च 'त्रेताहृतसर्व्वस्व'मिति कुमारकाटिकाटीका
त्रेधा अव्य० त्रि+प्रकारार्थे धाच् त्रेस्त्रे इत्यादेश । त्रिप्रकारे
त्रै पालने भ्वा०आ०सक०अनिट् । त्रायते अत्रास्त ।
त्रैगुणिक त्रि० त्रिगुणार्थं प्रयच्छति त्रिगुणं गृहीत्वैकगुणं
प्रयुङ्क्ते 'तत्प्रयच्छति गर्ह्यमि'ति ठक् । एकगुणं दत्त्वा
त्रिगुणं गृह्णति वार्द्धुषिकभेदे ।
त्रैगुण्य न० त्रयाणां गुणानां सत्त्वरजस्तमसां समाहारः तत
स्वार्थे ष्यञ् । सत्त्वादिषु गुणेषु 'त्रैगुण्यविषया वेदा' इति
गीता । गुणत्रयकार्यपुण्यादृष्टकर्मफलयुक्ते संसारे च ।
त्रैध न० त्रिप्रकारम् त्रि धमुञ् । त्रिप्रकारार्थे ।

र्पयते दर्पति । अदीदपत् त अददर्पत-त अदर्पीत् ।

दृप हर्षे गर्व्वे च दिवा०पर०अक०सेट् । दृप्यति अदृपत अदर्पीत्

दर्पित्वा दृप्त्वा । दृप्त । [परान्' इति रामकरवम् ।

दृप्त त्रि० दृप-क्त । गर्व्विते 'परदृप्तान् जगाने रावणादिनिभा

दृफ क्लेशे तु०सु०पर०अक०सेट् । दृम्फति अदर्फीत् ।

दृब्ध त्रि० दृभ-क्त । ग्रथिते,भीते च ।

दृभ ग्रथने वा चुरा० उभ०पक्षे तु०पर० सक०सेट् । दर्भयति ते दृभति अदीदृभत् त अददर्भत् त अदर्भीत् ।

दृभ भये वा चुरा उभ०पक्षे भ्वा० पर०अक० सेट् । दर्भयति-ते दर्भति । अदीदृभत् अददर्भत् त । अदर्भीत् ।

दृम्भ राशीकरणे चुरा० उभ०सक०सेट् । दृम्भयति ते अद दृम्भत् त । [अद्राक्षीत् ।

दृश चाक्षुषज्ञाने भ्वा०पर०सक० अनिट् । पश्यति अदर्शत्-

दृश्(शा) स्त्री० दृश सम्प० भावे क्विप् वा टाप् । दर्शने ज्ञाने । करणे क्विप् । नेत्रे, द्वित्वसंख्यायाञ्च । कर्त्तरि क्विप् । साक्षिणि, द्रष्टरि ज्ञातरि च त्रि० ।

दृश(ष)द् स्त्री० दृ विदारे अदि सुक् (शुक्) वा ह्रस्व । पाषाणे निम्नेषणशिलायाञ्च (शिल) । [दृशद्वत्यो रितमत ।

दृश(ष)द्वती स्त्री० दृषद्+मतुप् मस्य व । नदीभेदे 'सरस्वती

दृष्ट न० दृश क्त । स्वपरचक्रभये । वीक्षिते लौकिके च त्रि० ।

दृष्टरजस् स्त्री० दृष्ट रजो यया । प्रौढायां स्त्रियाम् ।

दृष्टान्त पु० दृष्टोऽन्तो नाशोऽवसान परिच्छेदश्च यस्मिन् । मरणे शास्त्रे, प्रतिपाद्यप्रतिपादकयो बुद्धिसाम्यविषयत्वमे उदाहरणे, यथा यो धूमवान् स वह्निमान् यथा पाकस्था नमित्यादौ धूमवह्निमत्त्वयोर्व्याप्तौ पाकस्थानमुदाहरणम् अलङ्कारोक्ते अर्थालङ्कारभेदे च ।

दृष्टि स्त्री० दृश भावे क्तिन् । दर्शने, बुद्धौ च । करणे क्तिन् । नेत्रे द्वित्वसंख्या 'चक्षुर्जन्यमनोवृत्तिर्विद्युता रूपभा सिका दृष्टिरित्युच्यते' इत्युक्तायां मनोवृत्तौ च ।

दृष्टिविष पु० दृष्टौ विषं यस्य । सर्पभेदे ।

दृह दृद्धौ भ्वा० पर० अक०सेट । दर्हति अदर्हीत् अयमिदित्त तत्र दृंहति अदृंहीत । [दरयति ।

दॄ भये भ्वा० पर० सक० सेट् घटा० । दरति अदारीत् णिच्

दॄ विदारे दिवा० क्र्या० च प्रा० पर० सक० सेट् । दीर्य्यति दृणाति । अदारीत् ।

दॄ भये क्र्या० प्रा० पर०अक०सेट । दृणाति अदारीत् ।

दे पालने भ्वा० आत्म सक०अनिट् । दयते अदास्त ।

देव क्रीडने भ्वा० आत्म०अक०सेट् । देवते अदेविष्ट ।

देव पु० दिव पचाद्यच् । अमरे । द्योतनात्मके आत्मनि दीव्यति क्रीडते यस्माद्दीप्यते द्योतते दिवि । तस्माद्देव इति प्रोक्त स्तूयते सर्वदैवतैरित्युक्ते परमेश्वरे ब्राह्मणस्योपाधौ च । इन्द्रिये न० । पूज्ये त्रि० । नाट्योक्तौ राजनि पु० ।

देवक पु० श्रीकृष्णस्य मातामहे देवक्याः पितरि नृपभेदे ।

दे(दै)वकी स्त्री० देवकस्य अपत्यं अामजा पृयोगे कौकयीति पद्धीप । श्रीकृष्णस्य मातरि वसुदेवस्य भार्य्यायाम् । अपत्यार्थेऽण् दैवकीति तत्रैव । [सुतादयोऽप्यत्र ।

दे(दै)वकीनन्दन पु० ६त० श्रीकृष्णे वसुदेवात्मजे दे(दै)वकी-

देवकुसुम न० देवानां प्रियं योग्यं वा कुसुमम् शाक० । लवङ्गे

देवखात न० देवेन खातं खन क्त । अकृत्रिमे जलाशये । ७त० देवसमीपस्थे खाते च ।

देवखातबिल न० देवेन खातं विदारितं बिलम् । गुहायाम

देवगायन पु० ६त० । गन्धर्व्वे ।

देवगिरि पु० देवानां प्रियः गिरिः । पर्वतभेदे ।

देवगुरु पु० ६त० । बृहस्पतौ । [यज्ञिके द्वारे ।

देवच्छन्द पु० देवैश्छन्द्यते प्रार्थ्यते छन्द-कर्मणि घञ् । शत

देवजग्धक न० देवैरद्यते स्म अद् क्त जग्धादेश स्वार्थे कन् । कतृणे, गन्धतृणे च । [चन्द्रमेषु पञ्चसु वृक्षेषु ।

देवतरु पु० ६त० । मन्दारपारिजातसन्तानकल्पवृक्षहरि

देवता स्त्री० देव+स्वार्थे तल् 'कश्चित् स्वार्थिका अपि प्रत्यया प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते, इति भाष्योक्ते स्त्रीत्वम् । इन्द्रादौ सुरे । [वृक्षभेदे, अग्नौ, राहौ, मेघे च ।

देवताड पु० देवमिन्द्रियं ताडयति ताड-अण् । (देताड)

देवदण्डा स्त्री०देवमिन्द्रियं दण्डयति दण्ड अच् । नागबलायाम्

देवदत्त पु०देवा एनं देयासु आशिषि क्तच् । देवार्पिते तन्ना-मके जने, अर्जुनशङ्खे 'देवदत्तं धनञ्जय' इति गीता जृम्भणकरे वायौ च । देवाय दत्त । देवोद्देशेन त्यक्ते त्रि० ।

देवदारु न० देवानां प्रियं दारु यस्य तत्काष्ठचन्दनस्य देव प्रियत्वात् । स्वनामख्याते वृक्षे अयं पुमानप्यत्र अस्तु पुर पश्यसि देवदारुमिति रघु । [बीजपूरके, वेश्यायाञ्च ।

देवदासी स्त्री० देवमिन्द्रियं दासयति दास-वधे अण् । वन-

देवदीप पु० देवेषु इन्द्रियेषु दीप इव रूपप्रकाशत्वात् । लोचने

देवदुन्दुभि पु० देवानां दुन्दुभिरिव हर्षप्रदत्वात् । रक्तत्ल सायाम् । ६त० देवढक्कायाम् ।

देवदूती स्त्री० देवानि इन्द्रियाणि दूयन्ते खिद्यन्तेऽनया दू क्तिच् ङीप् । वनबीजपूरके ।

देवदेव पु० देवेषु मध्ये दीव्यति दिव अच् । महादेवे ।

देवधान्य न० देवानां योग्यं धान्यम् । (देधान) धान्यभेदे ।
देवन पु० दीव्यत्यनेन दिव-करणे ल्युट् । पाशके । भावे ल्युट् । क्रीडायां, दीप्तौ, व्यवहारे, जिगीषायां, स्तुतौ च न० । दीव्यत्यत्राधारे ल्युट् । क्रीडोद्याने, पद्मे च ।
देवनदी स्त्री० ६त० । गङ्गायाम् 'असंबाधा देवनदी'ति महाभा०
देवनिर्म्मिता स्त्री० देवैः निर्मिता । गुडूच्याम् ।
देवपथ पु० देवैरर्च्चिरादिभिरातिवाहिकैरुपलक्षितः पन्थाः अच् समा० । उत्तरमार्गे । देवानां पन्थाः । छायापथे (यमनाला)
देवपुरोधस् पु० ६त० । बृहस्पतौ ।
देवप्रिय पु० ६त० । पीतभृङ्गराजे । बकपुष्पे न० ।
देवबला स्त्री० देवानामिन्द्रियाणां बलं यस्याः ५ब० । सह-देवीलतायाम् ।
देव(व)ल्लभ पु० ६त० । पुन्नागवृक्षे ।
देवभवन न० देवानां भवनमिव । अश्वत्थवृक्षे । ६त० । स्वर्गे
देवभूय न० देवस्य भावः भू-क्यप् । देवत्वे देवसायुज्ये ।
देवमणि पु० देवेषु मणिरिव प्रकाशकत्वात् । शिवे, अश्वस्य कण्ठस्थे रोमावर्त्ते, कौस्तुभमणौ, महाश्वेतायाञ्च ।
देवमातृक त्रि० देवः पर्ज्जन्यरूपीन्द्र मातेव मातृकोऽस्य । वृष्टिजलसम्पन्नशस्यपालिते देशे ।
देवयान न० ६त० । देवरथे देवैरुपलक्षितं यानं मार्गः । अर्च्चि-रादिमार्गे शुक्राचार्य्यकन्यायां स्त्री० ङीप् । [देवांशभूते ।
देवयोनि पु० देवा एव योनि कारणमस्य । विद्याधरादौ
देवर पु० दिव अर । भर्त्तुः कनिष्ठभ्रातरि ।
देवरथ पु० ६त० । देवानां स्वर्गगमनसाधने विमानादौ याने ।
देवराज पु० देवानां राजा टच् समा० । इन्द्रे देवाधिपादयोऽप्यत्र
देवरात पु० देवा यस्मै रात्ताः क्तच् । अभिमन्युसुते परीक्षिन्नृपे
देवर्षि पु० मेदद्रष्टा ऋषिः देव एव सन् ऋषिः । नारदादिमुनौ
देवल पु० मुनिभेदे व्यासशिष्ये धौम्यस्य ज्येष्ठभ्रातरि, देवान् जीविकार्थे लाति ला-क । देवोपजीविनि । स्वार्थे कन् अत्रैव 'देवकोशोपजीवी च नाम्ना देवलको भवे'दित्युक्ते विप्रे ।
देवलता स्त्री० दीव्यति प्रकाशते देवा कर्म० । नवमल्लिकायाम्
देवलोक पु० ६त० । स्वर्गे । देवस्य ईश्वरस्य सम्बन्धरूपोलोकः । 'भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः । तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्त्तिता' इत्युक्तेषु भूरादिषु सप्तसु लोकेषु
देववर्द्धकि पु० ६त० । विश्वकर्म्मणि । [इत्येषु, गुग्गुलौ च ।
देववृक्ष पु० दीव्यति देवः कर्म० । सप्तपर्णवृक्षे, ६त० मन्दारादि
देवव्रत पु० देवम् इन्द्रियसंयमनं व्रतमस्य । भीष्मे । [धौमे च
देवसात् अव्य० देवेभ्यो देयं तदधीनं करोति वा देवेभ्योदेये, तद-

देवसायुज्य न० युनक्ति युज-क सह युजेन सयुजः तस्य भावः सायुज्यं देवेन सायुज्यमेकाधनयोगिता । देवसहयोगे ।
देवसेना स्त्री० इन्द्रस्य सुतायां षष्ठीनाम्न्यां कार्त्तिकेयपत्न्याम्, मातृकाभेदे । ६त० । देवानां सेनायाञ्च ।
देवसेनापति पु० ६त० । कार्त्तिकेये । इन्द्रसुते, देवसेनानामोऽपत्य
देवस्व न० 'यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधा' इत्युक्ते धने
देवहूति स्त्री० स्वायम्भुवमनोः कन्यायाम् ।
देवा स्त्री० दिव-अच् । पद्मचारिण्यां लतायाम्, अपराजिताद्वी ।
देवागारिक त्रि० देवागारे नियुक्तः ठन् । देवागारे नियुक्ते
देवाजीव त्रि० देवं देवप्रतिमादिमाजीवति जीव अण् । (पूजारी) देवले । शिवि देवाजीवोऽप्यत्र ।
देवात्मन् पु० देवो विष्णुरात्मा यस्य । अश्वत्थे तस्य विष्णुरूपत्वम् अश्वत्थरूपी भगवानिति मन्त्रात् सिद्धम् ।
देवानांप्रिय पु० । अलुक् समासः । छागे । मूर्खे त्रि० ।
देवापि पु० चन्द्रवंश्ये नृपभेदे ।
देवार्ह न० देवानर्हति अण् । सुरपर्णे । सहदेवीलतायां स्त्री० । देवयोग्यमात्रे त्रि० । [देवायतनमप्यत्र ।
देवालय पु० देवानामालयः । स्वर्गे, देवप्रतिमादीनां गृहे च
देवावास पु० ६त० । अश्वत्थवृक्षे ।
देविका स्त्री० दिव-ण्वुल् । "अर्द्धयोजनविस्तारां पञ्चयोजन-मायताम् । एतावद्देविकामाहु"रित्युक्ते नदीभेदे धुस्तूरे च ।
देवी स्त्री० दीव्यति दिव अच् गौ० ङीप् । दुर्गायाम्, मूर्वायां, पृक्कायाञ्च । देवस्य पत्नी ङीप् । देवपत्न्यां, मांधीकृता अभिषेकायां राजवनितायां, विप्रस्त्रीणामुपाधौ च देव्यन्ता विप्रयोषित' इत्युक्तेः ।
देवृ पु० दिव-ऋ । देवरे स्वामिनः कनिष्ठ भ्रातरि ।
देवेश न० ६त० । महादेवे । तत्पत्न्यां दुर्गायां स्त्री० ङीप् ।
देवेष्ट पु० देवानामिष्टः । गुग्गुलौ । देवमेदजातत्वात् देवप्रिय त्वमस्य । वनबीजपूरके स्त्री० ।
देवोद्यान न० ६त० देवोद्यानानि चैत्ररथं मिश्रकं सिध्रका-ख्यम् । नन्दनश्चेति चत्वारोऽमुहैषु चतुर्षु वनेषु ।
देश पु० दिश-अच् । भूगोलविभागमात्रे कुरुपञ्चालादिषु मनि-ब्रजजनपदेषु स्थानमात्रे च ।
देशरूप न० देशनं देशः प्रशस्तदेश० उचिते समञ्जसे ।
देशिनी स्त्री० दिशति दिश-करणत्वा कर्त्तरिप्रदेशन्यां तिनि । तर्जन्याम् ।
देशान्तर न० अन्योदेशः मयूर० । 'माघो दश विंशदूर्ध्वं गिरि वा व्यवधायक । महानदान्तरं यत्र यद्देशान्तर-

उच्यते, इत्युक्ते देशभेदे ज्योतिषोक्ते लग्नेहलग्नयोर्मध्य-
——— देशावर्त्ति देशावधिके देशे तदवधिके अल्पयोजनादौ च।
देशिक पु० देशेन प्रसित ठन्। पथिके। देशोदेशनोपदेश
तत्र साधु ठन्। गुरौ। [तज्ज्ञ्यान्।
देशिनी स्त्री० दिशति दिश कर्त्तरि कर्म्मत्वविवक्षायां णिनि।
देश्य न० दिश-ण्यत। पूर्व्वपक्षे। देशमर्हति यत्। देशयोग्ये
त्रि०। ~ ज्योतिषोक्ते लग्ने च। भावे घञ् लेपने पु०।
देह पु०न० दिह घञ्। स्थूलसूक्ष्मकार्य्यकारणरूपे शरीरे
देहधारक पु०न० देहं धारयति धृ-णिच् ण्वुल्। अस्थि।
देहभृत् पु० देहं बिभर्त्ति भृ क्विप्। जीवे।
देहयात्रा स्त्री० देहो याति गच्छत्यनेन या-करणे ष्ट्रन् न
ङीप्। शरीररक्षासाधने भोजने। इत०। मरणे तदुप
लक्षिते यमपुरीगमने च।
देहली(लि) देहं लेपनं लाति गृह्णाति ला-क गौरा० ङीष् पृ०
वा ह्रस्वः। लेपनयोग्यायां द्वारपिण्डिकायां, (देयाल)
कपाटस्याऽध काष्ठखण्डे च।
देहसार पु० इत०। मज्जनि। [चार्वाके।
देहात्मवादिन् पु० देहमेव आत्मतया वदति वद-णिनि।
देहिन् त्रि० देह+अस्त्यर्थे इनि। मायिनि देहात्माभिमानिनि जीवे
दैप शोधने भ्वा०पर०अक०सेट् पित्। दायति अदासीत् दायात्
दैतेय पु०दितेरपत्यम् दिति ढक्। असुरे। राहौ। दैत्योप्यत्र।
दैत्यगुरु पु० इत०। शुक्राचार्य्ये, दैत्याचार्य्यादयोप्यत्र।
दैत्यनिसूदन पु० दैत्यान् निसूदयति हिनस्ति सूद-णिच्
ल्यु। विष्णौ।
दैत्यमेदज पु० दैत्यानां मेदाज्जायते जन ड। गुग्गुलौ।
पृथिव्यां। स्त्री० मधुकैटभमेदजातत्वात्तस्यास्तथात्वम्।
दैत्या स्त्री० दैत्यस्य प्रिया यत्। दैत्यभार्य्यायाम्, सुरायां,
मुरानामगन्धद्रव्ये, चण्डौषधौ च।
दैत्यारि पु० इत०। विष्णौ। [त्रि०।
दैन न० दीनस्य भावः। दीनत्वे। दिने भव अण्। दिनभवे
दैनन्दिन त्रि० दिने दिने प्रतिदिनम् तत्र भवम् अण् नि०।
प्रतिदिनभवे।
दैनन्दिनप्रलय पु० ७त०। प्रलय समासानुसारेण प्रति-
दिनावसाने सर्व्वस्थवस्तूनां नाशे। विवरो तद्दभिधाने।
दैन्य न०दीनस्य भाव ष्यञ्। दीनत्वे, कार्पण्ये च।
दैव न०देवादागतम्, देवोदेवताऽस्य, देवस्येदं वा अण्। भाग्ये
फलोन्मुखे शुभाशुभकर्म्मणि, 'प्राग्जन्मनि कृतं कर्म्म शुभं
वा यदि वाऽशुभम्। तद्दैवमिति निर्दिष्टमित्युक्त्वा अदृष्ट
शुभं' इत्युक्ते पूर्व्वजन्मार्ज्जिते कर्म्मणि, दक्षिणहस्ताङ्गुलीना-
मग्ररूपे देवतीर्थे, मन्त्राणामनुष्ठापकदेवताज्ञाने, उत्पात-
ज्ञाने च। विवाहभेदे, त्रिविधभूतादिसर्गे च पु०। देव-
सम्बन्धिनि श्राद्धहोमादौ त्रि०।
दैवज्ञ पु०दैवं पूर्व्वजन्मार्जितशुभाशुभं जनानां जन्मलग्नादिना
जानाति ज्ञा क इत०। गणके ज्योतिर्विदि। वर्णादिना
शुभाशुभज्ञातायां स्त्रियां स्त्री० टाप्।
दैवत पु०न०। देव एव देवता तत प्रज्ञादाण्। देवे। देवतानां
समूहे अण्। देवसमूहे न०।
दैवतन्त्र त्रि० दैवस्य तन्त्रमायत्तम्। भाग्याधीने।
दैवपर त्रि० दैवमेव परं श्रेयः यस्य। दैवसारे यद्दविष्णे।
दैवप्रश्न पु० 'नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः। श्रूयते
तद्विदुर्धीरा दैवप्रश्नमित्युक्ते रात्रौ अकस्मात् आकाशादौ
श्रूयमाणे शुभाशुभसूचके वाक्ये।~
दैवलेखक पु० दैवं लिखति। गणके। [संज्ञकवाक्यादि।
दैववाणी स्त्री० देवस्येयम् अण् कर्म्म०। आकाशवाण्याम्
दैवसर्ग पु० देवकृत सत्वगुणकृत सर्गः। स्वर्गलोकभूत-
सर्गभेदे सात्त्विकांशरूपे।
दैवात् अव्य० दैवमतति क्विप्। हठादित्यर्थे।
दैविक न० देवोदेवताऽस्य ठक् 'देवानुद्दिश्य यच्छ्राद्धं दैविकं
तत् प्रचक्षते' इत्युक्ते देवोद्देशके श्राद्धे। देवस्येदं देवादागतं
वा ठक्। देवादागते देवसम्बन्धिनि च त्रि०।
दैवी स्त्री०देवस्येयम् अण्। सात्विकप्रकृतौ,'दैवी सम्पद्विमो-
क्षाये'ति गीता। देवसम्बन्धिन्यांश्च।
दैवोदासि पु०दिवोदासस्यापत्यम् अत इञ्। प्रतर्द्दने नृपे।
दैव्य न० देवेन कृतम् देवानामिदम् वा यञ्। भाग्ये।
देवसम्बन्धिनि त्रि०।
दैशिक त्रि० देशेन निर्वृत्तं देशस्येदं वा ठञ्। देशसम्बन्धिनि
न्यायोक्ते देशकृतसङ्क्षेपभेदे विशेषणसम्बन्धे च। स्त्रियां ङीप्
दैष्टिक त्रि० दिष्टं भागधेयमेव सर्व्वसाधनमिति यस्य मतिः
ठक्। भाग्याधीनतावादिनि।
दो छेदे दिवा०पर०सक०अनिट्। द्यति अदात्।
दोःशिखर न० इत०। स्कन्धे। [गति भ्वा० ङीप्।
दोग्ध पु० दुह तृच्। वत्से, गोपाले, दोहनकर्तरि त्रि०।
दोर्दण्ड पु० दोर्दण्ड इव दीर्घत्वात् कार्यसाधकत्वाच्च। बाहु-
दण्डे। एवं भुजदण्डादयोऽप्यत्र।
दोर्मूल न० इत०। कक्षे बाहुमूले। [दोलयाय दोलोदयत्र
दोल पु० दुल-भावे घञ्। श्रीकृष्णस्य दोलनरूपे उत्सवभेदे।

दोला स्त्री० दुल अच् टाप् व्य था। (डोली) यानभेदे, उद्यानादौ क्रीडार्थं दोलनयन्त्रे च। स्वार्थे कन्। अत्रार्थे।

दोलायमान त्रि० दोला दोलनमाचरति क्यङ् शानच्। दोलनं कुर्वति दोलायन्त्रारूढे।

दोष पु० दुष-घञ्। दूषणे पापे च 'वात पित्त कफश्चेति त्रयो दोषा समासत' इत्युक्तेषु वातादिषु, अलङ्कारोक्ते रसापकर्षाधायके दुष्टशब्दादिभेदे न्यायाद्युक्तेषु रागद्वेषमोहेषु च

दोषग्राहिन् त्रि० दोषानेव गृह्णाति न गुणान् ग्रह-णिनि। दोषग्राही गुणत्यागी चालनीव हि दुर्ज्जन' इत्युक्ते दुर्जने

दोषज्ञ त्रि० दोषान् जानाति ज्ञा क। पण्डिते, वातादिदोषज्ञे चिकित्सके च।

दोषत्रय न० दोषाणां त्रयम्। वातपित्तकफेषु।

दोषा अव्य० दुष-आच्। रात्रौ।

दोषाकर पु० दोषा रात्रिं करोति तस्मिन् कर: किरणो यस्य वा। चन्द्रे। दोषाणामाकरः दोषाश्रये पु०। [रिकायाम्

दोषाक्लेशी स्त्री० दोषा रात्रौ क्लिश्यति अच् टाप्। वनवर्बु

दोषैकदृक् त्रि० दोषे एव न गुणे एकादृग् यस्य। खले।

दोस्(षा) पु० दम करणे डोसि। भुजे, भागुरिमते टापि अत्वम्

दोह पु० दुह कर्मणि घञ्। दुग्धे 'यदोहयाटमेटहनी'ति स्मृति। आधारे घञ्। दोहनपात्रे। भावे घञ्। दोहने।

दोहद पु०न० द्वयोः गर्भिणीतदपत्ययोर्हृदयमस्य नि०। गर्भं सुदक्षिणा दोहदलक्षणमिति रघु। दोहमाकर्षं ददाति दा क। (साद) गर्भिण्यभिलाषे लालसामात्रे। चिह्ने, गर्भलक्षणे च न०। इ० श्रौत्। दौहृदमप्यत्र।

दोहदिनी स्त्री० दोहदोऽस्त्यस्या इनि। गर्भिण्याम् 'ताश्च हृदयां नारीमाहुर्दोहदिनीमित्युक्तेः।

दोहनी स्त्री० दुह्यतेऽत्र आधारे ल्युट् ङीप्। दोहनपात्रे।

दोहा स्त्री० मात्रावृत्तभेदे। [र्थेऽपि च।

दौत्य न० दूतस्य भाव कर्म वा ष्यञ्। दूतस्य भावे तत्क-

दौर्भागिनेय पु० दुर्भगाया अपत्यम् ढक् इनङादेश द्विपदवृद्धि। दुर्भगापुत्रे।

दौर्मनस्य न० दुर्मनसो भाव ष्यञ्। बाह्याभ्यन्तरकारणैर्मनसो दौस्थ्ये, स्त्रीभावे दु खेदके चित्तस्यावसादे च।

दौवारिक पु० द्वारे नियुक्त ठक्। द्वारपाले। प्रतीहार्यां स्त्री०

दौष्कुलेय त्रि० दुष्कुलस्यापत्यम् ढक्। निन्दितकुलजाते।

दौहित्र पु० दुहितुरपत्यम् अण्। दुहितुः सुते 'दौहित्र अमुष्मिन्नुद्धरत्येष दुहितृविषया। अमुत्राया एवैव दौहित्रमिति चोच्यते इत्युक्तेषु खड्गादिषु न०।

द्यावापृथिवी स्त्री० द्वि०व०। द्यौश्च पृथिवी च द्व० द्यावादेश। स्वर्गपृथिव्योर्मिलितयो एवं द्यावाभूम्यादयोऽप्यत्र द्यावाभूमी जनयन्निति श्रुति।

द्यु अभिगमने अदा०पर०सक०अनिट्। द्यौति अद्यौषीत्।

द्यु पु० दिव-क्विप् ऊ० ह्रस्वः। अग्नौ, सूर्य्ये, अर्कवृक्षे च आकाशे, दिवसे च न०।

द्युत दीप्तौ भ्वा०आत्म०अक०सेट्। द्योतते अद्युतत् अद्योतिष्ट

द्युति(ती) स्त्री० द्युत-इन् वा ङीप्। कान्तौ, दीप्तौ, शोभायाम् प्रकाशे च। [द्युमण्यादयोऽप्यत्र।

द्युपति पु० ६त०। सूर्य्ये अर्कवृक्षे च एवं दिवोमणिरपि

द्युम्न० दिव मनति म्ना-क। धने, बले च।

द्यूत न० दिव-क्त। (जुया) पाशकक्रीडायाम् अप्राणिकरणक क्रीडायां, कैतवे च।

द्यूतकर त्रि० द्यूत करोति कृ-टक्। पाशकादिक्रीडाकारके (जुयारी) स्वुन्। द्यूतकारकोऽप्यत्र। क्विप्। द्यूतकृदप्यत्र

द्यूतपूर्णिमा स्त्री० द्यूतस्य द्यूताय पूर्णिमा। आश्विनपौर्णमास्यां कोजागरपौर्णमास्याम्।

द्यूतप्रतिपद्(दा) स्त्री० चतुर्थ्यर्थे ६त०। कार्त्तिकशुक्लप्रतिपदि। द्यूतप्रतिपदा नाम तत्र भावी गणेश्वर' इति स्मृति'

द्यूतवृत्ति पु० द्यूतमेव वृत्तिर्जीविका यस्य। सभिके।

द्यै तिरस्कारे भ्वा०पर०सक० अनिट्। द्यायति अद्यासीत्।

द्यो स्त्री० द्युत-डो। स्वर्गे, आकाशे च।

द्योत पु० द्युत घञ्। प्रकाशे, आतपे च। [दार्ढ्ये।

द्रढिमन् पु० दृढस्य भाव' इमनिच् दृढादेश'। दृढत्वे

द्रप्स(प्स) न० द्रप्यन्त्यनेन स(स) अम् च। घनभिन्ने द्रवीभूते दधि

द्रम गतौ भ्वा० पर० सक० सेट्। द्रमति अद्रमीत्।

द्रम्म पु० 'वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्र ते षोडश द्रम्म' इत्युक्ते परिमाणभेदे (काहन)।

द्रव पु० द्रु-अप्। रसे पलायने, गतौ, वेगे परीहासे च।

द्रवज पु० द्रवात् रसात् जायते जन-ड। गुडे। द्रवजाते त्रि०।

द्रवत्व न० द्रवति स्यन्दते द्रु-अच् तस्य भाव। आद्यो स्यन्दनकारणे पृथिवीजलतेजोवृत्ती गुणभेदे।

द्रवद्रव्य न० द्रवतीति द्रव कर्म०। दुग्धदधिजलादौ स्निग्धे द्रव्ये। [पर्य्याय।

द्रवन्ती स्त्री० द्रु शतृ। नद्याम्। मत्स्यमूषिकायां मूषिक

द्रविड पु० देशभेदे। तद्देशस्थे ब०व०।

द्रविण न० द्रु-इनन्। वित्ते, काञ्चने, पराक्रमे, बले च।

द्रविणनाशन पु० द्रविणं बलं नाशयति नश-णिच् ल्यु । शोभाञ्जनवृक्षे ।

द्रव्य न० द्रु यत् । वित्ते, विते विलेपनद्रव्ये, भेषजे, भव्ये, जतुनि विनये मद्ये, न्यायोक्ते पृथिव्यादिषु गुणवत्सु नवसु । व्याकरणोक्ते लिङ्गसंख्यान्वयिनि पदार्थे । द्रोर्वृक्षस्य विकारः तस्येदम् वा यत् । वृक्षविकारे तत्सम्बन्धिनि च त्रि० ।

द्रष्टृ त्रि० दृश तृच् । विचारकुशले चेतने, साक्षिणि, द्रष्टा दृशेः कर्त्तरीत्युक्ते दर्शनकर्त्तरि च ।

द्रा स्वप्ने पलायने अदा०अक०अनिट् । द्राति अद्रासीत् ।

द्राक् अव्य० द्रा कु । शीघ्रे झटितीत्यर्थे । [अद्राङ्क्षीत् ।

द्राक्ष काङ्क्षायां भ्वा० पर० सक० सेट् इदित् । द्राङ्क्षति

द्राक्षा स्त्री० द्राक्षि अ नि० नलोपः । मृद्वीकायाम् (किस-मिस) 'द्राक्षे ! द्रक्ष्यन्ति के त्वामिति जयदेवः ।

द्राख शोषणे अलमर्थे च भ्वा०पर०सक०सेट् । द्राखति अद्राखीत् । णिच् अदद्राखत् । [अद्राघीत् । णिच् अदद्राघत्

द्राघ आयासे सक्तौ भ्रमे च भ्वा० पर०सक सेट् । द्राघति

द्राघिमन् पु० दीर्घस्य भावः इमनिच् द्राघादेशः । दीर्घत्वे ।

द्राघिष्ठ त्रि० अतिशयेन दीर्घः इष्ठन् द्राघादेशः । अतिदीर्घे । ईयसुन् द्राघीयस् इत्यप्यत्र । स्त्रियां ङीप् ।

द्राड विभेदे भ्वा०आ०सक० सेट् । द्राडते अद्राडिष्ट ।

द्रावक पु० द्रु ण्वुल् । चन्द्रकान्तमणौ, जारे विदग्धे रसभेदे च ।

द्राविडी स्त्री० द्रवडे जाता अण् । सूक्ष्मैलायाम् ।

द्राह जागरे भ्वा०आत्म०अक० सेट् । द्राहते अद्राहिष्ट णिच् अदद्राहत् ।

द्रु गतौ भ्वा०पर०सक०अनिट् । द्रवति अदुद्रुवत् त ।

द्रु अनुभावे स्वा० पर० सक०अनिट् । द्रुणोति अद्रौषीत् ।

द्रु पु० द्रवत्यूर्द्ध्वं द्रु-कु डु वा । वृक्षे, शाखायाञ्च । गतौ स्त्री० ।

द्रुघण पु० द्रु-हन्ति अनेन हन करणे अप् द्रुघः कुत्वञ्च । मुद्गरे, परश्वधे, ब्रह्मणि चतुर्मुखे, भूमिचम्पके च ।

द्रुड मज्जने भ्वा० पर० सक० सेट् । द्रोडति अद्रोडीत् ।

द्रुड मज्जने तु० कु० पर० सक० सेट् । द्रुडति अद्रुडीत् ।

द्रुण कुटिलीकरणे तु० पर०सक० सेट् । द्रुणति अद्रोणीत् ।

द्रुणस् त्रि० द्रुरिव दीर्घा नासिकास्य नसादेशः णत्वञ्च । दीर्घनासिके जने । [कच्छप्याम् कर्णजलौकायाञ्च ।

द्रुणी स्त्री० द्रुण क गौरा० ङीष् । काष्ठाम्बुवाहिन्याम्

द्रुत पु० द्रवत्यूर्द्ध्वम् द्रु क्त । वृक्षे । शीघ्रेषु नृत्यगीतवाद्येषु शीघ्रे च न० । शीघ्रतावति, द्रवीभूते, पलायिते च त्रि० ।

द्रुपद पु० चन्द्रवंश्ये युधिष्ठिरादेः श्वशुरे नृपभेदे ।

द्रुम पु० द्रु शाखास्त्यस्य म । वृक्षे, पारिजाते, कुबेरे च ।

द्रुमामय पु० द्रुमस्यामय इव । लाक्षायाम् । [कर्णिकारे ।

द्रुमोत्पल पु० द्रुमेषु मध्ये उत्पलमिव तदाकारपुष्पमस्य ।

द्रुसल्लक पु० द्रुषु सल्लक इव । प्रियालवृक्षे ।

द्रुह अनिष्टचिन्तने दिवा० पर० वेट् । द्रुह्यति अद्रुहत् द्रोहिता द्रोग्धा द्रोढा ।

द्रुहिण पु० द्रुह इनन् किच्च । जगत्स्रष्टरि चतुर्मुखे ।

द्रू वधे गतौ च स्वा०क्र्या०च । उ०सक सेट् । द्रूणोति द्रूणुते द्रूणाति द्रूणीते अद्रावीत् अद्रविष्ट । [किट् । णिच् अदिद्रेकत्

द्रेक स्वने उत्साहे च भ्वा० आत्म०अक० सेट् । द्रेकते अद्रे

द्रै स्वप्ने भ्वा०पर०अक० अनिट् । द्रायति अद्रासीत् ।

द्रोण पु० द्रुण अच, द्रु-न वा । भारतप्रसिद्धे स्वनामख्याते योद्धृभेदे द्रोणकाके (डाडकाक) वृश्चिके मेघभेदे (घलघसिया) वृक्षभेदे आढकचतुष्टयरूपे परिमाणे जलाशयभेदे च तडागशब्दे लक्षणं द्रष्टव्यम् ।

द्रोणकाक पु० कर्म० । काकभेदे (डाडकाक) । [राम्नायाम् ।

द्रोणगन्धिका स्त्री० द्रोणपुष्पस्येव गन्धो यस्याः स्वार्थे कन् ।

द्रोणि(णी) स्त्री० द्रुण इन् वा ङीप् । जलाद्याधारे पात्रभेदे, नदीभेदे, शैलजनामगन्धद्रव्ये, काष्ठाम्बुवाहिन्याम् ।

द्रोणीदल पु० द्रोणीव दलमस्य । केतकीवृक्षे ।

द्रोह पु० द्रुह घञ् । अनिष्टचिन्तने ।

द्रोहचिन्तन न० द्रोह एव चिन्तनम् । परानिष्टचिन्तने ।

द्रौणायन पु० द्रोणस्यापत्यं फक् । अश्वत्थाम्नि ।

द्रौणिक त्रि० द्रोणं तस्मिन् समावेशयति पचति वा ठक् । द्रोणमितधान्यवपनयोग्ये क्षेत्रे द्रोणपचनयोग्ये पात्रे च ।

द्रौपदी स्त्री० द्रुपदस्यापत्यम् स्त्री अण् । द्रुपदराजात्मजायाम्

द्वन्द्व पु० द्वौ द्वौ सहाभिव्यक्तौ 'द्वन्द्व रहस्यमर्यादेत्या दिना नि० । व्याकरणोक्ते उभयपदार्थे प्रधाने समासभेदे । 'तुल्यमात्र शोकमोहौ रागद्वेषौ तथैव च । कामक्रोधप्रभृतयो द्वन्द्व शब्देन वर्णिता इत्युक्ते परस्परविरुद्धे, शीतोष्णादौ शोकाशोकादौ रहस्ये, कलहे, युद्धे, मिथुने, दुर्गे च ।

द्वन्द्वचर पु० द्वन्द्वीभूय चरति चर-पचाद्यच् । चक्रवाके

द्वय न० द्वाववयवावस्य अवयवे वा द्वि-अयट् । द्वित्वसंख्यायां न०स्त्री० ङीप् 'अतद्द्वयीजितवरी'ति नै० 'सद्द्वय मात्र गते'ति कु० द्वित्वसंख्यान्विते त्रि० । द्वयं गत समस्तीति कु० स्त्रियां ङीप् । [स्था कर्त्तरि क । द्वा (द्वा)स्थितोऽस्य

द्वा (द्वा)स्थ पु० द्वारि तिष्ठति स्था क वा विसर्गलोपः । द्वारपाले

द्वाचत्वारिंशत् स्त्री० द्व्यधिका चत्वारिंशत् द्वौ च चत्वारिंशच्च वा आत्वम्। (बेयालिश) संख्याभेदे द्वाचिंशदादयोऽप्यत्र।

द्वादश त्रि० द्वादशानां पूरण डट्। येन द्वादशसंख्या पूर्य्यते तस्मिन्। [संख्याभेदे दिराइत्ता दश विंशतिसंख्यायाम्

द्वादशन् पु० द्वौ च दश च द्व्यधिका वा दश आत्वम् (बारो)

द्वादशकर पु० द्वादश करा हस्ता यस्य। कार्त्तिकेये वृह-स्पतौ च द्वादशहस्तादयोऽप्यत्र। [द्वादशलोचनादयोऽप्यत्र।

द्वादशनेत्र पु० द्वादश नेत्राण्यस्य। षडानने कार्त्तिकेये।

द्वादशाङ्गुल पु० द्वादश अङ्गुलय प्रमाणमस्य तद्धितार्थे द्विगुः तद्धितस्य लुकि अच् समा०। वितस्तिप्रमाणे। [च।

द्वादशात्मन् पु० द्वादश आत्मानो मूर्त्तयोऽस्य। सूर्य्ये, अर्कवृक्षे

द्वादशायुस् पु० द्वादश वर्षमायुर्यस्य। कुक्कुरे।

द्वापर पु० द्वौ परौ प्रकारौ विषयौ वा यस्य पृ० आत्वम्। संशये सत्यत्रेतानन्तरे युगभेदे। द्व्यङ्कसङ्ख्यान्वितपाशकपार्श्वे च।

द्वापराय पु० पाशकस्य द्व्यङ्कसङ्ख्यान्वितं पार्श्वं द्वापरं तस्य अय उत्तानतया पतनम्। द्यूतभेदे द्व्यङ्कान्वितपार्श्वस्योत्तान-तया पतने। [गौतमे मुनौ च।

द्वामुष्यायण पु० द्वयोरमुयोरपत्यम्। नि०। द्वयोः पुत्रे।

द्वार् स्त्री० दृ-वरणे णिच्-क्विप्। गृहादिनिर्गमनस्थाने, प्रतीहारे, उपाये, मुखे च। [उपाये, मुखे च

द्वार न० दृ-णिच् अच्। गृहादिनिर्गमनस्थाने, प्रतीहारे,

द्वारका स्त्री० द्वारेण प्रशस्तद्वारेण कायति कै-क। समुद्रसन्नि-कटे तीर्थभेदे द्वारवत्यादयोऽप्यत्र।

द्वारपेश पु० ह्र्त०। श्रोत्ररन्ध्रे। [लुक् च। प्रतावच्युतार्थे।

द्वारप त्रि० द्वारं पाति रक्षति पा-क। द्वारपाले। पाल-अण्,

द्वारयन्त्र न० ह्र्त०। तालके। (ताला) (कुलुप) ख्याते पदार्थे

द्वारावती स्त्री० द्वाराणि मोक्षोपायाः सन्त्यस्याम् मतुप् पूर्व्व दीर्घ। तीर्थभेदे पुरी द्वारावती चैव सप्तैता इति पुराणम् द्वार+अस्त्यर्थे इनि। द्वारिकाप्यत्र।

द्वारिन् त्रि० द्वारं पात्यस्य नास्त्यस्य इनि। द्वारपाले।

द्वाविंशति स्त्री० द्व्यधिकाविंशति द्वौ च विंशतिश्च आत्वम्। (बाइस) सङ्ख्याभेदे।

द्वि त्रि० द्वि०व०। दृ-ड। द्वित्वसङ्ख्यान्विते।

द्विक पु० द्वौ कौ ककारौ यत्र। काके, कोके, द्व्यवयवम् कन् द्वित्वसङ्ख्यायाम् तद्वति च न०। एकं द्विकं त्रिकञ्चेति कारिका।

द्विककुद् पु० द्वे ककुदे यस्य अन्त्यलोप'। उष्ट्रे।

द्विगु पु० व्याकरणोक्ते समासभेदे। द्व०। गोद्वयस्वामिनि त्रि०

द्विगुण त्रि० द्वाभ्यां गुण्यते गुण-कर्म्मणि क। द्वाभ्यां गुणिते

द्विगुणाकृत त्रि० द्विगुणं-कृत्वा कृष्टम् डाच्+कृ-क्त। द्वि-वारकृष्टे क्षेत्रे।

द्विज पु० द्विर्जायते जन ड द्वशो सङ्ख्याया वारार्थत्वम्। ब्राह्मणे ब्राह्मणादिवर्णत्रये, 'जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते' इति स्मृतिः। दन्ते, अण्डजे विहगादौ, तुम्बुरुवृक्षे च

द्विजकुत्सित पु० ३त०। श्लेष्मातकवृक्षे तत्फलस्य द्विजाना मभक्ष्यत्व तु तन्निन्द्यत्वम्।

द्विजदेव पु० द्विजेषु देवश्च। ब्राह्मणे, ऋषौ च।

द्विजन्मन् पु० द्वे जन्मनी यस्य। ब्राह्मणक्षत्रियवैश्यरूपवर्ण त्रये, 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने, इति स्मृति दन्ते, अण्डजे च।

द्विजबन्धु पु० द्विजो बन्धुर्यस्य तद्वंशोत्पन्नत्वात्। स्वकार्य्य-रहितेषु जन्ममात्रोपजीविषु अधमेषु ब्राह्मणक्षत्रियवैश्येषु

द्विजराज पु० ६त० टच् समा०। चन्द्रे, अनन्ते, गरुडे च।

द्विजवर पु० द्विजेषु वर। विप्रे। द्विजवर्य्यद्विजोत्तम दयोऽप्यत्र

द्विजप्रिय पु०३व०। राजमाषे (बरवटी)। [कागम्बद्रव्ये च।

द्विजा स्त्री० द्विर्जायते जन-ड टाप्। पालङ्क्यां भार्ग्यां, रेणु-

द्विजाति पु० द्वे जाती जन्मनी यस्य। 'ब्राह्मण क्षत्रियो वैश्य स्त्रयो वर्णा द्विजातय' इति मनूक्ते वर्णत्रये 'मातुरग्रेऽधिज-ननं द्वितीयं मौञ्जीबन्धने' इत्युक्तेस्तेषां तथात्वम्।

द्विजिह्व पु० द्वे जिह्वे यस्य। सर्पे। खले, चौरे, दु साध्ये च त्रि०

द्वितय त्रि० द्वाववयवावस्य द्व्यवयवं वा द्वि-तयप्) द्वित्वसङ्ख्या-न्विते 'यदि पावौ द्वितयेऽपि तेऽफला' इति भारविः स्त्रियां ङीप्। द्वित्वसङ्ख्यायाञ्च न०।

द्वितीय त्रि० द्वयो' पूरण तीय। द्वयो पूरणे। चन्द्रस्य द्वितीयकलाक्रियारूपे तिथौ स्त्री० भागार्थेऽण्। द्वितीये भागे। [कृष्टे क्षेत्रे।

द्वितीयाकृत त्रि० द्वितीयं कृत्वा कृष्टम् डाच्+कृ-क्त। द्विवा

द्विदत् त्रि० द्वौ दन्तावस्य वयसि दन्तस्य दत्रादेशः। द्विदन्तो-त्पत्तिमद्वयस्के वृषादौ स्त्रियां ङीप्।

द्विदैव पु० द्वौ देवावस्य अण् उत्तरपदवृद्धि'। विशाखानक्षत्रे तस्याः शक्राग्निदेवतात्वात् तथात्वम्।

द्विधा अव्य० द्विप्रकारम् द्वि+धाच्। द्विप्रकारे।

द्विधालेख्य पु० द्विधा लेख्यां रेखामर्हति यत्। हिन्ताल-वृक्षे। द्विप्रकारलेखनीये त्रि०।

द्विप पु० द्वाभ्यां शुण्डमुखाभ्यां पिबति पा-क। हस्तिनि।

द्विपद पु० द्वे पदे यस्य। मनुष्ये, देवे, पक्षिणि, राक्षसे, च

धमनि(नी) स्त्री० धम-अनि वा ङीप् । नाड्यां, शिरायां, हट्ट
विलासिन्यां, ग्रीवायां, हरिद्रायाञ्च । [(घोपा)
धम्मिल्ल पु० शौ० धम-विच् मिल क इ० कर्म० । संयतेषु केशेषु
धर पु० धृ-अच् । पर्वते, कूर्मराजे, वसुभेदे कार्पासतूले च ।
धरण पु० धृ-ल्युट् । पर्वतभेदे, लोके, सूर्ये, धान्ये 'दिवाकरे
सेतौ च । चतुर्विंशतिरक्तिकामाने दशरक्तिकापरिमाणे च ।
धरणि पु० धृ-अनि वा ङीप् भूमौ, कन्दविशेषे, कन्दाख्ये
वनकन्दे च स्त्री० ।
धरणि(णी)धर पु० धरणिं(णीं) धरति धृ-अच् । पर्वते
विष्णौ, कच्छपे च । [नाड्याम्
धरा स्त्री० धृ-अच् । पृथिव्याम्, गर्भाशये जरायौ, मेदोवहायां
धराधर पु० धरां धारयति धृ-अच् । पर्वते वराहरूपे विष्णौ च
धरामर पु० धरायाममर इव । ब्राह्मणे एवं भूदेवादयोऽप्यत्र ।
धरित्री स्त्री० धृ-इत्र गौरा० ङीप् । भूमौ ।
धर्म्म पु०न० । धृ मन् । शास्त्रविहितकर्म्मानुष्ठानजन्ये भावि-
फलसाधनभूते शुभादृष्टे 'श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्मः'
इत्युक्ते श्रौते स्मार्त्ते कर्म्मणि । 'विहितक्रियया साध्यो धर्म्मः
पुंसः गुणो मतः' इत्युक्ते कर्म्मजन्ये अदृष्टे च आत्मनि,
देहधारणात्, जीवे, आचारे, वस्तुगुणरूपे, स्वभावे, उप-
मायाम्, यागादौ, अहिंसायां न्याये, उपनिषदि, यमे,
सोमाध्यायिनि, सत्सङ्गे, धनुषि, ज्योतिषोक्ते लग्नात्
नवमस्थाने च । दानादौ न० ।
धर्म्मक्षेत्र न० 'ब्रह्मवेदि कुरुक्षेत्र पञ्चरामहृदान्तरम् । धर्म्मक्षेत्रं
कुरुक्षेत्रं द्वादशयोजनावधी'त्युक्ते कुरुक्षेत्रे । ६त० । धर्म्मस्थाने
धर्म्मघट पु० धर्म्मार्थी घट । सौरवैशाखे प्रत्यह दातव्ये सुग-
न्धोदकपूर्णे घटे । [भार्य्यायाम्
धर्म्मचारिणी स्त्री० धर्म्मं दाम्पत्यधर्म्मं चरति चर णिनि ।
धर्म्मदान न० 'पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्म्मबुद्ध्या यत् धर्म्मदानं प्रचक्षते' इत्युक्ते प्रयोजना
न्तरानुद्देशेन दाने ।
धर्म्मद्रवी स्त्री० धर्म्मजनको द्रवो यस्याः । 'विष्णुपादाप्रसंभूते ।
गङ्गे त्रिपथगामिनि । धर्म्मद्रवीति विख्याते' इत्युक्तायां
गङ्गायाम् । [जटादिधारिणि
धर्म्मध्वजिन् त्रि० धर्म्मो ध्वजमिवास्त्यस्य इनि । जीविकार्थं
धर्म्मपत्नी स्त्री० धर्म्मार्थं पत्नी । प्रथमं समूढायां सवर्णायाम्
स्त्रियां, कीर्त्तौ, वाचि, स्मृतौ, मेधायां, धृतौ, क्षमायाञ्च ।
धर्म्मपुत्र पु० ६त० । युधिष्ठिरे । [समा० । यमे, युधिष्ठिरे च ।
धर्म्मराज पु० धर्म्मेण राजते पचाद्यच् । धर्म्मस्य राजा वा टच्

धर्म्मलक्षण न० धर्म्मो लक्ष्यतेऽनेन लक्ष ल्युट् । 'धृतिः क्षमा
दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोध
दशकं धर्म्मलक्षण'मित्युक्ते धृत्यादौ दशके ।
धर्म्मवाणिजिक पु० वणिगेव स्वार्थे ठक् वाणिजिकः ७त० ।
पुण्यकर्म्मफलाभिलाषुके । [नाय दातरि
धर्म्मवैतसिक पु० पापेन धनमुपार्ज्यात्मनो धार्म्मिकत्वख्याप-
धर्म्मशास्त्र न० । धर्म्मप्रतिपादकं शास्त्रम् । मन्वादिप्रयुक्ते
स्मृतिशास्त्रे ।
धर्म्मशील त्रि० धर्म्मं शील सततमनुष्ठेय यस्य । धार्म्मिके ।
धर्म्मसंस्थापन न० धर्म्मस्य सम्यक् अधर्म्मनिराकरणेन स्थाप
नम् । 'वेदोदितधर्म्मव्यवस्थापने धर्म्मसंस्थापनार्थाय सम्भ
वामि युगेयुगे इति पुराणम् ।
धर्म्मसंहिता स्त्री० धर्म्मस्यैव संहिता यत्र संहिता सम्+धा-
क्त । मन्वादिप्रोक्ते धर्म्मप्रतिपादनार्थे शास्त्रे ।
धर्म्मात्मन् पु० धर्म्म आत्मा स्वभावो यस्य । धर्म्मानुगतचित्ते ।
धर्म्माधिकरण पु० धर्म्मोऽर्थमधिक्रियतेऽसौ कर्म्मणि ल्युट् ।
'सम शत्रौ च मित्रे च धर्म्मशास्त्रविशारद । विप्रमुख्य
कुलीनश्च धर्म्माधिकरणो भवे'दित्युक्ते धर्म्माध्यक्षे । ६त० ।
'धर्म्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम् । यत्राधिक्रियते
स्थाने धर्म्माधिकरणं हि त'दित्युक्ते विचारस्थाने न० ।
धर्म्माध्यक्ष पु० 'कुलशीलगुणोपेत सर्व्वकर्म्मपरायण' ।
प्रवीण प्रेषणाध्यक्षो धर्म्माध्यक्षोऽभिधीयते' इत्युक्ते धर्म्मा
धिकरणे । ६त० । सर्व्वधर्म्मस्य साक्षिणि परमेश्वरे च ।
धर्म्माभास पु० धर्म्म इवाभासते आ-भास-अच्-अत् । 'श्रुतिस्मृति-
भ्यामुदितं यत् स धर्म्मः प्रकीर्त्तितः । अन्यशास्त्रेषु यः प्रोक्तो
धर्म्माभास स उच्यते' इत्युक्ते अन्यशास्त्रोक्ते अप्रशस्ते धर्म्मे ।
धर्म्मासन न० ६त० । राज्ञो धर्म्मतोऽर्थमार्थमासने ।
धर्म्मिन् त्रि० धर्म्म+अस्त्यर्थे इनि । पुण्यवति वस्तुगुणस्वरूप
धर्म्मयुक्ते त्रि० ।
धर्म्मिष्ठ त्रि० अतिशयेन धर्म्मी इष्ठन् इनेर्लुक् । अत्यन्तधर्म्मवति
धर्म्म्य त्रि० धर्म्मादनपेत धर्म्मेण प्राप्यो वा यत् । धर्म्मयुक्ते,
धर्म्मलभ्ये च । [हिंसायाञ्च ।
धर्ष पु० धृष घञ् । प्रागल्भ्ये, अमर्षे, शक्तिबन्धने, षण्ढे,
धर्षण न० धृष-भावे ल्युट् । परिभवे, दुष्टजने धर्षशब्दार्थे च ।
कर्म्मणि ल्युट् । अभिसारिकायां, स्त्रियाम् स्त्री० ङीप् ।
धर्षित न० धृष-भावे क्त । मैथुने । कर्म्मणि क्त । कृतधर्षे
तिरस्कृते च त्रि० । असत्यां स्त्रियाम् स्त्री० ।
धव गतौ भ्वा० पर० सक० सेट् इदित् । धन्वति अधन्वीत् ।

**धीशक्ति** स्त्री० ६त० । शुश्रूषादिषु अष्टसु धीगुणशब्दे दर्शितेषु बुद्धिगुणेषु ।

**धीसख** पु० धियः सखा टच्समा० । अमात्ये धीसचिवे ।

**धु** कम्पने स्वा० उभ०सक० अनिट् । धुनोति धुनीते । अधौषीत् अधोष्ट ।

**धुक्ष** सन्दीपने भ्वा०आत्म०सक०सेट् । धुक्षते । अधुक्षिष्ट ।

**धुत** त्रि०धु-क्त । त्यक्ते, कम्पिते च ।

**धुनि(नी)** स्त्री० धुनोति वेतसादीन् धु-निक् वा ङीप् । नदीमात्रे

**धुन्धुमार** पु० इक्ष्वाकुवंश्यनृपभेदे, इन्द्रगोपे कीटे, गृहधूमे (झुल)च

**धुर्(रा)** स्त्री०धुर्व क्विप् वा टाप् । चिन्तायाम्, रथाद्यग्रभागे, यानमुखे, भारे च ।

**धुरन्धर** त्रि० धुरं धारयति धृ णिच्-खच् मुम् ह्रस्वश्च । भारवाहके वृषादौ, भारसहे च । धववृक्षे पु० ।

**धुरीण** त्रि० धुरं वहति ख । भारवाहके, श्रेष्ठे च ।

**धुर्य्य** त्रि० धुरं वहति यत् । भारवाहके, श्रेष्ठे च ।

**धुर्व्व** हिंसे भ्वा० पर०सक०सेट् । धूर्वति अधूर्वीत् । धूर्णः ।

**धुवित्र** न० कृ०धु-इत्र । यज्ञादौ वह्निसंधुक्षणे ।

**धु(धू)स्तु(स्तू)र** पु० धुस-क्विप् तुर-क कर्म० ष० वा ह्रस्व । (धुतरा) ख्याते वृक्षे । [अधोष्ट

**धू** कम्पने भ्वा० उभ० सक० वेट् । धवतिते अधावीत् अधविष्ट

**धू** कम्पने वा०चुरा०उभ० पक्षे तुदा० कु०पर०सक० सेट् । धूनयति ते धुवति अदूधुनत् अधुवीत् ।

**धू** कम्पने स्वा० क्र्यादि० यादिश्च उभ० सक०वेट् । धूनोति धूनुते धुनाति धुनीते । अधावीत् अधविष्ट अधोष्ट 'धूनोति चम्पकवनानि धुनोत्यशोक मिति । 'वायुर्विधूनयती'ति च कविरहस्यम् ।

**धूत** त्रि० धू क्त । भर्त्सिते, कम्पिते, तर्किते, त्यक्ते च ।

**धूनक** पु० धूनयति संधुक्षते वह्निम् चु० धू ण्वुल् नुगागम । यक्षधूमे (धुना) । [अदूधुपत् त ।

**धूप** दीप्तौ चुरा०उभ० अक० दीपने सक० सेट् । धूपयति ते ।

**धूप** तापे अक०तापने सक०भ्वा०पर०सेट् । धूपायति अधूपायीत् अधूपीत् । [गन्धद्रव्योत्थे धूमे, तत्साधनद्रव्ये च ।

**धूप** पु० धूपयति रोगान् दोषान् वा धूप-अच् । गुग्गुलुप्रभृति

**धूपन** पु० धूप ल्यु । यक्षधूपे (धुना) ।

**धूपवृक्ष** पु० ६त० सरलवृक्षे । धूपोऽङ्गमस्य । धूपाङ्गमप्यत्र ।

**धूपित** त्रि० धूप-क्त वा आयाभाव । पथ्यादिगमनेन श्रान्ते, सन्तापिते च । [धूमे पदार्थे ।

**धूम** पु० धू मक् । आर्द्रकाष्ठजाते मेघकारणयोग्ये कारणे वह्नि

**धूमकेतन** पु० धूम-केतनो यस्य । वह्नौ । धूम इव केतन । तारापुञ्जात्मके धूमकेतौ उत्पातभेदे ।

**धूमकेतु** पु० धूमइव केतु । उत्पातरूपेऽशुभसूचके तारापुञ्ज भेदे । ६त० । वह्नौ धूमध्वजादयोऽप्यत्र ।

**धूमगन्धिक** न० धूमस्येव गन्धोऽस्त्यस्य ठन् । रोहिषतृणे ।

**धूममहिषी** स्त्री० धूमस्य महिषीव । कुज्झटिकायाम् ।

**धूमयोनि** पु० धूमोयोनिरस्य । मेघे,मुस्तके च । ६त० । वह्नौ आर्द्रकाष्ठे च । [तद्वति त्रि० ।

**धूमल** पु० धूमं धूमवद्वर्णं लाति ला-क । कृष्णलोहिते वर्णे ।

**धूमाभ** पु० धूमस्येवाभा यस्य । धूम्रवर्णे । तद्वति त्रि० ।

**धूमावती** स्त्री० महाविद्याभेदे । [हितं यत् । धूमसाधने त्रि०

**धूम्या** स्त्री० धूमानां समूह पाशादि० य । धूमसमूहे । धूमाय-

**धूम्याट** पु० धूम्या इव अटति अट-अच् । (फिङ्गा) पक्षिभेदे

**धूम्र** पु० धूमं तद्वर्णं राति रा-क०ष० । शिल्हके, खरलोमवर्णाभे कृष्णलोहिते वर्णे च । तद्वति त्रि० ।

**धूम्रक** पु० धूम्रइव कायति कै-क । उष्ट्रे । [प्रतिभेदे च

**धूम्रलोचन** पु० धूम्रे लोचने यस्य । कपोते, महिषासुरसेना-

**धूम्रवर्ण** पु० धूम्रो वर्णोऽस्य । शिल्हके, कृष्णलोहितवर्णे च । तद्युक्ते त्रि० । [इक्षे तस्या धूम्रधातृत्वा तथात्वम् ।

**धूम्रिका** स्त्री० धूम्रोवर्णः सारेऽस्त्यस्य ठन् । (शिशु) शिंशपा

**धूर** वधे गतौ च दि० आ०सक०सेट् । धूर्यते अधूरिष्ट । धूर्त्त

**धूर्जटि** पु० जट-सङ्घाते इन् ईधुरस्त्रैलोक्यचिन्ताया जटि सङ्घातोऽस्य । शिवे ।

**धूर्त्त** पु० धुर्व्व धूर-श्च क्त । धुस्तूरवृक्षे, चोरकवृक्षे, नायकभेदे, 'धूर्त्तोऽपरः चुम्बती'ति सा० द० । लोहकीटे, विड्लवणे च । द्यूतकारके, वञ्चके च त्रि० ।

**धूर्त्तक** पु० धूर्त्तइव वञ्चकइव स्वार्थे कन् । शृगाले ।

**धूर्वह** त्रि० धुरं वहति वह-अच् रेफे इको दीर्घः । भारवाहके धुरन्धरे । धुर्वह इति ह्रस्वयुक्तपाठस्तु प्रामादिकम् ।

**धूलि(ली)** स्त्री० धू लिक् वा ङीप् । रजसि परागे ।

**धूलिध्वज** पु० धूलिरेव ध्वजोऽस्य । वायौ ।

**धूलिपुष्पी** स्त्री० धूलिप्रचुरं पुष्पमस्या ङीप् । केतक्याम् । स्वार्थे कन् ह्रस्व । अत्रार्थे ।

**धूलिकदम्ब** पु० धूलीनां कदम्ब यत्र । कदम्बवृक्षे, वरुणवृक्षे, तिलिशवृक्षे च । ६त० । धूलीसमूहे न० ।

**धूश(ष)(स)** शोभने चुरा०उभ०सक०सेट् । धूश(ष)(स)यति ते अदूधुश(ष)(स)त् त ।

**धूसर** पु० धू सर किच्च म पत्वम् । गर्दभे, उष्ट्रे, कपोते,

तैलकारे, ईषत्पाण्डुवर्णे, कृष्णश्वेतवर्णे, शुक्लपीतवर्णे च तत्तद्वर्णवति त्रि० । [हस्तिशुण्डवृक्षे ।

धूसरपत्रिका स्त्री० धूसरं पत्रमस्यास्याः टन् । (हातिशुंडा)

धृ पतने भ्वा०आ०अक० अनिट् । धरते अधृत ।

धृ स्थितौ अक० धृतौ सक० भ्वा० उभ० अनिट् । धरति ते अधार्षीत् अधृत ।

धृ स्थितौ अक० धृतौ सक०तुदा०आ०अनिट । म्रियते अधृत

धृ धारणे, चुरा०उभ०सक०अनिट । धारयति ते अदीधरत् त

धृज गतौ भ्वा०पर०सक०सेट् इदित् । धृञ्जति अधृञ्जीत् [च

धृतराष्ट्र पु०चन्द्रवंश्ये दुर्योधनपितरि नृपभेदे नागभेदे,पक्षिभेदे

धृति स्त्री० धृ क्तिन् । तुष्टौ, धारणे, यागे, विष्कम्भादिके अष्टमे योगे, सुखे, धारणायाम्, अवसादेऽपि शरीरादेः स्तम्भनशक्तौ,अष्टादशाक्षरपादके छन्दोभेदे, अष्टादशसङ्ख्यायाञ्च । [धर्षित्वा धृष्ट्वा ।

धृष संहतौ अक० हिंसे सक०भ्वा०पर०सेट् । धर्षति अधर्षीत्

धृष प्रागल्भ्ये स्वा०पर०अक० सेट । धृष्णोति अधर्षीत् । धृष्ट

धृष सामर्थ्यबन्धने चुरा०आत्म० अक०सेट् । धर्षयते अदीधृषत अदधर्षत ।

धृष क्रोधे अभिभवे च वा चु० उभ० पक्षे भ्वा० सक० सेट् । धर्षयति ते धर्षति अदीधृषत् त अदधर्षत् त अधर्षीत् ।

धृष्णज् त्रि० धृष-न नजङ् । प्रगल्भे निर्लज्जे वेणुदले च (कञ्चौ)

धृष्णु त्रि० धृष क्नु । प्रगल्भे निर्लज्जे च ।

धृष्ट त्रि० धृष क्त । निर्लज्जे, प्रगल्भे, नायकभेदे च ।

धृष्टद्युम्न पु० धृष्टं प्रगल्भं द्युम्नं बलं यस्य । द्रुपदनृपपुत्रे ।

धेनु स्त्री० धयति सुतान् धे-नु इच्च । नवप्रसूतायां गवि ।

धेनुक पु० धेनुरिव इवार्थे कन् । असुरभेदे । हस्तिन्यां स्त्री० । स्वार्थे कन् । धेनौ । धेनुकहादयोऽप्यत्र

धेनुकसूदन पु० धेनुकं सूदयति हिनस्ति सूद ल्यु । श्रीकृष्णे

धेनुदुग्धकर पु० धेनोर्दुग्धमिव किरति कॄ अच् । गर्जरे(गाजर)

धेनुष्या स्त्री० धेनु+इवार्थे यत् सुक् च । ऋणशोधनार्थमुत्तमर्णाय बन्धकत्वेन दीयमानायां धेनौ ।

धैनुक न० धेनूनां समूहः ठक् । धेनुसमूहे ।

धैर्य न०धीरस्य भावः ष्यञ् 'स्थिरचित्तोन्नतिर्या तु तद्धैर्यमिति गीयते'इत्युक्ते मनसः स्थैर्ये, धीमत्त्वे, 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इत्युक्ते मनसो विकाराभावे अव्याकुलत्वे, विघ्नाद्युपस्थितावपि प्रारब्धापरित्यागहेतौ चित्तवृत्तिभेदे च ।

धैवत पु० 'गत्वा नाभेरधोभागं वस्तिं प्राप्योर्द्धगः पुनः । धावन्निव च यो याति कण्ठदेशं स धैवतः' इत्युक्ते कण्ठोत्थिते स्वरभेदे । [णिच् अदुधोरत् त

धोर गतिचातुर्ये भ्वा०पर०अक०सेट् । धोरति अधोरीत् ।

धोरण न० धोरत्यनेन धोर-ल्यु ल्युट् वा । हस्त्यश्वरथादौ याने । भावे ल्युट् । अश्वगतिभेदे ।

धोरणि(णी) स्त्री० धोर-अनि वा ङीप् । परम्परायाम् 'मद्यत्स्वलत्कनुमाधुरीधाराधोरणिधौतधामनी'त्युद्भटः ।

धौत त्रि० धाव क्त ऊठ् । मार्जिते, प्रक्षालिते, उत्तेजिते, शुभ्रे च । रजते न० ।

धौतकौषेय न० कर्म० । प्रक्षालिते कृमिकोषजाते वस्त्रे ।

धौरित न० धोर-क्त प्रज्ञाद्यण् । 'अश्वानां चतुरायां गतौ । स्वार्थे कन् । तत्रैवार्थे ।

धौरेय त्रि० धुरं वहति ढक । भारवाहके वृषादौ ।

ध्मा अग्निसंयुतौ दीर्घश्वासहेतुके शब्दभेदे भ्वा०पर० ताडनशब्देन वादने सक० अनिट् । धमति अध्मासीत् ।

ध्मात त्रि० ध्मा क्त । संधुक्षिते दीर्घश्वासहेतुकशब्दयुक्ते ।

ध्माक्ष आकाङ्क्षे सक० घोररवे अक० भ्वा० पर० सेट् इदित् । ध्माङ्क्षति । अध्माङ्क्षीत् । [काकोलिकायां स्त्री०गौ०ङीष्

ध्माङ्क्ष पु० ध्माक्षि अच् । काके, मत्स्यभक्षके पक्षिभेदे, भिक्षुके च

ध्माङ्क्षोली स्त्री० ध्माक्षि ओल गौ० ङीष् । काकोलीलतायाम्

ध्यान न०ध्यै ल्युट् । चिन्तने, ध्येयवस्तुविषयचिन्तने, चित्तस्यैकतानप्रवाहे ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्देन विख्याता परमानन्ददायिनी'ति वेदान्तोक्ते ब्रह्मविषये चित्तस्थैर्ये, 'ध्यै चिन्तायां स्मृतो धातुश्चिन्ता तत्त्वेन निश्चला । एतद् ध्यानमिह प्रोक्त'मिति तन्त्रोक्ते ध्येयस्य चित्तस्थिरतया निश्चये च ।

ध्याम न० ध्यायते पशुभिः ध्यै मन् । गन्धतृणे दमनकवृक्षे च । सञ्ज्ञायां कन् । रोहिषतृणे ।

ध्यै चिन्तने भ्वा०पर०सक०अनिट् । ध्यायति अध्यासीत् ।

ध्रज गतौ भ्वा० पर०सक०सेट् । ध्रजति अध्राजीत् अध्रजीत् अयमिदित् ध्रञ्जति अध्रञ्जीत् ।

ध्रण ध्वाने भ्वा०पर०अक०सेट् । ध्रणति अध्रणीत् अध्राणीत्

ध्रस कणशः आदाने क्र्या०पर०सक०सेट् । ध्रस्नाति अध्रसीत् अध्रासीत् । ध्रसित्वा ध्रस्त्वा । [यति ते अदिध्रसत् त

ध्रस उत्क्षेपे कणशः आदाने च चुरा०उभ०सक० सेट । ध्रास-

ध्राक्ष काङ्क्षे घोररवे च भ्वा० प०स०सेट् इदित् । ध्राङ्क्षति अध्राङ्क्षीत् । [अध्र खीत । णिचि अदध्राखत् ।

ध्राख शोषणे अलमर्थे च भ्वा० पर०सक० सेट् । ध्राखति

नक्षत्रात्मके खगोलस्थे राशिचक्रे। तन्त्रोक्ते मन्त्रग्रह-णोपयोगिचक्रभेदे च। [विष्णौ च

नक्षत्रनेमि पु० नक्षत्राणां नेमिरिव। ध्रुवाख्ये तारके, चन्द्रे

नक्षत्रमाला स्त्री० नक्षत्राणामिव माला। सप्तविंशतिमौक्तिकैर्निर्मिते हारभेदे। ६त०। नक्षत्रपङ्क्तौ।

नक्षत्रसूचक पु० नक्षत्राणि शुभाशुभतया सूचयति ण्वुल्। 'अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते। स पङ्क्तिदूषकः पापी ज्ञेयो नक्षत्रसूचकः' इति 'तत्त्वं ये न जानन्ति पञ्चाङ्गा नैव साधनम्। परवाक्येन वर्त्तन्ते ते वै नक्षत्रसूचकाः' इत्युक्ते सिद्धान्तानभिज्ञे ज्योतिर्विदि। स्त्रियां नक्षत्रसूचीत्यप्यत्र।

नक्षत्रेश पु० ६त०। चन्द्रे नक्षत्रपत्यादयोऽप्यत्र।

नख सर्पणे भ्वा०पर०सक०सेट्। नखति अनखीत् अनाखीत्।

नख पु०न०। न खं छिद्रमस्य। करजे अङ्गुल्यग्रस्थे कण्टके।

नखकुट्ट पु० नखान् कुट्टयति कुट्ट अण्। नापिते।

नखनिकृन्तन न० नखानि कृन्त्यन्तेऽनेन कृत ल्युट् ६त० मुम्। नखच्छेदनार्थे नापितास्त्रभेदे।

नखर पु०न०। न खं राति रा क। नखे। [नखायुधोऽप्यत्र।

नखरायुध पु० नखरमायुधं यस्य। सिंहे, व्याघ्रे, कुक्कुटे च

नखशङ्ख पु० नख इव शङ्खः। क्षुद्रशङ्खे।

नखाङ्क पु० नखमङ्क इव यस्य। व्याघ्रनखे न०।

नखी स्त्री० नखमस्त्यस्य अर्श आदित्वादच् गौरा० ङीप्। स्वनामख्याते, गन्धद्रव्ये।

नग पु० न गच्छति गम ड। पर्वते, वृक्षे च।

नगण पु० छन्दोग्रन्थोक्ते लघुत्रयवर्णत्रये। न गण्यते गण-अप् (मालकाकनी) वृक्षभेदे पाराबतपद्याम स्त्री०टाप्।

नगनन्दिनी स्त्री० ६त०। हिमालयपुत्र्यां दुर्गायाम्।

नगभिद् पु० नगान् भिनत्ति भिद-क्विप्। इन्द्रे। पर्वतभेदने त्रि०। [भेदायाम्।

नगभू स्त्री० नग एव भूरुत्पत्तिस्थानं यस्याः। क्षुद्रपाषाण-

नगर न० नगाः इव प्रासादाः सन्त्यत्र अस्त्यर्थे नग+र। 'पुरस्फ क्रियादिनिपुणैस्तथा वर्णैर्जनैर्युतम्। अनेकजातिसम्बद्धं नैकशिल्पिसमाकुलम्। सर्वदैवतसम्बद्धं नगरं त्वभिधीयते' इत्युक्तलक्षणे पुरभेदे। वा गौरा० ङीप्। नगर्य्यप्यत्र।

नगरन्ध्रकर पु० नगस्य क्रौञ्चपर्वतस्य रन्ध्रं करोति कृ-अच्। कार्त्तिकेये 'स नगरं नगरन्ध्रकरौजसः' इति रघुः।

नगरोत्था स्त्री० नगरादुत्तिष्ठति उद्+स्था-क। नगरस्थायां स्त्रियां, नागरमुस्तायाम्।

नगरौषधि स्त्री० ६त०। कदल्याम्।

नगाट पु० नगेषु वृक्षेषु अटति अच्। वानरे।

नगाधिप पु० नगानामधिपः। हिमालयपर्वते।

नगाश्रय पु० नगं पर्वतमाश्रयोऽस्य। हस्तिकन्दवृक्षे। पर्वतवासिनि त्रि०।

नगौकस् पु० नग ओको यस्य। पक्षिणि, शरभे, सिंहे च।

नग्न त्रि०नज क्त। विवस्त्रे। 'दिगम्बराख्ये बौद्धभेदे पु०। 'द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च। एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः' इत्युक्तेषु द्विकच्छादिषु, 'ऋग्यजुःसामसंज्ञेयं त्रयी वर्णावृतिर्द्विज।। एतामुज्झति यो मोहात् स नग्नः पातकी स्मृतः' इत्युक्ते वेदत्रयीरूपावरणत्यागिनि जने च।

नग्निका स्त्री० नग्नैव स्वार्थे कन्। अप्राप्तरजस्कायां स्त्रियाम्

नज व्रीडायां भ्वा०आ०अक० सेट्। नजते अनजिष्ट। नग्न

नञ् अव्य० न+अञ् ञिदत्त्वस्य नलोपविधानार्थं तेन अञितोन-ञादिलोपः नैकधेत्यादि। अभावे, निषेधे, अल्पत्वे, अप्राशस्त्ये, अतिक्रमे, ईषदर्थे, सादृश्ये, विरोधे भेदे च। तत्र सादृश्ये अब्राह्मणः। अभावे अपापम्। भेदे अघटः पटः। ईषदर्थे अनुदरी कन्या। अल्पत्वे अकेशा। विरोधे असुरः।

नट पु० नटति नट-अच्। नाटकादिदृश्यकाव्याभिनयकर्त्तरि नर्त्तकभेदे, जायाजीविनि वर्णसङ्करभेदे, अशोकवृक्षे, शोणाकवृक्षे, नले, किष्कुपर्वणि शोदनाइरिताले च।

नट नृत्ये हिंसने च भ्वा० पर०सक सेट्। नटति अनटीत् अनाटीत् अयोपदेशतया न णत्वम् प्रणटति। [णत्वम्।

नट भाषे द्युतौ च चु०उभ०अक०सेट्। नाटयति-ते अनीनटत्। न

नटन न० नट-ल्युट्। नृत्ये। [नादयोऽप्यत्र।

नटभूषण नटान् भूषयति भूष ल्यु। हरिताले। नटमण्ड-

नटी स्त्री० नट-अच्। गौरा० ङीष्। नलीनामगन्धद्रव्ये, वेश्यायाम्। नट+पुंयोगे ङीष्। नर्त्तक्यामिति स्त्री०।

नड भ्रंशे चु०उभ०सक० सेट्। नाडयति-ते अनीनडत् त। योपदेशत्वाभावान्न णत्वम्।

नड पु० नट अच्। नलाख्ये।

नडकीय त्रि० नडाः सन्त्यस्य छ कुक् च। नडवति देशे।

नडप्राय पु० नड प्रायो यत्र। नडबहुले देशे।

नड्या स्त्री० नडानां समूहः पाशा० य। नडसमूहे। [ङीप्।

नड्वत् त्रि०नडाः सन्त्यस्य ड्मतुप् मस्य वः। नडयुक्ते देशे स्त्रियां

नड्वल त्रि० नडाः सन्त्यस्य ड्वलच्। नडयुक्ते देशे।

नत त्रि० नम-क्त। नमने ज्योतिषोक्ते दिनार्द्ध

जन्मनाडिकाया पु०। विस्तरस्तु शब्दार्थभिधाने। तगरमूले न०।

**नतद्रुम** पु० कर्म्म०। लतायानवृक्षे।

**नतनासिक** त्रि० नता नासिकाऽस्य। चिपिटनासिके (खान्दा)

**नताङ्गी** स्त्री० स्तनजघनभारात् नतमङ्गमस्या ङीप्। नार्य्याम्

**नति** स्त्री० नम क्तिन्। नम्रतायाम् 'त्रिकोणमथ षट्कोणमर्द्ध-चन्द्र प्रदक्षिणम्। दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षण-मित्युक्तो धर्म्मभेदे नमनभेदे च एतल्लक्षण शब्दार्थभिधाने।

**नद्** सन्तोषे भ्वा०पर०अक० सेट् इदित्। नन्दति अनन्दीत् ननन्द। प्रनन्दति।

**नद** पु० नद-अच। सिन्धुभैरवशोणादौ पश्चिमे जलप्रवाहे

**नदी** स्त्री० नद अच् नदट इति निर्द्देशात्। टित्वात् ङीप्। गङ्गायमुनादिषु गुरुलघुजलप्रवाहेषु 'धनु सहस्राण्यष्टौ च गतिर्यासा न विद्यते। न ता नदीशब्दवहा' इत्युक्ते धनु-सहस्राष्टकान्यूनदेशवाहिन्यामेव नदीशब्दप्रवृत्तिः। तासु च 'प्राच्या पुर्व्वा प्राङ्मुखी वाहिनी स्यात नदी पथा हाहिनी निश्चयेन' इति 'प्रायो महद्वहा गुर्व्वी लघ्वी शैघ्रवहा स्मृता' इति च विशेष।

**नदीकान्त** पु० नदी कान्ता यस्य। समुद्रे हिज्जलवृक्षे, सिन्धुवारके च। जम्बूवृक्षे काकजङ्घौषधौ च स्त्री०।

**नदीकूलप्रिय** पु० नदीकूल प्रिय यस्य। जलवेतसे।

**नदीज** पु० नद्या समीपे जायते जन ड। अर्ज्जुनवृक्षे अग्निमन्थवृक्षे च। हिज्जलवृक्षे, स्रोतोञ्जने च न०। नदीजातमात्रे त्रि०। 'नदीन समुद्रमवनारकेत'रिति भारतम

**नदीन** पु० इन०। समुद्रे वरुणे च। नदीभिन्ने त्रि०।

**नदीमातृक** त्रि० नदी मातेव पोषिकाऽस्य। नदीजलसम्पन्न व्रीहिपालित देशे।

**नदीपाु** त्रि० नद्या घात् जानन्ति ष्णा क भलम्। नदी स्नानकृभवे यस्य यस्या नद्या यथावतरणीय तत्स्थानयुक्ते

**नदीसर्ज्ज** पु० नद्या सृज्यतेऽसौ सृज-घञ्। अर्ज्जुनवृक्षे।

**नद्ध** त्रि० नह क्त। बद्धे ग्रहृते च।

**नद्ध्री** स्त्री० नह्यतेऽनया ष्ट्रन् ङीप्। चर्म्मनिर्म्मितरज्ज्वाम्।

**ननन्दृ** स्त्री० न नन्दति ह्रतायामपि सेवाया न तुष्यति न+नन्द-ऋन्। भर्त्तृभगिन्याम् (ननद) पु० शब्दौ। ननान्दाप्यत्र।

**ननु** अव्य न नुदति नुद डु। प्रश्ने, अवधारणे निश्चये, अनुमतौ अनुनयायाम्, अनुनये, सान्त्वने, सम्बोधने आमन्त्रणे, पर कृतौ अधिकारे सम्भ्रमे, इष्टोक्तौ अध्यवादे, स्तुतौ, आक्षेपे, प्रत्युक्तौ, उपेक्षायाञ्च।

**ननुच** अव्य० ननुच च समाहार द्व०। विरोधोक्तौ।

**नन्द** पु० नन्द अच्। श्रीकृष्णस्य पितरि गोपभेदे महानन्दि सुते नृपतिभेदे आनन्दे, निधिभेदे, प्राग्दक्षिणद्वारगृह, वाद्यभेदे च।

**नन्दक** पु० नन्दयति नन्द णिच् ण्वुल। हरे-खड्गे, भेके च। आनन्दजनके, कुलपालके च त्रि०।

**नन्दकिन्** पु० विद्यामयोनन्दकोऽसिरस्य इनि। विष्णौ।

**नन्दगोपित** स्त्री० इत०। राज्ञायाम। भट्टि

**नन्दथु** पु० नन्द अथुच्। आनन्दे 'यस्याभो तस्य नन्दथु'रिति

**नन्दन** पु० नन्दयति नदि-णिच्। पुत्रे भेके, पर्व्वतभेदे 'यत्र-क्षीरास्तथा गावो नन्दन नन्दने प्रिय।' इत्युक्ते ६०वर्षमध्ये वत्सरभेदे च। इन्द्रोद्याने न०। आनन्दकारके त्रि०।

**नन्दनन्दन** पु० नन्दस्य नन्दन। श्रीकृष्णे नन्दसुतादयोऽप्यत्र

**नन्दनन्दिनी** स्त्री० इत०। दुर्गायाम 'नन्दगोपकुले जाता यशोदागर्भसम्भवे'ति चण्डी। नन्दसुतादयोऽप्यत्र।

**नन्दा** स्त्री० नन्द अच्। 'नन्दत सुरलोकेषु नन्दने वसतेऽथवा। हिमाचले महापुण्ये नन्दा देवी ततोऽभव दित्युक्ताया गौर्याम् अलङ्कारे, (नाद) सम्पदि, 'प्रतिपद्षष्ठ्येकादश्यो नन्दा ज्ञेया मनीषिभिरित्युक्तेषु तिथिभेदेषु 'सिते लोकवारे तु नन्दे'ति श्रुतेति, सूर्य्यसङ्क्रान्तिभेदे ननान्दरि, तीर्थभेदे च।

**नन्दि** पु० नन्द इन्। स्वनामख्याते वृषे आनन्दे 'कौसल्या-नन्दिवर्द्धनो राम इति रामायणम्। महादेवस्य पार्श्व-चरभेदे नन्दिकेश्वरे। द्यूताङ्गे पु०न०।

**नन्दिकेश्वर** पु० शिवस्य पार्श्वचरभेदे। तेन प्रोक्तमण् तस्य लुक्। पुराणभेदे। [नन्दिकेश्वरादयोऽप्यत्र।

**नन्दितरु** पु० नन्दयति णिच् णिनि कर्म्म०। धवहृक्षे।

**नन्दिन्** पु०नन्द-णिनि। शिवद्वारपाले। गर्द्दभाण्डे, वटद्रुमे च

**नन्दिनी** स्त्री०नन्दयति नन्द-णिनि। वशिष्ठधेनौ सुतायाम्, उमायां, गङ्गाया, ननान्दरि, व्याडिमातरि, रेणुकौषधौ च

**नन्दिनीसुत** पु०इत०। व्याकरणस्य सङ्ग्रहकारके व्याडिमुनौ

**नन्दिपुराण** न० नन्दिना प्रोक्त पुराणम्। उपपुराणभेदे।

**नन्दिवर्द्धन** पु० नन्दि नन्द नन्दिन वा वर्द्धयति वृध णिच् ल्यु। तनये मित्रे शिवे च। आनन्दवर्द्धके त्रि०।

**नन्दीमुख** पु० नन्द इन् वा ङीप् कर्म्म०। जलपक्षिभेदे, मुख (हट) कुवेरके, मेघमल्लिकायाञ्च। [नन्दीपादयोऽप्यत्र।

**नन्दीश** पु० नन्दी ईश इव। शिवद्वारपाले। इत०। शिवे

**नन्द्यावर्त्त** पु० 'दक्षिणावर्त्तकान्तिन्दत्रय यत पश्चिमाद्वारम्। पूजनीयोत्तरद्वाराय नन्द्यावर्त्त वदन्ति त'दित्युक्ते गृहभेदे, भगरवृक्षे, मत्स्यभेदे च।

**नपुंसक** पु०न० न स्त्री न पुमान् नि० । 'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावे नपुंसक'मित्युक्तलक्षणे क्लीवे । शब्दे तद्व्यवहारस्तु सत्त्वरजोभ्यां साम्यावस्थापन्नाभ्यामुत्पन्नत्वात् अनादिसंस्कारविशेषवत्त्वाद्वा

**नप्तृ** पु० न पतन्ति पितरोऽनेन न+पत तृच नि० । पौत्रे दौहित्रे च । पौत्र्यां दौहित्र्याञ्च स्त्री० ङीप् ।

**नभ** न० नभ अच् । आकाशे । श्रावणे मासि पु० ।

**नभ(स्सु)सद्** पु० नभसि सीदति सद क्विप् । देवे ।

**नभश्चर** पु० नभसि चरति चर अच् । मेघे वायौ, पक्षिणि, विद्याधरे, सूर्यादिषु ग्रहेषु राक्षसे च । आकाशगामिनि त्रि०

**नभस** न० नभ असच् । आकाशे । [आकाशे न० ।

**नभस्** पु० नभ असि । श्रावणे मासि, मेघे पतद्ग्रहे च ।

**नभसङ्गम** पु० नभस गच्छति गम खच् मुम् च । पक्षिणि ।

**नभस्य** पु० नभसि मेघे साधु यत् । भाद्रपदमासि ।

**नभस्वत्** पु० नभोऽस्त्यस्याश्रयत्वेन मतुप् मस्य वः । वायौ ।

**नभोमणि** पु०नभस आकाशस्य मणिरिव प्रकाशकत्वात् । सूर्य्ये

**नभोरजस्** न० नभसो रज इव दृष्ट्यावरकत्वात् । अन्धकारे

**नभ्राज्** पु० न भ्राजति भ्राज क्विप् । मेघे ।

**नमस्** अव्य० नम असि । नतौ, त्यागे, स्तुते च ।

**नमस्कार** पु० नमस्+कृ घञ् । कराभ्यां शिरःसंयोगविशेषेण स्वापकर्षसूचके व्यापारभेदे ।

**नमस्य** त्रि० नमस करोति नमस्+क्यच्-नमस्य-कर्म्मणि यत् । नमस्करणीये । भावे अ । नतौ, पूजायाञ्च स्त्री० ।

**नमुचि** पु० न मुञ्चति न+मुच-कि । शुम्भनिशुम्भयोः कनिष्ठानुजेऽसुरभेदे ।

**नमुचिद्विष्** पु०६त० । इन्द्रे, नमुचिसूदनादयोऽप्यत्र ।

**नमेरु** पु० नम एरु । सुरपुन्नागवृक्षे, रुद्राक्षे च ।

**नम्ब** गतौ भ्वा०पर०सक० सेट् । नम्बति अनम्बीत्

**नम्र** त्रि० नम र । नते, विनयान्विते च ।

**नम्रक** पु० नम्र इव कायति कै क । स्वार्थे कन् वा । वेतसे स्वार्थे कन् । नम्रे त्रि० ।

**नय** गतौ भ्वा० आत्म० सक० सेट । नयते अनयिष्ट ।

**नय** पु० नी अच् । नीतौ शुक्राचार्य्यादिप्रणीते शास्त्रभेदे द्यूतभेदे च । कर्त्तरि अच् । नेतरि न्याय्ये च त्रि० । [प्रापणे ।

**नयन** न०नीयतेऽनेन करणे ल्युट् । नेत्रे चक्षुषि । भावे ल्युट

**नर** पु० नृ अच् । परमात्मनि 'आपो वै नरसूनवः' इति मनुः । विष्णौ, नरावतारे अर्ज्जुने, ऋषिभेदे, मनुष्ये, गणितशास्त्रोक्ते छायाप्रमाणसाधनोपयोगिनि, शङ्कौ च ।

**नरक** पु० नृ वुन् । भूमिगर्भे वराहाज्जाते दैत्यभेदे पापिनां दुःखभोगस्थानभेदे रौरवप्रभृतौ च । तेषां विभेदो वृहदभिधाने । [वृहदभिधाने ।

**नरककुण्ड** न०६त० । पापिनां यातनाभोगकुण्डेषु । विस्तरस्तु

**नरकजित्** पु० नरक नरकासुर जितवान् जि भूते क्विप् । श्रीकृष्णे । नरकान्तकादयोऽप्यत्र ।

**नरदेव** पु० नरो देव इव । नृपतौ ।

**नरनारायण** पु०द्वि० । नरश्च नारायणश्च द्व० । 'कृष्णार्ज्जुनावतारिणो मुनिभेदयोः । भगवतोऽवतारभेदे एकवचनान्तः पु०

**नरपति** पु ६त० । राजनि । नरेशादयोऽप्यत्र ।

**नरपुङ्गव** पु० पुमान् गौः पुङ्गवः वृषः नरः पुङ्गव इव भारवहनयोग्यत्वात् । मनुष्यश्रेष्ठे, -न्मे च ।

**नरमाला** स्त्री० नराणां नृमुण्डानां माला । नरमुण्डनिर्म्मितायां मालायां 'नरमालाविभूषणे'ति चण्डी ।

**नरमेध** पु०नरो मेध्यते बध्यते मोचनादिभिः संक्रियते यत्र नरमांसहव्यकरणके यागभेदे ।

**नरवाहन** पु० नरा वाहनान्यस्य । कुबेरे स हि मनुष्यैरुह्यते । मनुष्यवाह्यमाने त्रि० ।

**नरसिंह** पु० नरश्चासौ सिंहश्च । अवयवभेदेन नरसिंहयोराकारयुक्ते हिरण्यकशिपोर्नाशार्थमाविर्भूते भगवदवतारभेदे नरहर्य्यादयोऽप्यत्र । नरः सिंह इव शौर्य्यादिमत्त्वात् । नरश्रेष्ठे । [दयोऽप्यत्रार्थे ।

**नरस्कन्ध** पु० नर+समूहे स्कन्ध । नरसमूहे एवमनुष्यस्कन्धा

**नरेन्द्र** पु० नर इन्द्र इव । राजनि, विषवैद्ये एकविंशत्यक्षरपादके छन्दोभेदे च ।

**नरोत्तम** पु० नरेषु उत्तम । पुरुषोत्तमे नारायणे, 'य स्वकात् परतो वेह जातनिर्वेद आत्मवान् । हृदि कृत्वा हरिं गेहात् प्रव्रजेत स नरोत्तम' इत्युक्ते वैराग्यवति पुरुषे न्मे च 'नराणाञ्च नरोत्तम' इति गीता ।

**नर्त्तक** पु० नृत ष्वुन् । चारणे, नलतृणे च । 'यादृशं नृत्यपात्रं स्यात् गीतं योज्यञ्च तादृशम् । नृत्यस्य धारणात् पात्रं नर्त्तकं परिकीर्त्तितम्' इत्युक्ते नृत्याभिज्ञे नटे त्रि० । षित्वात् स्त्रियां ङीष् ।

**नर्त्तन** न० नृत ल्युट् । नृत्ये । [न चालयन् प्रनर्हति ।

**नर्द्द** शब्दे अक० गतौ सक० भ्वा० पर० सेट् । नर्द्दति अनर्द्दीत्

**नर्म्मद** पु० नर्म्म परिहासं ददाति दा क । केलिसचिवे । परिहासदायके त्रि० । सोमोद्भवायां दक्षिणस्थायां नद्यां स्त्री०

**नर्म्मन्** न० नृ मनिन् । परीहासे केलौ ।

नल बन्धे भ्वा०पर०सक०सेट् घा घटा० । नलति प्रनालीत् । णिच् नलयति नालयति ।

नल पु० नल अच् । तृणभेदे, चन्द्रवंश्ये, नृपभेदे, वानरभेदे, श्राद्धदेवे, पितृगणभेदे, 'कव्यवालस्तथा नल' इति पुराणम्। दैत्यभेदे च । पद्मे न० । [पदार्थे, सर्वाणि च

नलक न० नल इव इवार्थे कन् । शाखास्थि, नाडीवत् सच्छिद्रे

नलकिनी स्त्री०नलक सच्छिद्रमस्थि चास्य इनि । जङ्घायाम्

नलकूवर पु० नल कूवरो युगन्धरोऽस्य । कुवेरपुत्रे ।

नलद न० नल गन्धं गतिं वा ददाति दा क । उशीरे । 'स्यादस्य नलद मिने' ति नैषधम् । पुष्परसे, जटामांस्यां च स्त्री० ।

नलपट्टिका स्त्री० नलनिर्मिता पट्टिकेव । (दरमा)। कटभेदे ।

नलमीन पु० नलाश्रय मीन । (चिङ्गुड़ी) मत्स्यभेदे । [च

नलिका स्त्री०नल स्वार्थे कन् टाप् । नाड्याम्,सुगन्धिद्रव्यभेदे

नलित पु० नल-क्त । (नालता) शाकभेदे ।

नलिन न० नल इनन् । पद्मे,शैवाले नीले च । [नलिकायाञ्च

नलिनी स्त्री० नला सन्त्यस्या इनि । पद्मसमूहे, पद्मयुक्तदेशे,

नलिनीखण्ड न० नलिनी+समूहे खण्ड । पद्मिनीसमूहे ।

नली स्त्री० नल अच् गौरा० ङीष् । मनःशिलायां, विद्रुमलतायाम्, नलिकायाञ्च । (नालताशाक) ।

नल्व पु० नल-व । चतु शतहस्तमितदेशे, तत्परिमिते च ।

नव पु० नु-अप् । स्तवे, रक्तपुनर्नवायाञ्च । अच् । नूतने त्रि० ।

नवग्रह पु० कर्म० संज्ञात्वात् न द्विगु । 'सूर्यचन्द्रौ मङ्गलश्च बुधश्चापि बृहस्पति । शुक्र शनैश्चरो राहु केतुश्च नवग्रहा' इत्युक्तेषु नवसु ग्रहेषु तेषां स्नानादि हट्टाभिधाने

नवति स्त्री० नव दशत परिमाणमस्य नि० ।(नब्बुइ) सङ्ख्याभेदे

नवदल न कर्म० । कमलकर्णिकासमीपस्थे दले, नूतने पत्रे च

नवदुर्गा स्त्री०कर्म० संज्ञात्वात् न द्विगु । 'प्रथमा शैलपुत्री च द्वितीया ब्रह्मचारिणी । तृतीया चन्द्रघण्टेति कुष्माण्डेति चतुर्थिका । पञ्चमी स्कन्दमाते ति षष्ठी कात्यायनीति च । सप्तमी कालरात्रिश्च महागौरीति चाष्टमी । नवमी सिद्धिदा प्रोक्ता नव दुर्गा मता भुवी'त्युक्तासु शैलपुत्र्यादिषु नवसु दुर्गामूर्त्तिषु ।

नवद्वारपुर न०नव द्वाराणि यत्र तादृश पुरम् । देहे तत्र हि द्वे नेत्रे, चतुषी नासिके च शृश्रमेकमिति ऊर्द्ध्वानि सप्त, द्वे पायूपस्थे अधः इति नवच्छिद्ररूपाणि द्वाराणि सन्ति । 'नवद्वारपुरे देही'ति गीता ।

नवधा अव्य० नवन्+प्रकारे धाच् । नवप्रकारे ।

नवधातु पु० कर्म० समाहारात् न द्विगु । 'हेमताररनागाच

साम्रदङ्गे च तीक्ष्णकम् । कांस्यञ्च कान्तलौहञ्च धातवो नव कीर्त्तिता' इत्युक्तेषु हेमादिषु नवसु ।

नवन् त्रि०ब० । नु कनि । (नय) सङ्ख्याभेदे ।

नवनीत न०नव नीयते स्म नी क्त । (माखन) दध सारभेदे

नवनीतक न० नवनीतस्य विकार कन् । घृते ।

नवपत्रिका स्त्री० कदली दाडिमी धान्य हरिद्रा मानकं कचु । बिल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका' इत्युक्तासु नवसु कदल्यादिषु पत्रिकासु ।

नवमल्लिका स्त्री० कर्म० । नवमालिकायाम् पुष्पप्रधाने वृक्षभेदे

नवम त्रि० नवानां पूरण डट् मट् । नवसङ्ख्या येन पूर्य्यते तस्मिन्,चन्द्रस्य नवमकलाक्रियारूपे तिथिभेदे स्त्री०ङीप्

नवमालिका स्त्री० कर्म० । स्वनामख्याते पुष्पप्रधाने वृक्षभेदे

नववधू स्त्री० कर्म० । नवोढायां स्त्रियाम् ।

नववध्वागमन न० ६त० । नववध्वा प्रथमत पितृगृहात् पतिगृहे आगमने ।

नवरत्न न० नवानां रत्नानां समाहार । 'मुक्तामाणिक्यवैदूर्य्य गोमेदा वज्रविद्रुमौ । पद्मराग मरकतं नीलश्चे त्युक्तेषु नवसु रत्नेषु । 'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासा । ख्यातो वराहमिहिरो नृपते सभायां रत्नानि वै वररुचिर्नव विक्रमस्ये'त्युक्तेषु नवसु विक्रमादित्यसभ्य पुरुषेषु

नवरात्र न०नवानां रात्रीणां समाहार अदन्तता० । आश्विन्य दिमासेषु शुक्लप्रतिपदाद्यशुक्लनवमीपर्य्यन्तेषु नवसु तिथिषु तद्दिवसेषु कर्त्तव्ये व्रतभेदे च । 'चैत्रे श्विने तथाषाढे माघे कार्य्यो महोत्सव' । नवरात्रे महाराजे ति देवीभाग वते नवसु दिवसेष्वपि नवरात्रशब्दप्रयोग ।

नववस्त्र न० कर्म० । अनाहते नूतने वसने ।

नवशायक पु० 'गोपो मालो तथा तैली तन्त्री मोदकवारुजी । कुलाल कर्मकारश्च नापितो नव शायका' इत्युक्तेषु जातिभेदेषु ।

नवश्राद्ध न० कर्म० । एकादशाहपर्य्यन्तं श्राद्धे ।

नवसूतिका स्त्री० नव सूत प्रसवोऽस्यास्तत्र इत् टाप् । धेनौ, नूतनप्रसूतायां स्त्रि ।

नवान्न न०कर्म० । नवोत्पन्ने धान्ये अन्ने । नवान्नागमकाले 'नवो दके नवान्ने च गृहप्रच्छादने,तथा पितर स्पृहयन्तीति कर्त्तव्ये

नवीन त्रि० नव+ख । नूतने ।

नवोदक न०कर्म० । नवजले । नवमुदकं यत्र । देवताऽऽविर्भाव त्रिदिवे कृते तीर्थाभिषेक कर्त्तव्य दिने ।

नवोद्धृत न०कर्म० । नवनीते, सद्योद्धृतमात्रे त्रि० ।

**नव्य** त्रि० नु यत्। नूतने। रक्तपुनर्नवायां पु०।

**नष्ट** त्रि० नश क्त। तिरोहिते, दर्शनायोग्ये, ध्वस्ते च।

**नष्टचन्द्र** पु० 'नष्टश्चन्द्रो न द्रष्टव्य भाद्रे मासि' सितासिते। चतुर्थ्यामुदितोऽशुद्ध प्रतिषिद्धो मनीषिभिरित्युक्ते सौरभाद्रमासे उभयपक्षचतुर्थ्यामुदिते चन्द्रे।

**नष्टचेष्टता** स्त्री० नष्टा चेष्टा यस्य तस्य भाव तल। हर्षशोकादिभि सर्व्वचेष्टारोहित्ये। [सुप्रसात्त्विकभेदे,निरग्नौ च।

**नष्टाग्नि** पु० नष्टोऽग्निर्यस्य। प्रमादादिना नष्टवैतानिकाग्नौ,

**नष्टेन्दुकला** स्त्री० नष्टा इन्दुकला यस्याम्। चतुर्द्दशीयुते दर्शे। 'चतुर्द्दश्यष्टमे यामे चीणो भवति चन्द्रमा इति स्मृतेस्तद्युक्तामावास्याया हि इन्दुकलाक्षय।

**नस्य** न० नसे हितम्। नासिकादौ अपस्मारादिरोगनिवारणार्थं नसि देये चूर्णे। [(नाकफोड़ा) बलीवर्दे।

**नस्योत** पु० नसि नासिकायाम् अध्यक्क ऊतः वा+वे क्त।

**नह** अव्य०। न च ह च। प्रत्यारम्भे।

**नहि** अव्य०। नह इन्। निषेधे।

**नहुष** पु०। चन्द्रवंश्ये न्टपभेदे, नागभेदे च।

**नहुषात्मज** पु० ययातिनामके न्टपे। नहुषपुत्रादयोऽप्यत्र।

**ना** अव्य० नह डा। निषेधे।

**नाक** पु० न कमकं दुःखं तदस्ति यत्र। स्वर्गे। 'यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम्। अभिलाषोपनीत च तत् सुख स्वःपदास्पदमित्युक्ते स्वर्गस्य दुःखशून्यत्वम्।

**नाकिन्** पुं० नाको वासस्थानत्वेनास्त्यस्य इनि। देवे।

**नाकु** पु० नम उ नाकादेश। वल्मीके, पर्व्वते च।

**नाकुली** स्त्री० नकुलस्येदम् प्रियत्वात् अण्। कुक्कुटीकन्दे चविके (चइ) रास्नाया यवतिक्तायां, श्वेतकण्टकार्याञ्च।

**नाग** न० न गच्छति अग न अगः। मनुष्याकारेषु फणालाङ्गूलविशिष्टेषु वासुक्यादिषु सर्पेषु हस्तिनि, मेघे नागकेशरे, नागदन्तके, मुस्तके, देहस्थे उद्गारकारके पवनभेदे, ववादिषु करणभेदे च। नगे भव अण्। पर्व्वतभवे त्रि०। रङ्गे सीसके च न०।

**नागकेशर** पु० नागाख्य केशर। स्वनामख्याते पुष्पवृक्षे।

**नागगन्धा** स्त्री० नागस्येव गन्धोऽस्या। नाकुलीकन्दे।

**नागज** न० नागात् जायते जन-ड। सिन्दूरे, रङ्गे च।

**नागजिह्वा** स्त्री० नागानामिव जिह्वा मूलान्यस्या। अनन्तमूलायाम लतायाम्। [हस्तिदन्ते। स्वार्थे कन्। तत्रैव

**नागदन्त** पु नागस्य दन्त इव। गृहाद्विनिर्गतदारुणि। इस०।

**नागदन्तिका** स्त्री० नागस्य सर्पस्य दन्तस्तत्सम्बन्धिविषमस्यास्ति ठन्। (विछाति) इति ख्यातायाम्) लतायाम्।

**नागदन्ती** स्त्री० नागदन्त आख्यात्वेनास्त्यस्य अच् गौ० ङीप्। (हातिशुंडा) लतायाम वेश्यायाञ्च।

**नागदमनी** स्त्री० नागा सर्पा दम्यन्ते अनया दम ल्युट् ङीप्। (इश्वरमूल) लताभेदे।

**नागद्रु** पु० नागप्रिय द्रु। स्नुहीवृक्षे तस्य सर्पपूजास्थानत्वेन तत्प्रियत्वम् अतएव स्नुहीविटपस्थितामिति स्मृतौ सर्पाधिदेवताया मनसाया स्नुहीवृक्षाश्रितत्वमुक्तम्।

**नागनिर्य्यूह** पु० नागाकार निर्य्यूह। नागदन्तके भित्तिस्थे नागाकारे निर्गतकाष्ठखण्डे।

**नागपाश** पु० नाग पाश इव बन्धनहेतुत्वात्। वरुणस्यास्त्रभेदे। नागाकार पाशः। 'सार्द्धद्वयावर्त्तभाक् नागपाश इति स्मृत 'इतितन्त्रोक्ते बन्धिभेदे।

**नागपुर** न० दक्षिणदेशप्रसिद्धे नगरभेदे, हस्तिनापुरे च। इत०। पातालस्थे नागाना नगरे। [नागकेशरे वृक्षे।

**नागपुष्प** पु० नागगन्धयुक्त हस्तिमदगन्धयुक्त पुष्पमस्य।

**नागपुष्पफला** स्त्री०नागाकार पुष्प फलति नश्यते फल अच्। कुष्माण्डयाम्। [लतायाम्।

**नागपुष्पी** स्त्री० नागाकारं पुष्पमस्या ङीप्। नागिन्यां

**नागफल** पु नागाकार फलमस्य दीर्घत्वात। पटोलभेदे (धुधुल)

**नागबला** स्त्री०नागानां दन्तिनां बल यस्या ५ब०। (गोरक्षचाकुलिया) लताभेदे। [घाट्याञ्च।

**नागमातृ** स्त्री० ६त०। कद्रुसमाख्याया कश्यपपत्न्याम मन-

**नागमार** पु० नाग हस्तिनं मारयति मृ णिच-अण्। भद्रराजे तद्भक्षणे हि हस्तिनो नाशः। हस्तिमारके त्रि।

**नागयष्टि** स्त्री०नागाश्रयार्था यष्टि। (ढहकाठ) पुष्करिण्यादौ खाताना नागानां मध्ये उद्धृतमात्रानुसारेण तदीयस्याश्रयत्वेन कल्पिते दीर्घयूपाकारे काष्ठे।

**नागर** त्रि नगरे भव। विदग्धे। अग राति अगर न अगर। देवरे, नागरङ्गे, जम्बीरभेदे, मुस्तकभेदे च (नागरमुथा)।

**नागरक** पु० नगरे भव ततः कुत्सतायां प्राचोण्ये वा वुञ्। चौरे, चित्रलेखनकरे शिल्पिनि च।

**नागरघन** पु० नागराख्य घन मुस्तक। (नागरमुथा) मुस्तकभेदे। [(नारङ्गी)।

**नागरङ्ग** पु०नागस्य सिन्दूरस्येव रङ्गोरागो यत्र। जम्बीरभेदे

**नागरमुस्तक** पु०न०कर्म्म०। स्वनामख्याते मुस्तकभेदे। नागरमुस्ताप्यत्र। [कमा०। अनन्ते सर्पे ऐरावते गजे च।

**नागराज** पु० नागानां सर्पाणां हस्तिनां च राजा टच्

परायणा । नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिते' इत्युक्ते मङ्गलाचरणभेदे च ।

**नान्दीमुख** पु० नान्द्यर्थं हृद्यर्थं वन्धनान्वितं मुखं यस्य । कूपादिमुखबन्धने पटे । नान्दी वृद्धिश्राद्धं चामुखे यस्य । नान्दीश्राद्धभुजि पितृगणे । गौरादौ स्त्री० ङीप् ।

**नान्दीवादिन्** पु० नान्दीं वदति वादयति वा । नाटकादौ नान्दीकरे सूत्रधारे तदर्थं तूर्य्यादिवादके नटादौ च ।

**नापित** पु० क्षुरकर्मकारके जातिभेदे ।

**नाभि** पु० नह्यन्ते अत्र नह्यतेऽनेन वा नह इञ भान्तादेश । द्वादशस्यपञ्चकस्य मध्ये, रथचक्रस्य वामपिण्डाग्रम्, क्षत्रिये च । मृगमदे स्त्री० । प्राण्यङ्गभेदे (नाइ) पु स्त्री० । स्त्रीत्वे वा ङीप् । प्रधाने, मुख्ये त्रि० ।

**नाभिज** पु० नाभौ विष्णुनाभौ जायते जन ड । चतुर्मुखे ब्रह्मणि, नाभिजन्मादयोऽप्यत्र ।

**नाम** अव्य० नामयति नम णिच ड । स्वीकारे विस्मये स्मरणे सम्भावनायां, निन्दायां प्राकाश्ये, विकल्पे अलीके, कोपे च

**नामकरण** न० नाम क्रियतेऽत्र कृ-ल्युट् । 'दशमेऽहनि पिता नाम कुर्य्या'दिति स्मृत्युक्ते दशमादिदिने कर्त्तव्ये संस्कारभेदे

**नामधेय** न० नामैव स्वार्थे धेय । नामनि वाचकशब्दे संज्ञायाम 'वाचारम्भणं विकारो नामधेय'मिति श्रुति ।

**नामन्** न० नम्यतेऽभिधीयतेऽर्थोऽनेन नामनुधीमन्निति नि० । घटाकाशादिपदार्थबोधके संज्ञाशब्दे आख्यायाम् तानि च पञ्च 'उणाद्यन्तं कृदन्तं च तद्धितान्तं समासजम् । शब्दानुकरणं चेति नाम पञ्चविधं स्मृत'मित्युक्ते ।

**नामशेष** त्रि० न शेष शेषो न देहादिरस्य । मृते । नाममात्रं शेषो यत्र । मरणे पु० ।

**नायक** पु० नी ण्वुल् । नेतरि स्वामिनि, प्रभौ हारमध्यमणौ, सेनापतौ, शृङ्गाररसालम्बने पत्युपपत्यादौ च । प्रापयितरि च त्रि० ।

**नायिका** स्त्री० नी ण्वुल् । शृङ्गारालम्बने भार्य्यादौ, दुर्गाया सहचरीषु उग्रचण्डादिषु च ।

**नार** पु० नरस्यायम् अण् । बालके, जले च । 'आपो नारा इति प्रोक्ता इति मनु । परमात्मसम्बन्धिनि मनुष्यसम्बन्धिनि च त्रि० 'नारं स्पृष्ट्वा तु सस्नेह'मिति स्मृति । नराणां समूहः अण् । नरसमूहे न० ।

**नारक** पु० न्यु वुन् प्रज्ञाद्यण् । नरके । नरके भव अण् । नरकस्थे त्रि० । [भोगिनि जीवे ।

**नारकिन्** त्रि० नारकं भोग्यत्वेनास्त्यस्य इनि । नरकयातना

**नारङ्ग** पु० न आरङ्गं आरञ्जनं यस्य । स्वनामख्याते जम्बीरभेदे, पिप्पलीरसे विटे च । गर्ज्जरे न० ।

**नारद** पु० नारं जलं ददाति दा क । 'नारं पानीयमित्युक्तं तत् पितृभ्यः सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यती'त्युक्तनिर्वचनयुते मुनिभेदे । नारं ज्ञानं द्यति दो क, नारं ज्ञानं ददाति दा क वा । मुनिभेदे तत्प्रोक्ते पञ्चविंशतिसहस्रात्मके महापुराणे न० ।

**नारदीय** न० नारदेन प्रोक्तम् छ । उपपुराणभेदे ।

**नारसिंह** न० नरसिंहमधिकृत्य कृतं ग्रन्थः इत्यण् । उपपुराणभेदे । [लौहमये शरभेदे ।

**नाराच** न० नराणां समूहः नारमाचामति चम ड । शरे

**नारायण** पु० 'आपो नारा इति प्रोक्ता आपो वै नरसूनव । ता यदस्यायनं पूर्वं तेन नारायणः स्मृत' इति मनूक्तनिर्वचनवति विष्णौ ।

**नारायणक्षेत्र** न० ६त० । 'प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी'त्युक्ते गङ्गायाः प्रवाहावधिहस्तचतुष्टयमितस्थाने । [चित्रात्मके विधानभेदे ।

**नारायणबलि** पु० स्मृत्युक्ते मृतानां पापपङ्क्त्यादीनां प्राय

**नारायणी** स्त्री० 'जलायना नराधारा समुद्रशयनापि वा । नारायणी समाख्याता नरनारी प्रकीर्त्ति'त्युक्तायां विष्णुशक्तौ लक्ष्म्यां दुर्गायां 'नारायणि नमोऽस्तु ते' इति चण्डी गङ्गायां शतावर्य्याञ्च ।

**नारिकेल** पु० नल इव नालि केन वायुना जलेन वा इलति चलति इल क कर्म० रलयोरैक्यम् । स्वनामख्याते वृक्षे

**नारीष्टा** स्त्री० नारीभिरिष्टा । मल्लिकायाम् ।

**नाल** न० नल ज्वलादि० ण । काण्डे, उत्पलादिदण्डे मृणाले न० स्त्री० । नाला मृणालाग्रभुजो भजाम' इति नै० ।

**नालि(ली)** स्त्री० नल इण वा ङीप् । देहस्थशिरायाम, शाकभेदे पद्मादिदण्डे च । सप्तार्यां कन् । श्वेतकलम्ब्याम नाडीशाके, चर्म्मपयकशायाम्, हस्तिकर्णवधन्याम, नाले मुद्गच्छिद्रे, वेणुभाजने दण्डात्मके काले च ।

**नालिता** स्त्री० नल णिच् क्त । स्वनामख्याते शाकभेदे ।

**नालीक** पु० नाल्या कायति कै क । शल्यमात्रे लौहयुक्तस्यन्दच्छिद्रे शरभेदे शरीरे च । पद्मपत्रे न० ।

**नाविक** पु० नावा चरति ठक् । कर्णधारे ।

**नाव्य** त्रि० नावा तीर्य्यतेऽसौ नौ यत् । नौतार्य्ये देशे ।

**नाश** पु० नश-घञ् । पलायने अदर्शने, निधने अनुपलम्भे च

**नासत्य** पु० द्वि० व० । नास्ति असत्यं ययो नञ् प्रकृत्या, नासा

**निभ** पु॰ निभाति नि+भा-क । व्याजे । उत्तरपदस्थः । सदृशे त्रि॰ । यथा पितृनिभः, मातृनिभेत्यादि तत्सदृश इत्यर्थः । स्वातन्त्र्येणास्य न प्रयोगः ।

**निभालन** न॰ नि+चु॰भल॰ल्युट् । दर्शने ।

**निभृत** त्रि॰ नि+भृ-क्त । धृते, विनीते, निश्चले, एकान्ते, गुप्ते, निर्जने, अस्तायोपस्थिते च 'नभसा निभृतेन्दुने'ति रघुः [निश्चलतया स्थितौ च ।

**निमज्जथु** पु॰ नि+मस्ज-अथुच् । अवगाहने, निश्चलतया स्थितौ च ।

**निमज्जन** न॰ नि+मस्ज ल्युट् । अवगाहने, जलादौ प्रवेशे,

**निमन्त्रण** न॰ नि+मन्त्र-ल्युट् । अकरणे प्रत्यवायसाधने नियोगभेदे यथा श्राद्धादौ भोजनार्थं नियोगः 'तस्याकरणे प्रत्यवायो जायते इति स्मृतौ प्रसिद्धम् आह्वाने च ।

**निमान** न॰ निमीयते क्रीयतेऽनेन मा ल्युट् । मूल्ये ।

**निमि** पु॰ इक्ष्वाकुवंश्ये, चन्द्रवंश्ये च नृपभेदे ।

**निमित्त** न॰ नि+मिद-क्त । कारणे, हेतौ, शरव्ये, चिह्ने, भाविशुभाशुभसूचके ज्योतिषाद्युक्ते शकुने च 'निमित्तज्ञस्तपोधन' इति रघुः 'निमित्तानि च पश्यामी'ति गीता । उद्देश्ये च । 'निमित्तात् कर्मसंयोगे' इति पाणिनिः ।

**निमित्तकारण** न॰ कर्म॰ । न्यायोक्ते समवाय्यसमवायिभिन्ने कारणे यथा घटादौ मृदादि समवायिकारणं कपालद्वयसंयोगमसमवायिकारणमुभयभिन्नं कुलालादि निमित्तकारणम्

**निमि(मे)ष** पु॰ निमिषति नि+भ्वा॰मिष-क अच् वा । कालभेदे, चक्षुषः स्वाभाविकस्पन्दनमितकाले (पलक), भावे अप् कु॰न गुण, घञ् वा गुण । चक्षुर्मीलने ।

**निमीलन** न॰ नि+मील ल्युट् । मरणे, सङ्कोचने, चक्षुर्मुद्रणे च

**निम्न** त्रि॰ निम्नं मनति म्ना अभ्यासे क । गभीरे नीचे

**निम्नगा** स्त्री॰ निम्नं गच्छति गम ड । नदीमात्रे । नीचगामिनि त्रि॰

**निम्नोन्नत** त्रि॰ निम्नं तदुन्नतञ्च । उच्चतानते वन्धुरे ।

**निम्ब** पु॰ निम्बति स्वास्थ्यं निबि सेचने अच् । (निम) वृक्षे ।

**निम्बतरु** पु॰ निम्ब-तरु कर्म॰ । मन्दारवृक्षे ।

**निम्बवीज** पु॰ निम्ब इव तद्वीजं यस्य । राजादनीवृक्षे ।

**निम्बू** स्त्री॰ निम्ब-ऊ । (नेबु) वृक्षभेदे । स्वार्थे कन् । अत्रैव ।

**निम्रोचन** न॰ नि+म्रुच-ल्युट् । अस्तगमने ।

**नियत** त्रि॰ नि+यम-क्त । विहिते नित्ये, आचारयुक्ते, नियमवति, संयतेन्द्रिये च । नियतकर्माणि न॰ ।

**नियति** स्त्री॰ नि+यम-क्तिन् । नियमे, भाग्ये 'नियतिः केन बाध्यत' इति पुराणम् । प्राक्तनशुभाशुभकर्मणि, पुराणे च ।

**नि —** पु॰ [illegible] नि+यम-तृच् । सारथौ, शासितरि, पशुप्रेरके त्रि॰ । स्त्रियां ङीप् । [हरे च ।

**नियन्त्रित** त्रि॰ नितरां यन्त्रितः नि+यन्त्र क्त । अवरुद्धे, प्रति-

**नियम** पु॰ नि+यम-घञ् । यन्त्रणे, प्रतिज्ञायां, निश्चये, अङ्गीकारे, पूर्वमीमांसोक्ते पक्षत प्राप्तस्य इतरपक्षव्युदासेन एकतरपक्षे व्यवस्थापने, यथा व्रीहीनवहन्ति । अत्र वितुषीकरणसाधनभूतस्य नखादेरवहननस्य वा प्राप्तौ प्राप्तौ अवघात एव प्रवृत्तिर्व्यवस्थाप्यते । मते, 'नियमस्तु स यत् कर्मानित्यमागन्तुसाधनमि'त्युक्ते अनित्ये आगन्तुकसाधने उपवासादौ कर्मणि, शौचादिषु च । विस्तरस्तु वृहदभिधाने ।

**नियामक** पु॰ नि+यम-ण्वुल् । कर्णधारे । नियन्तरि त्रि॰

**नियुत** न॰ 'शतं सहस्रमयुतं नियुतं प्रयुतं तथे'त्युक्तायां लक्षसङ्ख्यायां 'लक्षञ्च नियुतञ्चैवे'त्युक्तायां दशलक्षसङ्ख्यायां, तत्तत्सङ्ख्यान्विते च ।

**नियुद्ध** न॰ नियतं नितरां वा युद्धम् । बाहुयुद्धे ।

**नियोग** पु॰ नि+युज-भावे घञ् । अवधारणे, आम्नायाम्, निकृष्टस्य प्रेरणे च । नियुज्यतेऽस्मिन् आधारे घञ् । कार्ये ।

**नियोग्य** त्रि॰ नियोक्तुमर्हति यत् । नियोगकरणार्हे प्रभौ ।

**नियोज्य** त्रि॰ नियोक्तुं शक्यते कर्माणि यत् कुत्वाभाव । प्रेष्ये प्रेरणार्हे भृत्ये । [स्वाम्नाद्यर्थे च

**निर्** अव्य॰ नॄ-क्विप् न दीर्घः । निषेधे, निश्चये, वहिर्भावे नि॰

**निरंश** त्रि॰ निर्गतोऽंशोऽस्य । अंशरहिते पतितक्लीवादिपुत्रादौ । राश्यंशरहिते प्रथमदिने अन्तिमदिने संक्रान्तिदिने च

**निरग्नि** पु॰ नास्ति अग्निरस्य । अग्निसाध्यश्रौतकर्मशून्ये शूद्रादिषु त्रिषु वर्णेषु ।

**निरङ्कुश** त्रि॰ निर्गतोऽङ्कुशात् । बाधाशून्ये, अनिवार्ये च ।

**निरञ्जन** त्रि॰ निर्गतमञ्जनं यस्मात् । अञ्जनशून्ये निर्मले । अञ्जनं तमः मलिनस्वभावत्वात् तस्मात् निर्गतं तन्निर्गतं यस्मात् । परमात्मनि 'निरञ्जनं साम्यमुपैति दिव्य'मिति श्रुतिः ।

**निरतिशय** त्रि॰ निर्गतोऽतिशयोऽस्मात् । अतिशयशून्ये परमोत्कृष्टे । ['निरत्यय साम'ेति भारविः ।

**निरत्यय** त्रि॰ निर्गतोऽत्ययोऽस्मात् । निर्विघ्ने अप्रमादिके च

**निरन्तर** त्रि॰ निर्गतमन्तरात् निर्गतमन्तरं वा यस्मात् । निविडे, निरवधौ, निश्छिद्रे च ।

**निरपत्रप** त्रि॰ निर्गतोऽपत्रपायाः । निर्लज्जे ।

**निरर्गल** त्रि॰ निर्गतमर्गलं यस्मात् । [illegible]

**निरर्थक** त्रि॰ निर्गतोऽर्थो [illegible] दर्थाभिधेयशून्ये च ।

निरवग्रह त्रि० निर्गतोऽवग्रहात् । निष्प्रतिबन्धे ।
निरवद्य त्रि० निर्गतोऽवद्यात् । दोषशून्ये, उत्कृष्टे च ।
निरवयव पु० निर्गतोऽवयवात् । परमाणौ । आकारशून्ये आकाशादौ त्रि० ।
निरवशेष त्रि० निर्गतोऽवशेषो यस्मात् । सर्वस्मिन् ।
निरवसित त्रि० निर्+अव+षो-क्त । पात्ररहिष्कृते (यस्य भोजनपात्रं संस्कारेणापि न शुध्यति तस्मिन्) चाण्डालादौ नीचवर्णे । [निष्कासने च ।
निरसन न० निर्+अस-ल्युट् । परित्यागे, प्रतिक्षेपे वधे,
निरस्त त्रि० निर्+अस-क्त । त्वरितोच्चारिते, निष्ठ्यूते, क्षिप्ते, प्रतिहते, भर्त्सिते च ।
निराकरण न० निर्+आ+कृ-ल्युट् । निवारणे, दूरीकरणे च
निराकरिष्णु त्रि० निर्+आ+कृ-इष्णुच् । निवारणशीले प्रतिक्षेपकर्त्तरि च ।
निराकृत त्रि० निर्+आ+कृ-क्त । दूरीकृते, निवारिते च ।
निराकृति स्त्री० निर्+आ+कृ-क्तिन् । निवारणे ।
निरामय त्रि० निर्गत आमयात् । रोगरहिते । वनच्छागले, शूकरे च पुं० ।
निरामालु पु० नितरां रमतेऽत्र रम-आलु । कपित्थवृक्षे ।
निरालम्बा स्त्री० निर्गत आलम्बोऽस्मात् । आकाशलम्बिन्यां मांसाम् । [नास्तिके त्रि० ।
निरीश न० निर्गतमीशायाः । फाले । ईश्वरशून्यतावादिनि
निरुक्त न० निश्शेषेणोच्यतेऽत्र । निर्+वच-क्त । वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तं मित्युक्तदिशा प्रकृतिप्रत्ययाद्यवयवार्थनिर्वचनप्रतिपादके वेदाङ्गे ग्रन्थभेदे ।
निरुक्ति स्त्री० निर्+वच-क्तिन् । निर्वचने प्रकृतिप्रत्ययाद्यवयवार्थकथनद्वारा समुदितार्थबोधने ।
निरुपाख्य त्रि० निर्गता उपाख्या यस्मात् । असत्पदार्थे वन्ध्यापुत्रादौ, वाचोमनसयोर्विषयतयोक्तुमयोग्ये अस्फुटस्वरूपे च ब्रह्मणि । [शब्दे ।
निरूढ पु० निर्+रुह-क्त । शक्तिग्रहलक्षणयार्थबोधके
निरूढलक्षणा स्त्री० निरूढा प्रसिद्धा लक्षणा । व्याकरणबोधादेहेतुः प्रसिद्धार्थे शक्तितुल्यार्था लक्षणरूपायां शब्दस्यार्थबोधनायक्तौ ।
निरूढि स्त्री० निर्+रुह-क्तिन् । प्रसिद्धौ ।
निरूपण न० नि+रूप-ल्युट् । तत्त्वज्ञानानुकूलशब्दप्रयोगे विचारे, निदर्शने, आलोके च ।
निरूपित त्रि० नि+रूप-क्त । नियुक्ते, कृतनिरूपणे, कथिते, न्यायोक्ते निरूपकतासंबन्धेन सम्बन्धिनि च ।
निरोध पु० नि+रुध-घञ् । नाशे, 'न निरोधो नचोत्पत्तिरिति पुराणम् । प्रलये, प्रतिरोधे च । [रोधने
निरोधन न० नि+रुध-ल्युट् । कारागारादौ प्रवेशनेन गतिनिवृत्ति नियता कृतिर्यया यत्र । दक्षिणपश्चिमविदिक्पतौ । चालनाशाम स्त्री० । निरुपद्रवे त्रि० । [पालमनिवृत्ते ।
निर्गन्धपुष्पी स्त्री० निर्गन्धं गन्धशून्यं पुष्पं यस्याः ङीष् ।
निर्गुण पु० निर्गतो गुणेभ्यः । सत्त्वरजस्तमोरूपगुणत्रयशून्ये निर्धर्मके परमात्मनि । निर्गताः गुणाः शौर्यादयो रूपादयो वा यस्मात् । गुणहीने त्रि० ।
निर्गुण्डी स्त्री० निर्गता गुण्डात् वेष्टनात् इ० गौरा० ङीष् । नीरसे, शलिकायां, सिन्धुवारवृक्षे, पद्मकन्दे च ।
निर्ग्रन्थ पु० निर्गतो ग्रन्थेभ्यः । क्षपणके, दिगम्बरे, बौद्धभेदे, द्यूतकारे, मुनिभेदे च । निर्धने, मूर्खे, निःसहाये, निर्वृन्दगते च त्रि० । स्वार्थे कन् । क्षपणे, निष्फले च पु० । परिग्रहरहिते त्रि० ।
निर्ग्रन्थन न० निर्+ग्रथि-कौटिल्ये ल्युट् । मारणे ।
निर्ग्रन्थिक पु० निर्गतो ग्रन्थिर्वस्त्रग्रन्थिर्यस्य कप् । क्षपणके । निपुणे, ग्रन्थिहीने च त्रि० ।
निर्घात पु० निर्+हन-घञ् । 'पवनः पवनाभिहतो गगनादवनौ यदा पतति । भवति तदा निर्घातः' इत्युक्ते पवनाहतपवनजन्ये शब्दभेदे । 'निर्घाते भूमिचलने' इतिस्मृतिः
निर्घृण त्रि० निर्गता घृणा दया यस्मात् । निर्दये ।
निर्घोष पु० निर्+घुष-घञ् । शब्दमात्रे ।
निर्जन त्रि० निर्गतो जनो यस्मात् । जनैरनाकीर्णे विजने
निर्जर पु० निर्गता जरा यस्मात् । देवे । जराशून्ये त्रि० । इव० । अमृते न० ।
निर्जरा स्त्री० निर्गता जरा यस्याः इव० । गुडूच्यां, तालपर्ण्यां च
निर्झर पु० निर्+झॄ-अप् । पर्वतादिप्रतजलप्रवाहे (झरना)
निर्झरिणी स्त्री० निर्झरः पर्वतादिःस्रुतजलप्रवाहः कारणत्वेनास्त्यस्या इनि । नद्याम् ।
निर्णय पु० निर्+नी-अच् । निश्चये, तद्भावाभावाप्रकारकसंशयोत्तरजाते तद्व्याप्यवत्ताज्ञाने, सन्देहे यथा भावाभावौ द्वावेव विषयतया भासेते नैवं निश्चये तत्र एकविषयकाभासते । विरोधपरिहारे, मीमांसोक्ते पञ्चावयवन्यायमध्ये चरमावयवे, न्यायोक्ते 'पक्षप्रतिपक्षाभ्यां साधकबाधकाभ्यामर्थावधारणे च ।

केशाकारे पदार्थे । [ब्रह्मणि । कर्म० । कमलमध्ये न० ।
**पद्मगर्भ** पु० पद्मं विष्णुनाभिपद्मं गर्भमुत्पादकं यस्य । चतुर्मुखे
**पद्मचारिणी** स्त्री० पद्ममिव चरति स्थानं परित्यज्य दूरं गच्छति णिनि । उत्तरकुरु देशे प्रसिद्धे लताभेदे ।
**पद्मनाभ** पु० पद्मं नाभौ यस्य अच् । विष्णौ । [लमूले ।
**पद्मपत्त्र** न० ६त० कमलपत्त्रे । पद्मस्य पत्त्रं वाहनमिव । कम-
**पद्मपुराण** न० पद्ममधिकृत्य कृतमण् तस्य लुक् कर्म० । महापुराणान्तर्गते पुराणभेदे ।
**पद्मपुष्प** पु० पद्ममिवं पुष्पं यस्य । कर्णिकारवृक्षे ।
**पद्मबन्ध** पु० पद्माकारो बन्धः सन्निवेशः । शब्दालङ्कारभेदे ।
**पद्मबन्धु** पु० ६त० । सूर्ये, भ्रमरे च । पद्ममित्रादयोऽप्यत्र ।
**पद्मभू** पु० पद्मं विष्णोर्नाभिपद्मं भूरुत्पत्तिस्थानं यस्य । चतुर्मुखे ब्रह्मणि । पद्मोद्भवादयोऽप्यत्र ।
**पद्मराग** न० पद्मस्येव रागो यस्य । रक्तवर्णे मणिभेदे (माणिक)
**पद्मलाञ्छन** पु० पद्मं लाञ्छनमस्य । सूर्ये, ब्रह्मणि, नृपे, कुबेरे च
**पद्मवासा** स्त्री० पद्ममालाधारे पद्म ६त० । सरस्वत्यां लक्ष्म्याम्, लवङ्गे च । पद्मं निवासो निलयो यस्याः । पद्मनिवासादयोऽप्यत्र
**पद्मबीज** न० ६त० । कमलबीजे (कमलगाट्टा) ।
**पद्मबीजाभ** न० पद्मबीजमिवाभाति आ+भा-क । (माखना) जलजे फलभेदे । [मनसादेव्यां, कुसुम्भपुष्पे च ।
**पद्मा** स्त्री० पद्ममस्त्यस्य अर्श आद्यच् । लक्ष्म्याम्, लवङ्गे,
**पद्माकर** पु० ६त० । पद्मयुक्ते तडागे वा अगाधे जलाशये,
**पद्माट** पु० पद्मवदटति अट अच् । चक्रमर्दवृक्षे (दादमर्दन) ।
**पद्मावती** पु० पद्म+अस्त्यर्थे मतुप् मस्य वः दीर्घश्च । (पद्म) नदीभेदे, मनसादेव्यां, पद्मचारिणीलतायाञ्च ।
**पद्मासन** न० पद्ममिवासनम् । योगशास्त्रप्रसिद्धे आसनभेदे ।
**पद्मिनी** स्त्री० पद्मानां समूहः, तत्सन्निकृष्टदेशो वा इनि । कमलसमूहे तद्युक्तदेशरूपायां सरोवरस्थलतायां, स्त्रीभेदे च ।
**पद्मिनीकान्त** पु० ६त० । सूर्ये पद्मिनीप्रियादयोऽप्यत्र ।
**पद्मिन्** पु० पद्मं बिन्दुजालमस्त्यस्य इनि । हस्तिनि । पद्मयुक्ते त्रि०
**पद्मेशय** पु० पद्मे शेते शी-अच् अलुक् स० । विष्णौ ।
**पद्य** न० पद चरणमर्हति पद+यत् । कविकृते चतुश्चरणात्मके 'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधे'त्युक्ते वाक्यभेदे । पदव्यां स्त्री० । पद्भ्यां जात यत् । शूद्रे पु० । पदं विध्यति यत् । शर्करायां स्त्री० । [पीत् अपनायिष्ट अपनिष्ट ।
**पन** स्तुतौ भ्वा० आ० सक० सेट । पनायते पनायति अपना-
**पनस** पु० पन-असच् । (काटाल) कण्टकिफले । [गतौ न०
**पन्न** त्रि० पद-क्त । गलिते, च्युते, च । पद नत् । अधोगम-

**पन्नग** पु० पन्नमधोगमं यथा तथा गच्छति, पद्भ्यां न गच्छति वा, गम-ड । सर्पे, पद्मकाष्ठे च । जातौ ङीप् । सर्प्याम् ।
**पन्नगाशन** पु० पन्नगानश्नाति अश-ल्यु । गरुडे ।
**पन्नद्धा** स्त्री० पदि नद्धा बद्धा नह-क्त । चर्मपादुकायाम् ।
**पन्नद्धी** स्त्री० पद् नह्यतेऽनया नह-ष्ट्रन् षित्वात् ङीप् । चर्मपादुकायाम् । [यथम् ।
**पम्पा** स्त्री० नदीभेदे, 'पश्य लक्ष्मण ! पम्पायामि'ति रामा
**पय** गतौ भ्वा० आत्म० सक० सेट् । पयते अपयिष्ट ।
**पयःकन्दा** स्त्री० पयः क्षीरं कन्दे यस्याः । क्षीरविदार्याम्
**पयस्** न० पा-असुन् इकारस्यान्तादेशः । दुग्धे, जले च ।
**पयस्य** त्रि० पयसो विकारः यत् । दुग्धविकारे दध्यादौ । बिडाले पु० । क्षीरकाकोल्याम्, अर्कपुष्पिकायां, कुटुम्बिन्याञ्च स्त्री० ङीप् । आमिक्षायां स्त्री० टाप् ।
**पयस्विनी** स्त्री० पयस्+अस्त्यर्थे विनि । धेनौ, नद्यां, काकोल्याम्, क्षीरकाकोल्यां, दुग्धफेन्यां, क्षीरविदार्यां, छाग्यां, जीवन्त्यां, रात्रौ च ।
**पयोधर** पु० पयांसि धारयति धृ-णिच् अच् ह्रस्वः । मेघे, स्त्रीस्तने । 'प्रायः पयोधरसमुन्नतिरत्र हेतु'रित्युद्भट' नारिकेले, कशेरुणि, कोषकारे च । [निध्यादयोऽप्यत्र ।
**पयोधि** पु० पयांसि धीयन्तेऽत्र पयस्+धा कि । समुद्रे पयो-
**पयोर** पु० पयो जलं रजति रञ्ज-ड । खदिरे ।
**पयोलता** स्त्री० पयः प्रधाना लता शाक० । क्षीरविदार्याम्
**पयोव्रत** न० पयोमात्रपानरूपं व्रतम् । द्वादशाहसाध्ये व्रतभेदे
**पर** त्रि० पॄ भावे अप्, कर्त्तरि अच् वा । अन्यस्मिन् भिन्ने इत्यर्थे उत्तरे, दूरे, सीमापरिच्छिन्ने, श्रेष्ठे च मोक्षे, केवले, ब्रह्मणि च न० । 'द्वे ब्रह्मणी वेदितव्ये परञ्चापर'ञ्चेति श्रुतिः । शत्रौ पु० ।
**परःशत** न० शतात् परे नि० । शताधिकसंख्यायां, तत्संख्यातेषु च
**परश्वस्** अव्य० श्वः परे दिने नि० । आगामिपरदिवसात् परस्मिन् दिने । [तत्संख्यान्वितेषु च ।
**परःसहस्र** न० सहस्रात् परे नि० । सहस्राधिकसंख्यायां
**परकीय** त्रि० परस्येदम् छ कुक् च । परसंबन्धिनि । उपनायिकायां स्त्री० ।
**परच्छन्द** पु० ६त० । परेच्छायां परच्छन्दानुवर्त्तिनीत्युद्भट परस्य छन्देन छन्दो यस्य । पराधीने त्रि० ।
**परजात** त्रि० परस्मात्, परकर्तृकपोषणाद्वा जात जन ड । अन्येन जाते, परप्रयत्नेन पुष्टे च । [पिक ।
**परतन्त्र** त्रि० परस्तन्त्रं प्रधानं यस्य । पराधीने परायत्तादयो

'स्फुटपरागपरागतपङ्कज'मिति माघ । स्नानीयद्रव्ये कुङ्कुमचूर्णादौ उपरागे, चन्दने च ।

**पराङ्मुख** त्रि० पराक् प्रत्यावृत्तं मुखं यस्य । विमुखे भाव प्रकाशात निवृत्तावुन्मुखे ।

**पराच्** त्रि० परा अञ्चति अनुच क्विन् प्रत्यक्तत्त्वभिन्ने दृढव्यवहारविषये बाह्ये वस्तुनि ।

**पराचित** त्रि० परेणाचित पुष्ट व्याप्तो वा आ+चि क्त । परेण प्रतिपालिते सम्यग्व्याप्ते च ।

**पराचीन** त्रि०परादिभव पराच्+ख। पराङ्मुखे,परकालिके च

**पराजय** पु० परा+जि अच् । पराभवे (हारि) ।

**पराधीन** त्रि०परऽधि इति वाक्ये समासे चाध्युत्तरपदात् ख, परस्याधीनो वा । परायत्ते । [अप्रस्थाने न०

**परान्न** त्रि० परस्यान्नमेवान्नमस्य । परान्नोपजीविनि । ६त०।

**पराभव** पु० परा+भू अप् । तिरस्कारे, अभिभवे, विनाशे च

**परामर्श** पु० परा+मृश घञ् । युक्तौ, विवेचने, न्यायादुक्ते व्याप्तिविशिष्टतया पक्षस्य ज्ञाने च यथा वह्निव्याप्यधूमवान पर्वत इत्यादि ज्ञानम् ।

**परायण** न० परमयन यत्तम । अत्यन्तासक्तौ उत्तमाश्रये च ६त०। अत्यासक्ते, यथा धर्मपरायण धर्मे अत्यन्तासक्तः । तत्परे अभीष्टे च त्रि० ।

**परारि** अव्य० पूर्वतरे वर्षे पूर्वतर+अरि परादेश नि० । पूर्वतरवत्सरे गततृतीयवत्सरे । परोऽरिः । अत्यन्तशत्रौ पु०

**पराक** पु०-पराद्र्कति परा+रु उण् । कारवल्लीवृक्षे (उच्छा) ।

**परार्द्ध** न० अध-अच कर्म० । चरमसंख्याया 'पारेपरार्द्धं गणित यदि स्या'दिति नैषधम् । कर्म० । ब्राह्मण आयुषोर्द्धिती यार्द्धे । [यत् । श्रेष्ठे 'परार्ध्यवर्णास्तरणे'ति रघु ।

**परार्ध्य** त्रि० परार्द्धे चरमसंख्यामुपचारात श्रेष्ठत्वमर्हति

**परावर्त्त** पु० परा+वृत घञ । परीवर्त्ते विनिमये ।

**परावह** पु० परा+वहति परा+वह अच । सप्तवायुमध्ये परिवहवायोरूर्द्धस्थे वायुभेदे ।

**पराशर** पु० व्यासपितरि मुनिभेदे ।

**पराश्रया** स्त्री० परमाश्रयति आ+श्रि अच । वन्दाकाम (परगाछा) अन्यावलम्बिनि त्रि० ।

**परासन** न० परा+अस ल्युट । मारणे ।

**परासु** त्रि० परागता असवो यस्य । मृते ।

**परास्कन्दिन्** पु० परान् आस्कन्दति णिनि । चौरे ।

**परास्त** त्रि० परा+अस क्त । निरस्त पराजिते च ।

**पराह** पु० परमुत्तरमहः कर्म० टच समा० पुंस्त्वं । परदिने

**पराह्ण** पु० परमह्नः एकदेशिस० टच् समा० अह्नादेश णत्वम । दिवसस्य चरमभागे, स्मृत्युक्तऽपराह्णकाले च ।

**परि** अव्य० पृ-इन । सर्वत इत्यर्थे वर्जने व्याप्तौ,दोष, कथित प्रकार मात्रे, निरसने, पूजायां, भूषणे, उपरमे, शोके, सन्तोषभाषणे, अतिशये, त्यागे, नियमे च ।

**परिकर** पु० परि+कृ अप् । पर्यङ्के, परिवारे, समारम्भे, समूहे प्रगाढगात्रवन्धे, विवेके, सहचारिणि च ।

**परिकर्म्मन्** न०। कर्म संस्कारादि,०द्यस्माद्वा ५ब० देहसंस्कारे, कुङ्कुमाद्यङ्गोद्वर्त्तनीयद्रव्ये भूषणे च गणितानुगुणेषु सङ्कलनव्यवकलनगुणनभागहारवर्ग्ननतन्मूलेषु अष्टविधेषु संस्कारेषु च । ६त० । सेवके त्रि ।

**परिक्रम** पु० परि+क्रम घञ् न वृद्धि । क्रीडादौ, पूजादौ प्रदक्षिणीकरणाद्यर्थ परि इत गमने च ।

**परिक्रिया** स्त्री० परितः क्रिया वेष्टनम । परिखादिना पुरादेर्वेष्टने । [भेदे परिक्षितोप्यत्र ।

**परिक्षित्** पु० अर्ज्जुनेन सुभद्राय सुत्पादित कुरुवंशे नृपति-

**परिखा** स्त्री० परितः खन्यते खन ड । पुरादौ रिपुप्रवर्तना दुष्प्रवेशतासिद्धये गर्त्तरूपायां जलाधारस्थाने वेष्टनाकारभूमौ । [वेष्टिते, गते च ।

**परिगत** त्रि० परि+गम क्त । प्राप्ते, ज्ञाते, विस्मृते,

**परिग्रह** पु० परि+ग्रह अच् । स्वीकारे,सैन्यपश्चाद्भागे च कर्मणि च । भार्य्यायां, परिजने च । करणे अप् । मूले, शपथे च ।

**परिघ** पु परि+हन क नि० । परिघातास्त्रे लौहमुद्गरादौ, लौहमुखे लगुडे मुद्गरे, शूले, काचघटे, घटे विष्कम्भावधिके ऊनविंशतितमे योगे च । [प्रणये च ।

**परिचय** पु० परि+चि अच। ज्ञातस्य पौनःपुन्येन ज्ञाने,संस्तवे,

**परिचर्य्या** स्त्री० परिचर+क्यप । सेवायाम ।

**परिचाय्य** पु०परिचीयते सञ्चियतेऽसौ चि ण्यत । यज्ञाग्नौ ।

**परिचारक** त्रि० परि+चर ण्वुल । सेवके भृत्ये ।

**परिच्छद** पु० परि+छद-णिच् घ ह्रस्व । उपकरणे कृत्यस्य स्वमदादौ, वस्त्रादिभूषणे, परिवारे च । 'सेनापरिच्छदस्तस्य'ति रघु ।

**परिच्छेद** पु० परि+छिद-घञ् । विशेषरूपेण इयत्ताकरणे, सर्गादिस्थानीये ग्रन्थस्य विच्छेदस्थाने च ।

**परिजन** पु० परिगतो जन । परिवारे प्रतिपाल्ये जने ।

**परिणत** त्रि० परि+नम क्त णत्वम । परिपक्वे वृद्धिं गते अवस्थान्तर प्राप्ते, तिर्य्यग्दन्तप्रहारिणि गजे च

**परिणय** पु० परि+नी अच् । विवाहे ।

परिणाम पु० परि+नम-घञ् । प्रकृतेरन्यथाभावे विकारे, शेषे, अर्थालङ्कारभेदे च ।

परिणाह पु० परि+नह घञ् । विस्तारे ।

परिणेतृ पु० परि+नी-तृच् । विवाहकर्त्तरि भर्त्तरि ।

परितस् अव्य० परि+तसिल् । सर्वत इत्यर्थे चतुर्दिक्षु ।

परिताप पु० परितपने, भाव वा भावादौ घञ् । दुःखे, उष्णतायाम्, शोके, भये, कम्पे, नरकभेदे च । [वाच्ये च ।

परित्राण न० परि+त्रै ल्युट् । रक्षणे, अतिशये मध्यस्य नि-

परिदान न० परिवर्त्तेन दानम् दा ल्युट् । विनिमये द्रव्यान्तरग्रहणेन द्रव्यान्तरदाने ।

परिदेवन न० परि+दिव-ल्युट् । अनुशोचने, विलापे, कृतस्य कर्मणोऽनुचितत्वधियानुतापे च । णिच्-युच् । परिदेवना अत्र, लाभे च स्त्री० । [वृक्षे गर्भधोपतनवचने ।

परिधान न० परिधीयते परि+धा कर्मणि ल्युट् । परिहित-

परिधि पु० परि+धा कि । चन्द्रसूर्यसमीपस्थे मेघादिरश्मिकृतेन जायमाने वेष्टनाकारे मण्डले (सूर्यसभा) (चन्द्रसभा) यज्ञियपशुबन्धनार्थं निखातायां यज्ञियतरोः शाखा- याद् शाखायाम्, गोलमण्डलस्य परितो वेष्टनस्थूलमाने, परित पार्श्वे च ।

परिधिस्थ त्रि० परिधौ तिष्ठति स्था-क । परिचारके, युद्धादौ रथिनो रक्षार्थं परित स्थिते सैन्यादौ च ।

परिपण न० परिपण्यते व्यवह्रियतेऽनेन पण-घञ् । मूलधने

परिपन्थक पु० परिपन्थयति दोषाख्यानं गच्छति णुच् पन्थानं वर्जयित्वा गच्छति वा पन्थ पन्थादेश । शत्रौ ।

परिपन्थिन् पु० परि+पन्थ-इनि । शत्रौ ।

परिपाक पु० परि+पच घञ् । नैपुण्ये, उत्तमपाके च ।

परिपाकिनी स्त्री० परिपाक+अस्त्यर्थे इनि । त्रिवृति (तेवोडी)

परिपाटि(टी) स्त्री० परि+पट-इन् । अनुक्रमे, आनुपूर्व्याम्

परिपुष्करा स्त्री० परित पुष्कर यस्या । (गोडुक्) गोडुम्बायाम् । [यमाने सभाकारे पदार्थे ।

परिपेल न० परि+पेल अच् । कैवर्त्तीमुस्तके पेलमध्ये जा-

परिपेलव न० परित पेलवं मृदुता यस्य । कैवर्त्तीमुस्तके ।

परिप्लव न० परि+प्लु अच् । चञ्चले अस्थिरे ।

परिबर्ह पु० परि+बर्ह घञ् । नृपयोग्ये हस्त्यश्वादिपरिच्छदे

परिभ(भा)व पु० परि+भू अप् घञ् वा । अनादरे, तिरस्कारे च

परिभाषण न० परि+भाष-ल्युट् । निन्दया दुष्टवचने आलापे, नियमे च । [अनादृत्य बहुदायार्थं विशिष्टसंज्ञायाम् ।

परिभाषा स्त्री० परि+भाष अ । अचिमसंज्ञायाम् अवयवार्थ-

परिभूत त्रि० परि+भू क्त । तिरस्कृते, अनादृते च ।

परिमण्डल त्रि० परिगतो मण्डलम् । वर्त्तुलाकारे ।

परिमल पु० परि+मल-अच् । कुङ्कुमचन्दनादिमर्द्दने, मर्द्दनोद्भूते सुगन्धौ, परित सम्बन्धे च । 'सतां परिमल'इत्युद्भट

परिमाण न० परिमीयतेऽनेन परि+मा ल्युट् । (माप) तुलाङ्गुलप्रस्थादिभिर्द्रव्यस्य परिच्छेदे । [इयत्तापरिमाणे च ।

परिमित त्रि० परि+मा क्त । कृतपरिमाणे, युक्ते, यथा-

परि(री)रम्भ पु० परि+रभ घञ् नुम् च वा दीर्घ । आलिङ्गने

परिवत्सर पु० सम्वत्सरमध्यकालगते वत्सरभेदे ।

परिवर्ज्जन न० परिवर्ज्यते हृष्यतेऽनेन वृज णिच् ल्युट् । मारणे । वृज-भावे-ल्युट् । त्यागे ।

परि(री)वर्त्त पु० परि+वृत भावे घञ् वा दीर्घः । विनिमये । आधारे, घञ् । युगान्ते काले, ग्रन्थविच्छेदे अध्यायादौ च कर्त्तरि अच् । कूर्म्मराजे । भावे ल्युट् । परिवर्त्तनं विनिमये ।

परिवह पु० परि+वह-अच् । सप्तवायुमध्यपातिनि वायुभेदे ।

परि(री)वाद पु० परि+वद-घञ् वा दीर्घ । अपवादे 'गुरोर्यत्र परीवाद' इति मनु ।

परिवादिनी स्त्री० परितो वदति अपवादमिव भवति वद-णिनि । सप्ततन्त्रीयुक्तायां वीणायाम् अपवादकर्त्र्यां स्त्रियाञ्च

परि(री)वाप पु० परि+वप घञ् वा दीर्घ । वपने । वप-णिच्-घञ् । मुण्डने । ल्युट् । परिवापणमप्यत्र ।

परिवापित त्रि० परि+वप वा-वा णिच् क्त । मुण्डिते ।

परि(री)वार पु० परिव्रियतेऽसौ अनेन वा परि+वृ घञ् वा दीर्घ । परिजने कुटुम्बादौ, खड्गकोषे, (खाप) परिवादे च ।

परि(री)वाह पु० परि+वह घञ् वा दीर्घ । जलोच्छ्वासे परित समन्ताज्जलानामुच्छलने तथा त्वम् ।

परिविन्न त्रि० परिविद्यतेऽसौ कर्म्मणि क्त । कनिष्ठस्य विवाहकाले अनूढे ज्येष्ठे । तादृश्यां भगिन्यां स्त्री० । ज्येष्ठानूढताकालेऽनुजोद्वाहरूप दोष परिवेदनं तेन दुष्टम्, इति तस्य परिवेदनकर्म्मत्वम् ।

परिवित्ति पु० परिविद्यते परिवेदनजदोषेण दुष्यतेऽसौ, परि+विद कर्म्मणि क्तिच् । कनिष्ठाद्वाहयुक्तानूढे ज्येष्ठे

परिवृढ त्रि० परि+वृह क्त । अधिपे प्रभौ ।

परिवेत्तृ पु० परि+विद तृच् । ज्येष्ठेऽनूढे प्राग्विवाहरूपपरिवेदनकर्त्तरि अनुजे भ्रातरि ।

परिवेदन न० परि वर्जयित्वा उचितकालं वेदन विवाह लाभो वा । ज्येष्ठे, अनूढे, अकृताग्न्याधाने च कनिष्ठस्य विवाहकरणे, अग्न्याधानकरणे च दुरदृष्टजनके व्यक्तिके दोषे ।

**परिवेदनी** स्त्री० परिविद्यते यया परि+विद करणे ल्युट् ङीप्। यामूढ्वा 'परिवेदनदोषो भवति तस्यां स्त्रियाम्, 'परिवेत्ता परिवित्ति यया च परिविद्यते। सर्व्वे ते नरकं यान्ति दातृयाजकपञ्चमाः' इति मनुः।

**परिवेश** पु० परि+विश व्याप्तौ भावे घञ्। वेष्टने, मेघादिसम्पर्कोज्जायमाने चन्द्रार्कमण्डलस्य वेष्टनाकारे। 'वाताद्यैर्मण्डलीभूताः सूर्य्याचन्द्रमसोः कराः। मालाभा व्योम्नि दृश्यन्ते परिवेशस्तु स स्मृतः' इत्युक्ते मण्डले पदार्थे।

**परिवेषण** न० परि+विष-णिच् ल्युट्। भोजनार्थमन्नादेर्भाजनपात्रे दाने।

**परिव्याध** पु० परि+व्यध-कर्त्तरि ण। अम्बुवेतसे।

**परिव्राज्** पु० परि+व्रज क्विप् नि०। सर्व्वकर्म्माणि परित्यज्य चाश्रमान्तरगामिनि चतुर्थाश्रमिणि यतौ।

**परिव्राज(क)** पु० परित्यज्य सर्व्वकर्म्माणि व्रजति व्रज-घञ् ण्वुल वा। चतुर्थाश्रमिणि यतौ। [प्रतिपादके ग्रन्थे।

**परिशिष्ट** न० परि+शिष क्त अवशेष अत्यर्थे अच्। अवशिष्टाय

**परिश्रम** पु० परि+श्रम घञ् न वृद्धिः। व्यायामे क्लेशकारके आयासे।

**परिश्रय** पु० परि+श्रि-आधारे अच्। सभायाम्।

**परिषद्** स्त्री० परितः सीदन्त्यस्याम् सद क्विप्। सभायां, धर्म्मोपदेशकपण्डितसमुदाये च। [पार्श्वचरे परिजने च।

**परिषद** पु० परितः सीदति गच्छति सद अच्। अनुचरे

**परिषद्वल** त्रि० परिषद्+अस्त्यर्थे वलच्। सभासदे।

**परिष्क(स्क)न्द** त्रि० परिस्कद्यते पर्य्यैते परि+स्कन्द घञ वा। षत्वम्। परपुष्टे। क्त। परिस्कन्नश्चात्र वा षत्वे परिष्कण्णः।

**परिष्कार** पु० परि+कृ घञ् सुट् च। भूषणे विद्यमानवस्तुनो गुणान्तरस्य सम्पादने, संस्कारे च। [मादिसंस्कारे च।

**परिष्कृत** त्रि० परि+कृ क्त सुट् च। भूषिते वेष्टिते, कृतमार्ज्ज-

**परिष्वङ्ग** पु० परि+स्वञ्ज घञ्। आलिङ्गने।

**परिसर** पु० परि+सृ अप्। नदीनगरपर्व्वतादेः समीपस्थाने, मृत्यौ, विधाने च। [न्तात् गमने च।

**परिसर्ग** पु० परितः सृज्यते सृज-घञ्। परिवेष्टने सम

**परिसर्य्या** स्त्री० परि सृ यत्। सर्व्वतो गमने।

**परिस्पन्द** पु० परि+स्पन्द-घञ्। समन्तात् चलने कुसुमपत्रादेः रचनाभेदे परिष्कारे, परिजने च।

**परि(री)स्रुत्** स्त्री० परिस्रवति आकादिना निःसरति स्रु क्विप् वा दीर्घः। मदिरायाम्। क्त। परिस्रुतमप्यत्र। [अनादरे च

**परि(री)हार** पु० परि+हृ घञ् वा दीर्घः। त्यागे, दोषापकरणे,

**परि(री)हास** पु० परि+हस-घञ् वा दीर्घः। केलौ।

**परीक्षक** त्रि० प्रमाणेन परीक्षते परि+ईक्ष ण्वुल्। प्रमाणोपन्यासेन विषयनिरूपके।

**परीक्षण** न० परि+ईक्ष-ल्युट्। प्रमाणेन वस्तुनिरूपणे।

**परीक्षा** स्त्री० परि+ईक्ष अ। दृष्टादृष्टत्वावलोकने प्रमाणेन वस्तुनिरूपणे, स्मृत्युक्ते दृष्टादृष्टत्वसाधके तुलादिप्रमाणे च

**परीष्टि** स्त्री० परि+इष क्तिन्। अन्वेषणायाम्, परिचर्य्यायां च

**परीसार** पु० परि+सृ घञ्। सर्व्वतोगमने।

**परुत्** अव्य० पूर्व्वस्मिन् वर्षे उत् परभावादेशः। गतवत्सरे

**परुत्न** त्रि० परुद्भव त्न। गतवर्षभवे पदार्थे।

**परुष** न० पॄ उषन्। निष्ठुरवचने। नीलीझिण्ट्याम् पु०। चित्रवर्णे, कठोरे च त्रि०।

**परुस्** न० पॄ-उसि। ग्रन्थौ, (गांट) पर्व्वणि च।

**परेत** त्रि० परा+इण क्त। मृते। [क्विप् वा। यमे।

**परेतराज(ज्)** पु० ६त० टच् समा०, परेतेषु राजते राज अच्

**परेद्यवि** अव्य० परस्मिन्नहनि नि०। परदिवसे इत्यर्थे।

**परेद्युस्** अव्य० परस्मिन्नहनि पर+एद्युस्। परदिने। [गवि।

**परेष्टुका** स्त्री० परैरिष्यते इष तु स्वार्थे कन्। बहुप्रसवायां

**परैधित** त्रि० परैरेधितः एध-णिच् क्त। अन्यपालिते।

**परोक्ष** अव्य० अक्ष्णः परम् अव्य० टच् नि०। अप्रत्यक्षे, अर्थ-थादाव्। तद्विषये त्रि०।

**परोष्णी** स्त्री० परा-उष्णा कर्म्म गौरा० ङीप्। तैलपायिकायाम्

**पर्कटि** स्त्री० पृच अटि न्यङ्क्वा० कुत्वम् (पाकुड़) प्लक्षवृक्षे।

**पर्कटिन्** पु० पृच अटिनि नि० कुत्वम्। प्लक्षवृक्षे। [(पाकुड़)।

**पर्जन्य** पु० पृषु सेचने अन्य जश्चादेशः। इन्द्रे, मेघे, 'यज्ञाद्भवति पर्जन्य' इति मनुः। मेघशब्दे च। दारुहरिद्रायां स्त्री०

**पर्ण** हरितभावे चु० उभ० सक० सेट्। पर्णयति ते अपपर्णत् त

**पर्ण** न० पॄ न, पर्ण अच् वा। पत्रे पक्षे च सुपर्णो गरुडो मत इति। पलाशवृक्षे पु०। ताम्बूले न। पत्रयुक्ते त्रि०।

**पर्णखण्ड** पु० पर्णैरेव खण्ड्यते यस्य पुष्पहीनत्वात्। पुष्पहीने वनस्पतौ वृक्षे।

**पर्णचोरक** पु० पर्णं चोरयति चुर ण्वुल्। चोरनामगन्धद्रव्ये

**पर्णनर** पु० पर्णनिर्म्मितः नराकारः नरः। अस्थ्यलाभादौ स्मृत्युक्ते दाह्य शवप्रतिनिधिभूत पर्णनिर्म्मिते नराकारे।

**पर्णभेदिनी** स्त्री० पर्णानि भिनत्ति भिद णिनि। प्रियङ्गुवृक्षे

**पर्णलता** स्त्री० पर्णप्रधाना लता शाक०। ताम्बूलीलतायाम्।

**पर्णवल्ली** स्त्री० पर्णप्रधाना वल्ली शाक०। पलाशीलतायाम्।

**पर्णशाला** स्त्री० पर्णनिर्म्मिता शाला शाक०। पर्णनिर्म्मित

कुटीरे । [कावे गजस्नानवदाश्रमस्थर इति प्रसिद्धि ।

पर्णाश्मन् पु० पर्णानि अश्नाति अश-मनिन् । मेघे तस्य पत्रभक्षण

पर्णास(सि) पु० पर्णानि अस्यति अस-अच् इन् वा । तुलस्याम्

पर्णिन् पु० पर्ण+अस्त्यर्थे इनि । वृक्षे । माषपर्ण्यां स्त्री० ङीप् ।

पर्द्द अपानवायुक्रियायां भ्वा०आत्म०अक०सेट् । पर्द्दते अपर्द्दिष्ट

पर्प गतौ भ्वा०पर०सक०सेट् । पर्पति अपर्पीत् ।

पर्प न० पॄ प । स्तम्बे, नवतृणे, खञ्जवाहनसाधने पीठादौ ।

पर्पट पु० पर्प-अटन् । (क्षेतपापड़ा) क्षुपभेदे, माषादिचूर्णकृते (पापर) ख्याते पिष्टकभेदे, सौराष्ट्रमृत्तिकायाम्, उत्तरदेश-भवे हरगन्धिद्रव्ये च स्त्री० गौरा० ङीष् ।

पर्व गतौ भ्वा०पर०सक०सेट् । पर्वति अपर्वीत् ।

पर्य्यङ्क पु० परिगतोऽङ्कम् प्रा० । खट्वायाम्, योगपट्टे 'पर्य्यङ्क-ग्रन्थिबन्धद्विगुणितभुजगाश्लेष' इत्यादि मृच्छकटिकम् ।

पर्य्यङ्कपादिका स्त्री० पर्य्यङ्क इव पादा यस्याः स्वार्थे कन् । कोशातक्याम् ।

पर्य्यङ्कबन्ध पु० पर्य्यङ्कस्य योगपट्टस्य बन्धः बन्ध-घञ् । योगपट्टबन्धादिना पृष्ठजानुजङ्घाबन्धने 'पर्य्यङ्कबन्धं निविड' बिभेदेति कुमार । ल्युट् । अत्रैव न० ।

पर्य्यटन न० परितोऽटनम् । पुनः पुनर्भ्रमणे ।

पर्य्यनुयोग पु० परितोऽनुयोगः प्रश्नः । दूषणार्थं जिज्ञासा-याम् एतेनास्यापि पर्य्यनुयोगस्यानवकाश इति दायभाग ।

पर्य्यन्त पु० परिगतोऽन्तं सीमाम् । आसन्नादौ शेषसीमायाम्

पर्य्यन्तभू स्त्री० पर्य्यन्तस्य शेषसीमाया भूः । पार्श्वादे शेषसीमास्थाने । परिसरे ।

पर्य्यय पु० परिलङ्घ्य शास्त्रलौकिकमर्य्यादाम् अय इण-अच् । शास्त्रलोकव्यवहारातिक्रमे आचारे ।

पर्य्यवस्था स्त्री० परि+अव+स्था-अङ् । विरोधे, प्रतिपक्षवादे च । ल्युट् । तत्रैव न० । तच्च तत्कर्त्तरि त्रि० ।

पर्य्यस्त त्रि० परि अस-क्षेपे क्त । क्षिप्ते, पतिते, हते च ।

पर्य्याण न० परि+या ल्युट् पृ० । अश्वपृष्ठस्थाया मल्ययने (जिन्) इण-ल्युट् । पर्य्ययणमप्यत्र ।

पर्य्याप्त न० परि+आप भावे क्त । यथेष्टे, तृप्तौ, सामर्थ्ये, निवारणे, योग्यत्वे च । कर्त्तरि क्त । समर्थे, प्राप्ते च त्रि० ।

पर्य्याप्ति स्त्री० परि+आप क्तिन् । प्रहरणादितो निवारणे, प्रकामे, प्राप्तौ, सम्यक्त्वेन प्राप्तौ, न्यायमतसिद्धे समुदाय-धर्म्मभावपदार्थाभावे सर्वत्र सम्बन्धरूपे सम्बन्धभेदे च ।

पर्य्याय पु० परि+इण घञ् । अनुक्रमे, प्रकारे, अवसरे, निर्माणे, द्रव्यधर्म्मभेदे, समानार्थबोधके शब्दे च ।

पर्य्यायशयन न० पर्य्यायेण क्रमेण शयनम् । यामिकभटानां क्रमेण शयने ।

पर्य्युदञ्चन न० पर्य्युदच्यते उद्ध्रियते कर्म्मणि ल्युट् । ऋणे

पर्य्युदस्त त्रि० परि+उद्+अस क्त । निवारित फलप्रत्यवाय-शून्यतया भेदार्थकनञा निषिध्यमाने 'यथा रात्रौ श्राद्धं न कुर्वीते'ति अत्र हि रात्रौ श्राद्धे न फलं न प्रत्यवाय इति रात्रि पर्य्युदस्ता तद्भिन्नकालावस्थाया श्राद्धम् ।

पर्य्युदास पु० परि+उद्+अस-घञ् । निवारणे फलप्रत्यवाय-शून्यतया भेदार्थकनञा बोध्ये 'प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' इत्युक्तलक्षणे निषेधे च विस्तरस्तु वृहदभिधाने ।

पर्य्युषित त्रि० परिक्रम्य स्वकालमतिक्रम्य उषितम् वस क्त । (वासि) यातयामादौ पदार्थे, 'यातयामं गतरसं पूति पर्य्युषितञ्च यदि'ति मनु ।

पर्य्येषणा स्त्री० परितस्तर्कादिना एषणा परीक्षा । तर्कादिद्वारा पदार्थपरीक्षायाम्, अन्वेषणायाञ्च ।

पर्व्व पूर्त्तौ भ्वा०पर०सक०सेट् । पर्व्वति अपर्व्वीत् ।

पर्व्वत पु० पर्व्व अतच्, पर्व्वाणि भागाः सन्त्यस्य त वा । गिरौ भूधरे, दानार्थं कल्पिते पर्व्वताकारे गुडादिराशौ, मुनि-भेदे 'नारदपर्व्वतौ' 'ततः प्रययौ ततः पर्व्वतस्तस्ये'ति नैषधे मत्स्यभेदे (पावदा) वृक्षे, शाकभेदे च ।

पर्व्वतमोचा स्त्री० ६त० । गिरिकदल्याम् ।

पर्व्वतवासिनी स्त्री० पर्व्वते वसति वस णिनि । आकाश-मांस्याम्, गायत्र्याञ्च ।

पर्व्वतीय पु० पर्व्वते भव छ । (पाहाड़ीया) जातिभेदे 'पर्व्वतीयगणैरभूदि'ति रघुः । पर्व्वतजातमात्रे त्रि० ।

पर्व्वन् न० पॄ वनिप् । उत्सवे, ग्रन्थौ (गांट) लक्षणभेद प्रस्तारे, ग्रन्थविच्छेदस्थाने 'चतुर्द्दश्यष्टमी चैव अमावस्या च पूर्णि-मा । पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव चे'ति उक्तेषु पञ्चसु कालभेदेषु च । [गौ इव

पर्व्वयोनि पु० पर्व्व ग्रन्थि योनिरुत्पत्तिस्थानं यस्य । इक्षुप्रभृ-

पर्व्वरुह् पु० पर्व्वणि रोहति रुह क्विप् । दाडिमे । [(गांटदूर्व्वा)

पर्व्ववल्ली स्त्री० पर्व्वप्रधाना ग्रन्थियुक्ता वल्ली । मालादूर्व्वायाम्

पर्व्वसन्धि पु० पर्व्वणः सन्धि । पञ्चदश्याः (पूर्णिमाया अमावस्याया) प्रतिपदश्चैवान्तराले चन्द्रसूर्य्यग्रहयोग्ये काले ।

पर्शुका स्त्री० पर्शुरिव कायति प्रकाशते कै क । पार्श्वास्थिनि तस्य परशुप्रकारत्वात् तथात्वम् । पर्शुरप्यत्र ।

पर्ष स्नेहे भ्वा०आत्म०सक०सेट् । पर्षते अपर्षिष्ट ।

**पाटी** स्त्री॰ पट-णिच् इन् ङीप्। धारायाम्, व्यक्तगणनायां लीलावत्यादौ (दाला) इति ख्याते क्षुपे च। [द्वारके च

**पाठ** पु॰ पठ घञ्। अक्षरायामुच्चारणे गुरुमुखश्रवणपूर्वको-

**पाठक** पु॰ पठति पाठयति वा ण्वुल्। अध्येतरि, अध्यापके च

**पाठशाला** स्त्री॰ ६त॰। पाठमन्दिरे।

**पाठा** स्त्री॰ पठ-कर्मणि घञ् टाप्। विद्धकर्ण्याम् (आकनादि)

**पाठिन्** पु॰ पठ-णिनि। चित्रकवृक्षे। पाठके त्रि॰।

**पाठीन** पु॰ पाठिं पृष्ठं नमयति नम ड दीर्घ। गुग्गुलुवृक्षे मत्स्यभेदे च (बोयाल) 'पाठीन रोहितावाद्या'विति मनु' पठ-ईनण्। पाठके त्रि॰। पत्यस्वीध्या, हट्टे च स्त्री॰।

**पाणि** पु॰ पण-इण् आयाभार'। करे, कुलिके हट्टे च (कुबेखाडा)

**पाणिगृहीती** स्त्री॰ पाणिर्गृहीतो यस्याः ङीप्। भार्यायाम्

**पाणिग्रहण** न॰ पाणिर्गृह्यतेऽत्र ग्रह-आधारे ल्युट्। विवाहे। 'पाणिग्रहणसंस्कार सवर्णासूपदिश्यते' इति मनु। पाणिपीडनादयोऽप्यत्र।

**पाणिघ** पु॰ पाणिं हन्ति, पाणिना वा हन्ति वादयति हन टक् कुत्वम्। पाणिताडके, पाणिना मृदङ्गादिवादके च।

**पाणिनि** पु॰ पणिन पण तत॰ अस्त्यर्थे इनि तदपत्यम् अण् तस्य छात्र इञ्। अष्टाध्यायीव्याकरणादिकारके दाक्षीपुत्रे शालातुरीयग्रामभवे मुनिभेदे।

**पाणिनीय** त्रि॰ पाणिनिना प्रोक्तम्, तस्येदम् वा छ। पाणिनिना कृते अष्टाध्यायीरूपादौ व्याकरणादौ।

**पाणिभुज्** पु॰ पाणिभिरिव भुज्यते मोट्यते भुज मोटने क्विप्। उदुम्बरवृक्षे। पाणिना भुङ्क्ते भुज क्विप्। हस्तेन भक्षके त्रि॰।

**पाणिवाद** पु॰ पाणि, पाणिना वा मृदङ्गादिकं वादयति वद-णिच् अण् अच् वा। हस्तताडके, हस्तेन मृदङ्गादिवादके च। ण्वुल्। पाणिवादकोऽप्यत्र।

**पाणिसर्ग्या** स्त्री॰ पाणिना सृज्यतेऽसौ सृज-ण्यत्। रज्जौ

**पाण्डर** पु॰ पडि-अर दीर्घश्च। मरुवकवृक्षे, श्वेतवर्णे च। तद्वति त्रि॰। कुन्दपुष्पे, गैरिके च न॰। [पुत्रे युधिष्ठिरादौ।

**पाण्डव** पु॰ पाण्डोरपत्यम् अण्। चन्द्रवंश्यस्य नृपभेदस्य पाण्डोः तनुजे

**पाण्डु** पु॰ पडि कु नि॰ दीर्घ। चन्द्रवंश्ये, नृपभेदे श्वेतवर्णे, केतकीधूलिसन्निभे पीतवर्णार्द्धे वर्णभेदे च। तद्वति त्रि॰। नागभेदे, श्वेतहस्तिनि, रोगभेदे, पटोलवृक्षे च पु॰। माषपर्ण्या स्त्री॰

**पाण्डुकण्टक** पु॰ पाण्डुवर्णानि कण्टकानि यस्य। अपामार्गे

**पाण्डुकम्बल** पु॰ कर्म॰। श्वेतवर्णप्रावारे। कम्बल इव पाण्डु राज॰। प्रस्तरभेदे। [वर्णकम्बलप्रावृते रथे।

**पाण्डुकम्बलिन्** पु॰ पाण्डुकम्बल+अस्त्यर्थे इनि। पाण्डु

**पाण्डुतरु** पु॰ कर्म॰। धववृक्षे। [हस्तिनि, श्वेतवर्णे च।

**पाण्डुनाग** पु॰ नाग इव पाण्डु राज॰। पुन्नागवृक्षे, श्वेत-

**पाण्डुफल** पु॰ पाण्डूनि फलान्यस्य। पटोले। चिर्भ्यां स्त्री॰

**पाण्डुर** पु॰ पाण्डुर्वर्णोऽस्यास्ति र। श्वेतपीतमिश्रिते वर्णे। पडि-उर ह॰ दीर्घ। श्वेतवर्णे च। तद्वति त्रि॰ कामलाख्ये रोगे, श्वित्ररोगे च न॰। माषपर्ण्यां स्त्री॰ टाप्।

**पाण्डुरङ्ग** पु॰ पाण्डुरमङ्गमस्य शक॰। (माटराङ्गा) शाके

**पाण्डुरद्रुम** पु॰ कर्म॰। कुटजवृक्षे (कुडची)।

**पाण्डुराग** पु॰ पाण्डु रागो वर्णो यस्य। दमनकवृक्षे।

**पाण्डुलोमशा** स्त्री॰ पाण्डूनि लोमानीवाङ्गानि सन्ति यस्याः श। माषपर्ण्याम्। श्वेतलोमवति त्रि॰।

**पात** पु॰ पत-घञ् पतने। पा-क्त। रक्षिते त्रि॰। पत ण। ज्योतिषोक्ते क्रान्तिसाम्यसम्पादके राहुरूपे ग्रहभेदे।

**पातक** न॰ पातयति अधो गमयति पत-णिच्-ण्वुल्। पातित्य-सम्पादके पापे, पापजनके प्राणिवधादौ च।

**पातञ्जल** न॰ पतञ्जलिना प्रोक्तम् अण्। पाणिनिसूत्रवार्त्तिक-व्याख्यानरूपे 'अथ शब्दानुशासन'मित्यादिके महाभाष्ये, 'अथ योगानुशासन'मित्यादिके-योगशास्त्रे च।

**पाताल** न॰ पत-आलञ्। धरायास्तलस्थे भुवने, ज्योतिषोक्ते लग्नाच्चतुर्थे स्थाने च।

**पातालनिवास** पु॰ नि+वस-आधारे घञ् पाताल निवासो यस्य। दैत्ये पातालनिलयादयोऽप्यत्र।

**पातुक** त्रि॰ पत उकञ् पतनशीले। प्रपाते, जलहस्तिनि च पु॰

**पात्र** न॰ स्त्री॰ पाति रक्षत्याधेयं, पिबत्यनेन वा पा-ष्ट्रन् स्त्रियां ङीप्। जलाद्याधारे भोजनयोग्ये अमत्रे, विद्यादियुक्ते दानयोग्ये ब्राह्मणे 'ब्राह्मण पात्रभाङ्' इति स्मृति। स्रुचिप्रभृतौ, तीरद्वयमध्यवर्त्तिनि जलाधारस्थाने, नाट्ये ऽभिनेये नायकादौ च न॰।

**पात्रीय** त्रि॰ पात्रे यज्ञपात्रे योग्य छ। यज्ञद्रव्ये। स्वार्थे छ। योग्ये, 'विप्र पात्रीयतामियादि'ति स्मृति।

**पात्रेसमित** त्रि॰ पात्रे भोजनपात्रासादनकाले एव समित सङ्गत। भोजनादन्यत्र अनुपस्थिते कार्य्यादक्षे। [च

**पाथ** न॰ पीयतेऽद थ। जले। पाति रक्षति थ। अग्नौ, सूर्य्ये

**पाथस्** न॰ पाति रक्षति, पीयते वा पा-पाने, रक्षणे वा असुन् थुक् च। जले, अन्ने च अन्नभोजने हि देहरक्षा।

**पाथेय** त्रि॰ पथि हितं ढञ्। पथि भोजनोचिते द्रव्ये।

**पाद्** पु॰ पद णिच् क्विप्। चरणे पादे। [श्लोकादेर्भूमे च।

**पाद** पु॰ पद्यते गम्यतेऽनेन करणे घञ्। चरणे, चतुर्थांशे,

पादकटक पु० पादस्य कटक इव । नूपुरे ।
पादकृच्छ्र पु० पादमितचतुर्थांशमित कृच्छ्र शाक० । 'उप-
वासेन चैकेन पादकृच्छ्रउदाहृत' इत्युक्ते व्रतभेदे ।
पादग्रहण न० पादयो ग्रहण यत्र ।। पादग्रहणपूर्वके
प्रणामभेदे 'अनूच्य पादग्रहण गुरुत्वस्याभिवादन मिति मनु
पादचारिन् पु० पादेन चरति चर-णिनि ३त० । पदातौ ।
पद्भ्या गन्तरि त्रि० ।
पादत्राण न० पादौ त्रायते येन त्रै-करणे ल्युट् । पादुकायाम्
पादप पु० पादेन मूलेन पिबति पिव जलम् पा-क । वृक्षे ।
पाद पाति रक्षति पा क । पादपीठे । (गाछ)
पादमरुहा स्त्री० पादम रोहति रुह-क । वन्दाकाम् (पर-
पादपीठ न०६त० । पादस्यापनासने । 'सिंहासन तस्य स-
पादपीठमिति भट्टि । पादुकायां स्त्री०टाप् ।
पादमूल न० ६त० । चरणस्याधोभागे ।
पादरोह पु० पादेन मूलेन रोहति रुह अच् । वटवृक्षे ।
पादवल्मीक न० पादस्य वल्मीकमिव । श्लीपदरोगे (गोद)
पादविक त्रि० पदवीं धावति ठक् । पथिके पथिधावके ।
पादविरजस् स्त्री० पादौ विरजसौ धूलिशून्यौ यस्या ।
५ब० । पादुकायाम् । [पौवा) दानादौ ।
पादशस् अव्य० पाद पाद ददाति करोति वा शस् । (पौवा-
पादशैल पु० पादाकार शैल । प्रत्यन्तपर्वते ।
पादस्फोट पु० । पादौ स्फोटयति अण् । रोगभेदे ।
पादाग्र न० ६त० । चरणाग्रभागे अग्रपदे ।
पादाङ्गद न० पादस्य अङ्गदमिव । नूपुरे ।
पादात न० पदातीना समूह अण् । सैन्यसमुदाये पादाभ्या
सतति गच्छति अच् । पदातौ सैन्ये। पादातिपादाजिकोऽप्यत्र
पादुका स्त्री० पद णिच्-ऊ तत स्वार्थे कन् ह्रस्व । चर्ममये
पादाच्छादने पदार्थे (जुता) । कनभावे पादूरप्यत्र ।
पादुकाकार पु० पादुका करोति कृ अण् उप० । चर्मकारे
पादूकृत्पादुकाकृदादयोऽप्यत्र ।
पाद्य न० पादाय पादप्रक्षालनाय साधु यत् । पादप्रक्षालनार्थे
जले । अपा स्त्रीत्वेन स्त्रीत्वमपि । 'पाद्या पाद्या इत्यादि
पाद्यदानमन्त्र । [आधारे ल्युट् । पानभाजने ।
पान न० पा ल्युट् । द्रवद्रव्यस्य गलाध सयोजने, रक्षणे च
पानगोष्ठी स्त्री० पानार्थं गोष्ठी सभा । (चक्र) पानार्थे सभायाम्
पानभाजन न० पीयतेऽस्मिन् पा ल्युट् कर्म० । पानपात्रे
पानपात्रादयोऽप्यत्र ।
पानीय न० पीयत यत् पा-कर्मणि । जल । शालाया० १त्रि
तव्ये च त्रि० । [(पाना) कूपाराम ।
पानीयपृष्ठज पु० पानीयपृष्ठे जलोपरि जायते जन ड ।
पानीयफल न० ६त० । (माखना) जलकन्दफलभेदे ।
पानीयमूलक न० पानीये मूल यस्य कप् । सोमराज्याम् ।
पानीयशालिका स्त्री०पीयतेऽस्याम् आधारे अनीयर् तादृशी
पानीयवितरणार्थं वा या शाला स्वार्थे कन् । प्रपायाम्
(जलछत्रवाटी) ।
पानीयामलक न० कर्म० । (पानिआमला) वृक्षभेदे ।
पान्थ पु० पन्थानं गच्छति पथिन्+अण् पन्थादेश । पथिके ।
पाप न० पाति रक्षति आत्मानमस्मात् पा-अपादाने प ।
नरकहेतौ दुरदृष्टे, तद्धेतौ हिंसादौ, ज्योतिषोक्तेषु क्रूरे
नचन्द्ररविप्रभृतिषु ग्रहेषु । [पापनाशके त्रि० ।
पापघ्न पु०पाप हन्ति टक् । तिले तस्य हि दानेन पापनाशकत्वम्।
पापचेली स्त्री० पुन पुन पचति पा-यङ्-अच् पापचीयाना
मीरयति ईर-अण् रस्य ल । (आकनादि) पाठालतायाम
पापपुरुष पु०पापात्मक पुरुष पुरुषाकार । तन्त्रोक्ते याग
कुक्षिस्थे पापात्मके ध्येये नराकारे पदार्थे ।
पापयक्ष्मन् स्त्री०पापं यक्ष्यतेऽनया यक्ष णिच्-करणे ल्युट् ।
ङीप् । यक्षीवृक्षे ।
पापात्मन् पु० पापयुक्त आत्मा अन्त करण यस्य । पापान्विते
जीवे 'पापात्मा पापसम्भव' इति पुराणम् ।
पाप्मन् पु० आप्नोति व्याप्नोति आप मनिन् नि० । पापे ।
पामन् न०पा मनिन्। विचर्चिकायां (खोस पाचड़ा) स्त्रीत्वमपि
मनन्तात् ङीप् । पामाप्यत्र ।
पामघ्न पु०पामां हन्ति हन टक् । गन्धके। कटुक्यां स्त्री०ङीप्।
पामन त्रि० पामाऽस्यस्य अस्त्यर्थे न । पामरोगवति ।
पामर त्रि०पाति क्विप् पा तयोधर्म र मियनेऽनेन कृ घ ।
मूर्खे, नीचे, खले च । [टाप् । कुटुम्ब्याम् ।
पामरोद्भारा स्त्री०पामरमुद्धरति उद् हृ-अच् अण्वादित्वात्
पामारि पु ६त० । गन्धक तद्धवने हि पामरोगनाश ।
पायस पु० पयसि दुग्धे संस्कृत अण् । परमान्ने । पय इस्
त्विनि त्रि० पायस दधिसंस्कार इति श्रुति । चन्दने च ।
पायु पु० पा-उण् । अपानवायुस्थाने ।
पाय्य न० मीयतेऽनेन या मान नि० य दस । परिमाणे ।।
मानीय न० । निन्दनीय त्रि० । [कत्तपादरत म ।
पार कर्मसमाप्तौ चद०पु०-उभ०सक० सेट् । पारयति ते
पार न०परसेव अण् पार पर तीरं ष धञ् वा। नदीवहि
नास्ये पर तीरे । पार अब धञ् । पारभागे ।

(पाथरकाटाछेनी) । युच् । पाषाणदारणोऽप्यत्र ।
पाषाणभेदन पु० पाषाणं भिनत्ति ल्यु । (हाड़जोड़ा) वृक्षभेदे । [वृक्षभेदे ।
पाषाणभेदिन् पु० पाषाणं भिनत्ति भिद-णिनि (पाथरचुर)
पि गतौ तु० सक० पर० अनिट् । पियति । अपैषीत् ।
पिक पु० अपि-कायति कै-क अपेरल्लोपः । कोकिले ।
पिकप्रिया स्त्री० ६त० । महाजम्ब्वाम् ।
पिकबन्धु पु० ६त० । आम्रवृक्षे ।
पिङ्ग पु० पिजि-वर्णे-अच् न्यङ्क्वा० कुत्वम् । मूषके दीपशिखाभे पिङ्गलवर्णे च । तद्वति त्रि० । हरिताले न० । गोरोचनायां, नालिकायां, दुर्गायाम् हरिद्रायां, हिङ्गुनि, वंशरोचनायाञ्च स्त्री० टाप् । शमीवृक्षे स्त्री० ङीप् ।
पिङ्गल पु० पिङ्गं लाति-ला-क, पिजि-कलच् वा कुत्वम् । नागभेदे, रुद्रे, सूर्यपारिपार्श्विके, वानरे, निधिभेदे, मुनिभेदे, मङ्गले यक्षे, स्थावरविषभेदे, क्षुद्रोलूके ६० वर्षमध्ये 'पिङ्गले चाल्पवारि । दुर्भिक्षं नर्मदातटे' इत्युक्तलक्षणे वत्सरभेदे, प्राकृतच्छन्दोग्रन्थकारके, नागद्रुमे, मुनिभेदे, दीपशिखातुल्ये वर्णे च तद्वति त्रि० । 'कुमुददिग्गजस्य योषिति' नाड़ीभेदे, राजनीतौ, शिंशपावृक्षे, वामनाख्यदिग्गजस्य योषिति, वेश्याभेदे च स्त्री० टाप् । 'यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गले'ति पुराणम् ।
पिङ्गललौह न० लौहं धातु कर्म० । पित्तले ।
पिङ्गाक्ष पु० पिङ्गे अक्षिणी यस्य षच् समा० । शिवे तस्य ललाटस्थाग्निरूपत्वात्तथात्वम् । पिङ्गलाक्षोऽप्यत्र ।
पिचण्ड पु० अपि+चम-ड तस्य णत्वम् अपेरल्लोपः । उदरे, पशोरवयवे च । पृ० इत्वम् । पिचिण्डोऽप्यत्र । [इक्कुली
पिच(चि)ण्डिल त्रि० पिच(चि)ण्ड+मत्वर्थे इलच् । तुन्दिले,
पिचव्य पु० पिचवे तूलाय साधु यत् । कार्पासवृक्षे ।

पिच्छ न० पिच्छ-अच् । मयूरपुच्छे, चूडायाञ्च । लाङ्गूले पु० । शाल्मलिवृक्षे, पूगे, परम्परायाम्, कोषे, मोचायां, भक्तमण्डे, पङ्क्तौ, शिंशपावृक्षे, कोलिशायाम्, अश्वस्य चरणरोगभेदे च स्त्री० टाप् ।
पिच्छल त्रि० पिच्छ-कलच् । (पिछल) स्निग्धे मसृणे ।
पिच्छलदला स्त्री० पिच्छलं दलं यस्याः । बदरीवृक्षे, पिच्छलमत्तादयोऽप्यत्र । [शिंशपायाम्
पिच्छितिका स्त्री० पिच्छ-क्विप् तु० इट् तत स्वार्थे कन् ।
पिच्छिल त्रि० पिच्छ+अस्त्यर्थे इलच् । (पेछल) मसृणे स्निग्धे 'पिच्छिलानि च दधीनी'ति काव्यप्र० । भक्तमण्डे, घृतव्यञ्जनस्यूपादौ, मण्डयुक्तभक्ते च । शाल्मलिवृक्षे पु० ।
पिच्छिलत्वच् पु० पिच्छिला त्वक् यस्य । नागरङ्गवृक्षे
पिच्छिलसार पु० पिच्छिलः सारोऽस्य । मोचरसे ।
पिज दीप्तौ वासे, बले च अक० हिंसायां दाने च सक० चु० उभ० सेट् इदित् । पिञ्जयति ते अपिपिञ्जत् त ।
पिञ्ज न० पिजि अच् । बले । कर्पूरभेदे पु० । व्याकुले त्रि० । तूले, हरिद्रायां, अहिंसायां च स्त्री० । भावेऽच् । वधे पु० ।
पिञ्जट पु० पिजि-अटन् । नेत्रमले (पिचुटि) ।
पिञ्जर न० पिजि-अरच् । हरिताले, स्वर्णे, नागकेशरे, विहगादिबन्धनस्थाने, देहास्थिपञ्जरे च । अश्वभेदे पु० । पीतरक्तवर्णे, पीतवर्णे च पु० । तद्वति त्रि० ।
पिञ्जल न० पिजि-कलच् । हरिताले, कुशपत्रे च । अत्यन्ताकुलसैन्यादौ पु० । कुशानरवेदिति साधकुशपत्रद्वये स्त्री० ङीप् । [(पाइञ्ज) ।
पिञ्जिका स्त्री० पिजि-ण्वुल् अत इत्वम् । तूलनालिकायां,
पिट शब्दे सङ्घाते च भ्वा० पर० अक० सेट् । पेटति अपेटीत् ।
पिट(क) पु० पिट-क, । वंशादिनिर्मिते पात्रभेदे पेडरा विस्फोटे त्रि० । स्वार्थे कन् अत्रैव ।

पुष्पनक्षत्रयुक्तकालेऽभिषेकभेदे । [ते अपुपुस्तत् त ।

पुस्त बन्धे, अनादरे, आदरे च चु॰उभ॰सक॰सेट् । पुस्तयति

पुस्त न॰पुस्त-अच् । 'मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते' इत्युक्ते लिप्यादि शिल्पकर्मणि । स्वार्थे कन् । 'लिप्याधारे ग्रन्थे, पु॰स्त्री॰ स्त्रीत्वे ङीप् ।

पू शोधे दि॰आत्म॰सक॰सेट् । पूयते अपविष्ट ।

पू शोधे भ्वा॰आ॰सक॰सेट् । पवते अपविष्ट । [अपविष्ट

पू शोधे क्र्यादि॰ वा॰ उभ॰ सक॰ सेट् पुनाति पुनीते अपावीत् ।

पूग पु॰ पू-गन् किच्च । (सुपारि) वृक्षे, समूहे छन्दसि, भावे कण्टकिवृक्षे च ।

पूज पूजने चु॰उभ॰सक॰सेट् । पूजयति ते अपूपुजत् त ।

पूजा स्त्री॰ पूज-अ । अर्चने । ल्युट् । पूजनमप्यत्र न॰ ।

पूजार्ह त्रि॰ पूजामर्हति अण् । पूजनयोग्ये ।

पूज्य पु॰ पूज-यत् । श्वशुरे । पूजनीयमात्रे त्रि॰ ।

पूण राशीकरणे चु॰उभ॰सक॰सेट् । पूणयति ते अपूपुणत् त

पूत न॰पू क्त । अपनीततुषे, (आगड़ारहित) बहुलीकृते धान्ये च । व्रतादिना शुद्धे त्रि॰ । सत्ये । शङ्खे, श्वेतकुशे, विकङ्कतवृक्षे च पु॰ । दूर्वायां स्त्री॰ टाप् ।

पूतक्रतायी स्त्री॰पूतक्रतोरिन्द्रस्य पत्नी ङीप् ऐङ् च । शच्याम्

पूतक्रतु पु॰ क्रतुभि 'पूत , पूता पवित्रतासम्पादका क्रतवो यस्य यस्य वा । इन्द्रे ।

पूतगन्ध पु॰ पूतोगन्धो यस्य । बर्बरे (बाबुइतुलसी)

पूतकुश न॰ कर्म॰ । श्वेतकुशे ।

पूतना स्त्री॰ पूतं करोति पूत+णिच्-युच् । हरीतक्यां, गन्धमांस्यां, बकासुरभगिन्यां, या विषाक्तं स्तन्यं पाययन्ती कृष्णेन हता । रोगभेदे,बालकमातृकाभेदे च 'पूतना जम्भकादय'

पूतनारि पु॰ ६त॰ । श्रीकृष्णे ।

पूतफल पु॰ पूतानि फलान्यस्य । पनसे (काटाल) ।

पूति न॰ पू क्तिच् । शोधितत्वे । क्तिन् । पवित्रतायाम् । पूयविशरणे दुर्गन्धे च क्तिन् । दुर्गन्धे । दुर्गन्धवति त्रि॰ ।

पूतिक न॰ पूत्या दुर्गन्धेन कायति कै-क । विष्ठायाम्, पूतिकरञ्जे पु॰। शाकभेदे स्त्री॰(पुइ) 'पूतिका मलघातिके'ति स्मृति

पूतिकरज(ञ्ज) पु॰ पूतियुक्त करज (ञ्ज) (नाटाकरमचा) करञ्जभेदे । [दारुणि । स्वार्थे कन् । सरलवृक्षे पु॰ ।

पूतिकाष्ठ ६त॰ पूते पावनार्थं काष्ठम् चतुर्थ्यर्थे ६त॰ । देव

पूतिगन्ध पु॰ पूतिर्दुष्टो गन्धो यस्य । गन्धके, इङ्गुदीवृक्षे च । कर्म॰ । दुर्गन्धे पु॰ ।

पूतिगन्धि पु॰ पूतिर्दुष्टो गन्धो यस्य इत् समा॰ । दुर्गन्धवति ।

पूतितैला स्त्री॰ पूति दुर्गन्धं तैलं यस्याः । ज्योतिष्मत्याम् ।

पूतिपत्र पु॰ पूतीनि पत्राण्यस्य । श्योनाकभेदे । [जम्बीरभेदे

पूतिपुष्पिका स्त्री॰ पूतीनि पुष्पाण्यस्याः । मातुलुङ्गायाम्

पूतिफला(ली) पूतीनि फलान्यस्याः वा ङीप् । सोमराज्याम् ।

पूतिमयूरिका स्त्री॰ पूतिर्मयूरीव तत इवार्थे कन् । अजमोदायाम् । [मुष्कवायौ पु॰ ।

पूतिमेद पु॰ पूतिर्मेदोऽस्य । अरिमेदे विट्खदिरे । [दुर्गन्ध

पूतिवात पु॰ पूत्यै पवित्रतायै वातोऽस्य । बिल्ववृक्षे । कर्म॰।

पूतिवृक्ष पु॰ कर्म॰। श्योनाकवृक्षे ।

पूप पु॰ पू पक् । पिष्टके (पिठा) ।

पूपाष्टका स्त्री॰ अष्ट परिमाणं यस्याः कन् अष्टका अष्टमी उपचारात् तत्कर्तव्यं श्राद्धम् पूपद्रव्यसाधनाष्टका । कर्म॰ अग्रहायण्याः परत कृष्णाष्टमीविहिते श्राद्धे ।

पूय दुर्गन्धे अक॰ भेदने विशरणे च सक॰ दिवा॰ आत्म॰सेट् । पूयते अपूयिष्ट ।

पूय न॰ पूय-अच् । मथादिनि स्रुते रक्तविकारभेदे (पुज) ।

पूयारि पु॰ ६त॰ । निम्बवृक्षे धवनायकादयोप्यत्र । [अपूरिष्ट

पूर पूर्तौ दीपने च दिवा॰ आत्म॰ सक॰ सेट् । पूर्यते अपूरि॰

पूर पु॰ पूर-क । जलसमूहे, खाद्यभेदे, व्रणशुद्धौ च ।

पूरक पु॰ पूर ण्वुल् । बीजपूरे, जम्बीरभेदे (टाबा लेबु) योगशास्त्रप्रसिद्धे श्वासके [तन्त्रादिप्रसिद्धे प्राणायामाङ्गे वायूर्ध्वरूपे व्यापारभेदे च । पूरणकर्त्तरि त्रि॰। स्मृतशास्त्रविहिकदेहोत्तरं प्रेतदेहनिर्वाहकेऽशौचमध्ये देये पिण्डदानभे॰

पूरण न॰ पूर ल्युट् । अङ्कशास्त्रप्रसिद्धे गुणने, वृष्टौ, कुटजे, आपतन्तुषु च । ल्यु । सेतौ, समुद्रे च पु॰ । सङ्ख्यापूरणे पूरयितरि च त्रि॰ । यथा द्वयो पूरण । द्वितीय ।

पूरणी स्त्री॰ पूर्यतेऽनया । पूरणसङ्ख्या यथा द्वयोः पूरणी द्वितीया । शाल्मलिवृक्षे च ।

पूरित त्रि॰ पूर क्त । पूर्णे, गुणिते च ।

पूरुष पूर उषन् । पुरुषे, नरे ।

पूर्ण त्रि॰ पूर-क्त नि॰ । पूरिते, सकले, समर्थे च ज्योतिषोक्तासु उभयपक्षयो पञ्चमीदशमीपञ्चदशीषु च स्त्री॰ ।

पूर्णकोष्ठा स्त्री॰ पूर्णं कोष्ठं यस्याः । नागरमुस्तायाम् ।

पूर्णपात्र न॰ कर्म॰ । हर्षकाले पुत्रजन्मोत्सवादिषु आकृष्य वस्त्रादेर्ग्रहणे, होमान्ते ब्रह्मदक्षिणार्थतया देये 'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते' इत्युक्तमानवति द्रव्यादौ ।

पृथक्पर्णी स्त्री० पृथक् पर्णान्यस्याः ङीप् । (चाकुलिया) क्षुपभेदे । [भेदे, वियोगे ।

पृथगात्मता स्त्री० पृथक् आत्मा स्वरूपं यस्य तस्य भावः तल् ।

पृथगात्मिका स्त्री० पृथक् भिन्न आत्मा यस्याः कप् । व्यक्तौ सामान्यधर्मस्य यथा सर्वत्र समरूपतया सर्वत्रानुगम-कत्वम् नैव व्यक्तेस्तस्याः भिन्नभिन्नाश्रयत्वात् ।

पृथग्जन पु० पृथक् भिन्नो जनो यस्मात् । नीचे, मूर्खे, पामरे च

पृथग्विध त्रि० पृथक् भिन्ना भिन्ना विधा यस्य । नानारूपे ।

पृथग्बीज पु० पृथक् बीजं यस्य । भल्लातकवृक्षे (भेला) ।

पृथा स्त्री० कुन्तिभोजकन्यायाम् कुन्त्याम् ।

पृथाज पु० पृथाया जायते जन-ड । कुन्तीपुत्रे युधिष्ठिरादौ, अर्जुनवृक्षे च । पृथाङ्गजादयोऽप्यत्र ।

पृथि(थ)वी स्त्री० प्रथते विस्तारमेति प्रथ पिवन् (षिवन्)वा नि० सम्प्रसारणं विस्तारात् ङीष् । धरायाम् क्षितौ ।

पृथिवीपति पु ६त० । स्वमतौ भूपतौ । पृथिवीपालादयोऽप्यत्र

पृथु पु० प्रथ-कु । सूर्य्यवंशे वेनराजस्य दक्षिणबाहुमन्थन जाते नृपभेदे, कृष्णजीरके च । महति, स्थूले, दक्षे च त्रि० । स्त्रियां ङीष् वा ।

पृथुक पु० न० । पृथुवत् कायति कै क । चिपिटके, 'हि स्निग्धमत्र पृथुकमिति स्मृति । बालके पु० । पृथुकार्त-स्वरपत्र'मिति हिङ्गुपत्र्याम्, बालिकायाञ्च स्त्री० ।

पृथुकोल पु० कर्म० । राजबदरे ।

पृथुपत्र पु० पृथूनि पत्राण्यस्य । रक्तलशुने ।

पृथुपलाशिका स्त्री० पृथूनि पलाशान्यस्याः गौ० ङीष् स्वार्थे कन् । शठ्याम् ।

पृथुरोमन् पु० पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य । मत्स्ये

पृथुल त्रि० पृथु+स्वार्थे लच्, पृथु पृथुत्वमस्त्यस्य लच् वा । स्थूले । हिङ्गुपत्र्यां स्त्री० ।

पृथुशिम्ब पु० पृथ्वी शिम्बा यस्य । श्योनाकभेदे ।

पृथूदर पु० पृथु उदरं यस्य । मेषे, वृहदुदरयुक्ते त्रि० ।

पृथ्वी स्त्री० पृथुल गुणयुक्ता स्त्री ङीष् । भूमौ, हिङ्गुपत्र्याम्, स्थूलैलायाम्, पुनर्नवायां कृष्णजीरके च । स्वार्थे कन् पृथ्वीका । वृहदेलायाम् हिङ्गुपत्र्याम्, कृष्णजीरके च ।

पृथ्वीकुरुबक पु० पृथ्व्याः भूमौ कुरुबक इव शुभ्रत्वात् । श्वेतमन्दारके । [गजे, चित्रके वृक्षे च ।

पृदाकु पु० पर्द गतौ काकु सम्प्रसारणम् । सर्पे, वृश्चिके व्याघ्रे

पृश्नि त्रि० स्पृश नि, प्रच्छ नि वा पृ० । खर्वदेहास्थिके, स्वल्पे च । रश्मौ, देवक्याः जननीच स्त्री० । संज्ञायां कन् । कुम्भिकायां (पाना) स्त्री० वा ङीप् । [लतायाञ्च ।

पृश्निगर्भ पु० ६ब० । देवकीसूनौ श्रीकृष्णे । [विख्याताया

पृश्निपर्णी स्त्री० पृश्नि अल्पं पर्णमस्याः ङीप् । (चाकुलिया)

पृष सेके भ्वा० पर० सक० सेट् । पर्षति अपर्षीत् ।

पृषत् न० पृष-शतृ किच्च । बिन्दौ । सेकयुक्ते त्रि० ।

पृषत पु० पृष-अतच् किच्च । शुभ्रबिन्दुमति मृगभेदे, बिन्दौ च

पृषतांपति पु० ६त० अलुक् स० । वायौ ।

पृषताश्व पु० पृषतो मृगभेदोऽश्व इव गतिसाधनं यस्य । वायौ

पृषत्क पु० पृषत्+संज्ञायां कन् । वाणे ।

पृषदश्व पु० पृषतो बिन्दोरश्व इव वाहकत्वात् । वायौ ।

पृषदाज्य न० पृषद्युक्तं दधिबिन्दुयुक्तं दधिसेकयुक्तं वा आज्यम् शाक० । दधिमिश्रे घृते ।

पृषन्ति पु० पृष-झच् किच्च । बिन्दौ ।

पृषोदर त्रि० पृषद्‌दरं यस्य पृषो० नि० । बिन्दुगर्भिते । [भेदेच

पृष्ठ न० पृष-थक् दृढभावः । तनौ पश्चाद्भागे, वेदप्रसिद्धे स्तोम-

पृष्ठतस् अव्य० पृष्ठ+तसिल् । पश्चाद्भागे इत्यर्थे ।

पृष्ठदृष्टि पु० पृष्ठे पश्चात् दृष्टिरस्य । भल्लूके ।

पृष्ठवंश पु० ६त० । पृष्ठस्थे दण्डाकारेऽस्थ्नि । [इत्यादौ

पृष्ठवाह् पु० पृष्ठेन वहति वह ण्वि । पृष्ठेन शकटादिवाहके

पृष्ठ्य न० पृष्ठानां स्तोत्राणां समूहः यत् । स्तोत्रसमूहे । वहति यागभेदे, पृष्ठेन वहति यत् । पृष्ठवाहकाश्वादौ च त्रि० ।

पृश्नि स्त्री० प्रच्छ निङ् सम्प्रसारणं पत्वम् । प्रश्निगन्धार्थे, पृश्न्यां च

पॄ पालने पूर्त्तौ च क्र्या० वा० पर० सक० सेट् । पृणाति अपारीत्

पॄ पूर्त्तौ चु० उभ० सक० सेट् । पारयति ते अपीपरत् त ।

पेचक पु० पच वुन् इत्व । (पैंचा) उलूके, गजपुच्छमूलभागे, पर्य्यङ्के, यूके, मेघे च ।

पेचुली स्त्री० पच उलच् इत्व गौ० ङीप् । (कचु) शाकभेदे ।

पेटक पु० न० पिट-ण्वुल् । पुस्तकादीनां स्थापनार्थं वेत्रादि निर्म्मिते पदार्थे, समूहे च । [काष्ठफलयुते हट्टे ।

पेटिका स्त्री० पेटीव कायति कै-क पृ० । (टेपारी) पेटका-

पेटी स्त्री० पिट-अच् गौरा० ङीप् । स्वल्पपेटके ।

पेण गतौ प्रेषे च सक० श्लेषे अक० भ्वा० पर० सेट् । पेणति अपेणीत् । ऋदित् न ह्रस्वः । [ऋदित् च ह्रस्वः ।

पेल कम्पे अक० गतौ सक० भ्वा० पर० सेट् । पेलति अपेलीत् ।

पेल न० पेल-अच् । पुरुषचिह्ने अण्डभेदे (अण्डकोष) । [च

पेलव त्रि० पेल-अच् पेलं वाति वा-क । कोमले, कृशे, विरले

पेव सेवने भ्वा० आत्म० सेट् । पेवते अपेविष्ट । ऋदित् न ह्रस्व

पेश(ष)ल त्रि० पिश(ष)-अलच् । सुन्दरे, दक्षे, कोमले च ।

तद्रूपे, प्रतिरूपे, पश्चरोधे च । [रूपतायां माहश्ये च ।

**प्रतिच्छाया** स्त्री॰ प्रतिरूपा छाया प्रा॰ । प्रतिमायां, प्रति-

**प्रतिजागर** पु॰ जागरस्य प्रतिनिधिः । मत्यवेक्षणाय श्रद्धमवे-
क्षस्वेति नियोगे । [कारे भाषप्रसिद्धे । (आलजिव) ।

**प्रतिजिह्वा** स्त्री॰ प्रतिरूपा जिह्वा । तालूमूलस्थे जिह्वा-

**प्रतिज्ञा** स्त्री॰ प्रति+ज्ञा अ । कर्त्तव्यतयोपदेशे साध्यवत्त्वेन पक्षनिर्देशे, यथा पर्व्वतोवह्निमान् इत्यादिवाक्यम् अनेन वह्निमत्त्वेन पर्व्वतस्य निर्द्देश । व्यवहारे पक्षाभिप्रायके 'इदमनेन मम गृहीतं न ददाती'ति वाक्ये च । ल्युट् प्रतिज्ञानमप्यत्र न॰ ।

**प्रतिज्ञात** त्रि॰ प्रति+ज्ञा क्त । प्रागुक्तप्रतिज्ञाविषये 'ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधन'मिति स्मृतिः ।

**प्रतिदान** न॰ प्रतिरूप तुल्यरूपं दानम् प्रा॰ स॰ । विनिमये तु स्वरूपदाने, न्यस्तस्य द्रव्यस्य प्रत्यर्पणे च । [मिवम्भे'तिभट्टि

**प्रतिध्वनि** पु॰ प्रतिरूपोध्वनिः । प्रतिशब्दे 'प्रतिध्वनीनामकृता

**प्रतिध्वान** पु॰ प्रति+ध्वन घञ् । प्रतिशब्दे ।

**प्रतिनप्तृ** पु॰ प्रतिनिहितो नप्ता पौत्र प्रा॰ । प्रपौत्रे ।

**प्रतिनिधि** पु॰ प्रति+निधीयते तुल्यरूपतया स्थाप्यते प्रति+नि+धा कि । प्रतिरूपे, प्रतिमायां च ।

**प्रतिपक्ष** पु॰ प्रतिकूल पक्षो यस्य । शत्रौ व्यवहारे विरुद्ध-पक्षे प्रतिवादिनि च । प्रा॰स॰ । साहश्ये ।

**प्रतिपत्ति** स्त्री॰ प्रति+पद क्तिन् । प्रवृत्तौ, प्रागल्भ्ये, गौरवे प्राप्तौ पदप्राप्तौ, कर्त्तव्यताज्ञाने च 'विपादलुप्तप्रतिपत्ति विस्मितमि'ति रघुः । [(छोटजच्छे)

**प्रतिपन्नफला** स्त्री॰ प्रतिपन्नं फलं यस्याः । क्षुद्रकारवेल्ले ।

**प्रतिपद्** स्त्री॰ प्रतिपद्यते उपक्रम्यते पक्षोऽनया प्रति+पद क्विप् । पक्षारम्भके तिथौ ।

**प्रतिपन्न** त्रि॰ प्रति+पद क्त । अवगते स्वीकृते, 'प्रतिपन्न हि विचेतनैरपी'ति कुमार । विक्रान्ते च । [ष

**प्रतिपादन** न॰ प्रति+पद णिच् ल्युट् । दाने, बोधने, प्रतिपत्तौ

**प्रतिप्रसव** पु॰ प्रति+प्र+सू अप् । निषिद्धस्य पुनः प्राप्तिसम्भावनायाम् । [रोधके त्रि॰

**प्रतिबन्ध** पु॰ प्रति+बन्ध घञ् । कार्यप्रतिघाते । ण्वुल् । प्रति

**प्रतिबन्धि(बन्दि)** पु॰ प्रति+बन्ध (बन्द्) भा इन । अनिष्टा-न्तरप्रसञ्जके वाक्ये ।

**प्रतिबल** पु॰ प्रतिकूलं बलं यस्य । 'शत्रौ प्रतिबलजभे'रिति वेणी॰ । प्रतिरूपं बलं यस्य । तुल्यबले त्रि॰ 'यो मे प्रतिबलो लोके' इति चण्डी ।

**प्रतिभय** त्रि॰ प्रतिगतं भयमस्मात् । भयहेतौ भयङ्करे ।

**प्रतिभा** स्त्री॰ प्रति+भा अङ् । बुद्धौ, प्रत्युत्पन्नबुद्धौ च ।

**प्रतिभू** पु॰ प्रतिनिधि भवति भू क्विप् । लग्नके (जामिन) ।

**प्रतिमा** स्त्री॰ प्रति+मा अङ् । गजदन्तस्य बन्धे, सदृशीकरणे, सदृशमृत्तिकाशिलादिमूर्त्तौ । 'प्रतिमायां शिलाबुद्धि'रिति पुराणम् । ब॰ । उत्तरपदस्य । सदृशे त्रि॰ । यथा देवप्रतिम

**प्रतिमान** न॰ प्रतिमीयतेऽनेन प्रति मि मा वा ल्युट् । प्रतिबिम्बे प्रतिमायां, गजकुम्भस्याधोभागे तद्दन्तयोर्मध्यस्थाने च

**प्रतिमुक्त** त्रि॰ प्रति+मुच-क्त । परिहिते, परित्यक्ते च ।

**प्रतियत्न** पु॰ प्रति+यत नङ् । वाञ्छायाम्, उपग्रहे, निग्रहादौ, वन्दा सतो गुणान्तराधानरूपे संस्कारे, पहृषे, प्रतिग्रहे च । प्रतिरूपो यत्नो यस्य ब॰ । प्रतियत्नयुक्ते त्रि॰

**प्रतियातना** स्त्री॰ प्रति+यात्यतेऽनया यु॰ यत युच । प्रतिमायाम् प्रा॰स॰ । तुल्यरूपयातनायाम् ।

**प्रतियोगिन्** त्रि॰ प्रतिरूपं युज्यते प्रति+युज घिनुण् । प्रतिकूलसम्बन्धवति । यथा अभावस्य प्रतियोग्युसम्बन्धवत्त्वात् घटादिकस्य प्रतियोगी । विरुद्धपक्षे च ।

**प्रतिरूप** न॰ प्रतिगतं रूपम् । प्रतिच्छायायां प्रतिबिम्बे च प्रतिगतं रूपमस्य ब॰ । सदृशे त्रि॰ । स्वार्थे कन् । अत्रैव ।

**प्रतिरोध** पु॰ प्रति+रुध भावे घञ् । बाधे प्रतिबन्धे निरोधे तिरस्कारे चौर्य्ये च । कर्त्तरि अच् । चौरे । ण्वुल् तिरस्कारके

**प्रतिलोम** त्रि॰ प्रतिगतं लोम आनुकूल्यमस्मात् प्रति+लोमन् अच् समा॰ । वामे विपरीते

**प्रतिलोमज** पु॰ प्रतिलोमात् जातः जन ड । उत्तमवर्णस्त्रियाम् अधमवर्णात् जाते सङ्कीर्णवर्णे । [शत्रौ च ।

**प्रतिवचन** न॰ प्रतिरूपं वचनम् । प्रतिवाक्ये उत्तरे विरुद्ध

**प्रतिवात** त्रि॰ प्रतिगतो वातो यत्र । यस्मात् प्रदेशात् वायुः प्रत्यागच्छति तस्मिन् देशे 'प्रतिवातेऽनुवाते चे'ति मनुः ।

**प्रतिवादिन्** पु॰ त्रि॰ प्रतिकूलं वदति वद णिनि । प्रतिपक्षे व्यवहारे प्रत्यर्थिनि अभियोज्ये (आसामी) 'कारयेत् प्रतिवादिनो'ति स्मृतिः ।

**प्रतिवासि(वेशि)न्** त्रि॰ प्रत्यासन्नं वसति (विशति) प्रति+वस (विश) वा णिनि । (पड़शि) स्त्रियां ङीप् । 'इति हि प्रतिवासि(वेशि)नी'ति सा॰द॰ १पः ।

**प्रतिविधान** न॰ प्रति+वि+धा ल्युट् । प्रतीकारे ।

**प्रतिबिम्ब** न॰ प्रतिरूपं बिम्बम् । बिम्बसादृश्ये प्रतिच्छायायाम्

**प्रतिविषा** स्त्री॰ प्रतिषिद्धं विषं यया । अतिविषायाम् (आतइच)

**प्रतिशासन** न॰ प्रति+शास ल्युट् । भृत्यादेर्निकटस्य नियोगे

प्रतिश्याय पु॰ प्रति+श्यै-ण । पीनसरोगे । [रूढ़े, व्याप्ये च

प्रतिश्रय पु॰ प्रतिश्रीयते प्रति+श्रि-अच् । यज्ञगृहे, सभायाम्,

प्रतिश्रव पु॰ प्रति+श्रु-अप् । स्वीकारे ।

प्रतिश्रुत् स्त्री॰ प्रतिरूपं श्रूयते श्रु-क्विप् । प्रतिशब्दे प्रतिध्वनौ

प्रतिषेध पु॰ प्रति+सिध-घञ् । निषेधे 'मा कुरु' इत्यादिना निवारणे । ल्युट् । तत्रैव न॰ ।

प्रतिष्टम्भ पु॰ प्रति+स्तम्भ-घञ् षत्वम् । प्रतिबन्धे ।

प्रतिष्ठा स्त्री॰ प्रति+स्था-अङ् । स्थितौ, व्रतयागादेः समाप्तौ, चतुरक्षरपादके छन्दोभेदे, कूपादेः संस्कारे, व्रतानां समाप्तौ कर्त्तव्ये कर्मभेदे, आश्रये च 'ब्रह्म पुच्छं प्रतिष्ठे'ति श्रुतिः ।

प्रतिसर पु॰ प्रति-सृ-अच् । सैन्यपश्चाद्भागे, हस्तसूत्रे च ।

प्रतिसर्ग पु॰ प्रतिरूप प्रतिकूलो वा सर्गः । ब्रह्मणः सृष्टि-तुल्यायां मरीच्यादिसृष्टौ प्रलये च । [निकायाम् (पर्दा)

प्रतिसीरा स्त्री॰ प्रतिसिनोति सीयते वा रक् दीर्घश्च । जव-

प्रतिसूर्य्यक पु॰ प्रतिरूप सूर्ये स्वार्थे कन् । उपसूर्य्यक मण्डले (सूर्यसभा) । तत्तुल्यवर्णे कृकलासे च ।

प्रतिसृष्ट त्रि॰ प्रति+सृज-क्त । प्रत्याख्याते, प्रेषिते च ।

प्रतिसोमा स्त्री॰ प्रतिनिहिता सोमा सोमवल्ली । महिषवल्लयाम्

प्रतिहत त्रि॰ प्रति+हन-क्त । द्विष्टे, रुद्धे निरस्ते, प्रतिस्खलिते च

प्रति(ती)हार पु॰ प्रति+हृ-घञ् वा दीर्घः । द्वारे धाम् । द्वारस्थे, मायाकारे च स्त्रियाम्, स्त्रियां ङीप् । ण्वुल् । द्वारपाले त्रि॰ । णिनि । प्रतीहारीत्यप्यत्र, मायाकारे च । [त्रि॰

प्रतीक पु॰ प्रति+कन् नि॰ दीर्घ । अवयवे । प्रतिरूपे, विलोमे च

प्रतीक्षा स्त्री॰ प्रति-ईक्ष अ । अपेक्षायाम् ।

प्रतीक्ष्य त्रि॰ प्रति+ईक्ष-ण्यत् । पूज्ये 'प्रतीक्ष्यं तत्प्रतीक्ष्याये पितृव्यस्ये' इतिमाघः । [प्रतीच्योप्यत्र

प्रतीचीन त्रि॰ प्रतीच्यां भवः ख । पश्चिमदिग्भवे । यत् ।

प्रतीत त्रि॰ प्रति-इण-क्त । ख्याते, ज्ञाते, हृष्टे, सादरे च ।

प्रतीति स्त्री॰ प्रति-इण-क्तिन् । ज्ञाने, ख्यातौ, आदरे, हर्षे च

प्रतीप त्रि॰ प्रति+अप्-कर्म॰ अच् नि॰ । प्रतिकूले । चन्द्रवंश्ये, नृपभेदे पु॰ । [णिनि । भार्य्यायाम् ।

प्रतीपदर्शिनी स्त्री॰ प्रतीप प्रतिकूलं दर्शयति दृश-णिच्

प्रतीर न॰ प्रतीर्यते प्र+तीर-क । तटे, तीरे ।

प्रतीवाप पु॰ प्रति+वप-घञ् दीर्घः । गलितस्वर्णादेरवचूर्णने

प्रतोद पु॰ प्रतुद्यतेऽनेन तुद-घञ् । अश्वादिताडनदण्डे (चाबुक)

प्रतोली स्त्री॰ प्र+तुल अच् गौ॰ ङीप् । रथ्यायाम्, पुराभ्य-न्तरमार्गे, च्वादौ निर्मिते पथि च ।

प्रत्न त्रि॰ प्र+त्न । पुराणे ।

प्रत्यक्पर्णी स्त्री॰ प्रत्यञ्चि, पर्णान्यस्याः ङीप् । अपामार्गे प्रत्यक्पुष्पीत्यप्यत्र । [हृद्ये, मूषिकपर्ण्याञ्च ।

प्रत्यक्श्रेणी स्त्री॰ प्रतीची श्रेणीव अस्याः न कप् । दन्ती-

प्रत्यक्ष अव्य॰ प्रतिरूपमक्ष्णः अव्ययी॰ अच् । इन्द्रियजन्ये ज्ञानभेदे । अर्श आद्यच् । तद्विषये त्रि॰ ।

प्रत्यग्र त्रि॰ प्रतिगतमग्रमस्य प्रा॰ । नूतने, शोधिते च ।

प्रत्यङ्गिरा स्त्री॰ देवीभेदे ।

प्रत्यच् त्रि॰ प्रति+अन्च-क्विन् । पश्चिमकाले, पश्चिमदेशे च पश्चिमायां दिशि स्त्री॰ ङीप् । प्रतीची ।

प्रत्यनीक पु॰ प्रतिकूलमनीकं यस्य । रिपौ, विघ्ने च ।

प्रत्यन्त पु॰ प्रतिगतोऽन्तम् प्रा॰ । म्लेच्छदेशे । सन्निकृष्टदेशे त्रि॰

प्रत्यन्तपर्व्वत पु॰ प्रत्यन्तः सन्निकृष्टः पर्वतः । बृहत्पर्व्वत-समीपस्थे पर्वते ।

प्रत्यभियोग पु॰ प्रतिरूपोऽभियोगः । अभियुक्तेन प्रतिवादिना स्वाभियोगिनं प्रति अभियोगान्तरकरणे ।

प्रत्यभिवाद पु॰ प्रति+अभि+वद णिच्-घञ् । अभिवादस्य प्रतिरूपे आशीर्वचनादौ । ल्युट् । प्रत्यभिवादनमत्र न॰ ।

प्रत्यय पु॰ प्रति+इण्-अच् । शपथे, ज्ञाने, विश्वासे, अधीने, शब्दे, छिद्रे, आधारे, निश्चये, ख्यातौ, कारणे, 'अपेक्षते प्रत्ययमुत्तमं त्वि'ति कुमारः । व्याकरणोक्ते प्रकृतिं निमित्तीकृत्य विधीयमाने शब्दभेदे च ।

प्रत्ययित त्रि॰ प्रति+अय-क्त । आप्ते, विश्वस्ते, प्रतिगते च ।

प्रत्यर्थिन् त्रि॰ प्रत्यर्थयते प्रति+अर्थ-पीडने णिनि । शत्रौ, प्रतिकूलमर्थयते णिनि । व्यवहारे प्रतिवादिनि ।

प्रत्यर्पण न॰ प्रति+ऋ-णिच्-पुक्-ल्युट् । प्रतिदाने गृहीतस्य धनादेः पुनर्दाने ।

प्रत्यवसान न॰ प्रति+अव+सो-ल्युट् । भोजने ।

प्रत्यवसित त्रि॰ प्रति+अव+सो-क्त । भुक्ते ।

प्रत्यवस्कन्द पु॰ प्रति+अव+स्कन्द-घञ् । व्यवहारे चतुर्विधोत्तरमध्ये उत्तरभेदे । ल्युट् । 'अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तदि'ति कात्यायनलक्षणे उत्तरभेदे औषधभेदे च न॰ ।

प्रत्यवस्थातृ त्रि॰ प्रत्यवतिष्ठते प्रतिपक्षतया तिष्ठति प्रति+अव+स्था-तृच् । प्रतिपक्षादौ शत्रौ ।

प्रत्यवाय पु॰ प्रति+अव+इण्-अच् । पापे ।

प्रत्याख्यात त्रि॰ प्रति+आ+ख्या-क्त । निराकृते दूरीकृते ।

प्रत्याख्यान न॰ प्रति+आ+ख्या ल्युट् । निराकरणे ।

प्रत्यादिष्ट त्रि॰ प्रति+आ+दिश-क्त । निरस्ते ।

प्रत्यादेश पु० प्रति+आ+दिश-घञ् । निराकरणे ।

प्रत्यालीढ न० प्रति+आ+लिह-क्त । आलीढं दक्षिणं पादं प्रत्यालीढन्तु वामक मित्युक्ते वामपादपञ्चेन दक्षिणपाद-प्रसारणरूपे धन्विनां स्थितिविशेषे । धृ।स्वादिते त्रि०।

प्रत्यासन्न त्रि० प्रति+आ+सद-क्त । अतिनिकटस्थे ।

प्रत्याहार पु० प्रति+आ+हृ-घञ् । योगशास्त्रप्रसिद्धे इन्द्रियाणां स्वस्वविषयेभ्यो निराकरणे ।

प्रत्युत्क्रम पु० प्रति+उद्+क्रम-घञ् न वृद्धिः । युद्धार्थोद्योगे, प्रधानप्रयोजनोद्देशेनाप्रधानारम्भे च ।

प्रत्युत्तर न० प्रतिरूपमुत्तरम् । उत्तरस्योत्तरवाक्ये ।

प्रत्युत्थान प्रति+उद्+स्था-ल्युट् । अभ्युत्थाने आगतस्य सम्माननार्थमासनादुत्थितौ । [तत्कालोचितबुद्धौ ।

प्रत्युत्पन्नमति त्रि० प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य ।

प्रत्युद्गमनीय न० प्रति+उद्+गम-अनीयर् । धौतवस्त्रयुग्मे, "स्तद्दे ततप्रत्युद्गमनीयवस्त्रे"ति कुमारः पाठान्तरं प्रत्यु मेति न पुरुलम् प्रत्युपस्थानयोग्ये, पूजनीये च त्रि० ।

प्रत्यूष पु० प्रत्यूषति रुजति कोपकान् ऊष-रुजायां क । प्रभाते, अष्टवसुमध्ये वसुभेदे च । अमि । प्रत्यूषस् । प्रभाते

प्रत्यूह पु० प्रति+ऊह-घञ् । विघ्ने

प्रथ ख्यातौ भ्वा०आ०सक०सेट् घटा० । प्रथते अप्रथिष्ट चित् प्रथयति । अङ् प्रथा । [च्चिपप्रथत् तेन

प्रथ ख्यातौ चुरा०विशेषे सक०चुरा०उभ०सेट् । प्रथयति-ते

प्रथम त्रि० प्रथ-अमच् । प्रधाने,आद्ये च । जाति प्रभृतिप्रामताल

प्रथा स्त्री० प्रथ-अङ् । ख्यातौ ।

प्रथित त्रि० प्रथ-क्त । ख्याते । [स्थूलत्वे ।

प्रथिमन् पु० पृथोर्भावः पृथु+इमनिच् प्रथादेशः । पृथुत्वे

प्रथुक पु० प्रथ-कुकन् । चिपिटके । [च ।

प्रदर पु० प्र+दृ-अप् । विदारणे,भङ्गे, नारीणां योनिरोगभेदे

प्रदीप पु० प्र+दीप-क । दीपे ।

प्रदीपन पु० प्रदीपयति जठराग्निम् प्र+दीप+णिच्-ल्यु । स्थावरे विषभेदे । प्रकाशके त्रि० ।

प्रदेश पु० प्र+दिश+घञ् । एकदेशे, "विद्धः प्रदेशास्त्रवे"ति कुमारः । देशमात्रे च तर्जन्यङ्गुष्ठसम्मिते माने, भित्तौ च ।

प्रदेशन न० प्रदिश्यते दिश-ल्युट् । उपादेयपदार्थे (भेटी) ।

प्रदेशि(शि)नी स्त्री० प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप् । तर्जन्यां तया हि वस्तु निर्दिश्यते णिनि । प्रदेशिनी

त्यत्र । [चतुर्व्यूहात्मकविष्णोरंशभेदे च ।

प्रद्युम्न पु० प्रकृष्टं द्युम्नं बलं यस्य । कन्दर्पे वैष्णवागमोक्ते

प्रद्रव पु० प्र+द्रु-अप् । पलायने, घञ् । प्रद्रावोऽप्यत्र ।

प्रधन न० प्र+धा-क्यु । युद्धे ।

प्रधान न० प्र+धा-ल्युट् । सांख्यमतसिद्धायाम् सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां प्रकृतौ, तत्कार्ये बुद्धितत्त्वे, परमात्मनि, प्रशस्ते, श्रेष्ठे च । सेनापत्यध्यक्षे पु० । श्रेष्ठे त्रि०

प्रधि पु० प्रधीयते कोटावस्य प्र+धा-कि । चक्रावयवकाष्ठे-मञ्जनस्थाने रथनाभौ ।

प्रधूपिता स्त्री० प्र+धूप-क्त । सन्तापितायां "व्यसनप्रधूपिता"-मितिकुमारः । ज्यौतिषोक्तायां सूर्य्यगन्तव्यायां दिशि च ।

प्रपञ्च पु० प्र+पचि-विस्तारे घञ् । विस्तारे, वैपरीत्ये, सञ्चये, प्रतारणे, संसारे च ।

प्रपथ्या स्त्री० प्रकृष्टा पथ्या प्रा०स० । हरीतक्याम् ।

प्रपद न० प्रारब्धं पदम् प्रा०स० । पादस्याग्रभागे ।

प्रपन्न त्रि०प्र+पद-क्त । शरणागते,"प्रपन्नार्त्तिहरे!देवी"ति चण्डी

प्रपा स्त्री० प्रपीयतेऽस्यां पा-ड । पानीयशालिकायां (जलसत्त्रघरे)

प्रपाठक पु० प्रकृष्टः पाठोऽत्र कप् । वेदस्याध्यायविशेषे प्रभेदे

प्रपात पु० प्रपतत्यस्मात् पत-घञ् । तटरहिते निरवलम्बे पर्वतस्थाने, निर्झरे, कूले, अवस्कन्दे च । भावे-घञ् पतने

प्रपितामह पु०प्रगतः पितामहो यस्मात्, प्रकृष्टः पितामहो वा । दक्षादिप्रजापतिसृष्टायां प्रजाजनकानामुत्पादके चतुर्मुखे ब्रह्मणि, पितामहपितरि च । तत्पत्न्याम् स्त्री०ङीप्

प्रपुन्नाड(ट) पु०पुमांसं नाडयति नाटयति नड-भ्रंशे नट-अव स्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा०स० । चक्रमर्द (चाकुन्दा) इति ख्याते । इस लत्वे प्रपुन्नालोऽप्यत्र दद्रुघ्ने च

प्रपूरिका स्त्री० प्रकर्षेण पूर्य्यते कण्टकैः । पूर-घञ् टाप् स्वार्थे कन् । कण्टकार्य्याम् ।

प्रपौण्डरीक पु० पुण्डरीक+स्वार्थेऽण् । प्रकृष्टं तदिव पुष्पं यस्य । गजमतुण्यायां चक्षुर्हितकारके शाकपर्णीत्वक्षके क्षुपभेदे । [तत्कन्दायां स्त्री० ङीप् ।

प्रपौत्र पु० प्रगतः कारणतया पौत्रम् । पौत्रस्य पुत्रे,

प्रफुल्ल त्रि०प्र+फुल्ल-विकाशने अच् । विकाशयुक्ते । प्र+फल-क्त इत्वाभावे अत इत्वम् । प्रफुल्तमप्यत्र । "लोभद्रुमं वातमतः प्रफुल्ल (त्त) मि"ति रघुः ।

प्रबन्ध पु० प्र+बन्ध-घञ् । सन्दर्भे, ग्रन्थादेः रचने च ।

प्रबन्धकल्पना स्त्री० ६त० । प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुरित्युक्तलक्षणायामल्पसत्यायां बहुमिथ्याकथायाम् ।

प्रबाल न० प्रकर्षेण बलति बलकम्पते ज्वलादित्वात् णः । नवपल्लवे "पुष्पं प्रबालोपहितं यदि स्यादि"ति कुमारः ।

रक्तावर्णे मणिभेदे, (सुगा) वीणादण्डे च ।

**प्रबोध** पु० प्र+बुध घञ् । प्रकृष्टबुद्धौ, निद्रारहित्ये च ।

**प्रबोधन** न० प्र+बुध-णिच्-ल्युट् । कालादिदोषेणापि पूर्वगन्धस्य न्यूनतायां प्रयत्नविशेषेण तदुद्दीपने ।

**प्रबोधनी** स्त्री० प्र+बुध्यतेऽनया प्र+बुध-ल्युट् । दुरालभायाम् प्रबुध्यते हरिरत्र । कार्त्तिकशुक्लैकादश्याम् । प्र+बुध-णिच्-णिनि ङीप् । प्रबोधिनी तत्रैव ।

**प्रभञ्जन** न० प्रभनक्ति वृक्षादीन् प्र+भन्ज-युच् । वायौ ।

**प्रभद्र** पु० प्रकृष्टं भद्रमस्मात् ५ब० । निम्बवृक्षे ।

**प्रभव** पु० प्रभवत्यस्मात् प्र+भू-अप् । आद्यप्रकाशस्थाने, उत्पादके । 'क्व सूर्यप्रभवो वंशः' इति रघु । ६०वर्षमध्ये वत्सरभेदे च । प्र+भू-भावे अप् । पराक्रमे जन्मनि च ।

**प्रभा** स्त्री० प्र-भा अङ् । दीप्तौ ।

**प्रभाकर** पु० प्रभां करोति कृ-अच्, सूर्ये मीमांसकभेदे च ।

**प्रभाञ्जन** पु० प्रभयाञ्जयति अन्ज-णिच्-ल्यु । शोभाञ्जने ।

**प्रभात** न० प्र+भा-भावे क्त प्रकृष्टं भातमत्र । प्रातःकाले प्र+भा कर्त्तरि क्त । प्रभायुक्ते त्रि० ।

**प्रभाव** पु० प्र+भू घञ् । राज्ञां कोषदण्डजाते तेजसि, तेजसि, सामर्थ्ये, विक्रमे, शक्तौ, उद्भवे च । [च ।

**प्रभाष** पु० प्र+भाष-अच् । अष्टवसुमध्ये वसुभेदे, प्रकृष्टकथने

**प्रभास** पु० तीर्थभेदे 'प्रभास पुष्कराणि चेति स्नानमन्त्र ।

**प्रभिन्न** पु० प्र+भिद-क्त । स्रवन्मदे गजे । प्रभेदवति त्रि० ।

**प्रभु** पु० प्र+भू-डु । विष्णौ, शब्दे, पारदे च । स्वामिनि, अधिपतौ च त्रि० ।

**प्रभूत** त्रि० प्र+भू-क्त । प्रचुरे, उद्गते, भूते उन्नते च ।

**प्रभृति** अव्य० प्र+भृ क्तिच् । तदारभ्येत्यर्थे । ब० उत्तरपदस्य तदादिके त्रि० । [भेदे

**प्रभेद** पु० प्रभिद्यतेऽनेन प्र+भिद घञ् । प्रकारे । भावे घञ्

**प्रभ्रष्टक** न० प्र+भ्रन्श क्त तत्र कन् । चूडातो लम्बमाने माल्ये

**प्रमथ** पु० प्र+मथ-अच् । शिवानुचरभेदे, अश्वे च । हरितक्यां स्त्री०

**प्रमथन** न० प्र+मथ ल्युट् । वधे, क्षोभने, विलोडने च ।

**प्रमथाधिप** पु० ६त० । शिवे, महादेवे ।

**प्रमद** पु० प्र+मद अप् । हर्षे । प्रमाद्यत्यनेन अप् । धुस्तूरफले न० । कर्त्तरि अच् । प्रमत्ते त्रि० ।

**प्रमदवन** न० प्रमदस्य हर्षस्य वनम् । राज्ञोऽन्तःपुरस्थे वने ।

**प्रमदा** स्त्री० प्रमाद्यत्यनया अप् । उत्तमयोषिति ।

**प्रमदावन** न० प्रमदाया उचित वनम् । अन्तःपुरस्थे रमणयोग्ये वने प्रमदाकामनादयोऽप्यत्र ।

**प्रमनस्** त्रि० प्रहृष्टं मनो यस्य हृष्टपदलोप । प्रहृष्टचित्ते ।

**प्रमा** स्त्री० प्र+मा अङ् । यथार्थज्ञाने भ्रमभिन्ने ज्ञाने ।

**प्रमाण** न० प्रमीयतेऽनेन । प्रमाज्ञानसाधने इन्द्रियादौ, मर्यादायाम् शास्त्रे, सत्यवादिनि, हेतौ प्रमातरि च । 'न प्रमाणयदीन्दु'रिति उद्भटालङ्कारः । भावे ल्युट् । यथार्थज्ञाने ।

**प्रमातामह** पु० प्रकृष्टो मातामहो येन । आरब्धपदलोप । मातामहपितरि । तत्पत्न्यां स्त्री० ङीप् ।

**प्रमाद** पु० प्र+मद घञ् । कर्त्तव्ये अकर्त्तव्यत्वधिया ततो निवृत्तौ, अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तौ वा अनवधानतायाम्

**प्रमापण** न० प्र+मीञ् हिंसायां स्वार्थे णिच्-आत्वे पुक् ल्युट् । मारणे ।

**प्रमिति** स्त्री० प्र+मा क्तिन् । प्रमायां यथार्थज्ञाने ।

**प्रमीत** त्रि० प्र+मीञ् हिंसायां क्त । मृते । 'प्रमीतौ पितरौ यस्ये'ति स्मृतिः यज्ञार्थं हतपशौ च ।

**प्रमीला** स्त्री० प्र+मील अ । तन्द्रायाम् ।

**प्रमुख** न० प्रकृष्टं मुखमारम्भ । तदादिके । ब० उत्तरपदस्य । तदादिके, मान्ये, प्रथमे, प्रधाने, श्रेष्ठे च त्रि० । पुन्नागवृक्षे, समूहे च पु० ।

**प्रमुद्** त्रि० प्रकृष्टा मुद् यस्य । हृष्टे हर्षयुक्ते ।

**प्रमुदित** त्रि० प्र+मुद-क्त । हृष्टे हर्षयुक्ते ।

**प्रमेह** पु० प्र+मिह घञ् । रोगभेदे ।

**प्रमोचनी** स्त्री० प्रकर्षेण मुच्यते निःस्वीक्रियते भोजनार्थम् मुच-कर्मणि ल्युट् ङीप् । गोडुम्बायाम् (गोडुम्बा) ।

**प्रमोद** पु० प्र+मुद-हर्षे घञ् । हर्षे ।

**प्रयत** त्रि० प्र+यम-क्त । पवित्रे, नियमयुक्ते च ।

**प्रयत्न** पु० प्र+यत-नङ् । कार्य्यानुकूले यत्नभेदे । 'प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारण'मिति न्यायोक्ते त्रिविधयत्ने स चात्मगुण इति वैशेषिकादय बुद्धिधर्म इति सांख्यादय । प्रयासे च ।

**प्रयाग** पु० प्रकृष्टो यागो यस्मात् ५ब० । गङ्गायमुनयोः सङ्गमजाते तीर्थभेदे, इन्द्रे यतक्रतौ च । ५ब० । अश्वे अश्वमेधाङ्गस्याश्वस्य तथात्वम् । कर्म० । प्रकृष्टे यज्ञे ।

**प्रयाम** पु० प्र+यम-घञ् । महार्घतावशात् धान्यादौ जनानामादरातिशये ।

**प्रयास** पु० प्र+यस-घञ् । प्रयत्नशब्दार्थे, आयासे च । [लीलावती

**प्रयुत** न० दशलक्षसङ्ख्यायां तत्संख्याते च 'लक्षप्रयुतकोटय' इति

**प्रयोक्तृ** त्रि० प्र-युज तृच् । प्रयोगकर्त्तरि अधमर्णादौ धनप्रयोगकर्त्तरि उत्तमर्णे, प्रयोजकमात्रे च ।

प्रयोग पु० प्र+युज घञ् । अनुष्ठाने वशीकरणे, निदर्शने, यत्ने च
प्रयोजक त्रि० कार्यादौ भृत्यादीन् प्रयुङ्क्ते प्र+युज-ण्वुल् ।
निकृष्टस्य भृत्यादेः प्रेरके, व्याकरणोक्ते हेतुसंज्ञे कर्त्तरि च
प्रयोजन न० प्र+युज-ल्युट् । कार्य्ये, उद्देश्ये, हेतौ च ।
प्रयोज्य त्रि० प्रयोक्तुं शक्यते प्र+युज-शक्यार्थे यत् ।
नियोज्ये निकृष्टे भृत्यादौ । [घञ् । प्ररोहे
प्ररूढ त्रि० प्र+रुह-क्त । प्रवृद्धे, बद्धमूले, जाते च । भावे
प्ररोह पु० प्र+रुह-अच् । अङ्कुरे 'सुप्तप्ररोह इवे'ति रघु ।
आरोहे च ।
प्रलम्ब पु० दैत्यभेदे । प्र+लम्ब-अच् । प्रकर्षेण लम्बमाने त्रि० ।
प्रलम्बघ्न पु० प्रलम्बं हन्ति हन-टक् । बलदेवे प्रलम्बहादयोऽप्यत्र
प्रलय पु० प्रलीयतेऽस्मिन् प्र+ली अच् । सर्व्वपदार्थानां नाशो-
पलक्षिते काले, प्रकृत्यादिनामस्थाने च । भावे घञ् । नाशे,
चेष्टाक्षये च 'प्रलयान्तोन्मिषिते विलोचने' इति कुमार ।
प्रलाप पु० प्र+लप-घञ् । अनर्थकवाक्ये, निष्प्रयोजने उन्म-
त्तादिवाक्ये च ।
प्रलापहन् पु० प्रलापं हन्ति हन-क्विप् । कुलत्थजातेऽञ्जने ।
प्रवचन न० प्र+वच-ल्युट् । वेदाध्यापने, प्रकृष्टवाक्ये च ।
प्रव(ब)ण पु० प्र+व(ब)ण-अच् । चतुष्पथे निम्नस्थाने, उदरे च
'नम्रे, आयते, प्रगुणे क्षणे, नुते, स्निग्धे, आसक्ते, क्षीणे च त्रि०
प्रवयस् त्रि० प्रकृष्टं वयोऽस्य । प्रवृद्धे ।
प्रवर पु० प्र+वृ अप् । सन्ततौ, गोत्रे, गोत्रप्रवर्त्तकमुनिव्यावर्त्तके
मुनिगणे च । श्रेष्ठे त्रि० । अगुरुचन्दने न० ।
प्रवर्ग पु० प्र+वृज-घञ् । होमाग्निभेदे ।
प्रवर्त्तक त्रि० प्रवर्त्तयति प्र+वृत णिच्-ण्वुल् । प्रवृत्तिजनके ।
प्रवर्त्तना स्त्री० प्र+वृत णिच्-युच् । प्रवृत्तिजनकव्यापारे
विध्यादौ 'अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपी'ति भर्तृहरिः
प्रवर्ह त्रि० प्र+वृह-अच् । श्रेष्ठे, प्रधाने च ।
प्रवह पु० प्रवह-अच् । वायुभेदे । भावे अप् । नगराद्बहिर्गमने
प्रवहण न० प्र+वह-करणे ल्युट् । वस्त्रावृते वस्त्राच्छादिते
स्त्रीवाहने कर्णीरथे (महाफाल) ।
प्रवाणी स्त्री० प्र+वे ल्युट् ङीप् । तन्तुवायशलाकायाम् (माकु)
प्रवाद पु० प्र+वद घञ् । परम्परागतवाक्ये, परस्परकथोप-
कथने च । [वस्तुनो दाने ।
प्रवारण न० प्र+वृ-णिच् ल्युट् । काम्यदाने काम्यस्य उत्तम-
प्रवास पु० प्र+वस घञ् । विदेशवासे ।
प्रवासन न० प्र+वस णिच्-ल्युट् । विदेशवासने-'सीताप्रवासन
पटो'रित्युत्तरचरितम् । मारणे च ।

प्रवासिन् त्रि० प्र+वस-णिनि । विदेशे वासिनि, 'प्रवासी
सुखमायाती'ति षट्पञ्चाशिका । [उत्तमाङ्गे च ।
प्रवाह पु० प्र+वह-घञ् । प्रवृत्तौ, जलस्रोतसि, व्यवहारे,
प्रवाहिका स्त्री० प्रवाहयति मलं ण्वुल् । ग्रहणीरोगे ।
प्रवाड पु० प्रकृष्टो बाडः । कूर्परस्याधोभागे । [श्वाक्रोशे च ।
प्रविदारण न० प्र+वि+दृ-णिच् ल्युट् । युद्धे, विदारणे
प्रविश्लेष त्रि० प्रकर्षेण विश्लेषो यस्य । विधुरे, परमविश्लेषे च ।
प्रविषा स्त्री० प्रहृतं विषं यया । अतिविषायाम् । (आतइच्)
प्रवीण त्रि० वीणया प्रगायति प्र+वीणा+णिच् अच् । निपुणे
प्रवृत्ति स्त्री० प्र+वृत-क्तिन् । प्रवाहे, वार्त्तायाम्, अवन्त्यादि
देशे, हस्तिमदे, न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने
प्रयत्नभेदे च ।
प्रवृद्ध त्रि० प्र+वृध-क्त । वृद्धियुक्ते, प्रौढे च ।
प्रवेक त्रि० प्र+विच-घञ् । प्रधाने । [कम्बले
प्रवे(णि)णी स्त्री० प्र+वेण-इन् वा ङीप् । गजस्कन्धस्थे चित्र-
प्रवेल पु० प्र+वेल-अच् । पीतमुद्गे (सोनामुग)
प्रवेश पु० प्र+विश-घञ् । अन्तर्गमने ।
प्रवेशन न० प्रविश्यतेऽनेन विश-करणे ल्युट् । प्रधानद्वारे,
सिंहद्वारे च । भावे ल्युट् । प्रवेशे ।
प्रवेष्ट पु० प्र+वेष्ट-अच् । बाहौ, बाहुनीचभागे हस्तिदन्तमांसे ।
गजपृष्ठस्थाने च । [तापसाद्धे स्त्री० ।
प्रव्रजित पु० प्र+व्रज-क्त । पञ्चाश्रमिणि । भिक्षौ, मुण्डीर्य्यां,
प्रव्रज्या स्त्री० प्र+व्रज-क्यप् । संन्यासे, सर्व्वकर्म्मत्यागेन विधा-
नेनाश्रमान्तरगमने ।
प्रव्रज्यावसित पु० प्रव्रज्यातः सन्यासात् अवसितः च्युत
अव+सो क्त । सन्न्यासभ्रष्टे ।
प्रशंसा स्त्री० प्र+शंस अ । गुणाविष्कारेण स्तुतौ ।
प्रशमन न० प्र+शम णिच् ल्युट् । वधे, शान्तकरणे च
'लब्धप्रशमनस्वस्थमि'ति रघु । शान्तौ च 'सर्व्वाबाधा-
प्रशमनमि'ति चण्डी ।
प्रशस्त त्रि० प्र+शंस क्त । प्रशंसनीये, श्रेष्ठे, श्रेये च ।
प्रश्न पु० प्रच्छ नङ् । जिज्ञासायाम् ज्ञातमिच्छया कथनाय प्रेरणे
प्रश्नी स्त्री० प्रच्छ+निङ् ङीप् । कुम्भिकायाम् (पाना) ।
प्रश्रय पु० प्र+श्रि अच् । प्रणये ।
प्रश्रित त्रि० प्र श्रि क्त । विनीते ।
प्रष्ठ त्रि० प्र+स्था-क नि० षत्वम् । अग्रगामिनि, श्रेष्ठे च ।
प्रष्ठौही स्त्री० प्रष्ठं प्रथमगर्भं वहति वह-ण्वि ङीप् । प्रथमगर्भिण्याम्
प्रष्ठवाह् पु० प्रष्ठं वहति ण्वि । युगपार्श्वस्थे वृषादौ, युगपार्श्वे

प्रथमयोर्मिले, दृष्टे च । [प्रमिष्ट । णिच् प्रश्रयति
प्रस प्रसवे ततौ च सक० दिवा० प्रा० सेट् घटा० । प्रसते
प्रसक्त त्रि० प्र+सन्ज क्त । प्रसङ्गविषये ।
प्रसक्ति स्त्री०प्र+सन्ज क्तिन् । प्रसङ्गे, आपत्तौ, अनुमितौ च
प्रसङ्ग पु०प्र+सन्ज घञ् । आपत्तौ,सम्बन्धभेदे महतस्त्रीमेला
नहोप्रसङ्गे संगतिभेदे अनुक्ते च योऽर्थेन सतकर्मणा-
न्यस्य सिद्धिरूपे अवान्तरकार्यनिर्भोहे, प्रसक्तौ, प्रसावे च
प्रसत्ति स्त्री० प्र+सद क्तिन् । नैर्मल्ये प्रसन्नतायाम् । [स्त्री०
प्रसन्न त्रि०प्र+सद क्त । निर्मले,प्रन्ने,लतागुल्मभेदे च सुरायां
प्रसन्नता स्त्री० प्रसन्नस्य भावः तल । प्रसादे अनुग्रहभेदे ।
प्रसभ न० प्रगता सभा सभाधिकारोऽत्रात् । बलात्कारे,
'प्रसभोद्धृत'रिति रघुः ।
प्रसर पु० प्र+सृ अप् अच् वा । प्रसवे, वेगे, समूहे युद्ध
नीवारे निकटाभिगमने प्रसादविस्तारे सैन्यारे सर्वतो
व्याप्तौ च । [स्त्रीलिङ्ग तत्र ङीप्
प्रसर्पण न० प्र+सृप ल्युट् । सैन्यानां सर्वतोव्याप्तौ च्यस
प्रसव पु प्र+सू अप् । गर्भमोचने । उत्पत्तौ, कार्यरूपे फले च
'अदधराधर विष प्रसवस्य गीयते' इतिकुमार ।
प्रसवबन्धन न० प्रसवस्य पुष्पस्य बन्धनम् बन्ध करणे ल्युट् ।
वृन्ते (बोंठा) ।
प्रसवित्री स्त्री० प्र+सू तृच् । जननाम् ।
प्रसव्य त्रि० प्रगत सव्य वामावम । प्रतिकूल ।
प्रसहा स्त्री० प्र+सह अच् । इहत्याम् ।
प्रसह्य अव्य० प्र+सह ल्यप् । हठादित्यर्थे । 'प्रसह्य तेजोभि
रसख्यतां गते'रिति माघ । [कामचौरे
प्रसह्यचौर पु० प्रसह्य बलात्कारेण चौर । (डाकाइत) । प्र
प्रसाद पु० प्र+सद घञ् । नैर्मल्ये, अनुग्रहे, काव्यगुणभेदे,
स्वास्थ्ये, प्रसक्तौ देवनैवेद्ये, गुरुजनभुक्तावशिष्टे च ।
प्रसादना स्त्री० प्र+सद णिच्-युच् । सेवायाम् ।
प्रसाधक त्रि० प्रसाधयति भूषयति प्र+सिध णिच् ण्वुल् ।
निष्पादकेऽलङ्कर्त्तरि च स्त्रियां टाप् । 'प्रसाधिकालम्बित-
मग्रपाद'मिति रघुः । नीवारे स्त्री० टाप् ।
प्रसाधन न० प्र+सिध णिच् ल्युट् । अलिमभूषणे वेशे ।करणे
ल्युट् । कङ्कतिकायाम् स्त्री० ङीप् ।
प्रसाधित त्रि० प्र+सिध णिच्-क्त । अलङ्कृते निष्पादिते च ।
प्रसारण न० प्र+सृ णिच् ल्युट् । विस्तारकरणे क्रियाभेदे च
प्रसारणी स्त्री०प्र+सृ णिच् ल्यु गौरा० ङीप् । (गन्धभादाल)
लताभेदे ।

प्रसारिणी स्त्री० प्र+सृ णिनि । लज्जालुलतायाम् ।
प्रसारिन् त्रि० प्र+सृ णिनि । विस्तारकारके ।
प्रसित त्रि० प्र+सो क्त । आसक्ते । [निगडादौ
प्रसिति स्त्री० प्र+सि-बन्धने करणे क्तिन् । बन्धनसाधने,
प्रसिद्ध त्रि० प्र+सिध क्त । भूषित, ख्याते च ।
प्रसू स्त्री प्र+सू क्विप् । जनन्याम्,कदल्यां वीरुधि, घोटक्याम्
प्रसूति स्त्री० प्र+सू क्तिन् । प्रसव, अपत्ये, उदरे मातरि च ।
प्रसूतिका स्त्री० प्रसूतेव कन् । जातपत्यायां स्त्रियाम् ।
प्रसूतिज न० प्रसूत्या जायते जन ड । दुःखे, प्रसवादिजन्य
दुःख हि सर्वलोकसिद्धम । [त्रि० ।
प्रसून न० प्र+सू क्त तस्य न । पुष्पे, फले च । जातमात्रे
प्रसृत पु० प्र+सृ क्त । अर्द्धाञ्जलौ, प्रहृष्टे प्रसारिते, विनीते,
वेगिते, गते नियुक्ते च त्रि० । जङ्घायां स्त्री० ।
प्रसेवक पु० प्र+सिव ण्वुल् । वीणामान्तवक्रे काष्ठे ।
प्रस्कन्न पु० पतिभेदे । स्कन्द क्त तस्य न । अवस्कन्दयुक्ते त्रि०
प्रस्तर पु० प्र+स्तॄ अच् । पाषाणे, मणौ च ।
प्रस्तार पु० प्र+स्तॄ घञ् । तृणवने,पल्लवादिरचितशय्यायां,छन्दो
गन्ध्योक्ते व्यक्तिभेदप्रदर्शनार्थे 'प्रस्तारे तु गुरु न्यस्य प्रथ
मस्य गुरोरधः । यथोपरि,तथा शेष'मित्युक्ते प्रक्रियाभेदे च
प्रस्ताव पु० प्र+स्तु घञ् । अवसरे प्रकरणे, प्रसङ्गे च ।
प्रस्तावना स्त्री० प्र+स्तु-णिच्-युच् । आरम्भे, उत्सवादौ
नृत्यादिभिः सह प्रकृताभिनेयकथाप्रसङ्गार्थे कथनीये वाक्य
भेदे 'नटी विदूषको वापीया' इ सा० द० ।
प्रस्तुत त्रि० प्र+स्तु क्त । प्रकरणप्राप्ते, प्रासङ्गिके, उपस्थिते
उद्यते, प्रतिपन्ने, प्रकर्षेण स्तुते च ।
प्रस्थ पु० प्र+स्था-क । चतु कुडवात्मके आढकचतुर्थांशे वा मान्या
दे। परिमाणभेदे विस्तारे च। पर्वतस्य वासयोग्यभूमौ पु०न०
प्रस्थान न० प्र+स्था ल्युट् । जिगीषोर्युद्धार्थगमने, गमनमात्रे च
प्रस्फोटन न० प्र+स्फुट-करणे ल्युट् । शूर्पे । भावे ल्युट् ।
ताडने, विकासने, मार्के च । [स्नु । मासवति पर्वते पु०
प्रस्रवण न० प्र+स्रु ल्युट् । अविच्छेदेन सवज्जले,उत्से,स्वेदे च ।
प्रस्राव पु० प्र+स्रु घञ् । मूत्रे । [स्नाद्यर्थे भावे ।
प्रहर पु० प्रह्रियते यामिकढक्कादिरस्मिन् प्र+हृ अप । दिवस
प्रहरण न प्रह्रियतेऽनेन हृ-ल्युट । अस्त्रे कर्त्तरि च ।
आधारे ल्युट । युद्धे । भावे ल्युट । प्रहारे, दमे च ।
प्रहर्षणी स्त्री० प्रहर्षयत्यनया हृष ल्युट ङीप । हरिद्रायाम
त्रयोदशाक्षरपादके च्छन्दोभेदे च । तत्र प्रहर्षिणीत्येके । [इष०
प्रहसन न० प्र+हस ल्युट्। हासे,दृश्यकाव्यरूपकभेदे च। सा०

**प्रहसन्ती** स्त्री० प्र+हस-शतृ ङीप्। यूथिकायां, वासन्त्याञ्च।
**प्रहस्त** पु० प्रकृष्टो हस्तः प्रा०। विस्तृताङ्गुलिके पाणौ, रावणसेनापतिभेदे च। [मांसरोहिण्याम्।
**प्रहारवल्ली** स्त्री० प्रहारस्य वेदनोपशमना वल्ली शाक०।
**प्रहि** पु० प्रह्रियतेऽत्र प्र+हृ-इन् डिच्च। कूपे।
**प्रहित** त्रि० प्र+हि-क्त। क्षिप्ते, निरस्ते, प्रेरिते च। सूपे न०
**प्रहेलिका** स्त्री० दुर्बोधार्थप्रकाशनाय प्रश्ने (हेयाली) 'तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः' रित्यादिरूपे, कस्योत्तरम् ईषत्पूर्णजलः कलशः
**प्रह्लाद** पु० प्र+ह्लद-घञ्। हिरण्यकशिपोर्दैत्यस्य पुत्रे, नागभेदे
**प्रह्व** त्रि० प्र+ह्वे-क। नम्रे विनीते, आसक्ते च।
**प्रांशु** त्रि० प्रकृष्टा अंशवोऽस्य। उच्चे, उन्नते।
**प्राकाम्य** न० प्रकामस्य भावः ष्यञ्। अष्टविधैश्वर्यमध्ये, इच्छानभिघातरूपे ऐश्वर्ये स्वाच्छन्द्यानुमतौ च। 'प्राकाम्यं ते विभूतिषु' इति कुमारः। [कारे, प्राचीरादौ।
**प्राकार** पु० प्रकीर्यते प्र-कॄ-घञ् दीर्घः। इष्टकादिरचिते वेष्टना-
**प्राकृत** त्रि० प्रकृष्टमकृतमपकार्यं यस्य। नीचे। प्रकृतेरयम् अण्। प्रकृतिसम्बन्धिनि। प्रकृत्या स्वभावेन निर्वृत्तः अण्। स्वभावसिद्धे। प्रकृतेः संस्कृतशब्दात् आगतः अण्। नाटकादौ प्रसिद्धे अपभ्रंशशब्दभेदे।
**प्राकृतप्रलय** पु० कर्म०। कार्यब्रह्मणो नाशे तेन सह कार्यजातस्य प्रकृतौ लये, तत्काले च।
**प्राकृतमित्र** कर्म०। स्वभावसिद्धे मित्रे, विषयानन्तरस्थनृपस्मात् प्राकृतशत्रोः व्यवहितोत्तरविषयस्थे नृपे।
**प्राकृतशत्रु** पु० कर्म०। विषयानन्तरवर्त्तिनि नृपे।
**प्राक्तन** त्रि० प्राचि काले, देशे, प्राच्यां दिशि, वा भवः ट्यु तुट् च। प्राग्भवे। 'प्रपेदिरे प्राक्तनजन्मविद्याः' इति कु०।
**प्रागभाव** पु० प्राग्वर्त्ती अभावः। इह कपाले घटो भविष्यतीत्यादिप्रतीतिसिद्धे अभावभेदे।
**प्रागुदीची** स्त्री० प्राच्या उदीच्याश्चान्तराला दिक् 'दिग्नामान्यन्तराले' इति स०। पूर्वोत्तरदिशि ऐशानकोणे।
**प्राग्ज्योतिष** न० कामरूपदेशे तद्देशस्थे ब० व०।
**प्राग्भार** पु० प्रकृष्टो भारः। उत्कर्षे, परभागे, 'मांसमस्तिष्कपङ्क 'प्राग्भारः' इति प्रबोधचन्द्रोदयः। पर्वताग्रभागे च।
**प्राग्रहर** त्रि० प्रकर्षेण अग्रे ह्रियतेऽसौ अच्। श्रेष्ठे।
**प्राग्र्य** त्रि० प्रकर्षेणाग्रे भवः यत्। श्रेष्ठे।
**प्राग्वंश** पु० प्राक् वंशः सपत्नीकयजमानादिगृहदायोऽत्र। हविर्गेहात् पूर्वभागस्थे यजमानादिस्थित्यर्थे गृहे।

**प्राघार** पु० प्र+घृ-क्षरणे घञ् दीर्घः। यज्ञादौ वह्नेरुपरि घृतादेः क्षरणे। [वप्रादौ च।
**प्राघुण** पु० प्र+आ-घुण-क। अतिथौ। [अजिरे, प्रघ-
**प्राङ्गण** न० प्रकृष्टमङ्गनं पूर्व० णत्वम्। गृहभूमौ (उठान)
**प्राङ्न्याय** पु० 'आचारेणावसन्नोऽपि पुनर्लेखयते यदि। सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते' इत्युक्ते व्यवहारस्थे उत्तरभेदे।
**प्राच्** त्रि० प्र-अन्च-क्विन्। पूर्वस्मिन् काले देशे च। स्त्रियां ङीप् प्राची। सा च पूर्वस्यां दिशि, तन्त्रोक्ते पूज्यपूजकयोर्मध्यदेशे च।
**प्राचीन** त्रि० प्राक्+भवार्थे ख। पूर्वदिग्देशादौ भवे। (आक्नादि) वनतिक्तायाम्, रास्नायाञ्च स्त्री० टाप्।
**प्राचीनबर्हिस्** पु०। इन्द्रे, नृपभेदे च।
**प्राचीनामलक** न० कर्म०। पानीयामलके।
**प्राचीनावीत** न० 'सव्यं बाहुं समुद्धृत्य दक्षिणे तु द्विजातयः। प्राचीनावीतमित्युक्तं पैत्रे कर्मणि योजयेदित्युक्ते। श्राद्धादौ वामकरे बहिष्कृते सति दक्षिणस्कन्धार्पिते यज्ञसूत्रादौ।
**प्राचीर** न० प्राचीयते प्र+आ-चि-क्रन् दीर्घश्च। सर्वतो वेष्टनाकारे इष्टकादिनिर्मिते आवरणे (पाचिर)। [पुत्रे च
**प्राचेतस** पु० वाल्मीकिमुनौ प्राचीनबर्हिषो नृपस्य पुत्रे, वरुणस्य
**प्राच्य** पु० प्राचि भवः। शरावत्या नद्याः प्राग्दक्षिणे देशे।
**प्राजक** पु० प्र+अज-ण्वुल् वीभावाभावः। सारथौ।
**प्राजन** न० प्र+अज-ल्युट्। तोदने पश्वादेश्चालनदण्डे (पाचनी)
**प्राजापत्य** पु० प्रजापतिर्देवताऽस्य अण्। अष्टविवाहमध्ये विवाहभेदे, 'त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यमिति स्मृतमिति' इत्युक्ते द्वादशाहसाध्ये व्रतभेदे न०। प्रजापत्यधिदेवताके पर्व्वादौ त्रि०। प्रव्रज्यायमाद्ये सर्वस्वदक्षिणकेष्टिभेदे स्त्री०।
**प्राजितृ** पु० प्र-अज-तृच् वीभावाभावः। सारथौ।
**प्राज्ञ** पु० प्रकर्षेण जानाति प्र-ज्ञा-क स्वार्थे अण्। पण्डिते। राजशुके च। प्रज्ञाऽस्त्यस्य अण्। बुद्धिमति, दक्षे च त्रि० प्रज्ञा+स्वार्थे अण्। बुद्धौ, प्राज्ञस्य पत्नी ङीप्। प्राज्ञपत्न्यां स्त्री०। [प्रचुरे त्रि०।
**प्राज्य** न० प्रकृष्टमाज्यं प्र+अञ्ज-क्यप् वा। प्रकृष्टघृते।
**प्राञ्जल** त्रि० प्र+अञ्ज-अलच्। सरले, सुबोधे च।
**प्राड्विवेक** पु० अर्थिप्रत्यर्थिनौ पृच्छति प्रच्छ-क्विप् प्राट्, तयोर्वाक्यं विरुद्धाविरुद्धतया विवेचयति वि+विच-घञ् कर्म०। राजनियुक्ते व्यवहारदर्शके, 'विवादानुगतं पृष्ट्वा पूर्ववाक्यं

प्रयत्नत । विचारयति येनासौ प्राड्विवेकस्ततः स्मृत' इति स्मृति च्यर्थं प्राड्विवाक इति केचित् पठन्ति ।

**प्राण** पु० प्र+अन घञ् । हृदयस्थे नासाग्रवर्त्तिनि वायौ, काव्यजीवने रसे, वायुमात्रे, बले च । पञ्चवृत्तिके देहस्थे वायुभेदे, इन्द्रिये च ब०व० ।

**प्राणद** पु० प्राणं ददाति दा क । जले, अन्ने च । जीवकवृक्षे पु० । हरितक्यां, ऋद्धिवृक्षे च स्त्री० । प्राणदातरि त्रि० 'प्राणदा यमदूतिके' त्युक्तेः ।

**प्राणनाथ** ६त० । पत्यौ ।

**प्राणमयकोष** पु० रागादिकर्मेन्द्रियसहित प्राणपञ्चकमयुर कोषवदाच्छादकत्वात् कोष इव । वेदान्तोक्ते जीवस्वरूपाच्छादके, कर्मेन्द्रियसहिते प्राणपञ्चके ।

**प्राणसंयम** पु० प्राणस्य प्राणरूपवृत्तिभेदस्य नासाग्रवर्त्तिनो वायोः संयमो यत्र व्यापारे । प्राणायामे तेन हि व्यापारेण प्राणवायोर्बहिर्निःसरणप्रतिरोधेन प्राणसंयम इति योगशास्त्रादिप्रसिद्धम् ।   [पत्न्याम् ।

**प्राणसमा** स्त्री० प्राणैः समा तुल्या प्रियत्वात् । प्रियतमायां

**प्राणायाम** पु० प्राणः प्राणवायुरायम्यते संयम्यते येन आ+यम घञ् । योगादिशास्त्रप्रसिद्धे प्राणवायोर्निरोधसाधने व्यापारे । वहिःस्थप्राणवायोराकर्षणरूपपूरणेन, देहस्थस्य तस्य कुम्भवत् निश्चलतया रोधेन, निरुद्धस्य तस्य क्रमेण बहिर्निःसारणरूपरेचनेन च प्राणवायोर्यद्विनियोगरूपवश्यतासम्पादनमित्यसौ व्यापारसमुदायः प्राणायाम इत्युच्यते 'प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत् । प्राणायामः स विज्ञेय' इत्युक्तलक्षणे प्राणायामशब्दस्य पूरककुम्भकरेचनरूपव्यापारसमुदाये रूढिरिति केचित् प्रत्येकस्मिन्नपि रूढिरित्यन्ये विस्तरो वृहदभिधाने ।

**प्राणिद्यूत** न० प्राणिभिः मेषकुक्कुटादिभिः पणपूर्वं द्यूतं देवनम् दिव भावे क्त । प्राणिभिः पणपूर्वके देवने ।

**प्राणिन्** पु० प्राण+अस्त्यर्थे इनि । जीवे चेतने ।

**प्रातःकृत्य** न० प्रातः प्रभाते कृत्यं कर्त्तव्यम् । प्रभाते कर्त्तव्ये शौचस्नानादौ ।   [प्रातरुपास्ये मन्त्ररूपे देवभेदे ।

**प्रातःसन्ध्या** स्त्री० प्रातरुपास्या सन्ध्या । वैदिके तान्त्रिके च

**प्रातर्** अव्य० प्र+अत अर् । प्रभाते, 'प्रातःकालो मुहूर्त्तांस्त्रीनि' ति इत्युक्ते सूर्य्योदयावधित्रिमुहूर्त्तकाले च ।

**प्रातराश** पु० अश्यते भुज्यते अश घञ् प्रातः प्रभाते आशो भोजनम् । प्रातःकाले भोज्ये ।

**प्रातिका** स्त्री० प्र+अत ण्वुल् टाप् । जवापुष्पे ।

**प्रातिपदिक** पु० प्रतिपदि दृश्यते ठञ् । अग्नौ, 'इन्द्राग्नी यत्र हूयेते इति श्रुतौ यत्र प्रतिपदीत्यर्थः । व्याकरणोक्ते 'अर्थवद् अधातुरप्रत्ययः प्रातिपदिकमि'त्याद्युक्ते प्रत्ययप्रत्ययान्तभिन्ने धातुभिन्ने कृत्तद्धितसमासनिष्पन्ने च शब्दभेदे न० ।

**प्रातिभाव्य** न० प्रतिभुवो भावः । (जामिनी) प्रतिभुवो भावः 'प्रातिभाव्यागतं मुत' इति स्मृतिः ।   [साधारणे धर्मे

**प्रातिस्विक** न० प्रतिस्वे एकैकस्मिन् भव ठक् । प्रत्येकपदार्थ

**प्रातिहारिक** त्रि० प्रतिह्रियतेऽनेन प्रतिहारः कापट्यं मायाः स प्रयोजनमस्य ठक् । मायाकारके ।   [विद्याध्ययनादौ ।

**प्राथमकल्पिक** त्रि० प्रथमकल्पे भव ठक् । प्रथमारम्भोचिते

**प्राथमिक** त्रि० प्रथमे भव ठञ् । प्रथमकालभवे । स्त्रियां ङीप् ।

**प्रादुर्भाव** पु० प्रादुस्+भू घञ् । प्रकाशे आविर्भावे ।

**प्रादुस्** अव्य० प्र+अद-उसि । स्फुटत्वे, प्रकाशे, नाम्नि, सम्भावनायां, वृत्तौ च ।

**प्रादेश** पु० प्र+दिश घञ् दीर्घः । तर्ज्जनीसहितविस्तृताङ्गुष्ठदेशमाने च 'अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते' इत्युक्ते परिमाणभेदे च ।

**प्रादेशन** न० प्र+आ+दिश ल्युट् । दाने ।

**प्राध्व** पु० प्रगतोऽध्वानम् अच् समा० । रथादौ, प्रकृष्टोऽध्वा प्रा०स० प्रकृष्टे पथि । नम्रे, बद्धे च त्रि० ।   [तायाञ्च

**प्राध्वम्** अव्य० प्र+आ+ध्वन डमि । आनुकूल्ये, बन्धने, नम्र

**प्रान्त** पु० प्रकृष्टोऽन्तः । शेषसीमायाम् ।।

**प्रान्तर** न० प्रकृष्टमन्तरं व्यवधानं यत्र । दूरगम्ये पथि । छायादिशून्ये शून्ये पथि, वने, कोटरे च ।

**प्राप्तपञ्चत्व** त्रि० प्राप्तं पञ्चत्वं मरणं येन । मृते ।

**प्राप्तरूप** त्रि० प्राप्तं रूपं येन । मनोहरे, पण्डिते च ।

**प्राप्ति** स्त्री० प्र+आप क्तिन् । वृद्धौ, लाभे, स्थानान्तरगतौ, महतौ अणिमाद्यैश्वर्य्यमध्ये ऐश्वर्य्यभेदे उदरे च ।

**प्राप्य** त्रि० प्र+आप ण्यत् । गम्ये लभ्ये च । व्याकरणोक्ते 'क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यत' इत्युक्ते कर्मभेदे न० ।

**प्राभृत** न० प्र+आ+भृ क्त । उपढौकनद्रव्ये । साथ इत्यादि ।

**प्रामाद** पु० प्रमादाय हितं अण् । वासकवृक्षे ।

**प्रामाणिक** त्रि० प्रमाणेन निश्चितः सिद्धः ठञ् । प्रत्यक्षादिप्रमाणसिद्धे, शास्त्रसिद्धे च स्त्रियां ङीप् ।

**प्रामाण्य** न० प्रमाणस्य भावः । तद्वति तत्प्रकारकत्वरूपे ज्ञानधर्मे, तच्च न्यायमते परतोग्राह्यं मीमांसकादिमते स्वतः समामन्या वा ग्राह्यमिति भेदः विस्तरो वृहदभिधाने ।

प्राय पु० प्र+अय-इण्-वा घञ् अच् वा । मृत्यौ, अनशनमृत्यौ बाहुल्ये च । 'प्रायेण सामग्र्यविधौ'रिति कुमारः ।

प्रायश्चित्त प्रायस्+चित-क्त । 'प्रायो नाम तपः प्रोक्तम् चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तम् प्रायश्चित्तमिति स्मृत'मित्युक्तलक्षणे पापक्षयमात्रसाधनत्वेन, विधिबोधिते कर्मणि चान्द्रायणादौ ।

प्रायश्चित्तिन् त्रि० प्रायश्चित्तं कर्त्तव्यतयाऽस्यस्य इनि । प्रायश्चित्तकरणयोग्ये पापनिश्चयवति जने ।

प्रायस् अव्य० प्र+अय-असि । बाहुल्ये, तपसि च । 'प्रायः पयोधरमवततिरत्र चेत'रित्युद्भटः ।

प्रायोपविष्ट त्रि० प्रायाय अनशनमृत्यवे उपविष्टः उप+विश-क्त । अनशनेन मृत्यवे उद्युक्ते ।

प्रायोपवेश पु० प्रायाय अनशनमृत्यवे उपवेशः स्थितिः । सङ्कल्पपूर्वकम् सकलकार्यत्यागेन अनशनमरणार्थमुद्यमे ।

प्रारब्ध न० प्र+आ+रभ-आरम्भे क्त । प्रकृष्टमारब्धं स्वकार्यं जननाय शतारम्भं येन । देहारम्भके अदृष्टभेदे तस्य भोगेनैव क्षय इति शास्त्रे प्रसिद्धम् । शतारब्धे त्रि० ।

प्रार्थना स्त्री० प्र-अर्थ-युच् । याच्ञायां, हिंसायाञ्च । ल्युट् । याचने, हिंसने च न० । [च ।

प्रार्थित त्रि० प्र+अर्थ क्त । याचिते । अभिहिते, हते, शत्रुसंयते

प्रालम्ब न० प्रकर्षेणालम्बते प्र+आ+लम्ब-अच् । ऋजुतया कण्ठात् लम्बमाने माल्यादौ ।

प्रालेय न० प्रकर्षेण लीयते प्र+आ+ली-यत्, आले एत्वम्, प्रलयाय हितम् अण् नि० एत्वम् वा । हिमे । [दोषज पु०

प्रावरण न० प्राव्रियतेऽनेन ल्युट् । उत्तरीयवस्त्रे । अच् । प्रावा-

प्रावृत त्रि० प्र+आ+वृ-क्त । प्रकर्षेणावृते वस्त्रे ।

प्रावृष्(षा) स्त्री० प्रकर्षेणावर्षत्यत्र वृष-क्विप् वा टाप् । वर्षाकाले

प्रावृषायणी स्त्री० प्रावृषायनमयनं यस्याः पूर्व० णत्वम् । कपिकच्छ्वाम् (आलकुषी)

प्रावृषेण्य पु० प्रावृषि भवः एण्य । कदम्बवृक्षे, धाराकदम्बे, कुटजवृक्षे च । वर्षाकालभवे त्रि० 'वं प्रावृषेण्यैरिवे'ति भट्टिः । पुनर्नवायां, कपिकच्छ्वाञ्च स्त्री० ।

प्रावृष्य पु० प्रावृषि भवः यत् । वैदूर्ये, कदम्बे च ।

प्राशित त्रि० प्र-अश कर्मणि क्त । भुक्तादिमत्प्रकारके । यज्ञे पु०

प्रास पु० प्रकर्षेणास्यते अस-कर्मणि घञ् । कुन्ताख्ये ।

प्रासङ्ग पु० प्रसज्यते प्र+सञ्ज-घञ् दीर्घः । युग्यवाहनार्थं वत्सस्कन्धे निबद्धकाष्ठभेदे ।

प्रासङ्ग्य पु० प्रासङ्गं वहति यत् । युगादिकाष्ठवाहके वृषादौ

प्रासाद पु० प्रसीदत्यस्मिन् प्र+सद-घञ् पूर्वपद दीर्घः । देवानां राज्ञाञ्च गृहभेदे ।

प्रासिक पु० प्रासः प्रहरणमस्य ठक् । कुन्तास्त्रेण योद्धरि ।

प्रास्थिक त्रि० प्रस्थं तत्परिमितं धान्यादिकं स्वमिन् समावेशयति, पचति वा ठञ् । प्रस्थमितधान्यसमावेशयोग्ये पात्रे, तन्मितधान्यादिपाचके च । स्त्रियां ङीप् ।

प्राह्ण पु० प्रकृष्टं, प्रथमं वा अह्नः टच् अह्नादेशः णत्वम् । पूर्वाह्णे

प्राह्णेतन त्रि० प्राह्णे पूर्वाह्णे भवः ट्युल् तुट् च निपातनादे त्वम् । पूर्वाह्णे भवे । [अतिशयेन

प्राह्णेतराम् अव्य० अतिशयेन प्राह्णे तरप्-आमु एत्वं नि० ।

प्रिय पु० प्रीणाति प्री-तर्पणे क । भर्त्तरि, पत्यौ, मृगभेदे, ऋद्धिनामौषधौ च । हृद्ये त्रि० । भार्यायां, एलायां, मल्लिकायां, मदिरायां, वार्त्तायाञ्च स्त्री० ।

प्रियंवद त्रि० प्रियं प्रियकरं मधुरं वदति खच् मुम् च । प्रियवादिनि खेचरे, गन्धर्वभेदे च पु० ।

प्रियक पु० प्रिय+संज्ञायां कन् । पीतशाले वृक्षे, कदम्बे, चित्रितमृगे, प्रियङ्गौ, भ्रमरे, कुङ्कुमे, असनवृक्षे च ।

प्रियङ्कर त्रि० प्रियङ्करोति खच् मुम् च । प्रियकारिणि । श्वेतकण्टकार्यां, ऋद्धिजीवन्त्याम्, अश्वगन्धायाञ्च स्त्री० ङीप् ।

प्रियङ्गु पु० प्रिय+गम-डु नि० मुम् च । स्वनामख्याते वृक्षे 'प्रियङ्गुकलिकाकार'मिति बुधग्रहाधिमन्त्रः । राजिकायां, पिप्पल्याम्, कङ्गौ, (काङ्गनी) कटुकायाञ्च ।

प्रियजीव पु० प्रियो जीवो यस्य । श्योनाकभेदे । [प्रिये त्रि०

प्रियतम पु० अतिशयेन प्रियः तमप् । मयूरशिखावृक्षे, अति-

प्रियता स्त्री० प्रियस्य भावः तल् । स्नेहे प्रियत्वे । [शुकवृक्षे च

प्रियदर्शन पु० प्रियं दर्शनमस्य । क्षीरिकावृक्षे, शुकवृक्षे च

प्रियवर्णी स्त्री० प्रियो वर्णो यस्याः गौ० ङीप् । प्रियङ्गौ

प्रियव्रत पु० स्वायम्भुवमनोः ज्येष्ठे पुत्रे ।

प्रियवल्ली स्त्री० कर्म० । प्रियङ्गौ । [प्रियङ्गौ

प्रियसन्देश पु० प्रियं सन्दिशति अण् । चम्पकवृक्षे । [न० ।

प्रियसालक पु० कर्म० स्वार्थे कन् । असनवृक्षे (पियासाल)

प्रियाम्बु पु० प्रियं प्रियतमं प्रियमम्बु मूले निर्ज्ञे अस्य आम्रवृक्षे । [प्रियालं] । द्राक्षायां स्त्री० ।

प्रियाल पु० प्रियम् अलति पर्याप्नोति अल-अच् । पियशाले

प्री तर्पणे भ्वा०उभ०सक०अनिट् । प्रियति ते अप्रैषीत् अप्रेष्ट ।

प्री प्रीतौ कान्तौ दिवा०आत्म०अक० अनिट् । प्रीयते अप्रेष्ट

प्री तर्पणे क्र० उभ० सक० अनिट् । प्रीणाति प्रीणीते अप्रैषीत् अप्रेष्ट ।

प्री तर्पणे सक०चु० उभ०अनिट्। प्राययति ते अपिप्रयत्-त।
प्रीणन न० प्री णिच्-नुक्-ल्युट्। तर्पणे। [ष्यत त्रि०।
प्रीत त्रि० प्री क्त वा नत्वाभाव। हृष्टे। तस्य नाशे प्रीणो-
प्रीति स्त्री० प्री भावे क्तिन्। हर्षे, आमोदे, तृप्तौ च।
प्रु गत्यां भ्वा० आत्म०सक०अनिट्। प्रवते अप्रोष्ट।
प्रुट मर्दने भ्वा०पर०सक०सेट्। प्रोटति अप्रोटीत्।
प्रुष भस्मीकरणे भ्वा०पर०सक०सेट्। प्रोषति अप्रोषीत् क्र्या
वेट्। [अप्रोषीत्।
प्रुष सेके पूर्त्तौ च सक० स्नेहे अक०क्र्या०पर०सेट्। प्रुष्णाति
प्रुष्ट त्रि० प्रुष-क्त। दग्धे।
प्रेक्षा स्त्री० प्रकर्षेण प्रमाणादिना ईक्षा। पर्य्यालोचनायाम्।
प्रेक्षावत् त्रि० प्रेक्षा अस्त्यर्थे मतुप् मस्य व। समीक्ष्यकारिणि
प्रेङ्खा स्त्री० प्र+इखि घञ्। दोलायाम्, परिभ्रमणे, सार्थकगतौ,
नृत्यभेदे, नृत्ये च।
प्रेङ्खित त्रि० प्र+इखि-क्त। कम्पिते।
प्रेङ्खोल दोलने अ०चुरा०उ०सक०सेट्। प्रेङ्खोलयति ते अप-
प्रेङ्खोलत् त। प्रस्योपसर्गत्वमपीत्यन्ये, तेन प्राङ्खिखोलत् त।
प्रेत पु० प्र+इण क्त। नरकस्थे जीवे, पिशाचभेदे, आतिवाहिक
देहोत्तर जायमाने देहभेदे, 'मृते सपिण्डीकरणे नर
संवत्सरात् परम् प्रेतदेह परित्यज्य भोगदेह प्रपद्यते' इति
स्मृति, मृते च।
प्रेतकर्म्मन् न०६त०। मृतस्य दाहादिके सपिण्डीकरणान्ते कर्म्मणि
प्रेतगृह न०,६त०। श्मशाने प्रेतपुरादयोऽप्यत्र। [नदीभेदे।
प्रेतनदी स्त्री० प्रेतगम्या नदी। यमद्वारस्थे वैतरणीनामके
प्रेतशिला स्त्री० गयातीर्थस्थे प्रेतोद्धारणार्थे शिलाभेदे।
प्रेत्य अव्य० प्र+इण ल्यप्। लोकान्तरे 'प्रेत्य संज्ञा नास्ती'ति
श्रुति। [इन्द्रे, वायौ च पु०।
प्रेमन् पु०न० प्रियस्य भाव इमनिच् प्रादेश। स्नेहे, नर्म्मणि च
प्रेयस् त्रि० अतिशयेन प्रिय ईयसु प्रियस्य प्रादेश। अतिशय
प्रिये। स्त्रियां ङीप् प्रेयसी सा च प्रियतमायां, योषिति च
प्रेरण न० प्र-ईर-णिच्-ल्युट्। प्रेषणे निकटस्थं भृत्यादे
कार्य्यादौ नियोगे। णिच् युच्। प्रेरणाप्यत्र स्त्री०।
प्रेष गतौ भ्वा०पर०सक० सेट्। प्रेषति अप्रेषीत्।
प्रे(प्रै)ष पु० प्र+इष-घञ् वा परकृपम्। प्रेषणे, पीडने च।
प्रेष्ठ त्रि० अतिशयेन प्रिय इष्ठन् प्रादेश। अतशय प्रिये।
प्रे(प्रै)ष्य पु० प्र-इषु ण्यत् वा परकृपम्। दासे। प्रेरणीये त्रि०
आज्ञाप्या स्त्री०। [पशूनां हनने च।
प्रोक्षण न० प्र+उक्ष ल्युट्। समन्तात् सेचने, वधे, यज्ञार्थ
प्रोक्षित त्रि०प्र+उक्ष-क्त। सिक्ते, हिते, यज्ञार्थं संस्कृते मांसादौ
च 'भक्षयेत् प्रोक्षितं मांस'मिति स्मृति।
प्रोञ्छन न० प्र+उछि-ल्युट्। मार्जने (पोंछा)।
प्रोत त्रि० प्र-वे क्त। गुम्फिते, स्यूते, खचिते च। वस्त्रे न०।
प्रोत्फल्ल पु० प्रकर्षेण उत्फलति प्र+उद्+फल-अच्।
पिङ्गलाङ्गलाकारपुष्पवति वृक्षभेदे।
प्रोथ पर्य्याप्तौ सामर्थ्ये च भ्वा०उभ०अक०सेट्। प्रोथति-
ते अप्रोथीत् अप्रोथिष्ट। चङि न ह्रस्व।
प्रोथ पु०न०। प्रु-थन्। अश्वनासिकायाम्। कट्यां, शाटके,
स्त्रीगर्भे, गर्त्ते, भीषणे, स्फिचि, अश्वमुखे च पु०। मान्ये,
स्थापिते, प्रथिते च त्रि०।
प्रोषित त्रि० प्र+वस क्त इट्। प्रवासं गते विदेशं गते।
प्रोषितभर्त्तृका स्त्री० प्रोषित भर्त्ता यस्या कप्। विदे-
शस्थपतिकायां नायिकायाम्।
प्रो(प्रौ)ष्ठ पु० प्रकृष्ट ओष्ठोऽस्य वा वृद्धि। (पुटि) मत्स्यभेदे
गवि च। वा ङीप्। प्रोष्ठीत्यप्यत्र।
प्रो(प्रौ)ष्ठपद पु० प्रो(प्रौ)ष्ठो गौरिव पद यस्य। भाद्रपदाख्ये
नक्षत्रविशेषे तेन युक्ता पौर्णमासी अण् सा यत्र मासे
पुनरण् वा न वृद्धि। चान्द्रभाद्रमासे।
प्रो(प्रौ)ष्ठपदा स्त्री०ब०व०प्रो(प्रौ)ष्ठस्य गौरिव पदान्यस्या। भाद्र
पदनाम्ने पूर्वभाद्रपदतारायां उत्तरभाद्रपदतारायाञ्च चतुर्नक्ष-
त्रात्मकत्वात् बहुत्वम्। [वृद्धि। भाद्रपौर्णमास्याम्।
प्रो(प्रौ)ष्ठपदी स्त्री० प्रोष्ठ प्रौ)पदा भयुक्ता पौर्णमासी अण् वा
प्रौढ त्रि० प्र+वह क्त वृद्धि। प्रवृद्धे, प्रगल्भे, निपुणे च नायि
काभेदे 'तरुणी स्मिता मता पञ्चपञ्चाशता प्रौढे त्युक्तवय-
स्क या स्त्रियाम् च स्त्री० टाप्।
प्रौढपाद पु० 'आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा।
कृतावसक्थिको यस्तु प्रौढपाद स उच्यते' इत्युक्तलक्षणे
आसनारूढपादे वस्त्रादिना कटिजङ्घाबन्धनेन स्थिते जने।
प्रौढि स्त्री० प्र+वह क्तिन् वृद्धि। सामर्थ्ये, उद्यमे च।
प्लक्ष भक्षणे भ्वा० उभ०सक०सेट्। प्लक्षति अप्लक्षीत्।
प्लक्ष पु० प्लक्ष्यते कीटै प्लक्ष-घञ्। (पाकुड) वृक्षे, प्लक्षलाञ्छ-
-चिह्निते द्वीपभेदे च।
प्लव पु० प्लु-भावे अप्। प्लवने। कर्त्तरि अच्। भेलके (भेला)
भेके, मेषे, वानरे, श्वपचे, जलकाके, प्रवणे, पर्कटीवृक्षे,
कारण्डवखगे, शब्दे, रिपौ, जलभेदे जलकुक्कुटे, जलचर-
पक्षिमात्रे कारण्डवादौ च। कैवर्त्तीमुस्तके, गन्धतृणे,
प्लवग पु० प्लवन् सन् गच्छति गम-ड ह०। वानरे,

**भाद्रमातुर** पु० भद्रायाः सत्याः मातुः अपत्यम् अण् उरच्।

**भानु** पु० भा-नु। सूर्ये, अर्कवृक्षे, किरणे, प्रभौ, राजनि च।

**भानुफला** स्त्री० भानुरिव दीप्तिमत् फलं प्रसवो यस्याः। कदल्याम् तस्याः मोचकस्य सूर्यतुल्यवर्णत्वात्तथात्वम्। [व्यथक

**भानुमत्** पु० भानु किरणोऽस्त्यस्य मतुप्। सूर्ये। भानुमाली

**भानुमती** स्त्री० विक्रमादित्यनृपते० पत्न्याम्।

**भाम** क्रोधे भ्वा०आत्म०अक०सेट्। भामते, अभामिष्ट।

**भाम** पु० भाम-घञ्। क्रोधे, दीप्तौ च। कर्त्तरि अच्। सूर्ये। कोपवत्यां स्त्रियां स्त्री० टाप्। [च

**भामिनी** स्त्री० भाम-णिनि। कोपशीलायां स्त्रियां, स्त्रीमात्रे

**भार** पु० भृ-घञ्। गुरुत्वपरिमाणे, तद्वति द्रव्ये विंशतितुलापरिमाणे (अष्टसहस्रतोलकपरिमाणे) च पु०।

**भारत** न० भरतान् भरतवंश्यानधिकृत्य कृतोग्रन्थः अण् भारं वेदादिशास्त्रेभ्योऽपि भाराधिः अस्त्यस्य तं वा। वेदव्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे। भरतेन चिह्नितं, तस्येदं वा अण्। 'हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता। तस्मात्तु भारतं वर्षमित्युक्तं जम्बुद्वीपान्तर्गते वर्षभेदे। भरतस्य गोत्रापत्यम् अण्। भरतनृपस्य वंश्ये। भरतेन मुनिना प्रोक्तमण्। भरतमुनिकृते नाटकशास्त्रादौ न०। तदधीयते पुनरण्। नटे, अग्नौ च।

**भारती** स्त्री० भृ-अतच् स्वार्थे प्रज्ञाद्यण्। वाक्ये तदधिदेवतायां सरस्वत्यां, पक्षिभेदे, 'भारती संस्कृतप्रायो वाग्व्यापारो नराश्रय' इति सा०द०प० अलङ्कारोक्ते वृत्तिभेदे च।

**भारद्वाज** पु० भरद्वाजस्य गोत्रापत्यम् अण्। गोत्रप्रवर्त्तके मुनिभेदे, द्रोणाचार्ये, अगस्त्यमुनौ, व्याघ्राटविहगे, बृहस्पतिपुत्रे च। वनकार्पास्यां स्त्री०ङीप्। पृ०। भारद्वाजोऽप्यत्र। [कृकवाकौ (काक)।

**भारयष्टि** स्त्री० भारस्य वहनार्था यष्टिः शाक०। भारव-

**भारवाह(क)** पु०भारं वहति अण्, ण्वि वा। भारवाहिनि। ण्वुल्। भारवाहकोऽप्यत्र।

**भारवि** पु० किरातार्ज्जुनीयकाव्यकारके कविभेदे।

**भारवृक्ष** पु० भारीभूतो वृक्षः। काश्मीरनामगन्धद्रव्ये।

**भारिक** पु० भारं वहति भार+ठक्। भारवाहके।

**भार्गव** पु० भृगोरपत्यम् तद्गोत्रापत्यं वा अण्। शुक्राचार्ये, परशुरामे, धन्विनि, गजे च। तेन प्रोक्ता तेनाधीता ख्याता वा अण्। वेदप्रसिद्धे विद्याभेदे, पार्वत्यां लक्ष्म्यां दूर्वायां च स्त्री० ङीप्।

**भार्गी** स्त्री० भर्गस्येयमण्। (वामनहाटि) वृक्षभेदे।

**भार्य्या** स्त्री० भृ-ण्यत्। विधिनोढायां स्त्रियाम् भरणीये त्रि०

**भाल** न० भा-लच्। ललाटे भ्रुवोरूर्द्ध्वभागे।

**भालदर्शन** न० भाले दृश्यते कर्म्मणि ल्युट्। सिन्दूरे।

**भालनेत्र** पु० भाले नेत्रमस्य। शिवे। भाललोचनादयोऽप्यत्र।

**भालाङ्क** पु० भालस्येवाङ्को यस्य, भाले अङ्को यस्य वा। शाकभेदे, करपत्रेऽस्त्रे (करात्) रोहितमत्स्ये, महापुरुषचिह्नयुक्ते पुरुषभेदे, शिवे, कच्छपे च।

**भाल्लु(ल्ल)क** पु० भल्लूक+स्वार्थे अण् वा पृ० ह्रस्व। जन्तुभेदे भल्लूके। पृ०। भालुकोऽप्यत्र।

**भाव** पु०भावयति चिन्तयति पदार्थान् चु०भू-अच्। नाट्योक्तौ नानापदार्थचिन्तके पण्डिते। भावयति ज्ञापयति हृदयगतम् भू-णिच् अच्। हृद्गतावस्थावेदके मानसविकारे स्वेदकम्पादौ, व्यभिचारिभावे। भू-घञ्। साध्यरूपे सिद्धरूपे वा क्रियारूपे धातोरर्थे, रागे आशये च। [उत्पादके च त्रि०

**भावक** पु० भाव-स्वार्थे कन्। मानसविकारे। पदार्थचिन्तके।

**भावत्क** पु० भवतोऽयं ठक्। भवत्सम्बन्धिनि। [चिन्ताभेदे च

**भावन** न० भू-णिच्-ल्यु। (चालत) फलभेदे, भावे ल्युट्। युच्। चिन्तायाम्, अधिवासने, ध्याने, पर्य्यालोचनायां, वैद्यकोक्ते औषधसंस्कारभेदे स्त्री०।

**भावबोधक** भावस्य रत्यादेर्बोधकः अनुभावक। रत्याद्यनुभावके भ्रुभङ्गादिदेहचेष्टाविशेषे, मुखरागादौ च।

**भावानुगा** स्त्री० भावं पदार्थमाश्रयं वानुगच्छति गम-ड। छायायाम् अभिप्रायानुगन्तरि त्रि०। [मिश्रिते च

**भावित** त्रि० भू-णिच्। वासिते, प्राप्ते, शुद्धे चिन्तिते

**भाविनी** स्त्री० भाव हृदयचेष्टाभेदोऽस्त्यस्याः इनि। स्त्रीभेदे, स्त्रीमात्रे च। भू-णिनि। भविष्यत्कालवर्त्तिनि त्रि० स्त्रियां ङीप्।

**भावुक** न० भू-उकञ्। मङ्गले, तद्वति त्रि०। नाट्योक्तौ भगिनीपतौ पु०। भावनायुते त्रि० 'मुहुरहो रसिका भुवि भावुका' इति भागवतम्। [न ह्रस्व।

**भाष** वचने भ्वा०आत्म०द्विक०सेट्। भाषते अभाषिष्ट। घटि

**भाषा** स्त्री० भाष अ। वाक्ये, संस्कृतादिवाक्ये च। 'अष्टादशभाषावारविलासिनीभुजङ्ग' इति सा०प०। व्यवहारे प्रतिज्ञासूचकवाक्ये 'यदावेदयते राज्ञे तद्भाषेत्यभिधीयते' इति स्मृतिः। [वाक्यरूपे प्रथमेऽंशे।

**भाषापाद** पु० कर्म्म० चतुष्पाद्व्यवहारे प्रतिज्ञासूचके

**भाषित** न०भाष-भावे-क्त। कथने। कर्म्मणि-क्त। कथिते त्रि०। 'भाषितपुंस्का'दिति पाणिनिसूत्रम्।

**भाष्य** न० 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जनाः' इत्युक्त लक्षणे सूत्रव्याख्याग्रन्थभेदे । कथनीये त्रि० ।

**भास** दीप्तौ भ्वा०आत्म०अक०सेट् । भासते अभासिष्ट । चङि वा ह्रस्व । अबीभसत् अबभासत् ।

**भास** स्त्री० भास-सम्पदा० क्विप् । दीप्तौ, मयूखे इच्छायाञ्च ।

**भास** पु०भास-घञ् अच् वा । दीप्तौ, गोष्ठे, कुक्कुटे शकुन्ते च । 'यथार्थमददत् वस्तु भास काकोऽथवा भवेदिति स्मृतिः ।

**भासुर** त्रि० भास घुरच् । दीप्तिशीले, स्फटिके च । वीरे पु० कुष्ठौषधे न० । [(विद्याति)

**भासुरपुष्पी** स्त्री० भासुराणि पुष्पाण्यस्याः । वृश्चिकाली

**भास्कर** पु० भासं करोति भास्+कृ-ट च् कस्कादि० । सूर्य्ये, अग्नौ वीरे, अर्कवृक्षे सिद्धान्तशिरोमणिग्रन्थकर्त्तरि पण्डिते । स्वर्णे न०

**भास्करप्रिय** पु० ६त० । पद्मरागमणौ (चुनि) ।

**भास्वर** त्रि०भास वरच् । दीप्तियुक्ते, सूर्य्ये, दिने, अर्कवृक्षे च पु० । कुष्ठौषधे न० (कुड) । [वीरे च । दीप्तिमति त्रि० ।

**भास्वत्** पु० भास्+अस्त्यर्थे मतुप् मस्य व । सूर्य्ये, अर्कवृक्षे

**भिक्ष** लोभे लाभायोक्तौ अक० याचने द्विक० क्लेशे अक० भ्वा० आत्म० सेट् । भिक्षते अभिक्षिष्ट ।

**भिक्षा** स्त्री० भिक्ष-अ । याच्ञायाम् ।

**भिक्षाक** त्रि० भिक्ष-षाकन् । भिक्षाकारके । स्त्रियां ङीष् ।

**भिक्षाशिन्** त्रि० भिक्षालब्धमश्नाति अश-णिनि । भिक्षालब्धोपजीविनि ।

**भिक्षु** पु० भिक्ष-उ । सन्यासिनि चतुर्थाश्रमे ।

**भिक्षुक** पु० स्त्री० भिक्ष-उकञ् । भिक्षोपजीविनि ।

**भिण्ड** पु० स्त्री० भण-ड पृ० । कराङ्गुलितिरक्तवर्णपर्य्ये वस्तुनाकारबीजे क्षुपभेदे । स्त्रीत्वे टाप् ।

**भित्त** न० भिद-क्त नि० तस्य न न । खण्डे ।

**भित्ति** स्त्री० भिद-क्तिन् । गृहादेः कुड्ये (देयाल) । स्वार्थे कन् । तत्र, प्रदेशे च ।

**भिद** द्विधाकरणे, विशेषकरणे च रुधा०उभ० सक० अनिट् भिनत्ति भिन्ते अभिदत् अभैत्सीत् अभित्त । [न्दीत्

**भिद** अंशकरणे भ्वा०पर०सक० सेट् इदित् । भिन्दति अभि-

**भिदा** स्त्री०भिद-अङ् । विदारणे, द्वैधीकरणे, विशेषकरणे च ।

**भिदुर** पु० भिद कुरच् । वज्रे । प्लक्षवृक्षे । भिदिरमप्यत्र न० । हस्तवक्षे पु० ।

**भिन्दिपाल** पु० भिदि-विदारणे इन् भिन्दिं भेदनं पालयति पाल अच् । हस्तक्षेप्ये नालिकास्त्रे, हस्तप्रमाणेऽस्त्रे च ।

**भिन्न** त्रि० भिद-क्त । विदारिते, मिश्रिते, सङ्गते, अन्ये, प्रस्फुटिते च । [कर्कोट्याम् ।

**भिन्नगात्रिका** स्त्री०भिन्नं विदारितं गात्रमवयवो यस्याः ।

**भिन्नपरिकर्म्मन्** न० भिन्नस्य अंशसहितस्य परिकर्म्म संस्कारविशेष । अङ्कशास्त्रोक्ते भागस्य गुणभागादिसंस्कारे ।

**भिन्नभिन्नात्मन्** पु०भिन्नप्रकारः प्रकारे द्वित्वम् तादृश आत्मा यस्य । चणके (छोला) । [ङीप् । पाषाणभेदके वृक्षे ।

**भिन्नयोजनी** स्त्री० भिन्नं युज्यतेऽनया युज-करणे ल्युट्

**भिल** भेदने वा चु०उ० पक्षे तु०पर०सक० सेट् । भेलयति-ते भिलति अबीभिलत् त अभेलीत् । [येति स्मृतिः

**भिल्ल** पु०भिल-लक् । म्लेच्छजातिभेदे । (भिल) 'कैवर्त्तभेदभिल्ला

**भिल्लतरु** पु० भिल्लप्रिय तदुपजीव्यत्वात् तरु । लोध्रे ।

**भिल्ली** स्त्री० भिल लक् गौ० ङीष् । लोध्रे ।

**भिष** रोगप्रतीकारे कौ०पर०सक०सेट् । भेषति अभेषीत् ।

**भिषक्प्रिय** पु० ६त० । गुडूच्याम् ।

**भिषग्भद्रा** स्त्री० ६त० । भद्रदन्तिकायाम् ।

**भिषज्** पु भिषति चिकित्सते भिष-अजिक् । वैद्ये रोगप्रतीकारे च

**भिस्सटा** स्त्री०भिस्सामन्नं टीकते टीक-ड पृ० । दग्धान्ने ।पृ० भिस्सिटा भिस्सिटा भिस्सिदा भिस्सिका इत्यादयोऽप्यत्रैवार्थे

**भिस्सा** स्त्री० भिद्-क्विप् भो-क पृ०दस्य सः । अन्ने । [भाय

**भी** भये जु०पर०अक०अनिट् । बिभेति अभैषीत् बिभयाञ्चकार बि

**भी** भये अक० भरणे सक० क्र्यादि० वा प्वा० पर० अनिट् । भीनाति-भिनाति । अभैषीत् ।

**भी** स्त्री० भी-सम्प० क्विप् । भये ।

**भीति** स्त्री० भी-क्तिन् । भये, कम्पे च । क्त-भीत । भययुक्ते त्रि०

**भीम** त्रि० बिभेत्यस्मात् भी-मक् । भयहेतौ । भयानकरसे, महादेवे, भीमसेने, अम्लवेतसे च पु० । दुर्गायां स्त्री० 'भीमा देवीति विख्यातं तन्मे नाम भविष्यती'ति चण्डी ।

**भीमरथी** स्त्री० 'सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी । रात्रि भीमरथी नाम दुस्तरा रात्रौ ।

**भीमसेन** पु० युधिष्ठिरानुजे मध्यमपाण्डवे, कर्पूरभेदे च ।

**भीमैकादशी** स्त्री० भीमेनोपास्या एकादशी शाक० । माघशुक्लैकादश्याम् ।

**भीरु** त्रि० भी-क्रु । भयशीले । शतावर्य्यां, कण्टकार्य्यां, शतपदिकायां, छागायां योषिति च स्त्री०वा ऊङ् । भययुक्तायां योषिति । [भययुक्ते त्रि० ।

**भीरुक** पु० भी क्रुकन् । वनभेदे । व्याघ्रे । इक्षुभेदे च ।

**भीरुपत्री** स्त्री० भीरुर्व्व पत्राण्यस्याः । शतमूल्याम् ।

भीलु त्रि॰ भी-क्लु। भयशीले। क्लुकन्। तत्र। भल्लुके पु॰।
भीषण पु॰ भीषयते भी-णिच्-ल्यु भीषादेश॰। भयानकरसे, कुन्दुरुके, हिन्ताले, शल्लक्याञ्च। महादेवे-कपोते च पु॰। गाढे दारुणे च त्रि॰।
भीष्म पु॰ भी-मक् षुक् च। भयानकरसे। भयहेतौ त्रि॰। गङ्गागर्भजे शान्तनुसुते स्वनामख्याते कुरुवंश्ये क्षत्रिये पु॰।
भीष्मजननी स्त्री॰ ६त॰। गङ्गायाम्। भीष्मसूप्रभृतयोऽप्यत्र।
भीष्मपञ्चक न॰ भीष्मेणोपदिष्टं पञ्चकम्। कार्त्तिकशुक्लैकादश्यादिषु पञ्चसु तिथिषु, तत्कर्त्तव्ये व्रतभेदे च।
भीष्माष्टमी स्त्री॰ ६त॰। भीष्मस्य देहत्यागदिवसे माघशुक्लाष्टम्याम् यतस्तस्मिन् दिने सर्ववर्णैस्तस्य तर्पणं कार्य्यम्।
भुक्त त्रि॰ भुज-कर्म्मणि क्त। भक्षिते। भावे-क्त। भक्षणे न॰।
भुक्तसमुज्झित त्रि॰ पूर्वं भुक्तं पश्चात् समुज्झितं त्यक्तम्। भोजनोत्तरं त्यक्ते अन्नादौ।
भुक्ति स्त्री॰भुज-क्तिन्। भोजने भोगे, च'यागमो निष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो' इति स्मृतिः।
भुक्तिप्रद पु॰ भुक्तिं भोगं भोजनं वा प्रददाति स्वल्पायासभक्ष्यत्वात्। मुद्गे।
भुग्न त्रि॰ भुज-मोटने क्त। रोगादिना कुटिलीकृते। [भुग्न'
भुज मोटने तु॰ प॰ सक॰ अनिट्। भुजति अभौक्षीत्। क्त
भुज भक्षणे रुधा॰ पालने पर॰सक॰रुधा॰ अनिट्। भुङ्क्तेऽन्नम् अभौक्षीत्। भूमिं भुनक्ति पालयति। 'दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः भुक्त'।
भुज पुंस्त्री॰भुज्यतेऽनेन भुज-घञर्थे क। बाहौ, करे, त्रिकोणचतुष्कोणादिक्षेत्रस्यरेखाविशेषे लीलावत्यादौ प्रसिद्धे 'तथा यते तद्भुजकोटिघात' इति लीलावती।
भुजग पु॰ भुज-वक्रणे क भुजः कुटिलीभवन् सन् गच्छति गम-ड। सर्पे, अश्लेषानक्षत्रे च।
भुजगान्तक पु॰ ६त॰। गरुडे। भुजगनाशनादयोऽप्यत्र।
भुजगाशन पु॰ भुजगान् अश्नाति अश-ल्यु। गरुडे, भुजगभक्षकादयोऽप्यत्र। [अश्लेषानक्षत्रे च।
भुजङ्ग पु॰ भुजं सन् गच्छति गम-खच् डिच्च। सर्पे, जारे,
भुजङ्गप्रयात न॰। द्वादशाक्षरपादके छन्दोभेदे।
भुजङ्गम पु॰भुजं कुटिलीभवन् सन् गच्छति गम-खच् मुम्। सर्पे, अश्लेषानक्षत्रे च। सीसके न॰। ङीप्। रास्नायाम्।
भुजङ्गाक्षी स्त्री॰ भुजङ्गस्येवाक्षि पुष्पं यस्याः षच् समा॰
भुजङ्गाख्य पु॰ भुजङ्गतुल्या आख्या यस्य। नागकेशरे।
भुजशिरस् पु॰ ६त॰। स्कन्धदेशे।
भुजान्तर न॰ भुजयोरन्तरं मध्यम्। क्रोडे।
भुजिष्य पु॰भुज-किष्यन्। दासे, रोगे, स्वतन्त्रे, हस्तसूत्रे च। दास्याम्, वेश्यायाञ्च स्त्री॰। [ईशसंख्यायाञ्च।
भुवन न॰ भवत्यत्र भू-क्युन्। जगति, जने, आकाशे, चतु-
भुवनकोष पु॰भुवनस्य कोष इव। भूगोले ज्योतिषग्रन्थभेदे च
भुवर् अव्य॰ भू-अस्-वुन् किच्च। आकाशात्मके द्वितीये लोके।
भुवर्लोक पु॰ कर्म॰। भुरादिसप्तलोकमध्ये द्वितीयलोके।
भू प्राप्तौ चु॰ आ॰ सक॰ सेट्। भावयते अबीभवत।
भू प्राप्तौ भ्वा॰उ॰सक॰सेट्। भवति-ते अभूत् अभविष्ट।
भू शुद्धौ अक॰ चिन्तने मिश्रणे च सक॰ चुरा॰ उभ॰ सेट्। भावयति-ते अबीभवत् त।
भू सत्तायां भ्वा॰पर॰अक॰सेट्। भवति अभूत्। [यज्ञाग्नौ च
भू स्त्री॰ भू संप॰ क्विप्। पृथिव्याम्, एकसंख्यायां, स्थानमात्रे,
भूकन्द पु॰ भुवः कन्द इव। (भुलकुडि)। महाश्रावणिकावृक्षे
भूकदम्ब पु॰ भुवि कदम्ब इव। (कोकसिम) अलम्बुषवृक्षे।
भूकदम्बक पु॰ भुवि कदम्ब इव कायति कै-क। यवान्याम्।
भूकम्प पु॰ ६त॰। लोकानामनिष्टसूचके अद्भुतरूपे पृथिव्याः स्वयं चलने।
भूकुम्भी स्त्री॰ भुवि कुम्भीव। भूमिपाटल्यौ।
भूकुष्माण्डी स्त्री॰ भुवि कुष्माण्डीव। वदर्याम्।
भूकेश पु॰ भुवः पृथिव्याः केश इव। वटे, शैवाले च।
भूखर्ज्जूरी स्त्री॰ भुवि लग्ना खर्ज्जूरी शाक॰। क्षुद्रखर्ज्जूर्याम् भूमिखर्ज्जूर्यादयोऽप्यत्र।
भूगोल पु॰ भूगोल इव। गोलाकारे भूमण्डले तत्प्रमाणस्वरूपादिक ग्रन्थरभिधाने 'मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिका'मिति सूर्य्यसिद्धान्त॰।
भूच्छाया स्त्री॰ भुवश्छाया। सूर्य्यकिरणसम्पर्काभावात्। जायमाने राहुपदाभिधाने तमसि अन्धकारे।
भूजम्बू स्त्री॰भुवो जम्बूरिव स्वादुत्वात्। गोधूमे, विकङ्कतफले च (वइचि) ६त॰। क्षुद्रजम्ब्वाम्। भूमिजम्ब्वादयोऽप्यत्र स्त्री॰
भूत न॰ भू-क्त। न्याय्ये, उचिते, पृथिवीजलतेजोवायुगगनरूपेषु शब्दादिविशेषगुणवत्सु द्रव्येषु, जन्तुमात्रे, यथार्थे, वास्तविके, 'भूतमप्यनुपन्यस्तं हीयते व्यवहारत इति स्मृति' तस्तासुच त्याने च 'बलं निरस्य भूतेने'ति स्मृतिः। पिशाचादौ, कुमारे, योगीन्द्रे, कृष्णपक्षे प्राणिनि च पु॰। अतीते हृत्ते,सदृशे, प्राप्ते, सत्ये च त्रि॰। कृष्णचतुर्द्दश्यां स्त्री॰टाप्
भूतकेश पु॰ भूतानां केशइव। (भूतकेश) नामके तृणभेदे

स्त्रोत्समपि,माधवतल,शेफालिकायां च टाप्। नीलादिषु गौरादि ङीप्
भूतगन्धा स्त्री० भूत प्रभूत गन्धो यस्याः। मुरानामगन्धद्रव्ये
भूतघ्न पु०भूत हन्ति हन-टक्। भूर्जपत्रे तद्धारणे हि भावग्रह-
भूतादिनिवारणम्। भूतं प्राकृत गन्धं हन्ति ध्वंसं करोति
लशुने, उष्ट्रे च। भूतनाशके त्रि०। तुलस्यां स्त्री०ङीप्।
भूतचतुर्दशी स्त्री०भूतप्रिया चतुर्दशी तदुद्देशेन तस्यां दीप-
दानात्। आश्विनकृष्णपक्षचतुर्दश्यां दीपान्वितामावा-
स्यापूर्वतिथौ यमचतुर्दश्याम्।
भूतजटा स्त्री० भूतस्य जटेव। जटामांस्याम्।
भूतद्राविन् पु० भूतान् द्रावयत्यपसारयति द्रु णिच् णिनि।
रक्तकरवीरवृक्षे, भूताङ्कुशवृक्षे, शाखोटवृक्षे च।
भूतद्रुम पु० भूतइव द्रुमः। श्लेष्मातकवृक्षे। भूतवृक्षादयोऽप्यत्र
भूतधात्री स्त्री० भूतानि जन्तून् धारयति धा तृच् ङीप्।
पृथिव्याम्। [वटुकस्तोत्रम्। भूतेशभूतपत्यादयोऽप्यत्र
भूतनाथ पु०६त०। शिवे,वटुकभैरवे च। 'भैरवो भूतनाथश्चे'ति
भूतनाशन न० भूतान् नाशयति नश-णिच्-ल्यु। रुद्राक्षे।
सर्षपे, भल्लातके च पु०।
भूतपक्ष पु० भूतमिव पक्ष अन्धकारत्वात्। कृष्णपक्षे।
भूतपत्री स्त्री० भूतइव कृष्णं पत्रं यस्याः। कृष्णतुलस्याम्।
भूतपुष्प पु० भूतइव कृष्णं पुष्पं यस्य। श्योनाकवृक्षे।
भूतभावन पु० भूतानि पृथिव्यादीनि भावयति जनयति भू
णिच्-ल्यु, भूता सत्या यथार्था भावना यस्य वा। विष्णौ,
वटुकभैरवे च 'भूतात्मा भूतभावन' इति। तयो स्तोत्रे।
भूतयज्ञ पु० भूतान् प्राणिनो वायसादीन् उद्दिश्य यज्ञो
बलि। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेव
कर्मणि 'भूतेभ्यो बलिहरणं भूतयज्ञ' इति स्मृति।
भूतल न०भुवस्तलम्। पृथिव्याम्। ६त०। पाताले भूमेरधोभागे
भूतलिका स्त्री० भूतल पाताल मूलमेनास्त्यस्याः ठन्। पृक्का
याम् (पिडिङ्शाक) मङ्कुरगमूलत्वात्तस्यास्तथात्वम्।
भूतवास पु०६त०। (बयड़ा) बिभीतकवृक्षे। भूतावासादयोऽप्यत्र
भूतशुद्धि स्त्री०भूतानां देहारम्भकपृथिव्यादीनां शुद्धिर्भावना
विशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशति
तत्त्वानां भावनाविशेषेण संस्कारेण देवरूपतासम्पादने।
भूतसार पु० भूतइव कृष्ण सारोऽस्य। श्योनाकवृक्षे।
भूतहन्त्री स्त्री० भूतान् तद्भय हन्ति हन-तृच् ङीप्। वन्ध्या
कर्कोट्यां, श्वेतदूर्वायाञ्च तद्धारणे हि स्त्रीणां प्रजापति
रोधकभूतभयनाश।
भूतहर पु० भूतान् हरति अपसारयति हृ-अच्। गुग्गुलौ
भूतहारिन् पु० भूतान् हरति स्थानान्तरं नयति हृत णिनि।
देवदारुवृक्षे। [स्वनामख्याते वृक्षे
भूताङ्कुश पु० भूतानां पिशाचानामङ्कुशइवापसारकत्वात्।
भूतात्मन् पु०भूतानि पृथिव्यादीनि पञ्च द्रव्याणि आत्मा स्वरूपं
यस्य। देहे। भूतानि पञ्च द्रव्याणि भूताः प्राणिनश्च आत्मा
स्वरूपं यस्य। परब्रह्मणि, 'सर्वं खल्विदं ब्रह्म तज्जला-
नि'ति श्रुति। सर्वभूतात्मके हिरण्यगर्भे, विष्णौ, वटुक-
भैरवे च 'भूतात्मा भूतभावन' इति तयो स्तोत्रे।
भूतारि पु० ६त०। हिङ्गौ तद्गन्धेन हि भूतापसरणम्।
भूताली स्त्री० भूतानीव अलति पर्याप्नोति अल-अच् गौरा०
ङीष्। भूमिपाटल्यां, मुषल्याञ्च। [विभीतकवृक्षे च
भूतावास पु०भूतानां प्राणिनामावास अधिष्ठानत्वात्। विष्णौ,
भूति स्त्री० भू क्तिन्। भस्मनि, अणिमाद्यष्टविधैश्वर्ये, शिवाङ्ग
भस्मनि, भूत्यां, सम्पत्तौ, जात्यां, वृद्धिनामौषधे च।
भूतिक पु०भूत्या सम्पत्त्या कायति कै-क। भूनिम्बे, यमान्याञ्च
चन्दने, कट्फले कत्तृणे च न०। पृ०व दीर्घ। भूतीकोऽप्यत्र
भूतृण न०भुवः तृण गन्धवत्त्वात् (गन्धतृण) तृणभेदे। रोहि
षतृणे पु०। [कर्ण्याम् (उन्दुरकानि)
भूदरीभवा स्त्री० भूदर्यां भूमिबिले भवति भू-अच्। आखु-
भूदार पु० भुवं दृणाति खनति मुस्ताद्यर्थम् दृ-अण्। शूकरे
भूदेव पु० भुवि देव इव। विप्रे।
भूधर पु० भुवं धरति धृ-अच्। पर्वते। [लक्याम्
भूधात्री स्त्री०भुवि लग्ना धात्री आमलकी शाक०। भूम्याम-
भूनिम्ब पु० भुवि लग्न निम्ब शाक०। (चिराता) क्षुपभेदे।
भूनीप पु० भुवि लग्नो नीप शाक०। भूमिकदम्बे।
भूप पु० भुवं पाति पा-क। भूमिपाले भूमिपादयोऽप्यत्र।
भूपद पु०भुवि पदं मूलं यस्य। वृक्षमात्रे। मल्लिकायां स्त्री०ङीष्
भूपलाश पु० भुवि पलाशं यस्य। विशल्याकारके क्षुपभेदे
भूपाल पु० भुवं पालयति पाल अण्। भूपतौ।
भूपेष्ट पु० भूपस्येष्ट। राजादनीवृक्षे (पियासाल) तद्बीजस्य
चिरञ्जि इति ख्यातस्य राजप्रियत्वात्तथात्वम्।
भूभुज् पु०भुवं भुङ्क्ते भनक्ति पालयति वा भुज-क्विप्। भूपाले
भूभृत् पु० भुवं बिभर्त्ति धारयति, पालयति वा भृ क्विप्।
पर्वते, भूपाले च।
भूमन् पु० बहोर्भाव इमनिच् नि० बहोर्भूादेश। बहुत्वे।
भूमि(मी) स्त्री०भवन्त्यस्मिन् भूतानि भू-मिक् वा ङीप्। पृथि-
व्याम्, स्थानमात्रे, जिह्वायां,योगशास्त्रोक्ते योगिनां चित्त-
स्यावस्थाभेदे, एकसङ्ख्यायाञ्च।

**भूमिका** स्त्री० भूमिरिव कायति कै-क । रचनायां 'अन्य-रूपैर्यदन्यस्य प्रवेशस्तत् भूमिकेत्युक्ते नाट्ये-अभिनेयपात्रादि-वेशान्तरग्रहणे ग्रन्थे-वक्तव्यकथोद्घाते, कथायाञ्च 'नैया-यिकादिभिरात्मा प्रथमभूमिकायामवतारित इति सांख्य-प्रवचनभाष्यम् ।

**भूमिचम्पक** पु०भूमिलग्नः चम्पकः शाक०। (भूइँचांपा) वृक्षभेदे

**भूमिज** पु० भूमेर्जायते जन-ड । मङ्गलग्रहे, नरकासुरे, भूमिकदम्बे, मनुष्ये च । भूमिजातमात्रे त्रि०।

**भूमिजगुग्गुल** पु०कर्म०। व्याघ्रापुरजाते गुग्गुलौ ।

**भूमिपिशाच** पु० भूमौ पिशाच इव । तालवृक्षे ।

**भूमिमण्ड** पु० भूमिं मण्डयति मण्ड-अण् । (हापरमालि) लताभेदे । [माधवीलतायाम् ।

**भूमिमण्डपभूषणा** स्त्री० भूमिं मण्डपमिव भूषयति भूष-ल्यु ।

**भूमि(मी)रुह** पु० भूम्यां भूमौ वा रोहति रुह-क । वृक्षे । भूरुहादयोऽप्यत्र । [खिच्-ल्यु । भावे क्ते ।

**भूमिवर्द्धन** पु०भूमिं वर्द्धयति स्वदेहस्यपार्थिवांशोपचयेन, वृध-

**भूमिष्ठ** पु० भूमौ तिष्ठति स्था-क अलु० सत्वम् । भूतस्थे ।

**भूमिस्पृश्** पु० भूमिं स्पृशति स्पृश-क्विन् । वैश्ये, मनुष्ये, चौर-भेदे खञ्जे, अन्धे च । [त्तुमे

**भूमीन्द्र** पु० भूमौ इन्द्र इव । नृपे ।

**भूम्यामलकी** स्त्री० भूमिलग्ना आमलकी शाक०। स्वनामख्याते

**भूम्यामली** स्त्री० भूम्या सह आमलति सम्बध्नाति आ+मल अच् गौ०ङीष् । भूम्यामलक्याम् ।

**भूयस्** अव्य० भुवे भावाय यस्यति यस-भावे क्विप् । पुनरर्थे

**भूयस्** त्रि० अतिशयेन बहुः ईयसु नि० बहोर्भूरादेशः । बहुतरे । स्त्रियां ङीप् । [प्रचुरे च ।

**भूयिष्ठ** त्रि० अतिशयेन बहुः इष्ठन् नि० भूादेशः । बहुतरे,

**भूयुक्ता** स्त्री० भुवा युक्ता संबद्धा । भूमिखर्जूर्याम् ।

**भूरि** पु० भू-क्रिन् । विष्णौ, शिवे, इन्द्रे च । स्वर्णे न० प्रचुरे त्रि० । [गन्धद्रव्ये ।

**भूरिगन्धा** स्त्री० भूरि प्रचुरो गन्धो यस्याः । सुराना-

**भूरिगम** पु०भूरि भारयुक्तत्वेऽपि बहु गच्छति गम-अच् । गर्दभे

**भूरिदुग्धा** स्त्री०भूरीणि दुग्धानि निर्यासा यस्याः । वृश्चिकाल्यां

**भूरिपुष्पा** स्त्री० भूरीणि पुष्पाण्यस्याः । शतपुष्पायाम् ।

**भूरिफेना** स्त्री० भूरीणि फेनान्यस्याः । (चामकषा) सप्तलवृक्षे

**भूरिबला** स्त्री०भूरीणि बलानि यस्याः ब०। अतिबलायाम् ।

**भूरिमल्ली** स्त्री०भूरि बहु यथा स्यात् तथा मलति मल-अच् गौरा०ङीष् । अम्बष्ठायाम् ।

**भूरिमाय** पु० भूरयः मायाः यस्य । शृगाले ।

**भूरिशस्** अव्य० भूरि-शस् । बहुप्रकारार्थे ।

**भूरिश्रवस्** पु० चन्द्रवंश्ये सोमदत्तसुते नृपभेदे ।

**भूरुण्डी** स्त्री० भुवं रुण्डति आच्छादयति रुडि आवृतौ (माधववृत्तौ पठितः) अण् । (हातिशुंडा) वृक्षभेदे ।

**भूर्ज्ज** पु० ऊर्ज्ज-अच् ७त० । स्वनामख्याते वल्कप्रधाने वृक्षे । 'भूर्ज्जत्वचः स्पर्शवतीर्दधाना' इति कुमारः ।

**भूर्ज्जपत्र** पु० भुवि-ऊर्ज्जं पत्रं यस्य । स्वनामख्याते वृक्षे भूर्ज्जत्वचादयोऽप्यत्र । . [योग्यस्थाने लोके ।

**भूर्** पु० भू-रुक् । अन्तरीक्षलोकादधःस्थे चरणसंचार-

**भूलग्ना** स्त्री० भुवि लग्ना । शङ्खपुष्प्याम् । [र्व्यादयोऽप्यत्र।

**भूवदरी** स्त्री० भुवि लग्ना बदरी । क्षुद्रकोल्याम् । भूमिबद-

**भूष** मण्डने वा चु० उभ०पक्षे भ्वा०पर०सक०सेट् । भूषयति-ते भूषति अबुभूषत् त अभूषीत् ।

**भूषण** न० भूष्यतेऽनेन भूष-करणे ल्युट् । अलङ्कारे किरी-टादौ । भावे ल्युट् । भूषायाम् ।

**भूषा** स्त्री० भूष-अ । मण्डनक्रियायाम् ।

**भूषित** त्रि० भूष-क्त । अलङ्कृते ।

**भूष्णु** त्रि० भू-ग्स्नु । भवनशीले ।

**भूस्तृण** न० भुवस्तृणम् पु० सम् । भूतृणे ।

**भृ** भरणे भ्वा०उभ०सक०अनिट् । भरति-ते अभार्षीत् ।

**भृ** धारणे, पोषणे च जु० उभ०सक०अनिट् । बिभर्त्ति बिभृते अभार्षीत् अभृत । बिभराञ्चकार-बभार । अप् भरः । क्तिन्-मप् च । भृतिमः ।

**भ्रकुंस(श)** पु० भ्रुवा कुंसः(शः) इङ्गितज्ञापनं यस्य ष० भ्रुवः संप्रसारणम् । स्त्रीवेषधारिणि नटे ।

**भ्रुकुटि(टी)** स्त्री० भ्रुवः कुटिः भङ्गिः संप्रसारणं वा ङीप् । भ्रूभङ्गे । 'रचितभृकुटिबन्धं नन्दिना द्वारि दृष्टे' इति दृष्टविलासः

**भृगु** पु० भ्रस्ज-कु ह० । ऋषिभेदे शिवे,शुक्रग्रहे, पर्व्वतसानौ, जामदग्न्यौ, तट्रप्रदेशे च । भृगोर्गोत्रापत्यम् अण् बहुषु लुक् । भृगोर्वंश्ये ब०व० । [हिरण्यपतितो हि तेन रचा कृता

**भृगुपति** पु० भृगूणां भार्गववंश्यस्य पतिः । परशुरामे, तेषां

**भृगुसुत** पु० ६त० । परशुरामे, शुक्राचार्य्ये च ।

**भृङ्ग** पु० भृ-गन् कित् नुट् च । भ्रमरे कलिङ्गविहगे, भृङ्ग-राजे,जारे,भृङ्गारे, भृङ्गरोले च । धमनके, गुडत्वचि न०

**भृङ्गजा** स्त्री०भृङ्ग इव जायते जन ड । भार्ग्याम् । अगुरुचन्दने न०

**भृङ्गपर्णी** स्त्री० भृङ्गस्य लग्नं पर्णं यस्याः ङीप् । सूक्ष्मै-लायाम् । स्वार्थे कन् । अत्रैव ।

भृङ्गप्रिया स्त्री० इत०। माधवीलतायाः प्रचुरमधुमत्त्वात् तत्-
प्रियत्वम्। [नलोप। भृङ्गराजे (केशुरिया)।
भृङ्गरज पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज-अच् इ०
भृङ्गरजस् पु० भृङ्गान् रजयति अन्तर्भूतण्यर्थे रन्ज-असुन्
नलोप। भृङ्गराजे। [(केशुरिया)। क्षुपभेदे।
भृङ्गराज पु० भृङ्गान् रजयति रन्ज-णिच-कनिन् नि०। इत०।
भृङ्गरिट(टि) पु० भृङ्ग इव रटति अच्, इन वा इ०अतरत्वम्।
शिवपार्श्वचरभेदे। [भेदे
भृङ्गरोल पु० भृङ्ग इव रौति रु लच्। (भेमरुल) ख्याते कीट
भृङ्गवल्लभ पु० इत०। धाराकदम्बे, भूमिकदम्बे च। भृङ्ग इव
वल्लभः। भूमिजम्ब्वाम् स्त्री०। [यूथिकायाम् (युइ)
भृङ्गानन्दा स्त्री० भृङ्गान् आनन्दयति आ+नन्द+णिच्-अच्।
भृङ्गाभीष्ट पु० अभि+इष क्त इत०। आम्रवृक्षे।
भृङ्गार पु० बिभर्त्ति जलं भृ-आरक् नि०। स्वर्णमयजलपात्रे,
जलपात्रभेदे च (झारी)। भृङ्ग इव ऋच्छति ऋ-अच्।
भृङ्गराजे। लवङ्गे, सुवर्णे च न०। झिल्लीनामकीटे स्त्री०
गौरा०ङीष्। स्वार्थे कन्। तत्रैव।
भृङ्गि पु०भृ-गिक् नुट् च। शिवपार्श्वचरभेदे।
भृङ्गिन् पु० भृङ्ग अस्त्यर्थे इनि। शिवपार्श्वचरभेदे वटवृक्षे च।
भृङ्गी स्त्री० भृ-गन् कित् नुट् च गौरा०ङीष्। अतिविषायाम्
भृङ्गीफल पु० भृङ्ग्या अतिविषाया इव फलमस्य। आम्रातके
भृङ्गेष्टा स्त्री० इत०। घृतकुमार्य्यां,भार्ग्यां, तरुण्यां,काकजम्ब्वाञ्च
भृज भर्ज्जने भ्वा० आत्म० सक० सेट्। भर्ज्जते अभर्ज्जिष्ट।
निष्ठाया नेट् भृक्त। [(भाजनाखोला) भर्ज्जनपात्रभेदे
भृज्जन पु० भृज्ज्यतेऽनेन भ्रस्ज-ल्युट् इ० संप्रसारणम्।
भृतक त्रि० भृ-क्त स्वार्थे कन्। वेतनेन कर्मकरे, 'भृतकाध्या-
पको यश्चे'ति मनुः। [मूल्ये च।
भृति स्त्री० भृ-क्तिन्। भरणे, पोषणे च करणे क्तिन्। वेतने,
भृतिभुज् त्रि० भृतिं वेतनं भुङ्क्ते भुज-क्विप्। वेतनोपजी-
विनि कर्मकरे।
भृत्य पु०भृ-क्यप् तुक् च। दासे। भरणीये त्रि०। भावे क्यप्।
भरणे स्त्री०टाप्। 'कुमारभृत्याकुशलैरिति रघुः'।
भृ(भ्र)मि पु० भ्रम-इन् इ० वा संप्रसारणम्। (घूर्णी) वायुभेदे,
भ्रमणे च। 'क्षिप्त चक्रभ्रमिकारिता गुणः' इति नैषधम्
भृश अध पतने दि०पर०अक० सेट्। भृश्यति। अभृशत् अभ-
र्शीत्। क्त्वा वेट्।
भृश न० भृश क। अतिशये। तद्वति त्रि०।
भृष्ट त्रि० भ्रस्ज-क्त। जलोपसेकं विना पात्रादाविन्धनं [illegible] पक्वे

भॄ भर्ज्जने भर्त्सने भरणे च क्र्यादि०प्वा०पर०सक०सेट्। भृणाति
अभारीत्। [मण्डूकपर्ण्यां स्त्री० ङीप्।
भेक पु० भी-कन् कस्य नेत्त्वम्। (व्याङ) जन्तुभेदे, मेघे च।
भेकपर्णी स्त्री० भेकस्य पर्णमस्याः ङीप्। मण्डूकपर्ण्याम्
भेड पु० भी-ड तस्य नेत्त्वम्। मेषे, (भेड़ा)
भेद पु० भिद-घञ्। पृथक्करणे अन्यतो विश्लेषे, राज्ञां विपक्ष
शासनार्थं तत्पक्षीयामात्यादिभेदने, न्यायमतोक्ते अन्योन्या
भावे च यथा घटात् पटस्य भेद (तादात्म्येनाभावः)
भेदक त्रि० भिद-ण्वुल्। रेचके, विदारके,भेदकारके, विशेषणे च
भेदन त्रि० भेदयति भिद-णिच् ल्यु। विरेचने, विशेषणे च
हिङ्गौ अम्लवेतसे पु० न०। भिद-भावे ल्युट्। विदारणे
भेदित त्रि०भिद-णिच्-क्त। विदारिते,भिन्ने च। [यदि'त्यमरः'
भेद्य त्रि०भिद-ण्यत्। विदार्ये विशेष्ये च। 'त्रिष्वेषा भेद्यगामि
भेरि(री) स्त्री० भी-क्रि वृद्धया० नि० वा ङीप्। वृहड्ढक्कायाम्
पटहे 'रथः प्रगल्भाहतभेरिसम्भव' इति कुमारः इत्यु-
क्तलदस्त 'तस्य प्रस्थाय भेर्य्य'श्चेति गीता।
भेल पु० भी-रन् रस्य ल। नद्यादितारणार्थे प्लवे (भेला)
ख्याते, मदार्थे। स्वार्थे कन् तत्रैव। [चिडि न ह्रस्वः
भेष भये भ्वा०उभ०अक०सेट् भेषति ते अभेषीत् अभेषिष्ट।
भेषज न० भेष-घञ् भेषं रोगभयं जयति जि-ड। औषधे।
भेषजाङ्ग न० इत०। औषधस्य अनुपेये वस्तुनि।
भैक्ष न०भिक्षैव तत्समूहो वा अण्। भिक्षायां, भिक्षासमूहे च
भैक्षचर्य्या स्त्री० चर-भावे क्यप् इत०। भिक्षाक्रियाकरणे।
भैक्ष्य न० भिक्षाणां समूहः ष्यञ्। भिक्षासमूहे।
भैमी स्त्री० भीमेनोपासिता तस्येदं वा अयण् ङीप्। माघशुक्ल-
कादश्याम् भीमराजस्य पुत्र्यां दमयन्त्याञ्च। 'विहाय
भैमीमपदर्पया कये'ति नैषधम्।
भैरव न०भीरोरिदम् अण्। भये, तद्वति त्रि०। नाट्यादिप्रसिद्धे
भयानके रसे। भयसाधने त्रि०स्त्रियां टीप्। शङ्करे,तदव-
तारभेदे रागभेदे, नदभेदे च पु०। शिवपत्न्यां स्त्री०ङीप्
भैषज्य न० भेषजमेव भिषजः कर्म वा ष्यञ्। औषधे।
भो अव्य० भा डो। सम्बोधने।
भोग पु० भुज-कर्मादौ घञ्। सुखे, सुखदुःखाद्यनुभवे, पण्य
स्त्रीणां भाटकादिरूपे वेतने,सर्पस्य फणायां, तत्काये, धने,
पालने,आहारे च। फणं आप्नुव इत्यर्थे। आधारे घञ्।
देहे भाने च। ज्योतिषोक्ते ग्रहाणां राश्यादिस्थितौ, [illegible]-
[illegible] परिशिष्टे [illegible]
[illegible] भोगं [illegible] [illegible] ।

**भोगदेह** पु० भुज्यते सुखदुःखादिकमत्र भुज आधारे घञ् कर्म० । पुण्यपापफलभोगार्थे देहे, प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते' इति स्मृतिः ।

**भोगभूमि** स्त्री० भोगस्यैव भूमिः स्थानं । भारतवर्षातिरिक्ते वर्षे तत्र हि भोगएव न कर्म इति शास्त्रे स्थितम् ।

**भोगवती** स्त्री० भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य वः । पातालगङ्गायाम् 'भोगवती च पाताले' इति पुराणम्

**भोगिन्** स्त्री० भोग+अस्त्यर्थे इनि । सर्पे, नृपे, ग्रामाध्यक्षे, नापिते च । भोगयुक्ते त्रि । भोगप्रदादय सर्पे । भोगयुक्ते त्रि०

**भोगिवल्लभ** पु० ६त० । चन्दने ।

**भोगीन्द्र** पु० भोगिनामिन्द्रः स्वामित्वात् भोगी इन्द्र इव वा, अनन्तदेवे वासुकौ च भोगीशादयोऽप्यत्र ।

**भोग्य** न० भुज ण्यत् कुत्वम् । धने, धान्ये च । भोगार्हे त्रि० । भोगार्हस्त्रियां, वेश्यायाञ्च स्त्री० ।

**भोज** पु० भुज अच् । स्वनामख्याते देशभेदे धारापुरस्य नृपभेदे 'धन्यः श्रीभोजराजस्त्रिभुवनविजयी'त्युद्भटः ।

**भोजकट** पु० भोजाख्ये देशे ।

**भोजन** न० भुज-ल्युट् । कठिनद्रव्यस्य गलविलाधःसंयोजने ।

**भोज्य** त्रि० भुज-ण्यत् भक्ष्यार्थत्वान्न कुत्वम् । भक्षणीयद्रव्यमात्रे

**भोटाङ्ग** पु० (भोटान) देशभेदे ।

**भोस्** अव्य० भा-डोसि । सम्बोधने प्रश्ने विषादे च ।

**भौतिक** त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठक् । भूताधिकारेण जाते उपद्रवे व्याध्यादौ ।

**भौम** पु० भूमेरपत्यं तस्या इदं वा अण् । नरकासुरे 'त्वयि भौम गते जेतुमिति माघः । मङ्गलग्रहे च । भूमिभवे त्रि० ।

**भौमरत्न** न० भौमप्रियं रत्नं शाक० । प्रवाले ।

**भौमिक** त्रि० भूमौ अधिकृत ठक् । भूम्यधिकारिणि ।

**भौरिक** त्रि० भुरिणि स्वर्णे अधिकृत ठञ् । स्वर्णाध्यक्षे ।

**भ्यस** भये भ्वा०आ०अक०सेट् । भ्यसते अभ्यसिष्ट ।

**भ्रण** शब्दे भ्वा०पर०सक०सेट् । भ्रणति अभ्राणीत् अभ्रणीत्

**भ्रकु(शु)स** पु० भ्रुवा कु(शु)सा यस्य पृ०नि० । भ्रकुंसशब्दार्थे ।

**भ्रकुटि(टी)** स्त्री० भ्रुवः कुटिभङ्गः पृ० वा ङीप् । भ्रूभङ्गे ।

**भ्रम** चलने भ्वा० पर०सक०सेट् । भ्रमति अभ्रमत् अभ्रमीत्

**भ्रम** चलने दिवा०पर०सक०सेट् शमा० । भ्राम्यति अभ्रमीत्

**भ्रम** चलने, भ्वा०पर०अक०सेट् । भ्रमति अभ्रमीत् फणा० भ्रेमतुः बभ्रमतुः (चङि न ह्रस्वः । ज्वला० भ्रमः भ्रामः ।

**भ्रम** पु० भ्रम घञ् । मिथ्याज्ञाने (अन्यथाभूतस्य वस्तुनोऽन्यथारूपेण ज्ञाने) जलनिर्गमस्थाने, कुन्दे, (कुंद) भ्रमणे च ।

**भ्रमर** पु० भ्रम करन् । मधुकरे ।

**भ्रमरक** पु० भ्रमर इव कायति कै क । ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले । स्वार्थे कन् । भ्रमरे, भृङ्गे, बालमूषिकायाञ्च

**भ्रमरप्रिय** पु० ६त० । धाराकदम्बे ।

**भ्रमरातिथि** पु० भ्रमरः अतिथिर्यस्य । चम्पके ।

**भ्रमरानन्द** पु० भ्रमरान् आनन्दयति आ+नन्द-णिच्-अच् । बकुले । [ललाटस्थिते भ्रमरतुल्ये चूर्णकुन्तले ।

**भ्रमरालक** पु० भ्रमर इव अलति पर्याप्नोति अल-ण्वुल् ।

**भ्रमरी** स्त्री० भ्रम-करन् गौ०ङीष् । जतुकायां भ्रमरभार्यायाञ्च

**भ्रमरेष्ट** पु० ६त० । श्योनाकवृक्षे । भार्ग्यां भूमिजम्ब्वाञ्च स्त्री०

**भ्रमरोत्सवा** स्त्री० भ्रमराणामुत्सवो मोदोऽत्र । माधवीलतायाम्

**भ्रंश** अधःपतने दि०पर०सक०सेट् । भ्रश्यति अभ्रशीत् अभ्रंशीत् । क्त्वा वेट् ।

**भ्रष्ट** त्रि० भ्रंश क्त । च्युते अधःपतिते । [विभ्रज्ज

**भ्रस्ज** पाके तु०उ०सक०अनिट् । भृज्जति अभ्राक्षीत् । बभर्ज-

**भ्राज** दीप्तौ भ्वा०आत्म०फणा०अक०सेट् । भ्राजते अभ्राजिष्ट भ्रेजे बभ्राजे । चङि वा ह्रस्वः । अणु भ्राजणुः ।

**भ्राजिष्णु** त्रि० भ्राज इष्णुच् । दीप्तिशीले ।

**भ्रातृ** पु० भ्राज तृच् पृ० । एकपितृजाते (भाइ) इति ख्याते स्वसा सहोक्तौ । भ्रातृभगिन्यौ द्वि०व० ।

**भ्रातृज** पु० भ्रातुर्जायते जन ड । भ्रातुष्पुत्रे । तत्कन्यायां स्त्री०

**भ्रातृव्य** पु० भ्रातुः पुत्रः भ्रातृ+व्यत् । भ्रातुष्पुत्रे, शत्रौ च

**भ्रातृश्वशुर** पु० भ्रातापि पत्युर्ज्येष्ठभ्राता पि श्वशुरस्थानीयत्वात् पितृतुल्यत्वात् । (भासुर) भर्त्तुर्ज्येष्ठभ्रातरि 'भर्त्तुः श्वशुरता ज्येष्ठे' इति भारतान्तरम् । [त्रि०

**भ्रात्रीय** पु० भ्रातुरपत्यमिदं वा छ । भ्रातुष्पुत्रे भ्रातृसम्बन्धिनि

**भ्रान्त** न० भ्रम भावे क्त । भ्रमणे 'जनस्थाने भ्रान्तमि'ति नाटकम् । कर्त्तरि क्त मिथ्याज्ञानयुक्ते, भ्रमणयुक्ते च त्रि० । धुस्तूरे पु० ।

**भ्रान्ति** स्त्री० भ्रम क्तिन् । भ्रमणे, अयथार्थज्ञाने च ।

**भ्रान्तिमत्** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे ।

**भ्रामक** पु० भ्रमयति भ्रम ण्वुल् । शृगाले, धूर्त्ते, सूर्यावर्त्ते मणौ, अयस्कान्ते प्रस्तरे च ।

**भ्रामर** न० भ्रमरेण सम्भृत सम्पादितम् अस्येदं वा अण् मधुनि । भ्रमरसम्बन्धिनि त्रि० अयस्कान्ते पु० । 'भ्रामरं रूपं ततास्थाय षट्पद मिद्धपक्रम्य 'भ्रामरीति च मां लोका' इति चण्डीमाहात्म्योक्ते चण्डीमूर्त्तिभेदे ।

**भ्राश** भासे भ्वा०पर०फणा०अक०सेट् । भ्राशति भ्राश्यति अभ्रा-

शिष्ट । भ्रेशे बभ्रासे । चङि न ह्रस्वः । अबु भ्राशयुः ।

**भ्राष्ट** न० भ्रष्टमेदं तत्पचनसाधनत्वात् (भाजनाखोला) भर्जन पात्रभेदे । भ्रष्टरिदम् अण् । भ्राष्ट्रमित्यप्यत्र ।

**भ्रास** दीप्तौ भ्राशवत् सर्व्वम् ।

**भ्री** भये अक० भरणे सक० क्र्या० वा प० पर० अनिट् । भ्रीणाति भिणाति अभैषीत् । [अभ्रुडीत्

**भ्रुड** संवरणे सक० संघाते अक० तु० कु० पर० सेट् । भ्रुडति

**भ्रु(भ्रू)कुंस** पु० भ्रुव० कुंसा यस्य ष० वा ह्रस्व । भ्रकुंसवत् ।

**भ्रु(भ्रू)कुटि** ६त०। ष० वा ह्रस्वः । भ्रकुटिवत् सर्व्वम् ।

**भ्रू** स्त्री० भ्रम-डू । नेत्रयोरूर्द्ध्वस्थायां रोमराजौ ।

**भ्रूक्षेप** पु० ६त० । भ्रूभङ्गे सङ्केतज्ञापनाय भ्रुवोस्तिर्य्यक्चालने 'भ्रूक्षेपमात्रानुमितप्रवेशामि'ति कुमार' । [अबुभ्रुणत ।

**भ्रूण** आशायां विशङ्कायाञ्च चु० आत्म० सक० सेट् । भ्रूणयते

**भ्रूण** पु० भ्रूण-घञ् । स्त्रीणां गर्भे, बालके च ।

**भ्रूणघ्न** त्रि० भ्रूणं गर्भं हन्ति हन-क । भ्रूणहत्याकारके । क्विप् भ्रूणहाप्यत्र । [इत्येवमुखस्य तस्ये'ति कुमार'

**भ्रूभङ्ग** पु० ६त० । क्रोधादिज्ञापनार्थं भ्रुवस्तिर्य्यक्चालने 'भ्रूभङ्ग

**भ्रेज** भासि भ्वा० आत्म० अक० सेट् । भ्रेजते अभ्रेजिष्ट । चङि न ह्रस्व' ।

**भ्रे(भ्ले)ष** चलने चलने च अक० भ्वा० उभ० सेट् । भ्रे(भ्ले)षति ते अभ्रे(भ्ले)षीत् अभ्रे(भ्ले)षिष्ट । चङि न ह्रस्व० ।

**भ्रेष** पु० भ्रेष-घञ् । उचितस्थानात् पतने ।

**भ्लक्ष** भक्षणे भ्वा० उभ० सक० सेट् । भ्लक्षति ते । अभ्लक्षीत् अभ्लक्षिष्ट । दुर्गमते भ्लक्षधातुरयम् ।

**भ्लाश** दीप्तौ वा दि० पक्षे भ्वा० आ० अक० सेट् फणा० । भ्लाश्यते भ्लाशते अभ्लाशिष्ट भ्लेशे बभ्लाशे । (अबु) भ्लाशयुः । बोपदेवमते भ्लाषधातुरयम् ।

## म

**म** पु० मा-क । चन्द्रे, शिवे, ब्रह्मणि, यमे, समये, मधुसूदने च शिवे हलन्तमकारोपि 'मकारस्तु महेश्वर' इति मपवान्तर्गतमकारार्थोक्तिः ।

**मक** भूषे गतौ च भ्वा० आ० सक० सेट् इदित् । मङ्कते अमङ्किष्ट

**मकर** पु० मनुष्यं किरति हिनस्ति कॄ-अच् ष० । जलजन्तुभेदे । मकराकारत्वात् मेषादितो दशमे राशौ च । मकि-घञ् ष० मं राति रा-क । निधिभेदे ।

**मकरकुण्डल** पु० मकराकृति कुण्डलं कर्णभूषणम् । मकराकृतौ कर्णभूषणे ।

**मकरकेतन** पु० मकरः मकरचिह्नितः केतनो ध्वजो यस्य । कन्दर्पे मकरकेतुप्रभृतयोऽप्यत्र ।

**मकरन्द** पु० मकरमपि द्यति कामजनकत्वात् दो-अवखण्डने क ष० मुम् । पुष्पमधौ, कुन्दवृक्षे च । किञ्जल्के न० ।

**मकरन्दवती** स्त्री० मकरन्द+बाहुल्ये मतुप् मस्य व' ङीप् । पाटलायाम् । मधुविशिष्टे त्रि० । [फरङ्गभेदे ।

**मकराकार** पु० मकरस्येवाकार० फलस्य यस्य । (काटाकरमचा)

**मकरालय** पु० ६त० । समुद्रे । मकरावासादयोऽप्यत्र ।

**मकुट** न० मकि-भूषणे उट ष० । शिरोभूषणे मुकुटे ।

**मकुर** पु० मकि-उरच् ष० । दर्पणे, बकुलवृक्षे, कुलालदण्डे, कलिकाद्याञ्च ।

**मकुल** पु० न० मकि-उलच् ष० । मुकुले, बकुलवृक्षे च ।

**मकुष्टक** पु० मकि-भूषायां उ-ष० मकुं भूषां स्तकति प्रतिहन्ति स्तक-अच् सुषामा० षत्वम् । वनमुद्गे (मुगानि) ।

**मकुष्ठ** पु० कुत्सितं तिष्ठति स्था-क अम्बष्ठा० षत्वम् मीयते मा-ड कर्म्म० । व्रीहिभेदे, मन्दगामिनि त्रि० । स्वार्थे कन् । वनमुद्गे ।

**मकूलक** पु० मकि-ऊलच् ष० । दन्तीवृक्षे, मुकुले च ।

**मक्क** गतौ भ्वा० आ० सक० सेट् । मक्कते अमक्किष्ट ।

**मक्कुल** न० मक्क-उलच् । शिलाजतुनि ।

**मक्ष** रोषे संघाते च भ्वा० पर० अक० सेट् । मक्षति अमक्षीत् ।

**मक्षवीर्य्य** पु० मक्षं संहतं वीर्य्यं यस्मात् ५ब० । प्रियालवृक्षे ।

**मक्षि(क्षी)का** स्त्री० मश-कुन् टाप् अतइत्वम् ष० वा दीर्घ । (माछि) कीटभेदे । [सिक्थकाधारे पदार्थे (मौचाक) ।

**मक्षिकासन** पु० ६त० मक्ष-सिकन् तया आस्यतेऽत्र ल्युट् ।

**मख** सर्पणे भ्वा० पर० सक० सेट् । मखति अमाखीत् अमखीत् ।

**मख** सर्पणे भ्वा० पर० सक० सेट् इदित् । मङ्खति अमङ्खीत् ।

**मख** पु० मख-घ । यज्ञे । [जलजाते मूलजे फलभेदे ।

**मखान्न** न० मखकाले भोज्यमन्नं मुख्यत्वात् । (माखना)

**मग** सर्पणे भ्वा० पर० सक० सेट् इदित् । मङ्गति अमङ्गीत् ।

**मगध** पु० मङ्ग्यते अधोगम्यतेऽनेन मगि-अच् ष० मगं दोषं पापं वा दधाति धा-क । देशभेदे तद्देशस्थे जने ब० व० ।

**मगधोद्भवा** स्त्री० मगधदेशे बाहुल्येनोद्भवति अच् । पिप्पल्याम् तद्देशप्रचुरभवत्वात्तथात्वम् ।

**मघ** कैतवे, द्यूतक्रीडादौ अक० गतौ निन्दायां आरम्भे च सक० भ्वा० आ० सेट् इदित् । मङ्घते अमङ्घिष्ट ।

**मघ** भूषणे भ्वा० पर० सक० सेट् इदित् । मङ्घति अमङ्घीत् ।

**मघवत्** पु० मह-बजर्थे क ह्रस्य घ मघं पूजा अस्त्यर्थे मतुप्

मस्य वः । इन्द्रे मघवन्तौ मघवतः । तत्पत्न्यां ङीप् मघवती । [तत्पत्न्यां ङीप् मघोनी ।

**मघवन्** पु० मह-कनिन् नि०। इन्द्रे मघवा मघवानौ । मघोनः।

**मघा** स्त्री० मह-घ हस्य घत्वम् । अश्विन्यवधिके दशमे नक्षत्रे तस्याश्च पञ्चताराात्मकत्वात् बहुत्वमपि 'पितरः स्पृहयन्त्यन्नमष्टकासु मघासु चेति स्मृतिः । मघां मूलञ्च वर्ज्जयेदिति मघायां पिण्डदानञ्चेति स्मृतिस्तु समुदायस्यैकत्वाभिप्रायेण ।

**मघात्रयोदशी** स्त्री० मघानक्षत्रेण युक्ता त्रयोदशी । भाद्रकृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात् 'प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशी'मिति स्मृतिः ।

**मघी** पु० मघानक्षत्रे भवः अण् वृद्धौ वृ० ह्रस्वः ङीप्। मघानक्षत्रस्य रविभुज्यमानयुक्ते काले सौरभाद्रमासे जायमाने (आउस) धान्ये ।

**मङ्कुर** पु० मकि-उरच् । दर्पणे ।

**मङ्क्षु** अव्य० मस्ज-उन् । शैघ्र्ये, सत्यार्थे च । वृ०स्वस्य चत्वमपि

**मङ्गल** पु० मगि-अलच् । भूमिसुते, ग्रहभेदे प्रशस्ते अभीष्टार्थसिद्धौ च । तद्वति त्रि० । दुर्गायां, हरिद्रायां, दूर्वायां, पतिव्रतायाञ्च स्त्री० । [दुर्गाभेदे ।

**मङ्गलचण्डिका** स्त्री० मङ्गलवारे पूज्यायां चण्डिकायां

**मङ्गलच्छाय** पु० मङ्गला प्रशस्ता छाया यस्य । वटवृक्षे ।

**मङ्गलपाठक** पु० मङ्गलार्थं स्तुतीः पठति पठ-ण्वुल् । स्तुतिपाठके 'व्याहृयामङ्गलपाठकः शैनूपाघसदेति वेणीसंहारः ।

**मङ्गलप्रदा** स्त्री० मङ्गलं प्रददाति प्र+दा-क । हरिद्रायाम् ।

**मङ्गल्य** न० मङ्गलाय हितं यत् । चन्दने, मङ्गलागुरुणि, स्वर्णे, सिन्दूरे, दधिनि च । रुचिरे मङ्गलकरे च त्रि० 'सर्व्वमङ्गलमङ्गल्ये' इति चण्डी । अश्वत्थे, विल्वे, जीरके, मसूरके, नारिकेले, कपित्थे, रीठाकरञ्जे, त्रायमाणौषधे च पु०

**मङ्गल्यक** पु० मङ्गलग्रहस्य प्रियः तद्दोषनिवारणार्थं दीयमानत्वेन शास्त्रविधानात् । मसूरे ।

**मङ्गल्यकुसुमा** स्त्री० मङ्गल्यं कुसुमं यस्याः । शतपुष्प्याम् ।

**मङ्गल्या** स्त्री० मङ्गलाय हिता यत् । जीवन्त्यां, मल्लिकागन्धगुणागुरुणि, रोचनायाम्, अधःपुष्प्याम्, शम्यां, शुक्लवचायां, प्रियङ्गौ, मापपर्ण्यां, शतपुष्प्याम्, ऋद्धिनामौषधौ, हरिद्रायां, दूर्वायां, दुर्गायाञ्च स्त्री० । [अमज्चिष्ट ।

**मच** दम्भे शाठ्ये च अक० भ्वा०आ० सेट् इदित् । मचते

**मञ्च** उच्छ्रायकरणे, धारणे, पूजायां च सक० दीप्तौ अक० भ्वा० आत्म० सेट् इदित् । मञ्चते अमञ्चिष्ट ।

**मचर्चिका** स्त्री० चर्च-धात्वर्थनिर्द्देशे ण्वुल् मस्य शम्भोरिव चर्चिका ध्यानम् । प्रशस्ते । अव्युत्पन्नोऽयमित्येके ।

**मज्जकृत्** न० मज्जानं करोति कृ-क्विप् । देहस्थे अस्थिरूपे कोषे अन्नादिषु भुक्तेषु रसादिपरिपाकेन क्रमेण शोणितमांसत्वगस्थिमज्जशुक्राणामुत्पत्तेः अस्थ्नः मज्जाकृत्त्वम्

**मज्जन्** पु० मस्ज-कनिन् । अस्थिजाते अस्थिमध्यस्थे स्नेहाकारे पदार्थे, वृक्षादेः सारांशे च ।

**मज्जन** न० मस्ज-ल्युट् । स्नाने ।

**मज्जसमुद्भव** न० मज्ज्ञः समुद्भवति सम्+उद्+भू-अच् ५त०। शुक्रे तस्य मज्जजातत्वम् मज्जकृच्छब्दे द्रष्टव्यम् ।

**मज्जा** स्त्री० मस्ज-अच् टाप्। अस्थिसारे वृक्षादेः सारांशे च

**मज्जाज** न० मज्जातो जायते जन-ड । भूमिजे गुग्गुलौ ।

**मज्जारस** पु० मज्जायाः रसः परिपाकः । शुक्रे तस्य मज्जासम्भवत्वं मज्जकृच्छब्दे उक्तम् ।

**मञ्च** पु० मचि-उच्छ्राये घञ् । खट्वायाम् (मांचा) वंशनिर्म्मिते उच्चासने, उच्चमण्डपभेदे 'मञ्चस्थं रघुनन्दनमि'ति पुराणम् । स्वार्थे कन् । 'तत्रैव दृष्टोऽस्य पतिरेष मञ्चकगतः' इति सा०द०।

**मञ्जर** पु० मनुज-अरच् । तिलकवृक्षे, मुक्तायाञ्च ।

**मञ्जरि(री)** स्त्री० मञ्जु ऋच्छति ऋ-इन् शक० पर०वा ङीप् । अभिनवोद्गतायां सुकुमारायां पल्लवाङ्कुररूपायां वल्लर्याम् ङीबन्तस्तु, तत्र, मुक्तायां, तिलकलतायां, तुलस्याञ्च ।

**मञ्जरीनम्र** पु० मञ्जर्य्यैव तदवस्थायामपि नम्रः । वेतसे ।

**मञ्जि(ञ्जी)** स्त्री० मनुज-इन् वा ङीप् । मञ्जर्य्याम् ।

**मञ्जिफला** स्त्री० मञ्जिः मञ्जरी फले यस्याः । कदल्याम्

**मञ्जिष्ठा** स्त्री० अतिशयेन मञ्जिमती इष्ठन्। स्वनामख्यातायां लतायाम् ।

**मञ्जीर** न० मनुज-ध्वनौ ईरन् । नूपुरे, 'मञ्जुमणिमञ्जीरे कलगम्भीरे' इति सा०द०। दधिमन्थनदण्डबन्धस्तम्भे च

**मञ्जु** त्रि० मनुज-उन् । मनोहरे ।

**मञ्जुघोष** पु० बन्धोक्ते उपास्यदेवभेदे ।

**मञ्जुल** त्रि० मनुज-उलच् । मनोहरे, निकुञ्जे गैरवे च न०।

**मञ्जूषा** स्त्री० मनुज ऊषन् । (पेटरा) पेटिकायाम् मञ्जिष्ठायाञ्च

**मट** वारे भ्वा०प०सक० सेट् । मटति अमटीत् अमाटीत् ।

**मटची** स्त्री० मट-अचि ङीप् । ग्रामायष्टो 'मटचीहतेषु कुरुष्वि'ति छान्दोग्यश्रुतिः । [ठीत्

**मठ** वासे अक० मर्द्दने सक० भ्वा०पर०सेट्। मठति अमठीत्-अमा

**मठु** आध्याने आ०सक० सेट् इदित् । मण्ठते अमण्ठिष्ट ।

**मठ** पु० मठत्यत्र मठ-घञर्थे क । छात्रादिनिवासे, देवागारे, गन्त्रीरथे च । [ते । विभागे भ्वा०आत्म० मण्डते ।

**मड** मोदे चु०उभ०अक० सेट् इदित् । मण्डयति ते अममण्डत्

**मड** भूषणे चुरा०उभ० पक्षे भ्वा०पर०सक०सेट् इदित् । मण्डयति-ते मण्डति अममण्डत् त अमण्डीत् ।

**मडक** पु० मडि कुन् पृ० नलोप । धान्यभेदे (मेडुया) ।

**मड्डु** पु० मज्जन्ति अन्ये शब्दा अत्र मज्ज+उ पृ० । वाद्यभेदे (विपुलडमरौ) । स्वार्थे कन् । अत्रैव ।

**मण** अव्यक्तशब्दे भ्वा०प०अक०सेट् । मणति अमाणीत् अमणीत्

**मणि(णी)** पु० स्त्री० मण इन् स्त्रीत्वपक्षे वा ङीप् । सक्तादौ रत्ने 'मणिहारावलिरामणीयकमिति, न्यधनीलमणीरुह-लिपेति च नैषधम् स्त्रग्रयपालभदे अलिञ्जरे (जाला) लिङ्गाग्रे, नागभेदे मणिबन्धे च । स्वार्थे कन् अलिञ्जरे न० ।

**मणिकर्णिका** स्त्री० मणिकर्णे मणिमयकर्णभूषणमस्त्यस्या ठन् विष्णुतपस्यादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डल पतनस्थाने काशीस्थे तीर्थभेदे ।

**मणिकार** पु० मणिमय भूषणं करोति कृ अण् । (जहुरि) मणिमयभूषणकारके प्रत्यक्षा दचह खण्डात्मकतत्त्वार्थ-चिन्तामणिनामकग्रन्थकारे गङ्गेशोपाध्याये च

**मणिकूट** पु० मणीना कूट इव मणिप्रचुरं कूटं शृङ्गं यस्य । उत्तरदेशस्थे पर्व्वतभेदे । [ऋषभाख्यौषधे च ।

**मणिच्छिद्रा** स्त्री० मणिरिव छिद्रमस्याम् । मेदानामौषधे,

**मणित** न० मण-क्त । रतिकाले स्त्रीणामव्यक्तशब्दभेदे ।

**मणिद्वीप** पु० मणिमय मणिप्रचुर द्वीप । क्षीरसमुद्र-मध्यस्थे द्वीपभेदे ।

**मणिपर्व्वत** पु० ६त० । पर्व्वतभेदे ।

**मणिपूर** न० मणिभिरिव पूर्य्यते प्रचुरदीप्तिमत्त्वात् । तन्त्रोक्ते नाभिदेशस्थे सुषुम्नानाडीमध्यगते पद्माकारे चक्रभेदे ।

**मणिमन्थ** पु० मणिर्बध्यतेऽत्र बन्ध घञ् । मक्षोप्य घयोर्मध्यस्थे करप्रन्थौ, सैन्धवलवणाकरे पर्व्वतभेदे च ।

**मणिभूमि** स्त्री०६त० । मणीनामाकरे । [खचिते मण्डपे ।

**मणिमण्डप** पु० मणिमय मणिप्रचुर मण्डप । मणि-

**मणिमन्थ** पु० मणिर्मथ्यते नि सार्य्यतेऽस्मात् मन्थ अपादाने घञ् । पर्व्वतभेदे । स कारणत्वेनास्त्यस्य अच् । सैन्धवलवणे तस्य मणिमन्थ (मन्थ) सिन्धुदेशान्तिकस्थपर्व्वतजातत्वात्

**मणिमाला** स्त्री०६त० । मणीना मालेव । हारभेदे दन्तक्षत-विशेषे, दीप्तौ, लक्ष्म्याञ्च । [मणिवर्णे पु० ।

**मणिराग** न० मणेरिव रागो वर्णोऽस्य । हिङ्गुले । ६त० ।

**मणिबीज** पु० मणय इव बीजान्यस्य । दाडिमे ।

**मणिसर** पु० मणीन् सरति कारणत्वेन गच्छति सृ-अच् । मणिखचिते हारभेदे ।

**मण्ड** पु०न० मन ड तस्य नेत्त्वम् । सर्व्वान्नानामग्रस्थे, (माड) सारे, पिच्छे च । आमलक्या, सुरायाञ्च स्त्री० । दधिमण्डे (मात्) न० । एरण्डवृक्षे, शाकभेदे, भूषाया च पु० ।

**मण्डक** पु० मडि-ण्वुल् । पिष्टकभेदे । [भूषायाम् न० ।

**मण्डन** पु० मण्डयति मडि-ल्यु । अलङ्कारके । भावे ल्युट ।

**मण्डप** पु०न० मडि घञ् मण्डभूषा पाति रक्षति पा-क मडि-कपन् वा । जनविश्रामस्थाने, देवादिगृहे च । यथा चण्डीमण्डप विष्णुमण्डपमित्यादि । मण्डपानकर्त्तरि त्रि० । निष्पाव्या (शूकशिम्बीभेदे) स्त्री० ।

**मण्डल** न०मडि-कलच् । चक्राकारेण वेष्टने, यथा सूर्य्यमण्डलं भूमण्डलम् चतु शतयोजनमिते-देशभेदे, मण्डलाकारेण विहिते पदार्थे, द्वादशान्यपचक्रे, गोवे, समूहे 'अर्ध-मण्डलमण्डल'मिति वोपदेव चक्रे 'मण्डलाकारमादाव्यं मण्डल स्थानमीरित'मित्युक्ते धन्विना स्थानभेदे मण्डलं सर्व्वतोवृत्ति'रित्युक्ते 'सैन्यव्यूहभेदे, लक्षिमरेखासन्नि-वेशेन रचिते पदार्थे च यथा पद्ममण्डल सर्व्वतोभद्रमण्डल-मित्यादि । बिम्बे त्रि० स्त्रियां गौ०ङीप् । सा गण्डदूर्व्वायाञ्च कुक्कुरे सर्पभेदे च पु० । तत स्वार्थे कन् । बिम्बे, कुष्ठभेदे, व्यादर्शे, मण्डलाकरे, व्यूहे कुक्कुरे च पु० ।

**मण्डलनृत्य** न० मण्डलाकारेण नृत्यम् । चक्राकारेण परि-भ्रमणरूपे नृत्ये । [याम् ।

**मण्डलपत्त्रिका** स्त्री०मण्डलाकारं पत्त्रमस्या । रक्तपुनर्नवा

**मण्डलाधीश** पु० मण्डलस्य देशविशेषस्याधीश । मण्डलेश्वरे चतु शतयोजनमितदेशाधिपे । [वटवृक्षे च ।

**मण्डलिन्** पु० मण्डल कुण्डलनमस्त्यस्य इनि । सर्पे, बिडाले

**मण्डित** त्रि० मडि-क्त । भूषिते । [ऋषिभेदे मत्स्यभेदे च ।

**मण्डूक** पु० मण्डयति वर्षासमयम् मडि-ऊक । भेके, शोणके,

**मण्डूकपर्ण** पु० मण्डूक इव पर्णमस्य । श्योनाके, शोणके च । मञ्जिष्ठाया स्त्री० टाप् ङीप् वा । ब्राह्मी (थानकुनि) ओषधिभेदे (थुलकुडी) च स्त्री० ङीप् ।

**मण्डूकी** स्त्री० मण्डूक इव प्लवमस्त्यस्य अच् गौरा०ङीप् । मञ्जिष्ठायाम् आदित्यभक्तायां, ब्राह्मायाम्, ओषधिभेदे, प्रगल्भनायिकायां, मण्डूकयोषिति स्त्री० ङीप् ।

**मण्डूर** न० मडि ऊरच् । लौहमले । [अचे (थानिपला)

**मण्डोदक** न० मण्डस्येवोदकम् । आतपतण्डुलचूर्णनिर्मित-

मत त्रि० मन-क्त। सम्मते, अभिमते, ज्ञाते, अर्चिते च। भावे-क्त।
सम्मतौ, अभिप्राये, ज्ञाने, अर्च्चायाञ्च न०।
मतङ्ग पु० माद्यति अनेन मद-अङ्गच् दस्य त'। मेघे, मुनिभेदे च
मतङ्गज पु० मतङ्गात् स्वेच्छातः जन-ड। गजे।
मतल्लिका स्त्री० मतं मतिमलति भूषयति ण्वुल् टा०। प्रशस्ते
अव्युत्पन्नोऽयमित्येके। [आर्य्ये, पाकभेदे च
मति स्त्री०मन-भावे क्तिन्। ज्ञाने, इच्छायां, स्मृतौ च। क्तिच्।
मतिदा स्त्री० मतिं ददाति दा-क। ज्योतिष्मतीलतायाम्।
(मिसुडी)। [भ्रमे भ्रान्तौ
मतिभ्रम पु० मतेर्भ्रमः अयथार्थविषयत्वेन भ्रमणम्। बुद्धि-
मतिविभ्रम पु० मतिं बुद्धिं विभ्रमयति वि+भ्रम-णिच् अण्।
उन्मादरोगे,।
मत्क पु० मद-क्विप् स्वार्थे कन्। मत्कुणे (छारपोका) गणेदम्
कन्। मत्सम्बन्धिनि 'नैतन्मतं मत्कमि'ति भट्टिः।
मत्कुण पु० मद-क्विप् कुणयति कुण-अच् कर्म०। कीटभेदे
(छारपोका)। [नागः
मत्कुणारि पु० ६त०। (सिद्धि) भङ्गायां तत्सम्पर्केण हि तस्य
मत्त पु० मद-क्त। दुर्भेदे गजे। क्षीवे, मदयुक्ते, हृष्टे च त्रि०।
मत्तकाशि(सि,नी स्त्री० मत्तेव क्षीबेव काशते कसति गच्छति
वा णिनि ङी०ह्रस्व०। उत्तमयोषिति, स्त्रीमात्रे च।
मत्तमयूर पु० मत्तो मयूरो यस्मात्। मेघे, छन्दोभेदे च।
मत्तवारण पु० कर्म०। मत्तहस्तिनि। मत्तं वारयति वृ-णिच्-
ल्यु। प्रासादवरण्डे न०। (बारेण्डा)
मत्तालम्ब पु० मत्तैरालम्ब्यते आ+लबि-घञ्। (बारेण्डा)
प्रासादवरण्डे।
मन्त्र गुप्तभाषणे चु०आ०सक० सेट् इदित्। मन्त्रयते अममन्त्रत
मत्सर पु० मद सर। अन्यशुभद्वेषे, परसम्पत्त्यसहने, क्रोधे च
तद्वति, कृपणे च त्रि०। मक्षिकायां स्त्री०। [मत्सी
मत्स्य पु० मद-स्यन्। जलजन्तुभेदे (माछ)जातौ स्त्रियां ङीप्।
मत्स्यकरण्डिका स्त्री०मत्स्यानां करण्डकेवाधारः। (खालुइ)
मत्स्यरक्षणाधारे पात्रभेदे। [वल्याम्, जलपिप्पल्याञ्च
मत्स्यगन्धा स्त्री० मत्स्यस्येव गन्धोऽस्याः। व्यासमातरि, मत्स्य-
मत्स्यण्डी स्त्री० मन्दं स्यन्दते अच् टा०। खण्डविकारे
(मिचरि) स्वार्थे कन्। अत्रैव।
मत्स्यधानी स्त्री० मत्स्या धीयन्तेऽस्यां धा-ल्युट् ङीप्। मत्स्य-
रक्षणाधारे (खालुइ) पात्रभेदे। [हिण्याम् (कट्की)
मत्स्यपित्ता पु०मत्स्यस्य पित्तमिव रसोऽस्त्यस्या अच्। कटुरो
मत्स्यरङ्ग पु० मत्स्येन रजति रन्ज-कर्त्तरि संज्ञायां घञ्।
(माछराङ्गा) पक्षिभेदे त्रिभुवनविदितो द्वा मत्स्यरङ्ग इत्युद्भटः
मत्स्यराज पु० ६त०। रोहितमत्स्ये।
मत्स्यविन्ना स्त्री० विद-लाभे क्त' मत्स्योमत्स्यरसो विन्नो यया
सत्यतिक्तत्वात्। कटुक्याम्।
मत्स्यवेधन न० मत्स्योविध्यतेऽनेन विध-ल्युट्। बडिशे स्त्रीत्व-
मपि ङीप्। मद्गुपक्षिणि (पानकौडि) पु०।
मत्स्याक्षी पु०मत्स्यस्याक्षीव पुष्पमस्या। ब्राह्म्या (वामनहाटि)
सोमलतायां, गण्डदूर्वायां, हिलमोचिकायाञ्च।
मत्स्याङ्गी स्त्री० मत्स्यस्येव तत्पित्तमिवाङ्गं तिक्तत्वात् यस्याः।
हिलमोचिकायाम्। [जलपिप्पल्याम्।
मत्स्यादनी स्त्री० मत्स्यैरद्यते आस्वाद्यते अद-कर्मणि ल्युट्।
मत्स्योदरी स्त्री० मत्स्यगन्धयुक्तमुदरमस्याः। व्यासमातरि,
मत्स्यगन्धायां, काशीस्थे तीर्थभेदे च। [णः, मथ० माथः
मथ विलोडने भ्वा०पर०सक० सेट्। मथते अमथीत् ज्वला० वा
मथ वधे सक०क्लेशे अक०भ्वा०पर०सेट् इदित्। मन्थति। अमन्थीत्
मथन न० मथ-ल्युट्। बधे, क्लेशे, विलोडने च। 'क्षीरोदम-
थनोद्भूत' इति पुराणम्। [कारिकावृक्षे
मथन पु० मथ्यतेऽग्निचयनार्थमसौ मथ कर्मणि ल्युट्। गणि-
मथित न० मथ-क्त। निर्ज्जलतक्रे। पीडिते, हते च त्रि०।
मथुरा स्त्री० मथ-उरच्। स्वनामख्यातायां नगर्याम्।
मद हर्षे दि०पर०अक० सेट् शमा०। माद्यति अमदत् अमादीत्
अमदीत्। निष्ठायामनिट् पुषादिरयं तेन अमददित्ये-
वेति पाणिनीयाः। घटा० मदयति।। [घटा० मदयति
मद गर्व्वे दैन्ये च भ्वा०पर०अक०सेट्। मदति अमादीत्-अमदीत्
मद तर्पणे चु०आ०सक०सेट्। मादयते। अमीमदत।
मद जाड्ये, स्वप्ने, मदे च। आमोदे स्तुतौ दीप्तौ यथायथं अक०
सक० च भ्वा० आत्म० इदित्। मन्दते अमन्दिष्ट।
मद पु० मद-अच्। हस्तिगण्डजले, आमोदे गर्व्वे रेतसि,
मृगमदे, मत्ततायाम्, नदे, कल्याणकरे वस्तुनि च।
मदकट पु० मदेन कटति कट-अच्। षण्डे (षाड़) मदोत्कटे त्रि०
मदकल पु० मदेन कलति कल-अच्। मत्तहस्तिनि-मदोत्कटे
अव्यक्तशब्दकारिणि च त्रि०। [मदिरायां स्त्री० टाप्।
मदगन्ध पु० मदस्य हस्तिदानस्येव गन्धोऽस्य। सप्तच्छदवृक्षे
मदघ्नी स्त्री०मदं मदिराजां मत्ततां हन्ति-हन-ट ङीप्। पूति-
कायाम्। [ङीप्।
मदन पु० माद्यत्यनेन मद करणे ल्युट्। कामदेवे, धुरायां स्त्री०
मदनक पु० मदयति मद-णिच्-ल्युट् स्वार्थे कन्। दमनकवृक्षे
मदनचतुर्द्दशी स्त्री० मदनस्य तदुपासनायां चतुर्द्दशी। चैत्र-

शुक्लचतुर्दश्याम्। [शुक्लत्रयोदश्याम्। मदनतिथ्यादयोऽप्यत्र
मदनत्रयोदशी स्त्री० मदनस्योपासनार्थां त्रयोदशी। चैत्र-
मदनमोहन पु० मदनमपि मोहयति मुह-णिच् ल्यु। श्रीकृष्णे
मदनसदन न० ६त०। स्त्रीचिह्नभेदे। ज्योतिषोक्ते लग्ना-
वधिके सप्तमे स्थाने च। [दादौ दशाभेदे।
मदनावस्था स्त्री० मदनकृतावस्था। कामिनां स्मरकृते उन्मा-
मदनी स्त्री० माद्यत्यनया मद-ल्युट्। सुरायाम्, मृगनाभौ,
अतिमुक्तके च।
मदभञ्जिनी स्त्री० मदं भनक्ति भन्ज-णिनि। शतमूल्याम्।
मदयन्ती स्त्री० मद-णिच्-झच् गौ० ङीप्। वनमल्लिकायाम्
(काठमल्लिका) स्वार्थे कन् ह्रस्वः। तत्रैवार्थे।
मदयित्नु पु० मद-णिच्-इत्नुच्। कामदेवे, मेघे, शौण्डिके,
च। मद्ये न०। मादके त्रि०। [त्रिलवृक्षे।
मदसार पु० मदं सारयति गमयति सृ-णिच्-अण् उप०।
मदाढ्य पु० मदेन मदकारणेन (ताड़ि) रसेनाढ्यः। ताल-
वृक्षे। रक्तझिण्ट्याम् स्त्री०।
मदालापिन् पु० मदेनालपति आ+लप-णिनि। कोकिले।
मदिरा स्त्री० मद-किरच्। 'माध्वीकं पानसं द्राक्षं खार्ज्जूरं
तालमैक्षवम्। मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम्।
मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव त्वि'त्युक्ते मद्यसा-
मान्ये, मत्तखञ्जने च। रक्तखदिरे पु०।
मदोत्कट पु० मदेन दानवारिणा उत्कटः उद्भतः। मत्तगजे।
मदिरायां स्त्री०। मदोद्धते त्रि०।
मदोदग्र पु० मदेन उदग्रः उग्रः। मत्ते 'मदोदग्राः ककुद्मन्त'
इति रघुः। मार्य्यां स्त्री०।
मदोद्धत त्रि० मदेन उद्धतः। मत्ते। [पक्षिभेदे।
मद्गु पु० मस्ज-उ पृ० धातोर्मदादेशः गुक् च। (पानिकौड़ि)
मद्गुर पु० मद-उरच् गुक् च। (मागुर) मत्स्यभेदे। स्वार्थे कन् तत्रैव
मद्य न० माद्यत्यनेन करणे यत्। मदिराशब्दे उक्तमाध्वी-
कादिद्वादशविधे मादकद्रव्ये। [धातकीवृक्षे (धाइफुल)।
मद्यवासिनी स्त्री० मद्यस्येव वासो गन्धो विद्यतेऽस्याः इनि।
मद्यवीज न० ६त०। किण्वे दौ (वाखर) मद्यकारणे पदार्थजाते
मद्यसन्धान न० मद्याय मद्योत्पादनाय सन्धानम् अभिषवः।
मद्योत्पादनव्यापारे।
मद्यामोद पु० मद्यस्येव आमोदः गन्धोऽस्य। वकुलवृक्षे।
मद्र पु० मद-रक्। 'विराटपाण्ड्ययोर्मध्ये पूर्व्वदक्षक्रमेण च।
मद्रदेशः समाख्यात' इत्युक्ते देशे, हर्षे, मङ्गले च।
मधु न० मन-उ नस्य धः। मद्ये, 'गर्ज्ज गर्ज्ज क्षणं मूढ़! मधु-
यावत् पिवाम्यह'मिति चण्डी। क्षौद्रे, 'मधु वाता ऋता-
यते' इति मधुसूक्तम् पुष्परसे 'मधु द्विरेफः कुसुमैकपात्रे'
इति कुमार०। जले, मधुररसे च। 'मधु क्षरन्ति सिन्धव'
इति मधुसूक्तम्। विष्णुकर्णमलजाते दैत्यभेदे। 'विष्णु-
कर्णमलोद्भूतावसुरौ मधुकैटभाविति पुराणं कुम्भीनसा
भर्त्तरि दैत्यभेदे वसन्तर्त्तौ, चैत्रमासि, (मौल) वृक्षभेदे, अ-
शोकवृक्षे, यष्टिमधौ च पु०। प्राणिनां शुभाशुभकर्म्मणि न०।
जीवन्त्यां स्त्री०। स्वार्थे कन्। यष्टिमधौ, त्रपुणि च न०।
मधुकर पु० मधूनि करोति सञ्चित्य निष्पादयति कृ-अच्।
भ्रमरे, तद्योषिति स्त्री० ङीप्। कामिजने, भृङ्गराजे
च पु०। मधुकृदादयोऽपि भ्रमरे।
मधुकर्कटी स्त्री० मधुः मधुरा कर्कटी। जम्बीरभेदे, मिष्ट-
खर्ज्जूरिकायाञ्च। स्वार्थे कन् ह्रस्वः टाप्। बीजपूरे।
मधुका स्त्री० मक्षिव इवार्थे कन्। यष्टिमधौ, मधुपर्णीवृक्षे च
मधुकोष पु० मध्वर्थं तत्तः कोषः। (मौचाक) मक्षिकाकृते
कोषाकारे पदार्थे। [कन्। तत्रैव।
मधुक्षीर पु० मधु मधुरं क्षीरमस्य। खर्ज्जूरवृक्षे। [स्वार्थे
मधुखर्ज्जूरी स्त्री० मधुर्मधुरा खर्ज्जूरी। अतिमिष्टखर्ज्जूरीभेदे।
मधुज न० मधुनो जायते जन-ड। सिक्थके (मोम)। मधुदैत्य
मेदोजातायां भूमौ स्त्री०। [(कमलालेबु)।
मधुजम्बीर पु० मधुर्मधुरः जम्बीरः। अतिमिष्टजम्बीरे।
मधुजित् पु० मधुनामासुरं जितवान् जि-भूते क्विप्। विष्णौ
मधुभिन्मधुरिपुप्रभृतयोऽप्यत्र।
मधुतृण न० कर्म०। इक्षौ। पुंस्त्वमपि। [मधुनिक्रमथत्र न०।
मधुत्रय न० मधूनां मधुराणाम् त्रयम्। मधुघृतसितानां त्रये
मधुदूत पु० मधोर्वसन्तस्य दूत इवाप्यसरत्वाम्। आम्रवृक्षे।
पाटलायां स्त्री० ङीप्।
मधुद्रव पु० मधुरो द्रवोऽस्य। रक्तशिग्रौ।
मधुद्रुम पु० मध्वर्थं मद्यार्थं द्रुमः। (मौल) वृक्षभेदे, तत्पुष्पेष
हि पौष्पमधुसम्भव। [विकारादौ।
मधुधूलि स्त्री० मधुर्मधुरा धूलिरिव। खण्डे (खांड) गुड़-
मधुधेनु स्त्री० दानार्थं कल्पितायां मधुप्रभृतिद्रव्यकृतधेनौ।
मधुप पु० मधु पिवति पा-क। भ्रमरे। मधुपायिनि त्रि०।
'प्रारब्धो मधुपैरकारणमहो' इत्युद्भटः।
मधुपर्क न० पृच-घञ् मधुनः पर्कः योगो यत्र। मधुयुते
कांस्यपात्रस्थे कांस्यपात्रान्तरेणावृते दध्नि 'दधिसर्पिर्जलं
क्षौद्रं सिता चैतैश्च पञ्चभिः, प्रोच्यते मधुपर्कस्तु' इत्युक्ते
दध्यादिद्रव्यपञ्चके च।

प्रस्रावे दन्तधावने। स्नाने भोजनकाले च षट्सु मौनं समाचरेदि’ति स्मृतिः।

मौनिन् त्रि० मौनमस्त्यस्य इनि। वाग्व्यापाररहिते। मुनौ पु०

मौरजिक त्रि० मुरजवादनं शिल्पमस्य ठक्। मृदङ्गवादनशीले

मौर्ख्य न० मूर्खस्य भावः ष्यञ्। जाड्ये, मूर्खतायाञ्च।

मौर्वी स्त्री० मूर्वा लता तत्तन्तुना निर्वृत्ता अण्। धनुर्गुणे, क्षत्रमेखलायाञ्च।

मौल त्रि० मूलं वेत्ति मूलादागतो वा अण्। भूम्यादेरागमादिमूलज्ञे, ‘ये परम्परया मौलाः सामन्ताः स्वामिनं विदु’रिति स्मृतिः मूलादागते च।

मौलि पु०स्त्री० मूलस्यादूरभवः इञ्। चूडायां, किरीटे, संयतकेशेषु च। अशोकवृक्षे पु०। भूमौ स्त्री० वा ङीप्।

मौषल न० मुषलस्येदम् सङ्ग्रामण्। मुषलतुल्यनिर्घटे ‘गङ्गायां मौषलं स्नानं महापातकनाशन’मिति पुराणम्। मुषलमधिकृत्य कृतो ग्रन्थः अण्। महाभारतान्तर्गते ‘मुषलकुलनाशन’मित्याद्यप्रतिपादके षोडशे पर्व्वणि।

मौहूर्त्त पु० मुहूर्त्तप्रतिपादकं शास्त्रं वेत्त्यधीते वा अण्। ज्योतिःशास्त्रज्ञे। ठक्। तत्रैव।

म्ना अभ्यासे भ्वा०पर०सक०सेट्। मनति अम्नासीत्। [व

म्रक्ष संयोजने म्लेच्छने च चु०उ०स०सेट्। म्रक्षयति ते अमम्रक्षत्

म्रक्ष संघाते संयोजने च भ्वा०पर०सक०सेट्। म्रक्षति अम्रक्षीत्

म्रक्षण न० म्रक्ष ल्युट्। संयोजने, राशीकरणे, तैले यन्त्रपाते च

म्रच गतौ भ्वा० पर० सक० सेट् क्त्वा वेट्। म्रचति अम्रचत् अम्राचीत् अम्रचीत्। [घट् म्रदा

म्रद मर्दे भ्वा०आ०सक०सेट् घटा०। म्रदते अम्रदिष्ट। म्रदयति

म्रदिमन् पु० म्रदोर्भावः मृदु+इमनिच् म्रदादेशः। मृदुत्वे।

म्रदिष्ठ त्रि० अतिशयेन मृदु इष्ठन् म्रदादेशः। अतिमृदुतरे। ईयसुन्। म्रदीयानप्यत्र त्रि०। स्त्रियां ङीप्। [चीत्

म्रुच गतौ भ्वा०पर०सक०सेट् क्त्वा वेट्। म्रोचति अम्रुचत् अम्रो-

म्रुन्च गतौ सर्वं म्रुचवत्। म्रुञ्चति अम्रुचत् अम्रुञ्चीत्।

म्रेट(ड) उन्मादे भ्वा०पर०सक०सेट्। म्रेट(ड)ति अम्रेटी(डी)त् घटि न ह्रस्वः।

म्लक्ष चु० म्रक्षवत् सर्वम्। म्लक्षयति ते। अमम्लक्षत् त।

म्लान त्रि० म्लै-क्त। मलिने म्लानियुक्ते च।

म्लानि स्त्री० म्लै-क्तिन्। कान्तिक्षये। [च त्रि०

म्लिष्ट न० म्लेच्छ क्त नि०। अविस्पष्टवाक्ये तद्वाक्ययुक्ते, म्लाने

म्लुच गतौ भ्वा०पर०सक०सेट् क्त्वा वेट्। म्लोचति। अम्लुचत् अम्लोचीत्।

म्लुन्च गतौ म्लुचवत् सर्वम्। म्लुञ्चति अम्लुचत् अम्लुञ्चीत्।

म्लेच्छ अपशब्दे वा०चु०उभ० पक्षे भ्वा०पर०अक०सेट्। म्लेच्छयति ते म्लेच्छति अमम्लेच्छत् त अम्लेच्छीत्।

म्लेच्छ पु० म्लेच्छ-घञ्। अपशब्दे ‘म्लेच्छो ह वा एषयदपशब्द’ इति श्रुतिः। कर्त्तरि अच्। पामरजातौ, नीचजातौ च पु० पापरते त्रि० हिङ्गुले न०।

म्लेच्छकन्द पु० म्लेच्छप्रियः कन्दः। लशुने।

म्लेच्छजाति स्त्री० म्लेच्छाभिधा जातिः। गोमांसादिभक्षके किरातादिजातिभेदे।

म्लेच्छदेश पु० म्लेच्छाधारो देशः। चातुर्वर्ण्याचाररहिते देशे

म्लेच्छभोजन न० म्लेच्छैर्भुज्यते कर्म्मणि ल्युट्। यावके अन्नभेदे।

म्लेच्छमण्डल न० ६त०। म्लेच्छदेशे।

म्लेच्छमुख न० म्लेच्छानां मुखमिव रक्तत्वात्। ताम्रे म्ले-

म्लेच्छित न० म्लेच्छ-क्त। अपशब्दे अपभ्रंशशब्दे।

म्लेट(ड) उन्मादे भ्वा०पर०सक०सेट्। म्लेट(ड)ति अम्लेटी(डी)त्। घटि न ह्रस्वः। [न ह्रस्व

म्लेव सेवने भ्वा०आ०सक०सेट्। म्लेवते अम्लेविष्ट। घटि

म्लै कान्तिक्षये भ्वा०पर०अक०अनिट्। म्लायति अम्लासीत्।

## य

य पु० या-ड। वायौ, यशसि, योगे, गतौ च। यम-ड। संयमे। या-कर्त्तरि ड। यातरि त्रि०।

यकृत् न० यं संयमं करोति कृ-क्विप् तुक् च। कुक्षौ-दक्षिणभागस्थे मांसपिण्डे। तद्वृद्धिके रोगे च।

यकृदात्मिका स्त्री० यकृत इवात्मा स्वरूपं यस्याः कप्। तैलपायिकायाम् (तेलापोका)।

यकृद्वैरिन् पु० यकृतो रोगभेदस्य वैरी हन्ता। रोहितकवृक्षे

यक्ष पूजायां चु०आ०सक०सेट्। यक्षयते अययक्षत।

यक्ष पु० यक्ष्यते यक्ष-कर्म्मणि घञ्। देवयोनिभेदे, तदीश्वरे कुवेरे इन्द्रगृहे च।

यक्षकर्द्दम पु० यक्षप्रियः कर्द्दमः। ‘कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो यक्षकर्द्दम’ इत्युक्ते समभागेन मिलिते कुङ्कुमादौ।

यक्षतरु पु० यक्षाणां वासयोग्यस्तरुः। वटवृक्षे यक्षद्रुमोऽप्यत्र

यक्षधूप पु० यक्षे पूजने योग्यो धूपः। (धुना) सर्ज्जरसे।

यक्षराज पु० यक्षाणां राजा टच् समा०। कुवेरे। यक्षेषु राजते राज-क्विप्। यक्षराडप्यत्र पु०।

यज्ञराति त्रि॰ यज्ञप्रिया रात्रि । कार्त्तिकपूर्णिमारात्रौ।
यज्ञामलक न॰ यज्ञानामामलकमिव । पिण्डखर्जूरफले।
यज्ञावाय पु॰ ६त॰ । यज्ञानामावाय । वटवृक्षे।
यज्ञोडुम्बरक न॰यज्ञानामुडुम्बरमिव इवार्थे कन् । अश्वत्थफले
यज्ञघ्नी स्त्री॰ यज्ञमाघ हन्ति हन-टक् ङीप् । द्राक्षायाम् ।
यज्ञन् पु॰ यज मनिन् । रोगभेदे ।
यज देवपूजने, दाने, सङ्गतौ च भ्वा॰ उभ॰यजादि॰अनिट् । यजति ते अयाक्षीत् अयष्ट । [इति श्रुति ।
यजति पु॰ यज-अतिच् । यागभेदे । 'यजतिषु ये यजामहे'
यजन न॰ यज-ल्युट् होत्रादिना पशुचीराज्यादिभि मन्त्रपूर्व्वक वह्नौ प्रक्षेपरूपे यागे।ल्यु । उत्तरपदस्थ समभिव्याहृतदेवादेर्यष्टरि त्रि॰ यथा देवयजन इत्यादि [ख्यति
यजमान पु॰ यज-शानच् । होत्रादे र्नियोक्तरि प्रधानकर्मफ-
यजि पु॰ यज इन्। यष्टरि, यागे, यजधातौ च ।
यजुर्वेद पु॰ यजुषा ऋकुसामभिन्नाना मन्त्राणां प्रतिपादको वेद । वेदभेदेस च शुक्लकृष्णभेदेन द्विधा तद्विवरण वृहदभिधाने
यजुस् न॰ यज उसि । ऋकुसामभिन्ने पादच्छेदरहिते मन्त्रभेदे
यज्ञपशु पु॰ इज्यते, हविर्दीयतेऽत्र वा यागार्थकयजेर्भावे आधारे वा न यज्ञ यज्ञार्थे पशु । अश्वे, छागे च ।
यज्ञपुरुष पु॰ यज्ञरूप पुरुष । विष्णौ ।
यज्ञभूषण पु॰ यज्ञम् भूषयति भूष णिच् ल्यु । श्वेतदर्भे ।
यज्ञयोग्य पु॰ यज्ञे योग्य । उडुम्बरवृक्षे तस्य समिदादिभि र्हि यज्ञा साध्यते ।
यज्ञवल्ली स्त्री॰ यज्ञार्था वल्ली । सोमवल्लाम्।
यज्ञवराह पु॰ यज्ञरूपोवराह । आदिवराहे भगवदवतारभेदे
यज्ञवाट पु॰ ६त॰ । यज्ञस्थाने ।
यज्ञवृक्ष पु॰ यज्ञार्थ वृक्ष । वटवृक्षे।
यज्ञश्रेष्ठा स्त्री॰ यज्ञेषु तत्साधनेषु श्रेष्ठा । सोमवल्लाम् ।
यज्ञसार पु॰ यज्ञेषु यज्ञसाधनेषु सार श्रेष्ठ' । यज्ञोडुम्बरवृक्षे
यज्ञसूत्र न॰ यज्ञार्थ योग्य सस्कृत वा सूत्र शाक॰। उपवीते
यज्ञाङ्ग पु॰ यज्ञस्याङ्ग साधनत्वेनास्यास्य अच् । यज्ञोडुम्बरे, खदिरे, कृष्णवर्णकायाञ्च । ते हि समित्पुपभ्यादिना यज्ञ सम्पादयन्ति । [यज्ञाङ्गे च
यज्ञान्त पु॰६त॰ । अश्वमेधे यज्ञसमाप्तौ स्नानादिक्रियाभेदे,
यज्ञिक पु॰यज्ञ यज्ञाङ्ग साधनत्वेनास्यास्य ठन् । पलाशे तस्य समिदादिभिर्हि यज्ञनिष्पादनात ।
यज्ञिय त्रि॰ यज्ञाय हित च । यज्ञकर्मयोग्ये। द्वापरयुगे पु॰
यज्ञियदेश पु॰कर्म॰। यज्ञकर्मयोग्यदेशे 'कृष्णसारस्तु चरति मृगो यत्र स्वभावत । स ज्ञेयो यज्ञियोदेश' इत्युक्ते देशे ।
यज्ञीय पु॰ यज्ञाय हित तस्येद वा छ । यज्ञोडुम्बरे । याग सम्बन्धिनि त्रि॰ । [स्वयमादत्ते' इति श्रुति ।
यज्ञीयब्रह्म पादप पु॰६त॰। विकङ्कतवृक्षे (वइचि) 'वैकङ्कतीं
यज्ञेश्वर पु॰ यज्ञस्य प्रवर्त्तयिता ईश्वर । विष्णौ ।
यज्ञेष्ट न॰७त॰ । दीर्घरोहितवृक्षे ।
यज्ञोडम्बर पु॰ यज्ञार्थ उडुम्बर । खनामख्याते वृक्षे ।
यज्ञोपवीत न॰ यज्ञेन संस्कृतमुपवीतम् । यज्ञसूत्रे उपनयन संस्कारेण पवित्रीकृते त्रिवृति ऊर्द्धवृते वामस्कन्धात् दक्षिणकुक्षितो लम्बमानतया धृते सूत्रभेदे ।
यज्वन् पु॰ यज-भूते क्वनिप् । विधानेन कृतयागे।
यत ताडने उपस्करे च चु॰उ॰स॰सेट् ।यातयति। अयीयतत् त
यत यत्ने भ्वा॰आत्म॰अक॰सेट् । निराकरणमनिट् । यतते अयतिष्ट
यतस् अव्य॰ यद्+तसिल् । यस्मादित्यर्थे ।
यतम त्रि॰एषा मध्ये य यद्+डतमच् । एषा मध्ये यदर्थे
यतर त्रि॰। अनयोर्मध्ये य यद्+डतरच्। अनयोर्मध्ये यदर्थे
यति पु॰ यतते मोक्षाय यत इन् । परिव्राजके सन्यासिनि। यम्यते जिह्वा यत्र यम क्तिन् । छन्दोग्रन्थविख्याते जिह्वाया विश्रामस्थाने उच्चारणकालविच्छेदे स्त्री॰। सा च 'क्वचित् छन्दसान्ते यतिरभिहिता पूर्व्वकविभि पदान्ते सा शोभा व्रजति पदमध्ये त्यजति चे'त्याद्युक्ता सुप्तिङन्तपदान्ते एव छन्दोग्रन्थानुसारेण जिह्वाया विश्रामरूपो च्चारण भावरूपा । यद्-डति । यत्परिमाणे व॰व॰त्रि॰ ।
यतिचान्द्रायण न॰ यतिनेव कर्त्तव्य चान्द्रायण व्रतभेद । 'अष्टावष्टौ समश्नीयात् पिण्डान् मध्यदिने स्थिते । नियतात्मा हविष्याशी यतिचान्द्रायण चरदि'त्युक्ते व्रतभेदे
यतिन् पु॰ यमन यत यम क्त यतमनेन इनि । सन्यासिनि परिव्राजके । विधवायां स्त्री॰ ङीप्।
यत्न पु॰ यत नङ् । आयासे, उद्योगे, वैशेषिकोक्ते प्रवृत्तिनिवृत्तिजीवनयोनिरूपत्रैविध्यापन्ने गुणभेदे च। स च आत्मगुण इति नैयायिकादय चित्तगुण इति साङ्ख्यवैदान्तिका ।
यत्र अव्य॰ यद्+त्रल् । यस्मिन्नित्यर्थे ।
यत्र सङ्कोचने वा चु॰ उभ॰पक्षे भ्व॰पर॰ सक॰सेट् इदित् । यन्त्रयति ते यन्त्रति अययन्त्रत् त अयन्त्रीत् ।
यथा अव्य॰ यद्+प्रकारे थाल् । यम प्रकारेणेत्यर्थे, सादृश्ये, योग्यतायां, आनुरूप्ये पदार्थान तिवृत्तौ च । [दाव
यथाकाम अव्य॰ काममनतिक्रम्य अव्ययी॰। स्वाच्छन्द्ये यथेच्छा
यथाकामिन् त्रि॰ यथ काम स्वाच्छन्द्यमस्त्यस्य इनि ।

स्वेच्छाचारिणि जने । स्त्रियां ङीप् ।

**यथाक्रम** अव्य० क्रमस्य आनुरूप्यं तस्यानतिक्रमो वा अव्ययी० । क्रमानुरूप्ये, क्रमानतिक्रमे च ।

**यथाजात** त्रि० जातं समयविशेषमनतिक्रम्य यथाजातं तदस्यास्ति अच् । मूर्खे, नीचे च ।

**यथातथ** अव्य० तथानतिक्रम्य अर्नतरचौ अव्ययी० । याथार्थ्ये वस्तुवस्तुनो यद्रूपं भवितुमुचितं तथारूपभावे । यथायथमप्यत्रार्थे । [व्यभिचारे सत्यस्वरूपे अर्थ्याद्यच् । सत्ये त्रि०

**यथार्थ** अव्य० अर्थमनतिक्रम्य अव्ययी० । सत्यतायाम् अर्थस्था-

**यथार्ह** अव्य० अर्हं योग्यतामनतिक्रम्य अव्ययी० । यथायोग्ये ततः अर्श आद्यच् । सत्यभूते पदार्थे त्रि० ।

**यथार्हवर्ण** पु० यथार्हं यथायोग्यं वर्णयति वर्ण-अण् । चरे

**यथाशक्ति** अव्य० शक्तेरानुरूप्यम् आनुरूप्येऽव्ययी० । शक्त्यानुरूप्ये, शक्त्यनुसारे । [शास्त्रानुसारे

**यथाशास्त्र** अव्य० शास्त्रस्यानुरूप्यम् अनतिक्रमो वा अव्ययी०।

**यथास्थित** अव्य० यथा येन रूपेण स्यात् योग्यं तथास्थितम् । योग्यतायाम् अव्ययी० । सत्यतायाम् । अर्श आद्यच् । सत्ये त्रि०

**यथास्व** अव्य० स्वस्यानतिक्रमोऽव्ययी० । याथार्थ्ये । अर्श आद्यच् । यथार्थे त्रि० ।

**यथेप्सित** अव्य० ईप्सितस्यानतिक्रमः अव्ययी० । स्वाच्छन्द्ये, अर्श आद्यच् । यथाभीष्टे त्रि० यथेष्टमप्यत्र । उचिते त्रि०

**यथोचित** अव्य० उचितस्यानतिक्रम० । औचित्ये, अर्श आद्यच् ।

**यद्** त्रि० यज-अदि डिच् । (ये) इत्येवं बुद्धिविशेषविषये अस्य उक्तार्थे सर्वनामता । दयादित्यर्थे अव्य० ।

**यदा** अव्य० यद्+दाच् । यस्मिन् काले इत्यर्थे ।

**यदि** अव्य० यद्+णिच्-इन् बाहुलकात् । पक्षान्तरे, सम्भावनायाञ्च

**यदु** पु० ययातिनृपते० ज्येष्ठपुत्रे, यस्य वंशे श्रीकृष्णावतारः तस्य गोत्रापत्यमण् बहुषु तस्य लुक् । यदुवंश्ये दशार्हदेशे च ब०व० ।

**यदुनाथ** पु० यदूनां नाथो रक्षकत्वात् । श्रीकृष्णे, यदुपत्यादयोऽप्यत्र । ['यदृच्छालाभसन्तुष्ट' इति गीता

**यदृच्छा** स्त्री० यद्+ऋच्छ-अ+टाप् । स्वातन्त्र्ये, स्वैरतायाम्,

**यद्युवा** अव्य० यदि च उ च वा च द्व० । यदर्थे पक्षान्तरद्योतने, 'यद्युवास्ततरस्मात्स्वर्हि यद्युवेवे' ति स्मृतिः यद्युवा उभयं विकोर्वैदिति च तिथ्यादितत्त्वम् । [भर्तृहरिकारिका ।

**यद्वा** अव्य० यद् वा च द० । पक्षान्तरे 'यद्वाभ्युदययोग्यते' ति

**यन्तृ** पु० यम-तृच् । सारथौ, हस्तिपालके च । संयमयुक्ते त्रि० ।

**यन्त्र** न० यन्त्रि-अच् । संयमने, तन्त्रोक्ते देवाद्यधिष्ठाने चक्रभेदे पात्रभेदे, सुगमतया ज्योतिश्चक्रादावेक्षसाधने पदार्थभेदे, सूत्रधारादेर्दारुवेधकादौ (तुरपिन्) (भमर) (कुन्द्) पदार्थे

**यन्त्रक** न० यन्त्रमिव इवार्थे कन् (कुंद) दारुभ्रामकयन्त्रभेदे

**यन्त्रगृह** न० ६त० । तैलिकयन्त्रालये (घानिघर)

**यन्त्रगोल** पु० यन्त्रमिव ज्योतिश्चक्राकृतिगोलयन्त्रमिव गोलः वर्त्तुलः । कलायभेदे (मटर) [पीडायाम् स्त्री० टाप्

**यन्त्रण** न० यन्त्रि-ल्युट् । नियमने, रक्षणे, बन्धने च । युच् ।

**यन्त्रपेषणी** स्त्री० यन्त्रेणेव पिष्यतेऽनया पिष-ल्युट् । (याता) पेषणयन्त्रे ।

**यभ** मैथुने भ्वा० पर० सक० अनिट् । यभति अयाप्सीत् ।

**यम** उपरतौ भ्वा० पर० सक० अनिट् क्त्वावेट् । यच्छति अयंसीत् यन्ता । [अयीयमत् त अययामत् त

**यम** परिवेषणे चु० उ० सक० सेट् वा घटा० । यमयति यामयति

**यम** पु० यम-घञ् । 'अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता । अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि चे'त्युक्ते अहिंसादौ, इन्द्रियादीनां संयमने च । यमयति अच् । प्राणिनां शुभाशुभकर्मानुसारेण दण्डविधायके ईश्वरानुयुक्ते दक्षिणस्थे देवभेदे तत्स्वामिकत्वात् काके च । एकगर्भजायमाने यमजे त्रि० । श्राद्धत्वेन यमसम्बन्धिनि शनौ, द्वित्वसंख्यायां योगे च पु० ।

**यमक** न० 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यत' इत्युक्ते शब्दालङ्कारभेदे ।

**यमकोटि** पु० स्त्री० भूगोलस्य चतुर्थभागान्तरिते लङ्कातः पूर्व्वस्यां स्थितायां देवनिर्मितायां पुर्य्याम् 'लङ्का कुमध्ये यमकोटिरस्याः प्रागि'ति सिद्धान्तशिरोमणिः ।

**यमज** त्रि० द्वि० व० । यमः एकदा एकत्र गर्भे सहचरः सन् जायते जन-ड । एकदा एकगर्भजातयोः ।

**यमदूतिका** स्त्री० यमस्य दूतीव इवार्थे कन् । तिन्तिडीवृक्षे

**यमद्रुम** पु० यमस्य द्रुमः । यमद्वारस्थे शाल्मलिवृक्षे तत्तुल्यलौहमयकीलाकीर्णवृक्षेण हि नारकिपीडनात्तस्य यमद्रुमत्वम् । [द्वितीयायां यात्रायां मरणमिति ज्योतिषम्

**यमद्वितीया** स्त्री० ६त० । कार्त्तिकशुक्लद्वितीयायाम् 'तथा यम

**यमद्विन्** पु० ऋषिभेदे ।

**यमन** न० यम-ल्युट् । बन्धने, उपरमे च । यमयति ल्यु । यमे पु०

**यमप्रिय** पु० ६त० । वटवृक्षे ।

**यमराज** पु० यमानां चतुर्दशानां राजा दण्डनियामको राजा वा टच् समा० । मेशानः राजनि धर्मराजे । यमेषु राजते राज-क्विप् । यमराड्प्यत्र ।

**यमल** न० यमं योगं लाति ला-क । युग्मे, इन्द्रावनस्ये छन्दोभेदे च ।
**यमलपत्त्र** पु०यमलानि युग्मानि पत्त्राणि यस्य। अश्मन्तकवृक्षे
**यमवाहन** पु० यमं वाहयति स्थानात् स्थानान्तरं नयति। वह-स्वार्थे णिच्-ल्यु । महिषे ।
**यमानी** स्त्री० यच्छति अग्निमान्द्यमनया यम-करणे ल्युट् पृ० आलम् । अजमोदायाम् । स्वार्थे कन् । तत्रैव ।
**यमुना** स्त्री० यम उनन् । कालिन्द्यां नद्यां, यमभगिन्याम् सूर्य्यसुतायाम् दुर्गायाञ्च ।
**यमुनाभ्रातृ** पु०६त० । यमे ।　　[लज्ञे राजभेदे
**ययाति** पु०यस्य वायोरिव याति सर्व्वत्र गतिरस्य । नहुषा-
**ययु** पु० या-कु द्वित्वञ्च । अश्वमेधीयेऽश्वे, अश्वमात्रे च ।
**यव** पु० यु-अच् । स्वनामख्याते शूकधान्यभेदे ‘वसन्ते सर्व्व-शस्यानां जायते पत्रशातनम् मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः’ इति मीमांसा । स्वार्थे कन् । अत्रैव ।
**यवक्य** न० यवानां भवनं क्षेत्रं यत् कुक् च । यवभवने क्षेत्रे
**यवक्षार** पु० यवजातः क्षारः । यवजातक्षारभेदे लवण-भेदे (शोरा)च ।
**यवज** पु० यवात् जायते जन-ड । यवक्षारे, यवान्याञ्च ।
**यवतिक्ता** स्त्री० यवाकारं तिक्तं फलं यस्याः । राजाया शङ्खिन्याञ्च ।
**यवन** पु० यु-ल्यु । देशभेदे, तद्देशस्थे जने ब०व० । वेगे, अधिकवेगशश्वे, गोधूमे गर्जरलवणे, तुरुष्कजातौ ययाति-शप्तस्य तत्पुत्रस्य तुर्व्वसोर्वंश्ये जातिभेदे च।वेगवति त्रि०
**यवनद्विष्ट** पु० यवनैर्द्विष्टः द्विष-क्त । गुग्गुलौ ।
**यवनप्रिय** न०६त० । मरिचे ।
**यवनाचार्य्य** पु० ताजकादिज्योतिःशास्त्रकारके पण्डितभेदे
**यवनानी** स्त्री० यवनानां लिपिः ङीप् आनुक् च । यवनानां लिप्याम् ।
**यवनारि** स्त्री० यवनस्यारिः । श्रीकृष्णे ।　　[भेदे
**यवनाल** पु० यवानामिव नालः (नाडा) यस्य । (देधान) धान्य
**यवनालज** पु० यवानां नालात् काण्डात् (नाडा) जायते । यवक्षारे ।　　[(कानात्) जवनिकायाम्
**यवनिका** स्त्री० युवन्त्यस्यां यु-ल्युट् ङीप् कन् अत ह्रस्वम् ।
**यवनी** स्त्री० यु-ल्युट्,ङीप् । यवानीनामकौषधौ यवनभा-र्यायाञ्च । ‘यवनीमुखपद्मानामिति रघुः ।
**यवनेष्ट** न०६त० । सीसके । मरिचे पलाण्डौ लशुने राज-पलाण्डौ निम्बे च पु० । यवनेष्टा स्त्री० टाप् ।

**यवफल** पु० यवाकारं फलमस्य । वंशे कुटजे च यस्य फल-मिन्द्रयव इत्युच्यते, जटामांस्याञ्च ।
**यवमध्य** न० यवाकृति मध्यं यस्य । चान्द्रायणभेदे प्रथमदिनादा-पञ्चदशदिनमेकैकग्रासवृद्ध्या, तदुत्तरं च आपञ्चदश दिन क्रमेणैकैकग्रासह्रान्या माससाध्ये व्रते तस्य मध्यदिवसानां हि बहुलग्रासवत्त्वेन यवमध्यतुल्यत्वम् ।
**यवलास** पु० यवेन लस्यते सत्तया कर्त्तरि घञ् । यवक्षारे ।
**यवशूक** पु० यवानां शूकः कारणत्वेनास्त्यस्य अच् । यव-क्षारे यवशूकजादयोऽप्यत्र ।
**यवस** न० यु असच् । घासे, तृणे च ।　　[(याउ)
**यवागू** स्त्री० यूयते मिश्र्यते यु-आगू । षड्गुणजलपक्वे द्रवभेदे
**यवाग्रज** पु० यवस्याग्रात् शूकात् जायते जन ड । यव-क्षारे, यवान्याञ्च ।
**यवानी** स्त्री० दुष्टो यवः ङीप् आनुक् च । (जोयानि) पदार्थे
**यवापत्य** न० यवस्यापत्यमिव तज्जातत्वात् । यवक्षारे ।
**यवाम्लज** न० यवजाताम्लाज्जायते जन ड । सौवीरके ।
**यवास** पु०यु-आस । दुरालभायाम्,खदिरभेदे च । शुण्डाशिनी तृणे स्त्री० टाप् । स्वार्थे कन् । तत्रैव ।
**यविष्ठ** त्रि० अतिशयेन युवा युवन्+इष्ठन् यवादेश अतितरुणे
**यवीयस्** त्रि०अतिशयेन युवा युवन्+ईयसु यवादेश ‘अग्रजश्च यवीयांश्च’ इति स्मृतिः । कनिष्ठे स्त्रियां ङीप् ।
**यवोत्थ** न० यवादुत्तिष्ठति उद्+स्था-क । सौवीरके ।
**यव्य** न० यवानां भवनं क्षेत्रं यत् । यवभवनयोग्ये क्षेत्रे । युत-मन्द्राकांशत्वं यत् । चान्द्रे मासे पु० । ‘यव्यद्वयं श्राव-णादि सर्व्वा नद्योरजस्वलाः’ इति स्मृतिः ।
**यशःपटह** पु० यशः ख्यापकः पटहः । ढक्कायाम् वाद्यभेदे ।
**यशःशेष** त्रि० यश एव शेषोऽस्य । मृते । कीर्त्तिशेषादयोऽप्यत्र
**यशस्** न०‘यश अशुन् धातोः’ युक्त । शौर्य्यादिप्रभूते ख्यातिपर-पर्य्याये पदार्थे ।
**यशस्या** स्त्री० यशसे हिता यशस्+यत् । जीवन्त्याम् ऋद्धिना-मौषधौ च । यशःसाधने त्रि० । ‘धन्यं यशस्यमायुष्यमिति ।
**यशस्वत्** त्रि० यशस्+मतुप् मस्य वः । यशोविशिष्टे । विनि । यशस्वीत्यप्यत्र स्त्रियां ङीप् । जीवन्तसु तत्,ज्योति च च यवतिक्तायां, वनकार्पास्याञ्च ।
**यशोद** पु० यशो ददाति दा-क । पारदे । यशोदातरि त्रि० नन्दगोपपत्न्यां स्त्री० । ‘नन्दगोपगृहे जाता यशोदागर्भ-सम्भवा’ इति चण्डी ।
**यट्** पु० यज-अच् । यागमौधे ।

यष्टि स्त्री० यज-क्तिन् नि०। ध्वजादिदण्डे, भुजाद्यवलम्बने दण्डे च क्लीब्। तन्त्री, हारलतायां, भार्ग्यां, मधुकायां (यष्टिमधु) वा ङीप्। मल्लभेदे च।

यष्टीक न० यष्ट्या कायति कै-क। यष्टीमधौ, लताभेदे।

यष्टीपुष्प पु० यष्टीव पुष्पाण्यस्य। जीवद्वृक्षे।

यष्टीमधु पु० यष्ट्यां मधु यस्य। (यष्टिमधु) स्वनामख्याते लताभेदे

यस यत्ने दिवा०पक्षे भ्वा०पर०अक०सेट्। यस्यति यसति संयस्यति संयसति अनुयस्यति अयसत् अयासीत् अयसीत्।

या गतौ अदा०पर०सक०अनिट्। याति अयासीत्।

याग पु० यज-घञ्। मन्त्रकरणके वह्न्याद्यधिकरणे हविः-प्रक्षेपरूपे यज्ञे।

याच याचने भ्वा० उभ० द्विक० सेट्। याचति ते अयाचीत् अयाचिष्ट। चङि न ह्रस्वः। अयु याचयुः। याचितम्।

याचक त्रि० याच-ण्वुल्। याच्ञाकारके।

याचन न० याच-ल्युट्। याच्ञायाम्। युच्। याचनाप्यत्र स्त्री०

याचनक त्रि० याच-ल्यु स्वार्थे कन्। याचके।

याचित न० याच-भावे क्त। याचनवृत्तौ याच्ञायाञ्च। कर्मणि क्त। प्रार्थिते त्रि०। [गृहीते (याच्ञया द्रव्य)

याचितक न० याचितेनाधिगतम् कन्। ~~धनस्वामिनो~~

याच्ञा स्त्री० याच-नङ्। प्रार्थनायाम्।

याजक पु० याजयति यज-णिच्-ण्वुल्। धनादिलाभाय परार्थं यज्ञकर्त्तरि ऋत्विगादौ।

याज्ञवल्क्य पु० मुनिभेदे।

याज्ञसेनी स्त्री० यज्ञसेनस्य द्रुपदराजस्यापत्यं स्त्री० अत इञ् ङीप्। द्रौपद्यां पाण्डवभार्य्यायाम्।

याज्ञिक पु०यज्ञाय हित० यज्ञः प्रयोजनमस्य वा ठक्। दर्भभेदे, खदिरे,पलाशे, अश्वत्थे याजके ऋत्विगादौ, यजमाने च।

याज्य न० इज्यतेऽस्य यज-ण्यत्। यागस्थाने देवप्रतिमायाञ्च 'याज्यं चैत्यमलङ्कार'मिति स्मृतिव्याख्यायां दायभागे याज्य यागस्थानं देवता चेत्युक्तम् याजनीये त्रि०। करणे ण्यत्। ऋग्विशेषे स्त्री०।

यातना स्त्री० चु० यत-युच्। तीव्रवेदनायाम्।

यातयाम त्रि० यातो गतो याम उचितसमयो यस्य। जीर्णे पर्य्युषिते 'यातयामं गतरस'मिति गीता। उच्छिष्टे, परिभुक्ते च। [यातौ गन्तव्ये त्रि०

यातव्य पु० यायतेऽसौ या-तव्य। जपार्थं युद्धार्थमभिगम्ये

यातायात न० यातञ्चायातञ्च या-भावे क्त आ+या-भावे क्त समाहार द्व०। गमनागमनयोः।

यातु पु०या-तु। राक्षसे। गन्तरि त्रि०। [राक्षसहन्तरि त्रि०

यातुघ्न पु० यातुं राक्षसं गन्धेन हन्ति हन-टक्। गुग्गुलौ,

यातुधान पु० यातु इति धीयतेऽभिधीयते धा-ल्युट्। राक्षसे

यातृ स्त्री० या-तृच्। देवरपत्न्याम् (या) यातरौ। तृन्। गन्तरि त्रि० यातारौ। [देशोद्देशेनोत्सवभेदे रथयात्रादौ च

यात्रा स्त्री० या-ष्ट्रन्। जिगीषया राज्ञां गमने, गमनमात्रे,

यात्रिक त्रि० यात्रायै हितम्। उत्सवे, उपाये, गमनहिते-नक्षत्रादौ च।

याथातथ्य न० तथा तद्रूपस्यौचित्यम् अव्ययी० तस्य भावः ष्यञ्। यद्वस्तु यथा भवितुं युक्तं तस्य तथाभावे।

याथार्थ्य न० यथार्थस्य भावः। सत्यत्वे वास्तवित्वे।

यादःपति पु० यादसां जलजन्तूनां पतिः। वरुणे, समुद्रे च

यादव पु० यदोर्गोत्रापत्यमण्। यदुवंश्ये स्त्रियां ङीप्। तत्प्रधाने श्रीकृष्णे पु०। यदूनामिदम् अण्, गोमहिष्यादिके धने न० दुर्गायां स्त्री० ङीप्।

यादस् न० या-असुन् दुक् च। जलजन्तुमात्रे।

यादसांनाथ पु० ६त०अलुक्समा०। वरुणे,समुद्रे च। यादसां-पत्यादयोऽप्यत्र।

यादृक्ष(श)(श्) त्रि० यस्येव दर्शनमस्य यद्+दृश्-क्स,(ट) क्विप् वा। यत्सदृशे यथाविधे। टान्तात् स्त्रियां ङीप्।

यादृच्छिक त्रि० यदृच्छया आगतः ठक्। यथेच्छया प्राप्ते।

यान न० या-भावे ल्युट्। गमने,उपचितशक्तेः राज्ञः भूपराष्ट्रा-दिरक्षां कृत्वा रिपोराक्रन्दनाय गमने च। करणे ल्युट्। गमनसाधने रथादौ।

यापन न० या-णिच्-ल्युट्। कालादौ क्षेपणे, निरसने च।

याप्य त्रि० या-णिच्-ण्यत्। निन्द्ये अधमे, क्षेपणीये नि०पो-पमप्रतिकार्य्ये उपशमनीये रोगभेदे च।

याप्ययान पु० याप्यं क्षेप्यं कुत्सितं वा यद्गन्तव्यतात् इतरश-द्वृत्ताद्वा यानम् (महापाला) शिबिकायाम्। [इति धा०

याम पु० यम-घञ्। समये प्रहरे च 'यामीयात स्तथापि नायात'

यामघोष पु० यामे घोषोऽस्य। कुक्कुटे। घटिकायन्त्रभेदे स्त्री०

यामल न० यमल+स्वार्थेऽण्। युगले, तन्त्रशास्त्रभेदे च।

यामवती स्त्री० यामाः बहवः त्रिसंख्यायुताः सन्त्यस्याः भूम्नि मतुप् मस्य वः। रात्रौ, हरिद्रायाञ्च।

यामाता पु० जायां माति मा-तृच् पृ०। जामातृशब्दार्थे।

यामि स्त्री०यम-इन्। कुलस्त्रियां भगिन्यां 'यामयोयानि गे-हानीति मनुः।

यामित्र न० ज्योतिषोक्ते लग्नराशितः सप्तमे स्थाने।

यामित्रवेधः पु॰ यामित्रे सप्तमस्थाने वेधः पापग्रहसंयोगः विवाहादौ वर्ज्ये पापात् सप्तमगं शशीत्याद्युक्ते योगभेदे ।
यामिनी स्त्री॰ यामाः त्रिसंख्याताः सन्त्यस्य वाहुल्ये इनि । रात्रौ, हरिद्रायाञ्च ।
यामिनीपति पु॰६त॰ । चन्द्रे, कर्पूरे च । रजनीपत्यादयोऽप्यत्र ।
यामी स्त्री॰ यमस्येयम् यमो देवतास्या वा अण् । दक्षिणस्यां दिशि यमसम्बन्धिन्यां यातनायां च । यामि+वा ङीप् । यामिशब्दार्थे । [कृष्णत्वात् यामुनजत्वतुल्यत्वम्
यामुनेष्टक न॰ यमुनायां भवं तद्विष्टकम् । सीसके तस्य हि
याम्य पु॰ यामी दिक् निवासोऽस्य यत् । अगस्त्ये, चन्दनवृक्षे च यमोदेवतास्य । यमसम्बन्धिनि त्रि॰ । दक्षिणदेशस्थे त्रि॰
याम्यायन न॰ याम्यायाम् अयनं सूर्यस्य गतिः । दक्षिणायने रवेः कर्कसंक्रान्तितः परेषु षट्सु मासेषु ।
याम्योद्भूत पु॰ याम्ये दक्षिणदेशे उद्भूतः । श्रीतालवृक्षे ।
यायजूक पु॰ यज-यङ्-ऊक । पुनःपुनर्यागशीले ।
यायावर पु॰ देशाद्देशान्तरं याति या-यङ्-वरच् । अश्वमेधीयाश्वे जरत्कारुमुनौ च । अनवरतगमनशीले त्रि॰ ।
याव पु॰ यु-अप् स्वार्थे अण् । अलक्ते । स्वार्थे कन् । तत्र । याव इव कन् (कुलतीकलाइ) व्रीहिभेदे ।
यावत् त्रि॰ यत् परिमाणमस्य मतुप् । यत्परिमाणे । यावति । साकल्ये, व्याप्तौ, सीमायाञ्च अव्य॰ ।
यावत्तावत् अव्य॰ यावच्च तावच्च द्व॰ । वीजगणितप्रसिद्धे अव्यक्तमानानयनाय कल्पे प्रथमे राशौ । [परिमाणपूरणे
यावतिथ त्रि॰ यावतां पूरणः यावत्+डट् इथुक् च । यावत्
यावन पु॰ यु-णिच्-ल्यु । सिह्लाख्यगन्धद्रव्ये ।
यावनाल पु॰ यवनालएव स्वार्थे अण् । धान्यभेदे ।
यावनालशर पु॰ यावनालइव शरः । शरभेदे ।
यावनाली स्त्री॰ यावनालस्य विकारः अण् ङीप् । यावनालभवायां शर्करायाम् ।
यावशूक पु॰ यवशूकस्य विकारः अण् । यवक्षारे ।
याष्टीक पु॰ यष्टिः प्रहरणमस्य ईकक् । यष्ट्या योद्धरि ।
यास पु॰ यस-कर्त्तरि संज्ञायां घञ् । दुरालभायाम् ।
यु मिश्रणे अमिश्रणे च अ॰पर॰सक॰सेट् । यौति अयावीत् ।
यु बन्धे क्र्या॰उ॰सक॰अनिट् । युनाति युनीते-अयौषीत् अयोष्ट
यु निन्दने चु॰आत्म॰सक॰सेट् । यावयते अयीयवत ।
युक्त त्रि॰ युज-क्त । मिलिते । अभ्यस्तयोगे योगिनि पु॰ । उचिते, न्यायागतद्रव्यादौ च न॰ ।
युक्तरसा स्त्री॰ युक्तो रसो यस्याः । रास्नायां (काटाश्मनवी)

युक्ति स्त्री॰ युज-क्तिन् । न्याये, व्यवहारे, अनुमाने तत्साधकलिङ्गमानादौ, 'युक्तिर्योवधारणमि'त्युक्ते नाटकाङ्गविशेषे च
युग वर्ज्जने भ्वा॰पर॰सक॰सेट् इदित् । युङ्गति अयुङ्गीत् ।
युग न॰युजि-अच् पृ॰ नलोपः । युग्मे, द्वित्वसंख्यान्विते, सत्यत्रेताद्वापरकलिरूपे कालविशेषे तत्प्रमाणं ब्रह्मदभिधाने । वृद्धिनामौषधे, हस्तचतुष्कपरिमाणे च । रथाद्यङ्गभेदे पु॰ (जोयाल) । [काव्यखण्डभेदे
युगकीलक पु॰ ६त॰ । रथाद्यङ्गयुगधारणार्थं कीलकाकारे
युगन्धर पु॰ युगं रथस्य युगकाष्ठं धरति धृ-खच् । रथस्य युगकाष्ठसञ्जने कुवराख्ये काष्ठभेदे, पर्व्वतभेदे च ।
युगपद् अव्य॰ युगमिव पद्यते पद-क्विप् । एककाले इत्यर्थे ।
युगपत्त्र पु॰युगमिव संहतं पत्त्रमस्य । कोविदारवृक्षे स्वार्थे कन् । तत्रैव । शिंशपावृक्षे स्त्री॰ टाप् अतइत्त्वम् ।
युगपार्श्वग पु॰ युगपार्श्वे गच्छति गम-ड । अभ्यासार्थं लाङ्गलपार्श्वे बद्धे वृषे । [न्विते च
युगल न॰ युगं द्वित्वं विद्यतेऽस्य लच् । युग्मे, द्वित्वसंख्या-
युगलाख्य पु॰ युगलेन वरद्धपेण व्यञ्जनवर्णद्वयेनाख्यायते आ+ख्या-क । बब्बूरवृक्षे । [तत्काले च ।
युगान्त पु॰युगान्तं सत्यादीनामन्तस्तदुपलक्षितः कालः । प्रलये,
युग्म न॰ युज-मक् पृ॰ कुत्वम् । द्वित्वसंख्यान्विते (जोड़ा) युगले । 'युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा । प्रतिपदाप्यमावस्या तिथ्योर्युग्मं महाफलमि'त्युक्ते तिथिविशेषयोगे मिथुनादिराशिषु च
युग्मपत्त्र पु॰ युग्मानि पत्त्राण्यस्य । रक्तकाञ्चनवृक्षे । युग्मपर्णादयोऽप्यत्र । संज्ञायां कन् । शिंशपावृक्षे स्त्री॰ टाप् अतइत्त्वम्
युग्मफला स्त्री॰ युग्मानि फलानि यस्याः । इन्द्रचिर्भट्यां, वृश्चिकाल्यां च । [युगवाहकेऽश्वादौ त्रि॰ ।
युग्य न॰ युगमर्हति यत् । वाहने याने । युगं वहति यत् ।
युच्छ प्रमादे भ्वा॰पर॰सक॰सेट् । युच्छति अयुच्छीत् ।
युज संयमे युतौ च वा चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰सेट् । योजयति ते योजति अयूयुजत् त अयोजीत् ।
युज युतौ रु॰उ॰सक॰अनिट् । युनक्ति युङ्क्ते उद्युङ्क्ते प्रयुङ्क्ते नियुनक्ति । अयुनक् अयौक्षीत् अयुक्त ।
युज योगे समाधौ दिवा॰अक॰अनिट् । युज्यते अयुक्त ।
युज निन्दायां चु॰आ॰सक॰सेट् । योजयते अयूयुजत ।
युज् पु॰ द्वि॰युज-क्विप् । समाधिमति । युक् युजौ । रु॰ युज-क्विप् । संयोगवति त्रि॰ युङ् युञ्जौ युञ्जः ।
युञ्जान पु॰ युज-शानच् । योगविशेषवति भावनासहकारेण

सर्वपदार्थानां धातरि, रथसारथौ, विष्णौ च ।
युत दीप्तौ भ्वा०आ०अक०सेट् । योतते । अयोतिष्ट ।
युत त्रि० यु-क्त । संयुक्ते, मिलिते, अमिलिते च ।
युतक न० यु-क्त युत क वा ततः स्वार्थे कन् । संशये, युगे, स्त्रीवसनाञ्चले, चरणार्धे, यौतके धने, मैत्रीकरणे, अञ्चले, शूर्पाग्रे च । अयुक्ते त्रि० ।
युतवेध पु० विवाहादौ वर्ज्ये चन्द्रेण सह पापग्रहयोगे ।
युद्ध न० युध-क्त । शस्त्रादिक्षेपणव्यापारे, योधने, तदाधारे संग्रामे, ज्योतिषोक्ते ग्रहाणां गतिभेदकृते, योधनरूपे परस्परमिलनविशेषे च ।
युध युद्धे दिवा०आ०अक०अनिट् । युध्यते । अयुद्ध ।
युध्(धा) स्त्री० युध-सम्प० क्विप् वा टाप् । युद्धे ।
युधान पु० युध-कानच् । क्षत्रिये । [शलम् । पाण्डवश्रेष्ठे ।
युधिष्ठिर पु० युधि युद्धे स्थिर गविष्ठिरस्या स्थिर इति
युप विमोहे दिवा०पर०अक०सेट् । युप्यति अयुपत् अयोपीत्
युयुधान पु० युध-कानच् द्वित्वम् । इन्द्रे, सात्यकिनामनि यादवे क्षत्रियभेदे, क्षत्रियमात्रे च । [त्या युवजरतीत्यप्यत्र ।
युवखलति स्त्री० युव तिरेव खलति । (टाक्) रोगवत्याम् युव-
युवति(ती) स्त्री० युवन्+ति ङीप् वा । यौवनयुक्तायां स्त्रियाम् । युवन् ङीप् । यूनीत्यप्यत्र ।
युवतीष्टा स्त्री० इत्युत्तमाभिदा । स्वर्णयूथिकायाम् ।
युवन् त्रि० यु-कनिन् । तरुणे निसर्गबलवति । 'आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते' इत्युक्तवयस्के तरुणे च ।
युवनाश्व पु० सूर्यवंश्ये, मान्धातृपितरि नृपभेदे ।
युवराज पु० युवा राजा टच् समा० । राजयोग्यक्षियत्कार्यकरे राजपुत्रे ।
युष भजने भ्वा०पर०सक०सेट् । योषति अयोषीत् ।
युष्मद् त्रि० युष मदिक् । संबोध्यचेतने अस्मच्छब्दार्थे तस्य बोद्धार्थे सर्वनामता, लिङ्ग त्रिलिङ्गेषु समरूपता च ।
यूक पु०स्त्री० यू-क्विप् कन् । मत्कुणे, (उकुण) स्त्रीत्वे टाप् ।
यूति स्त्री० यु क्तिन् नि० दीर्घ । मिश्रीकरणे ।
यूथ न० यु थक् प्र० दीर्घ । सजातीयसमुदाये ।
यूथनाथ पु० ६त० । वन्यगजादीनां प्रधाने । यूथपादयोऽप्यत्र ।
यूथिका स्त्री० यु थक् प्र० दीर्घ स्वार्थे कन् अत इत्वम् टाप् । अम्बष्ठके, पाठायाम्, यूथ्याम् (युईफुल) ।
यूथी स्त्री यु थक् प्र०दीर्घ गौ०ङीप् । (युईफुल) पुष्पप्रधाने वृक्षे
यूप पु०न० यु-पक् प्र० दीर्घ । यज्ञीयपशुबन्धनकाष्ठभेदे, दारुस्तम्भविशेषे स्तम्भे च । जयस्तम्भे पु० ।
यूपकटक पु०६त० । यज्ञसमाप्तिसूचककाष्ठस्य शिरःस्थे वलयाकारे काष्ठमये पदार्थे । [यूपद्रुमादयोऽप्यत्र
यूपद्रु पु० यूपाय द्रु प्रकृतिविकृतिभावात् ४त० । खदिरवृक्षे
यूष वधे भ्वा०पर०सक०सेट् । यूषति अयूषीत् ।
यूष पु०न० यूष क थक्स्य य । मुद्गादिक्वाथे । ब्रह्मदारुवृक्षे पु० ।
येष यत्ने भ्वा०आ०अक०सेट् । येषते अयेषिष्ट । यङि न लुक्
योक्त्र न० युज्यतेऽनेन युज-ष्ट्रन् । ईषादण्डादौ युगबन्धनार्थे दामनि (योत) ।
योग पु० युज-भावादौ घञ् । संयोगे, मेलने, उपाये, वर्मादिधारणे, ध्याने 'योगश्चित्तवृत्तिनिरोध' इति पातञ्जलोक्ते सर्वविषयेभ्योऽन्तःकरणवृत्तेर्निरोधे, 'संयोगं योगमित्याहुर्जीवात्मपरमात्मनो'रित्युक्ते जीवात्मपरमात्मनोरैक्ये, युक्तौ, धने, अलब्धार्थलाभचिन्तायाम्, देहस्थैर्ये शस्त्रादीनां प्रयोगे, समुदायशब्दस्यावयवार्थसम्बन्धे, 'योगबल समाख्ये'ति मीमांसकाः । 'योग कर्मसु कौशल'मित्युक्ते यथास्थितवस्तुनो ऽन्यथारूपप्रतिपादने, यथा संसारबन्धहेतोरपि कर्मणो दृढबन्धमोक्षहेतुत्वम् । ज्योतिषोक्तेषु रविचन्द्रयोगाधीनेषु विष्कुम्भादिषु, सप्तविंशतौ पदार्थेषु तिथिवारनक्षत्राणाम् अन्यतरायतमानां योगविशेषे, अमृतयोग' अर्धोदययोग इत्यादि उपाधौ च योगाधमनविक्रीतमिति स्मृतिः ।
योगक्षेम न०योगश्च क्षेमश्च समाहार० द्व० । अलब्धलाभचिन्तासहिते लब्धपरिरक्षणे 'योगक्षेमं वहाम्यह'मिति पुरा०
योगज न०योगात् जायते जन-ड । अगुरुचन्दने । योगजात माले त्रि० न्यायायुक्ते प्रयत्नादिसाधने अलौकिकसन्निकर्षभेदे पु० । [दानप्रतिग्रह'मिति स्मृत्युक्ते सोपाधिके दाने
योगदान न० योगेन छलेन उपाधिना वा दानम् । 'योग-
योगनिद्रा स्त्री० योगरूपा निद्रा । प्रलय परमेश्वरस्य सर्वजीवसंहाररूपायां योगरूपे व्यापारे 'योगनिद्रासदेहुष' इति चण्डी तदधिष्ठात्र्यां दुर्गायाञ्च ।
योगपट्ट न० योगाभ्यासार्थं पट्टम् । योगिधार्ये पट्टवस्त्रभेदे ।
योगपीठ पु०न० योगयोग्य पीठमासनम् । पद्मादीनामासनभेदे
योगमाया स्त्री० योगरूप माया । भगवतो जगत्सर्जनाद्यर्थायां शक्तौ, 'योगमायामुपाश्रित' इति भागवतम् । तदधिष्ठात्र्यां दुर्गायाञ्च । [धिष स्त्री०
योगरङ्ग पु०योगेन रङ्गोऽस्य । (नारङ्गी) वृक्षभेदे योगरङ्गा०
योगरूढ पु० योगोऽवयवशक्ति रूढि समुद शक्ति एत द्वौ स्तः यत्र । अवयवशक्त्या समुदायशक्त्या च अर्थबोधक पङ्कजादौ अत्र हि अवयवशक्त्या पङ्कजकर्तृत्वरूप०

समार्थविशिष्टप्रकृतविशिष्टस्य बोधः। उभयार्थबोधनाच्च पङ्कजाते-कुमुदादौ, स्थलजाते-पद्मे च न तत्पदप्रयोगप्रसङ्गः

**योगवाहिन्** पु॰योगेन वहति वह-णिनि। पारदे,क्षारभेदे च

**योगाचार** पु॰ योगेनाचरति आ+चर-घञ्। बौद्धभेदे तन्मतांचारविवरणं वृहदभिधाने।

**योगाधमन** न॰ योगेन छलेनोपाधिना वाधनम्। सोपाधिके छलहेतुके च बन्धकदाने। 'योगाधमनविक्रीत'मिति स्मृतिः

**योगारूढ** पु॰ योगमारूढः आ+रुह-क्त। 'यदा तु नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसंकल्पसन्यासी योगारूढस्तदोच्यते'इत्युक्ते योगिभेदे 'योगारूढस्य तस्यैव शम कारणमुच्यते' इति गीता। [आसनभेदे

**योगासन** न॰ योगार्थमासनम्। योगशास्त्रोक्ते स्वस्तिकादौ

**योगिन्** त्रि॰ युज-घिनुण्।'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्ज्जुन। सुखं वा यदि वा दुःखं स योगी परमोमतः' इत्यादि गीताद्युक्तयोगयुक्ते संयोगवति च त्रि॰ स्त्रियां ङीप्। सा च तत्र, दुर्गाया तच्छक्तिभेदेषु नारायण्यादिषु चतुःषष्टिप्रकारेषु, प्रतिपन्नवमी इत्युक्ते पूर्व्वादिदिग्भेदाद् तिथिभेदेषु च। [दुर्गायां स्त्री॰ ङीप्।

**योगीश्वर** पु॰६त॰। याज्ञवल्क्यमुनौ योगिनां श्रेष्ठे च।

**योगेश्वर** पु॰६त॰। श्रीकृष्णे, 'योगेश्वर। ततो मे त्वं दर्शयात्मान मिति गीता। दुर्गायां वन्याककौख्या च स्त्री॰ङीप्

**योगेष्ट** न॰ योगाय योजनार्थमिष्टम्। सीसके।

**योग्य** त्रि॰ योगमर्हति यत् युज-ण्यत् वा। योगार्हे, उचिते, निपुणे, शक्ते च। पुष्यनक्षत्रे पु॰। ऋद्धिनामौषधे न॰

**योग्यता** स्त्री॰ योग्यस्य भाव तल्। सामर्थ्ये,शाब्दबोधसाधने 'पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिते'त्युक्ते तत्पदार्थे तत्पदार्थवत्तारूपे, परस्परान्वये बाधाभावरूपे वार्थे च।

**योग्या** स्त्री॰ योगमर्हति यत् युज-कृत्यम् ण्यत् वा। अभ्यासे शास्त्राभ्यासे, सूर्य्यस्त्रियाञ्च।

**योग्यानुपलब्धि** स्त्री॰योग्यस्य प्रत्यक्षादिना उपलब्धुमर्हस्यानुपलब्धिरज्ञानम्। न्यायाद्युक्ते अभावग्राहके साधनभेदे। तथाहि घटादिसत्त्वे तत्र घटाभावोनानुपलभ्यते तस्य प्रतियोगिनो घटादे सत्त्वेऽपि तत्प्रत्यक्षकारणसामग्र्य सत्त्वेन तत्प्रत्यक्षस्याभावात् किन्तु घटास्याभावो गृह्यते पिशाचादाभावस्य तु न प्रत्यक्षता तत्प्रतियोगिपिशाचादेर्दर्शनायोग्यत्वात्

**योजन** न॰ युज-भावादौ ल्युट्। संयोगे। णिच्-ल्युट्। संयोगकरणे। चतुर्षु क्रोशेषु। 'प्रथममगमदस्मा योजने' इति लीलावती।

**योजनगन्धा** स्त्री॰ योजनं व्याप्य गन्धो यस्याः। कस्तूर्य्याम्, सीतायां, व्यासमातरि-सत्यवत्याञ्च। स्वार्थे कन् अत इत्त्वम्। तत्रैव। [त्वात्। मञ्जिष्ठायाम्

**योजनपर्णी** स्त्री॰ योजनं व्याप्य पर्णान्यस्याः विस्तीर्णपर्ण-

**योजनवल्ली** स्त्री॰ योजनं व्याप्य वल्लीव। मञ्जिष्ठायाम्। स्वार्थे कन् अत इत्त्वम्। तत्रैव।

**योत्र** न॰ यु-ष्ट्रन्। योक्त्रे (योत)।

**योद्धृ** पु॰ युध-तृच्। युद्धकर्त्तरि।

**योध** पु॰ युध-अच्। युद्धकारके। भावे घञ्। युद्धे।

**योधन** न॰ युध-भावे ल्युट्। युद्धे। करणे ल्युट्। अस्त्रादायुधे। कर्त्तरि ल्यु। युद्धकर्त्तरि पु॰।

**योधसंराव** पु॰ योधाय युद्धाय संरावः आह्वानम्। योधाना युद्धार्थे परस्पराह्वाने। [गस्य भेदे।

**योनल** पु॰ यवस्य नल इव काण्डोऽस्य ए॰त्वम्। (देधान)

**योनि** पु॰ स्त्री॰ यु-नि। प्रत्यादीनामुत्पत्तिस्थाने-आकरे, कारणे,जले, स्त्रीणामसाधारणचिह्ने, तद्देवताके पूर्व्वफल्गुनीनक्षत्रे च। स्त्रीत्वे वा ङीप्। [युजेऽस्त्रजे च देहे।

**योनिज** न॰ योनितः/स्थानात् जायते जन-ड। देहभेदे जरा-

**योनिमुद्रा** स्त्री॰ योन्याकारा मुद्रा। तन्त्रोक्ते देवताविशेषपूजाङ्गे प्रदर्शनीये अङ्गुलीरचनाविशेषविशेषे लक्षणन्तु वृहदभि॰

**योषा** स्त्री॰ युष-अच् टाप्। स्त्रियाम् नार्याम्।

**योषित्** स्त्री॰युष-इति। नार्याम् हलन्तात्वा टाप्। योषितामत्र

**योषित्प्रिया** स्त्री॰ ६त॰। हरिद्रायाम्।

**यौक्तिक** त्रि॰ युक्तित आगत ठक्। युक्तिसिद्धे, योग्ये च। युक्तौ अधिकृतः ठक्। नर्मसचिवे पु॰।

**यौगिक** त्रि॰योगात् प्रकृतिप्रत्ययार्थसम्बन्धात् अधिगत ठक्। प्रकृतिप्रत्ययलभ्यार्थवाचके शब्दे यथा पाचकादिशब्द पाककर्त्तृवाचक। योगे योग्य ठक्। योगयोग्ये। [न लुप्ता॰

**यौट** संबन्धे भ्वा॰पर॰सक॰ सेट्। यौटति अयौटीत्। चङि

**यौड** यौटवत् सर्व्वम्। यौडति अयौडीत्। [लब्धे धने

**यौतक** न॰ युतकाले विवाहकालेऽधिगतम् कण्। विवाहकाले

**यौतव** न॰ युतस्य भाव अण्। परिमाणे। [धने।

**यौतुक** न॰ योतुर्योगकालस्त्र लब्धं कण्। विवाहकाले लब्धे

**यौधेय** पु॰ योध एव ढक्। योद्धरि। ३। योधेयोत्पत्त।

**यौन** त्रि॰ योनित योनिसम्बन्धात् आगतम् अण्। मापे, योनेरयमण्। वैवाहिकसम्बन्धे पु॰।

**यौवत** न॰ युवतीनां समूहः अण्। युवतिसमुदाये।

**यौवन** न॰ यूनो भाव अण्। तारुण्ये अवस्थाभेदे। 'आ षो-

उमाद् भवेद्यावत् तारुण्यस्य उच्यते । इदं स्यात् सप्तत्रे-
र्द्ध'मित्युक्तेऽवस्थाभेदे ।

यौवनकण्टक पु०न०यौवनस्य कण्टक इव चिह्नम् । (वयस् फोड़ा) मुखभेदे ।

यौवनदशा स्त्री० कर्म० । तारुण्ये अवस्थाभेदे ।

यौवनलक्षण न० ६त० । स्तने, लावण्ये च ।

यौष्माक त्रि०युष्माकमिदम् युष्मद् अण् युष्माकादेशः । युष्मत् सम्बन्धिनि । खञ् । यौष्माकीणोऽप्यत्र त्रि० ।

## र

र पु० रा-ड । वह्नौ, उष्णे, कामानले च ।

रंहस् न० रहि असुन् । वेगे । [क्त त

रक स्वादे प्राप्तौ च चु०उ०सक० सेट् । राकयति-ते अरीर-

रक्त न० रन्ज-कर्मणि क्त । कुङ्कुमे, ताम्रे, सिन्दूरे, हिङ्गुले च । शरीरस्थे रसपाकजन्ये मांसहेतौ रुधिराख्ये धातुभेदे च । भावे क्त । रागे । कुसुम्भे हिज्जले रोहितवर्णे च पु० तद्वति त्रि० । कर्त्तरि-क्त । अनुरक्ते क्रीडारते च त्रि० । कर्मणि-क्त । नील्यादिभिरञ्जिते त्रि० । करणे क्त । मञ्जिष्ठायां, लाक्षायां, गुञ्जायाञ्च स्त्री० टाप् ।

रक्तक पु० रक्तं रुधिरमिव कायति कै-क, स्वार्थे कन् वा । बन्धूकवृक्षे, बन्धूकवृक्षे, रक्तशोभाञ्जने, रक्तैरण्डे च । रुधिरे रक्तवस्त्रे च न० । अनुरागिणि विनोदिनि च त्रि० ।

रक्तकन्द पु० रक्तवर्णः कन्दोऽस्य । विद्रुमे प्रवाले ।

रक्तकमल न० रक्तं कमलमिव । रक्तवर्णोत्पले । ष० । रक्तकमलसमप्यत्र न० ।

रक्तकरवीर पु० कर्म० । रक्तवर्णपुष्पककरवीरवृक्षे ।

रक्तकाञ्चन पु० कर्म० । रक्तवर्णपुष्पककाञ्चनवृक्षे ।

रक्तकाण्डा स्त्री० रक्त काण्डोऽस्याः । रक्तपुनर्नवायाम् ।

रक्तकुमुद न०कर्म० । रक्तवर्णपुष्पककैरवे । कर्म० । रक्तकैरवरक्तकोकनदे अप्यत्र न० ।

रक्तकुसुम पु०रक्तानि कुसुमान्यस्य । पारिभद्रे (पालदामादार)

रक्तकेशर पु०रक्ताः केशरा अस्य । पारिभद्रे, पुन्नागवृक्षे च ।

रक्तखदिर पु० सारतो रक्तवर्णः खदिरः । रक्तवर्णसारके खदिरवृक्षे ।

रक्तगन्धक न० रक्तेन गन्धकमिव । बोले (गन्धरस)

रक्तघ्न पु० रक्तं हन्ति हन-टक् । रोहितवृक्षे । दूर्वायां स्त्री० ।

रक्तचन्दन न० कर्म० । रक्तवर्णसारे चन्दनभेदे ।

रक्तचित्रक न० कर्म० । (लालचिता) वृक्षभेदे ।

रक्तचूर्ण न० कर्म० । सिन्दूरे ।

रक्तझिण्टी स्त्री०कर्म० । (लालझाटि) पुष्पप्रधानक्षुपभेदे ।

रक्ततुण्ड पु० रक्तं तुण्डमस्य । शुकपक्षिणि ।

रक्तत्वचा स्त्री० रक्तं त्वचं यस्याः । गोमूत्रिकायाम् ।

रक्तत्रिवृत्(ता) स्त्री० कर्म० । (लालतेओडि) वृक्षभेदे ।

रक्तदन्तिका स्त्री० रक्ता दन्ता यस्याः ङीप् संज्ञायां कन् अत इत्त्वम् । दाडिमीस्थे दुर्गाशक्तिभेदे 'भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान् । रक्ता दन्ता भविष्यन्तीत्युपरूप्य ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः । स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिका'मिति चण्डी ।

रक्तदला स्त्री० रक्तानि दलान्यस्याः । नालिकायाम् (नालते)

रक्तदृश् पु० रक्ता दृक् नेत्रमस्य । कपोते । रक्तनेत्रादयोऽप्यत्र

रक्तधातु पु० कर्म० । गैरिके, ताम्रे च । देहस्थे रुधिररूपे रसधातुजाते मांसधातुहेतौ धातुभेदे च ।

रक्तनाल पु० रक्तो नालोऽस्य । जीवशाके ।

रक्तप पु० रक्तं पिबति पा-क । राक्षसे । रक्तपानकर्त्तरि त्रि० । जलौकायां, डाकिन्याञ्च स्त्री० ।

रक्तपत्त्रिका स्त्री० रक्तानि पुष्पपत्त्राण्यस्याः कप् अत इत्त्वम् । रक्तपुष्पजवायाम्, नाकुल्याञ्च ।

रक्तपल्लव पु० ६ब० । अशोकवृक्षे ।

रक्तपाकी स्त्री० रक्तः पाकः फलं यस्याः ङीप् । वृहत्याम् ।

रक्तपाद पु०६त० । शुकपक्षिणि । लज्जालौ लतायां, हंसपद्याञ्च स्त्री० ङीप् । [कायाम् । (जोंक) ।

रक्तपायिनी स्त्री०रक्तं पातुं शीलमस्याः पा+णिनि । जलौ-

रक्तपारद पु०न० कर्म० । हिङ्गुले ।

रक्तपित्त न० रक्ताय दुष्टं पित्तम् यस्मात् । रोगभेदे 'रक्तपित्तात् भवेत् कास' इति वैद्यकम् ।

रक्तपुष्प पु० रक्तं पुष्पमस्य । करवीरे, रोहितवृक्षे, रक्तकाञ्चनवृक्षे, दाडिमवृक्षे, रक्तकवृक्षे, बन्धूकवृक्षे, पुन्नागवृक्षे च स्वार्थे कन् । पलाशे । कर्म० । रक्तवर्णकुसुमे न० । पर्पटे, शाल्मलिवृक्षे, जवावृक्षे च स्त्री० टाप् ।

रक्तपुष्पिका स्त्री०रक्तानि पुष्पाणि यस्याः ङीप् अत इत्त्वम् । लज्जालुलतायाम्, रक्तपुनर्नवायाम्, भूमिपाटल्यां च ।

रक्तपुष्पी स्त्री० रक्तानि पुष्पाण्यस्याः ङीप् । पाटलिवृक्षे (पारुल) जवायाम्, आवर्तकीलतायाम्, नागदमन्याम् करुणीवृक्षे च । [लताभेदे ।

रक्तपूरक न० रक्तं रुधिरं पूरयति वेगात् पूर-ण्वुल् ।

रक्तप्रसव पु० रक्तवर्णः प्रसवः पुष्पमस्य । करवीरे रक्त

म्लाने च । [टाप् (तेलाकुचा) ।

रक्तफल पु० रक्तानि फलान्यस्य । वटवृक्षे । बिम्बिकायां स्त्री०

रक्तबालुक न० कर्म० । सिन्दूरे रक्तबालुकाप्यत्र स्त्री० ।

रक्तमञ्जर पु० रक्तवर्णा मञ्जरी अस्य अच् । निचुलवृक्षे ।

रक्तमूला स्त्री० ६त० । लज्जालुलतायाम् ।

रक्तमेह पु० कर्म० । रोगभेदे ।

रक्तमोक्षण न० ६त० । रुधिरस्रावणे । [कन् तत्रैव ।

रक्तयष्टि स्त्री० रक्तवर्णा यष्टिरस्याः । मञ्जिष्ठायाम् । स्वार्थे

रक्तरेणु पु० रक्ता रेणवोऽस्य । पलाशकलिकायाम् ।

रक्तलशुन न० कर्म० । (लालरशुन) मूलभेदे ।

रक्तला स्त्री०रक्तं रुधिरं प्रेतत्वेनास्त्यस्याः लच् तत् लाति सेवनात् ला-क वा । काकतुण्ड्याम् ।

रक्तवटी स्त्री० रक्तवर्णा वटीव । मसूरिकायाम् ।

रक्तवर्ग पु० रक्तानां वर्गः समुदायः । दाडिमकिंशुकलाक्षाबन्धूकहरिद्राजवाकुसुमपुष्पमञ्जिष्ठाचक्रकद्मे समूहे ।

रक्तवर्ण पु० रक्तो वर्णोऽस्य । इन्द्रगोपकीटभेदे । कर्म० । रोहितद्रुमे पु० ।

रक्तवर्द्धन पु० रक्तं रुधिरं वर्द्धयति वृध-णिच् ल्यु । वार्त्ताकौ

रक्तवर्षाभू पु० वर्षाया भवति भू-क्विप् कर्म० । रक्तपुनर्नवायाम्

रक्तबीज पु० रक्तवर्णानि बीजान्यस्य । दाडिमे । रक्तं रुधिरमेव बीजमुत्पत्तिकारणं यस्य । 'रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः । समुत्पतति मेदिन्यास्तत्प्रमाणस्तदा सुरः' इति चण्डीप्रतिपादितेऽसुरभेदे ।

रक्तवृन्ता स्त्री० रक्तवर्णं वृन्तं यस्याः । शेफालिकायाम् ।

रक्तवृष्टि स्त्री० ६त० । दैवकृतोपद्रवभेदे रुधिरवर्षणे ।

रक्तशालि पु० कर्म० । (लालधान) धान्यभेदे ।

रक्तशिग्रु पु० कर्म० । (लालसजना) वृक्षभेदे ।

रक्तशीर्षक पु० रक्तं शीर्षमस्य कप् । सरलद्रुमे ।

रक्तशृङ्गिक न० रक्तं शृङ्गमिवास्त्यस्य ठन् । विषभेदे ।

रक्तसन्ध्यक न०रक्ता सन्ध्येव कन् । रक्तवर्णे कह्लारे, पद्मे च

रक्तसरोरुह न० कर्म० । रक्तपद्मे ।

रक्तसर्षप पु० कर्म० । (राइसर्षा) राजिकायाम् ।

रक्तसहा स्त्री० रक्तं सहते सह-अच् । रक्ताम्लाने ।

रक्तसार न०रक्तः सारोऽस्य । रक्तचन्दने । अम्लवेतसे पु० ।

रक्तसौगन्धिक न० कर्म० । (लालसुँदि) रक्तवर्णकह्लारे ।

रक्ताकार पु० रक्तवर्ण आकारो मूर्त्तिरस्य । प्रवाले ।

रक्ताक्ष पु० रक्ते अक्षिणी यस्य षच् समा० । पारावते, महिषे, चकोरे, सारसे च । रक्तनेत्रवति, क्रूरे, भये च त्रि० स्त्रियां ङीप्

रक्ताङ्ग न० रक्तमङ्गं यस्य यस्माद्वा । कुङ्कुमे । मङ्गलग्रहे कम्पिल्ले (डहरकरमचा) च पु० । प्रवाले पु०न० । जीवन्त्याम्, मञ्जिष्ठायाञ्च स्त्री० ङीप् ।

रक्ताति(ती)सार पु० रक्तमिश्रितोऽति(ती)सारः । वैद्यकप्रसिद्धे रोगभेदे ।

रक्ताधार पु० ६त० । देहावरके चर्म्मणि । [जौके

रक्तापह न० रक्तं रुधिरमपहन्ति अप+हन-ड । गन्धरसे

रक्तापामार्ग पु० कर्म० । (लाल आपाङ) क्षुपभेदे ।

रक्ताम्लान पु० कर्म० । रक्तमहासहालतायाम् ।

रक्तालु पु० कर्म० । (पकरकन्द) आलुभेदे ।

रक्तिका स्त्री० । रक्तेव कन् अत इत्वम् । गुञ्जायाम्, राजिकायाम्, परिमाणभेदे च ।

रक्तेक्षु पु० कर्म० । (काजला) इक्षुभेदे ।

रक्तैरण्ड पु० कर्म० । (लालभेरण्डा) वृक्षभेदे ।

रक्तोत्पल न० कर्म० । कोकनदे लोहितवर्णे पद्मे । रक्तोत्पलमिव पुष्पमस्यास्य अच् । शाल्मलिवृक्षे (शिमुल) पु० रक्तमुत्पलमिव । गैरिके न० । [वृहति त्रि० ।

रक्तोत्पलाभ पु० रक्तोत्पलस्य कोकनदस्येवाभा यस्य । रक्तरूपे

रक्ष पालने भ्वा०पर०सक०सेट् । रक्षति अरक्षीत् ।

रक्षःसभ न० रक्षसां राक्षसानां सभा । राक्षससमूहे ।

रक्षक त्रि० रक्ष-ण्वुल् । रक्षाकर्त्तरि स्त्रियां टाप् अत इत्वम्

रक्षणि(णी) स्त्री० रक्ष अनि वा ङीप् । त्रायमाणालतायाम्

रक्षस् न० रक्ष्यते हविरस्मात् रक्ष-अपादानेऽसुन् । राक्षसे ।

रक्षा स्त्री०रक्ष-अ टाप् । रक्षणे । रक्षति अच् टाप् । जतुनि, भस्मनि च स्त्री० । रक्ष-अच् । रक्षके त्रि० ।

रक्षापत्र पु० रक्षार्थं पत्रमस्य । भूर्जपत्रवृक्षे ।

रक्षित त्रि० रक्ष्यतेऽत्र रक्ष-क्त । भावे क्त । उपाधिभेदे तदुपाधिविशिष्टजनकृते वैद्यकग्रन्थभेदे च ।

रक्षिवर्ग पु० रक्षिणां वर्गः । सैन्यादिरक्षक (प्रहरिगण)

रक्षोघ्न न० रक्षो हन्ति हन टक् । काञ्जिके, हिङ्गुनि च । तद्गन्धाघ्राणमात्रेणापि रक्षसामपसरणम् । भल्लातकवृक्षे श्वेतसर्षपे च पु० । ऋग्वेदादिप्रसिद्धे 'कृणुष्व पाजः' इत्यादिके सूक्तभेदे न० । वचायां स्त्री० । राक्षसघातकद्रव्यमात्रे त्रि०

रक्षोहन् पु० रक्षो हन्ति हन+क्विप् । गुग्गुलौ तद्गन्धघ्राणादि राक्षसानामपसरणम् । श्वेतसर्षपे च । राक्षसहन्तरि त्रि० 'रक्षोहा वलगहन इति यजुर्वेदः' ।

रक्ष्ण पु० रक्ष नङ् । त्राणे ।

रख सर्पणे भ्वा०पर०सक०सेट् इदित् । रङ्खति अरङ्खीत् ।

रख सर्पणे भ्वा०पर०सक०सेट्। रखति अरखीत् अराखीत्
रग शङ्कायाम् भ्वा०प०सक०सेट् घटा० एदित्। रगति अर
गीत्। रगयति।
रग गतौ भ्वा० पर० सक० सेट् इदित्। रङ्गति अरङ्गीत्।
रग स्वादे आप्तौ च चु०उभ०सक०सेट्। रागयति अरीरगत् त
रघ दीप्तौ चु० उभ०सक०सेट् इदित्। रङ्घयति ते अररङ्घत्
रघ गतौ भ्वा०आ० सक० सेट् इदित्। रङ्घते अरङ्घिष्ट।
रघु पु० लघ-उ लस्य रत्वम्। सूर्य्यवंश्ये दिलीपसूनौ नृपतिभेदे
रघोरपत्यमण् बहुषु लुक्। रघुवंश्ये अजप्रभृतौ क्षत्रिये
ब०व०। तान् अधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां
तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गात्मके
महाकाव्यभेदे पु०। [पुत्रे श्रीरामे।
रघुनन्दन पु० रघून् नन्दयति नन्द-णिच् ल्यु। दशरथज्येष्ठ-
रघुनाथ पु० रघूणां नाथः रक्षकत्वात् श्रेष्ठत्वाद्वा। श्रीरामे
रघुपत्यादयोऽप्यत्र।
रघुवंश पु०६त०। रघुकुले। तमधिकृत्य कृतो ग्रन्थः आख्या-
यिकायां तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गा-
त्मके महाकाव्यभेदे।
रघुवंशतिलक पु०रघुवंशे तिलक इव। दशरथज्येष्ठपुत्रे श्रीरामे
रघुवर पु० रघुषु वरः श्रेष्ठः। श्रीरामे।
रघूद्वह पु०रघुषु उद्वहः रक्षादिभारधारक उद्+वह-अच्।
दशरथज्येष्ठपुत्रे श्रीरामे।
रङ्क त्रि० रकि-अच्। कृपणे, मन्दे च।
रङ्कु पु० रकि-उ। मृगविशेषे।
रङ्ग पु०रगि-घञ्। धातुभेदे,(राङ) रन्ज भावे घञ्। रागे
आधारे घञ्। रणभूमौ, नाट्यस्थाने च। करणे घञ्।
नृत्ये, टङ्कणे, (सोहागा) खादिरसारे च।
रङ्गज न० रङ्गात् रङ्गधातोर्जायते जन-ड। सिन्दूरे।
रङ्गजीवक पु० रङ्गेण रञ्जनेन जीवति जीव-ण्वुल्। (रङ्गरेज)
शिल्पिभेदे, चित्रकरे, नाट्यजीविनि च।
रङ्गद पु० रङ्गं रञ्जनं रागं ददाति दा-क। टङ्कणे,खदिरसारे च
रङ्गदायक पु० रङ्गं ददाति दा-ण्वुल्। कङ्गुनि, (काङ्गनी)
धान्यभेदे। [रक्तादिना हि नीलरागसम्भवः।
रङ्गपत्री स्त्री० रङ्गाय पत्रमस्याः ङीप्। नीलीवृक्षे तत्पत्र-
रङ्गपुष्पी स्त्री० रङ्गाय पुष्पति पुष्प् ङीप्। नीलीवृक्षे।
रङ्गभूमि स्त्री० रज्यतेऽत्र रन्ज-घञ् कर्म०। नाट्यभूमौ
'रङ्गभूमिं समासाद्येति' भा० इ०प०। मल्लभूमौ च।
रङ्गमातृ स्त्री० रङ्गस्य रागस्य मातेवोत्पादिका। लाक्षायाम्
कुट्टिन्यां च सा हि नायकयोर्वार्त्तादिद्वारा रागं वर्द्धयति।
रङ्गलासिनी स्त्री० रङ्गं रागं लासयन्त्युल्लासयति दन्तरसेन
लस-णिच्-णिनि। शेफालिकायाम्।
रङ्गबीज न० रङ्गस्येव बीजमुत्पत्तिसाधनं यस्य। रूप्ये रजते
रङ्गशाला स्त्री० रज्यतेऽत्र कर्म०। (नाचघर) नाट्यगृहे।
रङ्गाजीव पु० रङ्गं रञ्जनं नाट्यस्थानं वा आजीवति आ+
जीव अण्। (रङ्गरेज) शिल्पिभेदे, चित्रकरे, नटे च।
रङ्गारि पु०रङ्गस्य रिरिव जारकत्वात्। करवीरे तद्रसयोगाद्धि
रङ्गस्य जीर्णता।
रङ्गावतारक पु० रङ्गे नाट्यस्थानेऽवतरति वेशान्तरपरिग्र-
हेण अव+तॄ-ण्वुल्। नटे, शैलूषे। णिनि। उक्तार्थे।
रङ्गिणी स्त्री० रङ्गमिव शुभ्राणि मूलानि सन्त्यस्याः इनि।
शतमूल्याम्, कैवर्त्तिकाख्यलते च। रङ्गयुक्ते त्रि०।
रङ्घस् न० रघि-असुन्। वेगे। [ल्युट्। तत्रैव न०।
रचना स्त्री० रच-युच्। रचने, पुष्पपत्रादेर्विन्यासे। भावे
रच रचनायां अद० चु०उभ०सक०सेट्। रचयति ते अररचत् त
रज न० रन्ज क। स्त्रीकुसुमे। परागे, रेणौ गुणभेदे च पु०
रजक पु० रजति रन्ज-ण्वुल् नलोप। वस्त्रादेः रागकारके
जातिभेदे (धोपा)।
रजत न०रन्ज-अतच् नलोप०। रूप्ये, गजदन्ते, रुधिरे,हारे,
शैले, स्वर्णे, धवले च। शुक्लगुणवति त्रि०।
रजताचल पु० रजतकल्पितोऽचलः। दानार्थं कल्पिते, रजत-
मये पर्वते। रजतमिव शुभ्रोऽचलः। कैलासपर्वते रज-
तगिर्य्यादयोऽप्यत्र पु०।
रजन न० रन्ज-ल्यु। रागे। [हरिद्रायां, जतुकायाञ्च।
रजनि(नी) स्त्री० रज्यतेऽत्र रन्ज-कनि वा ङीप्। रात्रौ
रजनीकर पु० रजनीं सतत करोति कृ-ट। चन्द्रे।
रजनीगन्धा स्त्री० रजन्यां गन्धो यस्याः। तन्नामख्याते
पुष्पप्रधाने वृक्षे। [भटे च।
रजनीचर पु० रजन्यां चरति चर-ट। राक्षसे, चौरे, यामिक
रजनीजल न० रजन्या जलमिव। नीहारे।
रजनीपुष्प पु० रजन्यां हरिद्राया इव पुष्पमस्य। (पूति-
करञ्जा) करञ्जभेदे।
रजनीमुख न०६त०। प्रदोषे सूर्य्यास्तकालात् चतुर्दण्डा-
त्मके, दण्डद्वयात्मके वा काले। [शिकायाम्
रजनीहासा स्त्री० रजन्यां हासो विकासो यस्याः। शेफा-
रजस् न० रन्ज-असुन् नलोप०। प्रसरेणौ, परागे, धूलौ,
स्त्रीणां पुष्पे रजोगुणे वेदादिकारके प्रकृतेर्गुणभेदे च।

रजसल त्रि॰ रजोऽस्त्यस्य वलच्। रजोयुक्ते। मर्द्दिषे पु॰ आर्त्तववत्यां स्त्रियां स्त्री॰।
रज्जु स्त्री॰ सृज-उ नि॰। बन्धनसाधने दामनि (दडि) वेण्याञ्च
रञ्जक न॰ रञ्जयति रन्ज-णिच्-ण्वुल्। हिङ्गुले मोतिकारके त्रि॰। काम्पिल्लवृक्षे पु॰ (डहरकरमचा)।
रञ्जन न॰ रज्यतेऽनेन रन्ज-करणे ल्युट्। रक्तचन्दने, मञ्जिष्ठायां, नील्यां, गुण्डारोचनिकायां, (कमलागुडि) शेफालिकायां, हरिद्रायां, पर्य्यायाञ्च स्त्री॰ ङीप्। भावे ल्युट्। रागे। ल्यु। रागजनके त्रि॰। मुञ्जतृणे न॰। संज्ञायां कन्। कट्फले पु॰।
रट भाषणे भ्वा॰पर॰सक॰सेट्। रटति अराटीत् अरटीत् 'माघे मासि रटन्त्याः' इति स्मृतिः।
रटन्ती स्त्री॰ रट-शतृ ङीप्। 'माघे मासासिते पक्षे रटन्त्याख्या चतुर्द्दशी। तस्यां प्रदोषसमये पूजयेत् सुखभागिनी'त्युक्तायां माघकृष्णचतुर्दश्यां म्।
रठ भाषणे भ्वा॰पर॰सक॰सेट्। रठति अराठीत् अरठीत्।
रण गतौ भ्वा॰पर॰सक॰सेट्। रणति अराणीत् अरणीत् घटादि॰। रणयति।
रण रवे भ्वा॰पर॰अक॰सेट्। रणति अराणीत् अरणीत्।
रण न॰ रणन्ते शब्दायन्ते अत्र रण-घञर्थे क। युद्धे, भावे क। शब्दे, क्वणे, गतौ च पु॰। [कन्। उद्वेगे अतिशये च।
रणरणक पु॰ रण॰ शब्दस्तत्प्रकारः द्वित्वम् ततः संज्ञायां
रणसङ्कुल न॰ रणमेव सङ्कुलम्। तुमुलयुद्धे।
रण्ड पु॰ रण-ड तस्य नेत्त्वम्। धूर्त्ते, विफले कर्णाङ्गविच्छिन्नतया छिन्नावयवे त्रि॰ मूषिकपर्ण्यां विधवायाञ्च स्त्री॰। स्वार्थे कन्। अफलवृक्षादौ।
रण्डाश्रमिन् पु॰ रण्ड विफलः प्रजाहीनत्वात् आश्रमः अस्त्यस्य इनि। 'चत्वारिंशद्वत्सरात्यः साष्टानाञ्च परे यदि। स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः' इत्युक्तवयसि स्त्रीवियुक्ते पुरुषे।
रत न॰ रम भावे क्त। रमणे स्त्रीपुमयोः सङ्गमे मैथुने, गुह्ये च। कर्त्तरि क्त। अनुरक्ते त्रि॰।
रति स्त्री॰ रम-क्तिन्। रागे, गुह्ये, रमणे तदधिष्ठात्र्यां कामदेवपत्न्यां च। [सुरतमध्ये मैथुने।
रतिक्रिया स्त्री रतये रतिरूपा वा क्रिया व्यापारः। स्त्रीपुम
रतिपति पु॰ ६त॰। कन्दर्पे रतिकान्तादयोऽप्यत्र।
रतिप्रिय पु॰६त॰। कामदेवे। ६ब॰। रमणप्रिये त्रि॰।
रतिमन्दिर न॰ ६त॰। रतिगृहे स्त्रीणामधोऽवयवविशेषे च
रतिरमण पु॰ रतिं रमयति रम-णिच्-ल्यु। कामदेवे।
रतिलक्ष न॰ रतेर्लक्षं पदम्। मैथुने।
रतिसत्वरा स्त्री॰ रतिं सत्वरयति सत्वरा+करोत्यर्थे णिच्-अण्। (पिडिङ्ग) शाके।
रत्न न॰ रमतेऽत्र रम-न तान्तादेशः। माणिक्यादिप्रस्तरे, स्वस्वजातिषु श्रेष्ठे, माणिक्ये, हीरके च।
रत्नकन्दल पु॰ रत्नेषु कन्दल इव रक्तत्वात्। प्रवाले।
रत्नकूट पु॰ रत्नमयकूटः शृङ्गमस्य। पर्व्वतभेदे।
रत्नगर्भ पु॰रत्नयुक्तं गर्भं मध्यं यस्य। समुद्रे, कुबेरे च। पृथिव्यां समुद्रायां नार्य्याञ्च स्त्री॰।
रत्नद्वीप पु॰न॰। रत्नमयो द्वीपः। तन्त्रोक्ते सुधासमुद्रमध्यस्थिततया ध्येये रत्नमयेऽन्तरीपे। [निर्मितायां धेन्वाम्।
रत्नधेनु स्त्री॰ रत्नकल्पिता धेनुः। दानार्थं कल्पितायां रत्न-
रत्नपारायण न॰ रत्नानां पारायणं साकल्येन स्थानम्। सर्व्वरत्नाधारे 'रत्नपारायणं नाम्ना लङ्के'ति भट्टिः।
रत्नमुख्य न॰ रत्नेषु मुख्यम्। हीरके। [रत्नयुक्ते त्रि॰
रत्नवती स्त्री॰ रत्नानि सन्त्यस्याः मतुप् मस्य वः। पृथिव्याम्
रत्नसानु पु॰ रत्नानि सानावस्य। सुमेरुपर्व्वते।
रत्नसू स्त्री॰ रत्नानि सूते सू-क्विप्। पृथिव्याम्।
रत्नाकर पु॰६त॰ समुद्रे रत्नोत्पत्तिस्थाने, मणिखनौ च।
रत्नाचल पु॰ रत्ननिर्मितः अचलः। दानार्थं कल्पिते रत्ननिर्मिते पर्व्वते। [भूषणभेदे।
रत्नाभरण न॰ रत्नघटितमाभरणम् शाक॰। (जड़ाओ)
रत्नावली स्त्री॰६त॰। रत्नसमूहे, तद्घटित हारे, वत्सराजपत्नीभेदे च रत्नावलीमधिकृत्य कृतः ग्रन्थोऽण् आख्यायिकायां तस्य लुक्। श्रीहर्षकृते चतुरङ्कात्मके नाटिकाभेदे। [ङीप्।
रत्नि पुं॰स्त्री॰ ऋ-कत्निच्। 'बद्धमुष्टिहस्तपरिमाणे। स्त्रीत्वे वा
रथ पु॰ रम्यतेऽनेन अत्र वा रम-क्थन्। स्वनामख्याते यानभेदे, देहे च 'आत्मानं रथिनं विद्धि शरीरं रथमेव चे'ति गीता। पादे, वेतसवृक्षे, तिनिशवृक्षे च।
रथकड्या स्त्री॰ रथानां समूहः रथ+कड्यच्। रथसमूहे।
रथक(का)र पु॰ रथं करोति कृ-अच्-अण् वा। रथनिर्माणकारके (सूत्रधार) वर्णसङ्करभेदे।
रथकुटुम्बिन् पु॰ रथस्य कुटुम्बीव पालकत्वात्। सारथौ।
रथगर्भक पु॰ रथस्य गर्भमिव स्वार्थे कन्। कर्णीरथे स्कन्धवाह्ययाने (पालकी)।
रथगुप्ति स्त्री॰ रथस्य गुप्तिः सङ्घट्टवारणार्थं रथस्य उपधारणाय तत्स्थानम्। रथस्य सङ्घट्टवारणार्थं गुप्तस्थाने।

रथचरण पु० रथस्य चरण इव गतिहेतुत्वात्। रथचक्रे तन्नामनामके चक्रवाकविहगे रथपादादयोऽप्यत्र।
रथद्रु पु० रथनिर्माणाय द्रुः रथनामको वा द्रु। तिनिशवृक्षे
रथन्तर त्रि० रथेन तरति तॄ खच् मुम् च। रथनेतरि। 'अभित्वा शूर' इत्यस्यामृचि गीते सामभेदे न०। [उत्सवभेदे
रथयात्रा स्त्री०रथस्य यात्रा। आषाढशुक्लद्वितीयायां कर्त्तव्ये
रथाङ्ग न० अङ्ग्यते गम्यतेऽनेन अगि-करणे घञ् ६त०। चक्रे रथाङ्गशब्द वाचकत्वेनास्त्यस्य अच्। चक्रवाके पु०।
रथाङ्गपाणि पु० रथाङ्गं चक्रं पाणौ यस्य। चक्रधरे विष्णौ
रथाभ्र पु० रथ इवाभ्रियतेऽसौ आ+भृ-मूल० क। वेतसवृक्षे।
रथाभ्रपुष्प पु०अभ्रमिव पुष्पमस्य रथनामकोऽभ्रपुष्प कर्म०। वेतसवृक्षे। [रथेन युद्धकारके च।
रथारोहिन् पु० रथम् रोहति आ+रुह णिनि। रथिनि
रथिक पु० रथो युद्धसाधनत्वेनास्त्यस्य ठन्। रथिनि। इर रथिर। इन। रथिन। इनि। रथी एतेऽप्यत्र।
रथोपस्थ न० रथस्य उपस्थ इव। रथमध्ये।
रथ्य पु० रथं वहति यत्। रथवाहके घोटके। रथस्येदं यत्। रथसम्बन्धिनि त्रि० रथस्य तद्गमनस्य योग्या सरणिः। मयका-पथे, अभ्यन्तरमार्गे, रथानां समूह यत्। रथसमूहे च स्त्री०
रद उत्खाते भ्वा०प०सक०सेट्। रदति अरादीत् अरदीत्।
रद पु०रदति उत्खनति रद-अच्। दन्ते। भावे अच्। उत्खनने
रदच्छद पु० रदान् छादयति छद णिच्-घ ह्रस्व। ओष्ठयो रदनादिच्छदादयोऽप्यत्र।
रदन पु० रद-ल्यु। दन्ते, भावे ल्युट्। विदारणे। [रदा
रध हिंसने पाके च दि०पर०सक०वेट्। रध्यति अरधत् रधिता-
रन्ज रागे, (वर्णान्तराधाने) सक० आसक्तौ अक०भ्वा०उभ० अनिट्। रजति ते अराङ्क्षीत् अरङ्क्त। घटा० रञ्जयति मृगमारणे तु रजयति।
रन्ज रागे आसक्तौ दिवा०उभ०सक०अनिट्। रज्यति रज्यते अराङ्क्षीत् अरङ्क्त। णिच्० रञ्जयति। रजयति
रन्तिदेव पु० रम कथायां तिक् कर्म०। चन्द्रवंश्ये नृपभेदे कुक्कुरे च। [समदे, इत्युक्ट।
रन्धन न०रध-भावे ल्युट् नुमागम। पाके सूपकार। रन्धन
रन्ध्र न० रध क्विप् ४ भूत क कर्म०। छिद्रे, दूषणे, ज्योतिषोक्ते लग्नादष्टमस्थाने च।
रन्ध्रकण्ट पु०रन्ध्रे रन्ध्रे कण्टा कण्टकोऽस्य। आवर्त्तमुण्डकावे
रन्ध्रवंश पु० रन्ध्रबहुलो वंश शाक०। (वेणुवाराख्य) वंशभेदे।
रप व्यक्तवाक्ये भ्वा०प०सक०सेट्। रपति अरापीत् अरपीत्

रफ गतौ हिंसे च भ्वा०प०सक०सेट्। रफति। अरफीत्-अराफीत्। इदित्त्वयम्। रम्फति अरम्फीत्।
रब गतौ सक० प० शब्दे अक० आ० भ्वा० सेट् इदित्। रम्बति-ते अरम्बीत् अरम्बिष्ट।
रभ औत्सुक्ये भ्वा०आ०अक०अनिट्। रभते आरब्ध।
रभ शब्दे भ्वा०आ०अक०सेट् इदित्। रम्भते अरम्भिष्ट।
रभस पु० रभ-असच्। वेगे,हर्षे,औत्सुक्ये,पौर्वापर्याविचारे च
रम क्रीड़ायां भ्वा०आ०ज्वला०अक०अनिट्। रमते विरमति उपरमति अरंस्त उपारंसीत्। क्त्वा वेट्। घ राम
रम पु० रम-अच्। कान्ते अशोकवृक्षे कामदेवे च।
रमठ न० रम अठन्। हिङ्गुनि। स्वार्थेऽण्। अत्रैव न०।
रमठध्वनि पु०रमठ इति शब्देन ध्वन्यते ध्वन-इन्। हिङ्गुनि
रमण पु०रमयति रम-णिच् ल्यु। कामदेवे गर्द्दभे, वृषणे मह्लारिष्टे (निम्ब) पत्यौ,। 'रमण ! त्वामनुयामीति कुमार। जम्बुद्वीपान्तर्गते रम्यकनाम्नि वर्षे च। रम भावे ल्युट्। सुरते। करणे ल्युट्। पटोलमूले, कन्। जघने च न०। रम्यतेऽनया ल्युट् ङीप्। नार्याम्, उत्तमनार्याम्, वालास्यवृक्षे च स्त्री०।
रमणीय त्रि० रम्यतेऽत्र रम-आधारे-ल्युट्। सुन्दरे।
रमल न० ज्योतिः शास्त्रभेदे।
रमा स्त्री० रमयति रम अच्। लक्ष्म्याम्।
रमापति पु० ६त०। नारायणे रमानाथरमाकान्तादयोऽप्यत्र।
रमाप्रिय न० ६त०। पद्मे। विष्णौ पु०।
रम्भ पु० रभि-अच्। वेणौ, महिषासुरजनकासुरभेदे च। कदल्याम्, अप्सरोभेदे, वेश्यायां, गवां ध्वनौ, गौर्य्याञ्च स्त्री०।
रम्भातृतीया स्त्री० मार्गशीर्षे शुक्लतृतीयायाम्, उपचारात्, तत्र कर्त्तव्ये व्रतभेदे च।
रम्य त्रि०रम्यतेऽत्र यत्। सुन्दरे, मनोहरे च। चम्पक वकुले, च पु०। पटोलमूले न०। क्षपायां कन्। जम्बुद्वीपस्य नवसु वर्षेषु मध्ये 'इलावृतेन सुमेरोस्तु केवलं चोत्तरेण च वायव्यं रम्यकं नाम' इत्युक्ते वर्षभेदे।
रम्यपुष्प पु० रम्याणि पुष्पाण्यस्य। शाल्मलिवृक्षे।
रम्या स्त्री० रम्यतेऽत्र यत्। स्थलपद्मिन्याम्, रात्रौ च।
रय गतौ भ्वा०आ०सक० सेट्। रयते अरयिष्ट।
रय पु० रय अच्। वेगे, प्रवाहे च। [ध्वजे, नेमकोभि च
रल्लक पु० रम क्विप् सर्वोपि तुक् ला-ड कर्म०। मृगभेदे
रव गतौ भ्वा० आ०सक०सेट् इदित्। रम्बते अरम्बिष्ट।
रव पु० रु-भावे अप्। शब्दे।

वल्मीक न० वल्यते संव्रियतेऽनेन ईकन् । वनीकशब्दार्थे पटले
वलून त्रि० वलं देहोत्थापनमस्त्यस्य ऊनच् । बलविशिष्टे ।
वल्क भाषणे चु०उ०द्वि०सेट् । वल्कयति ते अववल्कत् त ।
वल्क न० वल संवरणे कक् कस्य नेत्त्वम् । वृक्षादीनां त्वचि, वल्कले, मत्स्यानां त्वचि शल्के (आंइस) खण्डे च ।
वल्कतरु पु० वल्काय तरुः । पट्टिकालोध्रे, गुवाकवृक्षे च ।
वल्कद्रुम पु० वल्कप्रधानो द्रुमः । भूर्जपत्रवृक्षे ।
वल्कल न० वल-कलन् कस्य नेत्त्वम् । त्वचि । (दारचिनि) वृक्ष त्वचि (छाल) पु० न० ।
वल्कलोध्र पु० वल्कभवो लोध्रः । पट्टिकालोध्रे ।
वल्ग गतौ प्लुतगतौ च भ्वा०पर०सक०सेट् । वल्गति अवल्गीत्
वल्गा स्त्री० वल्ग अच् । (लागाम) अश्वमुखस्थे रज्जुभेदे ।
वल्गित न० वल्ग-क्त । अश्वस्य गतिभेदे, गमने, वक्रभाषणे च ।
वल्गु पु० वल संवरणे उ-गुक् च । छागे । मनोहरे त्रि० । संज्ञायां कन् । चन्दने, वने, पणे च न० । चारुणि सुन्दरे च त्रि०
वल्गुपत्र पु० वल्गूनि पत्राणि यस्य । वनमुद्गे ।
वल्भ भक्षणे भ्वा० आत्म०सक० सेट् । वल्भते अवल्भिष्ट ।
वल्मिकि पु० वल-इकि मुट् च । } कीटविशेषकृते मृत्तिका
वल्मीक पु० वल-ईक मुट् च । } स्तूपे (उयेर ढिपि ।
वल्य(ल्यो)ल छेदने पवित्रताकरणे च अद० चुरा०उभ०सक० सेट् । वल्यु ल्यूलयति-ते अववल्यु(ल्यू)लत् त ।
वल्ल संवरणे भ्वा०आ०सक सेट् । वल्लते अवल्लिष्ट ।
वल्ल पु०वल्ल-घञ् । गुञ्जात्रयपरिमाणे 'वल्लस्त्रिगुञ्ज' इति लीला०
वल्लकी स्त्री० वल्ल-क्वुन् गौ० ङीष् । वीणायाम् सल्लकीवृक्षे च ।
वल्लभ पु० वल्ल-अभच् । दयिते, अध्यक्षे, उत्तमाश्वे च ।
वल्लभपाल पु० वल्लभं पालयति पाल-अण् । अश्वपाले ।
वल्लर न० वल्ल-अरन् । क्षुद्र गुल्मे, गहने, कुञ्जे च ।
वल्लरि(री) स्त्री० वल्ल अरिन् वा ङीप् । मञ्जर्याम्, मेथिकायां च
वल्लव पु० वल्लवत् तं वाति वा-क । गोपे, पाचके, भीमसेने च
वल्लि(ल्ली) स्त्री० वल्ल-इन् वा ङीप् । लतायाम् पृथिव्याश्च दोषान्तरे । अजमोदायां, कैवर्त्तिकायाम्, चव्ये च ।
वल्लीज न० वल्ल्यां जायते जन-ड । मरिचे ।
वल्लीदूर्वा स्त्री० वल्लीरूपा दूर्वा । मालादूर्वायाम् ।
वल्लीबदरी स्त्री० वल्लीरूपा बदरी । भूबदर्याम् ।
वल्लीमुद्ग पु० वल्लीप्रधानः मुद्गः । वनमुद्गे (मुग नि)
वल्लीवृक्ष पु० वल्लीव दीर्घो वृक्षः । शालवृक्षे ।
वल्लुर न० वल्ल-उरन् । कुञ्जे, मञ्जर्यां, क्षेत्रे, निर्जलस्थाने माषके, गहने च ।
वल्लूर त्रि० वल्ल-ऊरन् । अन्तपादिना शुष्कमांसे, शूकरमांसे, वनक्षेत्रे, वाहने, उपरभूमौ च ।
वल्ल्या स्त्री० वल्ल-यत् । धात्रीवृक्षे ।
वल्वज पु० वलते भुवं वेष्टयति वल-क्विप् तादृशः सन् व्रजति गच्छति व्रज-अच् । उलपे तृणभेदे । (वावुइ) वृक्षभेदे स्त्री०
वल्ह दीप्तौ चु०उ०अक०सेट् । वल्हयति ते अववल्हत्-त ।
वल्ह उत्कर्षे भ्वा० आ०अक०सेट् । वल्हते अवल्हिष्ट ।
वव पु० वा-ड मकारे द्वित्वम् । ज्योतिषोक्ते तिथ्यर्द्धात्मके प्रथमे करणे । [अवशीत् ।
वश स्पृहायाम् अदा०पर०सक०सेट् स्वमा० । वष्टि अवाशीत्
वश पु० न० वश-अच् । आयत्तत्वे, प्रभुत्वे च आयत्ते त्रि० ।
वशंवद त्रि० वशं वशकरं मधुरं, वशोऽहमिति वा वदति वद-अच् मुम् च । प्रियवाक्यवादिनि, मधुरवादिनि, 'तवाहं वश' इति वादिनि च ।
वशक्रिया स्त्री० वशस्य क्रिया करणम् कृ-श । वशीकरणे ।
वशग त्रि० वशं गच्छति गम-ड । वशीभूते ।
वशवर्त्तिन् त्रि० वशे वर्त्तते वृत-णिनि । वशीभूते ।
वशा(सा) स्त्री० वश-(वस) अच् । वन्ध्यायां योषायां, कन्यायां, करिण्यां, स्त्रीगव्याश्च । [स्त्री० ।
वशिक त्रि० वशोऽस्त्यस्य ठन् । शून्ये आयत्ते च अगुरुचन्दने
वशित्व न० वशिनो भाव० त्व । स्वातन्त्र्ये, ईश्वरस्य ऐश्वर्य-भेदे च । तल् । वशिताऽप्यत्र स्त्री० । ०
वशिन् त्रि०वशोऽस्त्यस्य इनि । जितेन्द्रिये, स्वाधीने, स्वतन्त्रे च
वशिर न०वश-इरन् । सामुद्रलवणे गजपिप्पल्याम्, चव्ये च । पु०
वशि(सि)ष्ठ पु०अतिशयेन वशी इष्ठन् इनेर्लुक् पृ०वा यस्य सः । अतिशयजितेन्द्रियतायुक्ते मुनिभेदे ।
वशीकरण न० अवशः वशः क्रियतेऽनेन वश-च्वि-कृ-ल्युट् । वश्यादुक्ते वशतासम्पादके मणिमन्त्रादौ ।
वशीर पु० वश-ईरन् । गजपिप्पल्याम् ।
वश्य न० वश-यत् । लवङ्गे । आयत्ते त्रि० ।
वष वधे भ्वा०पर०सक०सेट् । वषति अवषीत् अवाषीत् ।
वषट् अव्य० वह-डषटि । देवोद्देश्यकहविस्त्यागे ।
वषट्कार पु० वषट्+कृ-घञ् । देवोद्देशकत्यागरूपे यज्ञे ।
वषट्कृत त्रि० वषट् इति कृतम् कृ-क्त । हुते ।
वष्क गतौ भ्वा०आ०सक०सेट् । वष्कते । अवष्किष्ट ।
वष्कय पु० वष्क-अयच् । एकहायने वत्से ।
वष्कयणी स्त्री० वष्कयमेकहायनवत्सं नयति स्वाभान्तरं नी-ड गौ०ङीष् णत्वम् । चिरप्रसूतायां गवि ।

**वष्कयिणी** स्त्री० वष्कय एकहायनो वत्सोऽस्त्यस्याः इनि । चिरप्रसूतायां गवि । [अवीवसत् त

**वस** नम्रतायां अक० बधे सक० चु० उभ० सेट् । वासयति ते

**वस** स्तम्भे दिवा०पर० सक० सेट् । वस्यति अवसत् अवासीत् । क्त्वा वेट् ।

**वस** निवासे भ्वा पर०सक० अनिट् यजा० । वसति अवात्सीत्

**वस** आच्छादने अदा०आ० सक० सेट् यजा० । वस्ते अवसिष्ट ।

**वस** वासने अद०चु०उभ० सक०सेट् । वसयति ते अववसत् त ।

**वसति(ती)** स्त्री० वस-अति वा ङीप् । वासे यामिन्याम्, 'वसतीरुषित्वे'ति रघुः, निकेतने, स्थाने च ।

**वसन** न० वस-ल्युट् । वस्त्रे, छादने, निवासे, वस्त्रभूषणे च

**वसन्त** पु० वस-झ । मधुमाधवात्मके ऋतुभेदे, रागभेदे च ।

**वसन्तक** पु० वसन्ते कायति कै-क । श्योनाकवृक्षे ।

**वसन्तकुसुमाकर** पु० प्रमेहरोगनाशके औषधभेदे ।

**वसन्तजा** स्त्री० वसन्ते जायते जन ड । माधवीलतायाम् ।

**वसन्ततिलक** न० चतुर्दशाक्षरपादके छन्दोभेदे ।

**वसन्तदूत** पु० वसन्तस्य दूत इव । कोकिले, आम्रवृक्षे, पञ्चमस्वरे च । माधवीलतायाम्, पाटलीवृक्षे, गणिकारिकायाञ्च स्त्री० ङीप् ।

**वसन्तद्रु** पु०वसन्तस्य प्रधान द्रु । आम्रवृक्षे। वसन्तवृक्षादयोऽप्यत्र

**वसन्तसख** पु० वसन्तस्य सखा अच् समा० । कामदेवे ।

**वसा** स्त्री० वस-अङ् । मांसजाते, देहस्थे,धातुभेदे मेदसि, मांसरोहिण्यां लतायाञ्च ।

**वसु** न० वस उ । धने, रत्ने, वृद्धौषधे, श्यामे,स्वर्णे, जले च । वकवृक्षे,सूर्ये, वह्नौ,रश्मौ, गणदेवताभेदे, अष्टसंख्यायाञ्च पु०। मधुरे शुष्के च त्रि०। दीप्तौ, वृद्धौषधौ च स्त्री० । वसुदेवताके धनिष्ठानक्षत्रे पु० ।

**वसुक** पु०वसु इव कायति कै-क । अर्कवृक्षे वकवृक्षे च ।

**वसुच्छिद्रा** स्त्री०वसुसंख्यातानि छिद्राण्यस्याः । महामेदायाम्

**वसुदेव** पु० वसुना दीव्यति दिव अच् । श्रीकृष्णजनके यादवे क्षत्रियभेदे । [सुतादयोऽप्यत्र ।

**वसुदेवभू** पु० वसुदेवात् भवति भू-क्विप् । श्रीकृष्णे वसुदेव-

**वसुधा** स्त्री० वसूनि धीयन्तेऽस्यां धा क । पृथिव्याम् ।

**वसुधारा** स्त्री० वसोर्वेदिराजस्य प्रियार्थं धारा घृतादिस्रवन्ति । माङ्गल्येषु वेदिराजवसूद्देशेन दीयमानायां घृतादिधारायाम् ।

**वसुन्धरा** स्त्री० वसूनि धारयति धृ-खच् मुम् च । पृथिव्याम्

**वसुमती** स्त्री० वसूनि सन्त्यस्यां मतुप् । पृथिव्याम् ।

**वसुहट्ट** पु० वसूनां हट्ट इव । वकवृक्षे । [अववस्तत् त

**वस्त** वधे गतौ च सक०याचने द्वि०चु०उभ०सेट् । वस्तयति ते

**वस्त** पु० वस्यते बध्यते वस्त घञ् । छागे ।

**वस्तक** न० वस्त इव कायति कै-क । कृत्रिमलवणे ।

**वस्तकर्ण** पु० वस्तस्य कर्ण इव पत्त्रमस्य । शालवृक्षे ।

**वस्तगन्धा** स्त्री० वस्तस्येव गन्धोऽस्याः । अजगन्धायाम् ।

**वस्तमोदा** स्त्री० वस्तस्येव मोदो यस्याः । अजमोदायाम् ।

**वस्ति** पु०वस्ते आच्छादयति मूत्रम् वस-तिच् । नाभेरधोभागे मूत्राधारे स्थाने,वासे च वसनदशायां स्त्री० व०स० । [अम्बष्ठवृक्षे ।

**वस्तिकर्म्माढ्य** पु० वस्तिकर्मणा तच्छोधनव्यापारेणाढ्यः ।

**वस्तिमल** न० ६त० । मूत्रे ।

**वस्तु** न० वस-तुन् । द्रव्ये । पदार्थे, सत्यपदार्थे च ।

**वस्तुक** न०वस्तु+स्वार्थे कन् । वास्तुके शाकभेदे,श्वेतवस्तोशाके च

**वस्त्य** न० वस्तौ साधु यत् । गृहे ।

**वस्त्र** न० वस-ष्ट्रन् । परिधानाद्युपयुक्ते कार्पासादौ वसने ।

**वस्त्रकुट्टिम** न० वस्त्रनिर्म्मितं कुट्टिमं यत्र। वस्त्रगृहे (ताम्बु) ।

**वस्त्रगृह** न० वस्त्रनिर्म्मितं गृहम् शाक० । (तांबु) वस्त्रनिर्म्मिते गृहे ।

**वस्त्रग्रन्थि** पु० ६त० नीव्याम् । [लिकायाम् ।

**वस्त्रपुत्तलिका** स्त्री० वस्त्रनिर्म्मिता पुत्तलिका । वस्त्रनिर्म्मितपुत्त

**वस्त्रभूषणा** स्त्री० वस्त्रस्य भूषणं यस्याः ब०ब० । मञ्जिष्ठायाम् । शाकरण्डवृक्षे पु० ।

**वस्त्ररञ्जन** पु० वस्त्रं रञ्जयति रन्ज-णिच्-ल्यु । कुसुम्भे ।

**वस्न** न०वस मन् । वेतने, द्रव्ये च । धने,त्वचि,मृत्यौ च मूल्ये पु०

**वस्नसा** स्त्री० वस्नं स्यति षो-क । स्नायौ ।

**वस्वौकसारा** स्त्री० वसूनामोकस्य सारो यत्र । इन्द्रनगर्य्याम् इन्द्रनद्यां, कुबेरपुर्य्याञ्च ।

**वह** दीप्तौ चु०उ० अक०सेट् इदित् । वंहयति ते अववंहत् ।

**वह** प्रापणे भ्वा० उ०द्विक० यजा० अनिट् । वहति ते अवाक्षीत् उवाह । [पथि, नद्ये च ।

**वह** पु० उह्यतेऽनेन वह-घञ् । वृषस्कन्धदेशे, घोटके, वायौ,

**वहल** पु० वह-अलच् । पोते, दृढे त्रि० ।

**वहलगन्ध** न० वहलो दृढो गन्धो यस्य । शम्बरचन्दने ।

**वहलचक्षुस्** पु० वहलानि चक्षूंषीव पुष्पाण्यस्य । मेषशृङ्गी (गाडरसिङ्गा) ।

**वहलत्वच** पु० वहला कठिना त्वचा यस्य । श्वेतलोध्रे ।

**वहला** स्त्री० वहलानि पुष्पादीनि सन्त्यस्याः अर्श० आद्यच् । शतपुष्पायाम् स्थूलैलायाञ्च ।

वहित्र न० वह-इत्र । पोते जलयाने । स्वार्थे कन् । अत्रैवार्थे

वहिरङ्ग न० वहिः प्रकृतेर्वाह्यमङ्गं यस्य । व्याकरणोक्ते प्रत्ययादिनिमित्तके प्रकृत्युरावयवादिकार्य्ये ।

वहिरिन्द्रिय न० वहिर्देहाद्वाह्यस्य पदार्थस्य ग्राहकमिन्द्रियम् । शब्दादिवाह्यविषयग्राहकेषु श्रोत्रादिषु ।

वहिर्मुख त्रि० वहिः वाह्यविषये मुखं प्रवणता यस्य । वाह्यविषयासक्तमनस्के विषयासक्ते जने, विमुखे च ।

वहिस् अव्य० वह-इसुन् । वाह्ये । [विभीतकवृक्षे ।

वहेडुक पु० वह-अच् वहः एडुक इव दृढ़त् काण्डो यस्य ।

वह्नि पु० वह-नि । अग्नौ, चित्रकवृक्षे, भल्लातके, निम्बूके तन्त्रोक्ते रकारे च । 'वर्गाद्यं वह्निसंस्थ'मिति श्यामास्तोत्रम् ।

वह्निकरी स्त्री० वह्निं देहस्थवह्निं करोति उद्दीपयति क-ट ङीप् । धात्री वृक्षे (धाइफुल) वह्न्युद्दीपके त्रि० ।

वह्निकाष्ठ न० वह्नेर्दाहादाहानुकूलं काष्ठम् । दाहागुरुणि ।

वह्निगन्ध पु० वह्नौ दाहकाले गन्धो यस्य । यक्षधूपे (धुना)

वह्निगर्भ पु० वह्निर्गर्भे यस्य । वंशे, शमीवृक्षे स्त्री० ।

वह्निज्वाला स्त्री० वह्नेर्ज्वालेव पीडाकारकत्वात् । धातकीवृक्षे

वह्निदीपक पु० वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप-णिच् ण्वुल् वह्निरिव दीप्यति दीप-ण्वुल् वा । कुसुम्भे अग्न्युद्दीपके त्रि० अजमोदायाम् स्त्री० ।

वह्निनी स्त्री० वह्निं नयति नी-ड गौ०ङीप् । जटामांस्याम्

वह्निपुष्प स्त्री० वह्निरिव तापकं पुष्पं यस्य । धातकीवृक्षे ।

वह्निभोग्य न०६त० । घृते । [गणिकारीवृक्षे ।

वह्निमन्थ पु० वह्नेः वह्निजननाय मथ्यतेऽसौ मन्थ-घञ् ।

वह्निमित्र पु० वह्निर्मित्रं यस्य । वायौ ६त० । तत्रैव न०

वह्निरेतस् पु० वह्नौ निषिक्तं रेतो येन । शिवे । वह्नौ हि निषिक्तात् शिववीर्य्यात् गङ्गादिसंक्रमेण कार्त्तिकेयोत्पत्तिः

वह्निलोहक न० वह्नेः प्रियं लोहं धातुः स्वार्थे कन् । कांस्ये

वह्निवधू स्त्री० ६त० । अग्निभार्य्यायां स्वाहायाम्, तदात्मके मन्त्रे च । वह्निजायादयोऽप्यत्र ।

वह्निवर्ण न० वह्नेरिव वर्णोऽस्य । रक्तोत्पले ।

वह्निवल्लभ पु० वह्नेर्वल्लभ उद्दीपकत्वात् । सर्ज्जरसे, (धुना)

वह्निवीज न० वह्नेर्देहस्थवह्नेर्वीजमिव उद्दीपकत्वात् । जीरके, वह्निदेवताके तन्त्रोक्ते रकारे च ।

वह्निशिख न० वह्नेरिव रक्ता शिखाऽस्य । कुसुम्भे । कलिहार्य्यां, धातक्याञ्च स्त्री० ।

वह्निसख पु० ६त० । वायौ । देहस्थवह्नेरुद्दीपके जीरके ।

वह्य न० वह्-यत् । शकटे, वाहनमात्रे च ।

वा सुखाप्तौ अक० गतौ सेवने च सक० चुरा० उभ० सेट् । वापयति ते अवीवपत् त ।

वा गमने हिंसने च अदा०पर०सक०अनिट् । वाति अवासीत् ।

वा अव्य० वा-का । विकल्पे, सादृश्ये, अवधारणे, समुच्चये, वितर्के, पादपूरणे च ।

वांशिक पु० वंशो तद्वादनं शिल्पमस्य ठक् । वंशीवादनशीले

वांशी स्त्री० वंशे भवः अण् ङीप् । वंशरोचनायाम् ।

वाक पु० वच-घञ् । वचने 'नमोवाकं प्रशास्महे' इत्युत्तरचरितम् ग्रन्थभेदे च 'वाकोवाक्यं तद्धासेत्यादि'च्छान्दोग्यम् । वकस्येदम् अण् । वकसम्बन्धिनि त्रि० ।

वाकुची स्त्री० वाति क्विप् वाः कुच-सङ्कोचे क गौ०ङीप्कर्म० । (हाकुच) ओषधिभेदे । [वचनयुक्ते ।

वाक्पति पु०६त० । बृहस्पतौ, वाचः प्रतिरिव । निर्दोषोक्त

वाक्पथ पु० वाचः पन्थाः विषयः अच् समा० । वाक्यविषये

वाक्पारुष्य न० वाचा पारुष्यम् । 'देशजातिकुलादीनामाक्रोशोन्यङ्गसंयुतम् । यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते' इत्युक्तलक्षणे अष्टादशविवादान्तर्गते विवादभेदे ।

वाक्य न०वच-ण्यत् चस्य कः । 'वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चय' इत्युक्ते स्वार्थबोधसमर्थे पदसमुदाये ।

वाक्ष स्पृहायां भ्वा०पर०सक०सेट् इदित् । वाङ्क्षति अवाङ्क्षीत्

वागीश पु०वाचामीशः । बृहस्पतौ 'वागीशाद्याः सुमनस' इति न्यायमाला । सरस्वत्यां स्त्री० ''वागीशा हृदये यस्ये'ति श्रीधरः ।

वागीश्वर पु०६त० । बृहस्पतौ गुरौ च तत्पत्न्यां सरस्वत्यां स्त्री० ङीप् 'वागीश्वरी ध्यातव्यातां फुल्लेन्दीवरलोचनाम् । वागीश्वरेण संयुक्ता'मिति तन्त्रम् ।

वागुजी स्त्री० वाचा गुज्यते ध्वन्यते गुज-क गौरा० ङीप् । सोमराज्याम् । [पाशादौ ।

वागुरा स्त्री० वा-हिंसने उर गुक् च । मृगार्थं मृगबन्धन-

वागुरावृत्ति पु० वागुरा मृगबन्धनपाशादिरेव वृत्तिर्जीविका यस्य । व्याधे । [व्याधे

वागुरिक पु० वागुरा प्रहरणं यस्य वागुरयाचरति वा ठक् ।

वागुम्बर पु०६त० । वाक्यक्षोभे वक्तृगुणाख्ये च ।

वाग्दण्ड पु० वाचो वागिन्द्रियस्य दण्डः संयमनम् । मिथ्याभाषणे वाक्यसंयमे च । [अनयड्रत्नाया कन्यायाम्

वाग्दत्ता स्त्री० वाचा दत्ता । विधिना वाक्यमात्रेण दत्तं

वाग्दुष्ट त्रि० वाचा दुर्वचनेन दुष्टः । पट्टेऽपि वक्तृनृयदृवच तया कथनेन दूषिते । 'वाग्दुष्टं भावदुष्टं' च वर्जयेदितिस्मृतिः

वाग्देवता स्त्री॰ वाचां देवता। सरस्वत्यां 'वाग्देवता चरितचित्रितचित्तसद्मे'ति जयदेवः। वाग्देव्यादयोऽप्यत्र।
वाग्मिन् त्रि॰ वाच्+अस्त्यर्थे ग्मिनि चस्य कः तस्य लोपः। प्रशस्तवाक्यवक्तरि। वृहस्पतौ पु॰।
वाग्यत त्रि॰ वाचि वागिन्द्रियव्यापारो यतो येन। मौने 'वाग्यतस्त्रिषवणं चरेदि'ति स्मृतिः।
वाङ्मय त्रि॰ वाक्स्वरूपम् मयट् चस्य कः। वाक्यस्वरूपे शास्त्रे
वाङ्मती स्त्री॰ 'हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाङ्मती नदी'त्युक्ते नदीभेदे। सा च मिथिलादेशस्थिलत्तया वहति
वाचंयम त्रि॰ वाचां यच्छति वाचा+यम-ख मुम् ह्रस्वः। मितभाषिणि। मौनावलम्बिनि मुनौ पु॰।
वाचक पु॰ वक्ति अभिधावृत्त्या बोधयति ण्वुल्। 'साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचक' इत्युक्ते शब्दभेदे। कथके त्रि॰। वाचयति वच-णिच्-ण्वुल्। पुराणादिपाठके त्रि॰ 'वाचकः पूजितो येनेति' पुराणम्।
वाचन न॰ वच-णिच्-स्वार्थे वा णिच् ल्युट्। पठने कथने च युच्। पठने स्त्री॰। [प्रापादौ।
वाचनिक त्रि॰ वचनेन निर्वृत्तम् ठक्। वाक्य निष्पादिते
वाचस्पति पु॰ ६त॰ अलुक् समा॰। वृहस्पतौ।
वाच्(चा) स्त्री॰ उच्यतेऽसौ अनया वा वच-क्विप् नि॰ वा टाप्। वाक्ये, वागिन्द्रिये च।
वाचाट त्रि॰ वाक्+कुत्सायां बाहुल्येऽर्थे आटच् भत्वात् न कः। कुत्सितबहुभाषिणि। आलच्। वाचालोऽप्यत्र।
वाचिक त्रि॰ वाचा कृतम् वाच्+ठक् भत्वात् न कः। वाक्यनिष्पादिते प्रापादौ। [वाक्यनैर्मल्ये च।
वाचोयुक्ति स्त्री॰ ६त॰ अलुक् स॰। वाचादर्शितयुक्तौ
वाच्य न॰ वच-भावे ण्यत् न कः। दूषणे, प्रतिपादने, कथने च। कर्मणि ण्यत्। दूष्ये, प्रतिपाद्ये, अभिधया बोध्यार्थे च।
वाञ्छ कामे भ्वा॰पर॰सक॰सेट् इदित्। वाञ्छति अवाञ्छीत्।
वाज न॰वज-घञ्। अन्ने घृते, जले, यज्ञे च। शरपक्षे, वेगे च पु॰
वाजपेय पु॰न॰ वाजमन्नं घृतं वा पेयमत्र। यागभेदे।
वाजपेयिन् पु॰ वाजपेय+अस्त्यर्थे इनि। वाजपेययागकर्त्तरि उपचारात् तद्यज्ञे च।
वाजसनेयिन् पु॰ वाजसनेय' अध्येतृत्वेनास्त्यस्य इनि। यजुर्वेद शाखाभेदाध्यायिनि विप्रादौ। तदुक्तरीत्या कर्माई शूद्रे च 'शूद्रा वाजसनेयिनः इति स्मृति। [इन् तत्रैव।
वाजिदन्त पु॰ वाजिनां दन्त इव पुष्पमस्य। वासके। स्वार्थे
वाजिन् पु॰ वाजः वेगः पक्षो वा अस्त्यस्य इनि। घोटके, वाणे, वासके च वेगवति त्रि॰। स्त्रियां ङीप्। सा च अश्वगन्धायाञ्च
वाजिन न॰ वाजिभ्योदेयम् अण्। आमिक्षानि'स्तजले 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'ति, श्रुतिः।
वाजिदष्ट पु॰ वाजिन इव दष्टमस्य। अश्वगन्धे।
वाजिभक्ष पु॰ भक्ष्यते भक्ष-कर्मणि घञ् ६त॰। चणके।
वाजिभोजन पु॰ वाजिभिर्भुज्यते भुज-कर्मणि ल्युट्। मुद्गे
वाजीकरण न॰ अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ-ल्युट्। 'यद्द्रव्यं पुरुषं कुर्यात् वाजिवत् सुरतक्षमम्। तद्वाजीकरणं ख्यातमि'त्युक्ते वीर्यवृद्धिकारके औषधभेदे
वाञ्छा स्त्री॰ वाछि-अ। इच्छायाम् इष्टसाधनताधीजन्येऽभीष्टविषये चित्तवृत्तिभेदे। [वास्तुभूमौ स्त्री॰
वाट पु॰ वट-घञ्। पथि, स्थाने, प्रतिस्थाने च। गौ॰ ङीष्।
वाटिका स्त्री॰वट-ण्वुल्। वास्तुभूमौ (बेड़ियाला) क्षुपे, हिङ्गुपत्राञ्च। [क्षुपभेदे।
वाट्या स्त्री॰ वाटे हिता तत्र साधुर्वा यत्। (बेड़ियाला)
वाट्यालक पु॰ वाटीमलति भूषयति अल-अण्। (बेड़ियाला) क्षुपभेदे गौरा॰ ङीष्। तत्रैव स्त्री॰। ण्वुल्। तत्रैवार्थे पु॰
वाड आप्लावे भ्वा॰आ॰अ॰सेट् चङि न ह्रस्वः। वाडते अवाडिष्ट
वाडवेय पु॰वड़वायां भवः ढक्। वृषदृष्टे अश्वोद्भवजेऽनले।
वाढ न॰ वह-क्त नि॰। अतिशये,तद्युक्ते त्रि॰। पु॰ मान्तत्वम्। प्रतिज्ञायां, स्वीकारे च अव्य॰।
वाण पु॰वण-घञ्। शरे, गवां स्तने, दैत्यभेदे, केवले,वृक्षे, कायस्थावयवे, भट्टभेदे, कादम्बरीग्रन्थकारके-कविभेदे च 'पञ्च वाणस्तु वाण'इति प्रसन्नराघवम्। नीलझिण्टरा पु॰स्त्री॰
वाणपुर न॰ ६त॰। शोणितपुरे कोट्टरीपुराख्ये पुरभेदे।
वाणवार पु॰ वाणं शरसञ्चारं वारयति पु॰ वृ-अण्। योधादेर्योद्धाकारे सन्नाहे कवचे।
वाणहन् पु॰ वाणं हतवान् हन-ताड़ने भूते क्विप्। श्रीकृष्णे वाणजिदादयोऽप्यत्र। [ङीप्। वाक्ये, तद्देवतायाञ्च
वाणि स्त्री॰ वण-इण् वा ङीप्। वयने, वाणदण्डे, वेतनि,
वात गतौ सेवायां वशीकरणे च चक॰ अद॰चु॰उभ॰ सेट्। वातयति ते अववातत् त।
वात पु॰ वा-क्त। स्पर्शमात्रविशेषगुणके भूतभेदे पवने, देहस्थे धातुभेदे च। गन्धादि त्रि॰। आर्त्ते, इष्टवादके च 'प्रभात वाताहतीति भट्टि।
वातक पु॰वात इव चञ्चलः इवार्थे कन्। अश्मपर्ण्याम् आरे च
वातकिन् त्रि॰ वातोऽस्त्यस्य इनि कुक् च। वातरोगयुक्ते।

वातकेतु पु० ६त० । धूलौ रजसि ।
वातघ्नी स्त्री० वातं रोगभेदं हन्ति हन-टक् ङीप् । शालपर्ण्याम् (शालपानि) अश्वगन्धायां, शिमड़ीक्षुपे च । [ष्टन्नै
वातध्वज पु० ६त० । मेघे ।
वातपोथ पु वातं रोगभेदं पुथ्यति हिनस्ति पुथ-अण् । पलाश
वातप्रमी स्त्री० वातं प्रमिमीते प्र+मा- ई किञ्च । शीघ्रगे मृगे
वातमज पु० वातमनुलक्ष्य अजति अज-अच् व्यभावः । मृगभेदे।
वातमृग पु० वातानुगो मृग शाक० । शीघ्रगे मृगभेदे ।
वातरक्त न० वातज दुष्टं रक्तम् रुधिरं यत्र । रोगभेदे ।
वातरक्तघ्न पु० वातजरक्तं रोगभेदं हन्ति ठक् । कुकुरद्रुमे (कुकुरसोङा) ।
वातरक्तारि पु०६त० । (गुलुञ्च) ख्यातायां लतायाम् ।[ष्टन्नै ।
वातरङ्ग पु० वातस्येव सततं रङ्गश्चलनमस्य । चलदले अश्वत्थ
वातरायण पु० वा क्त ततश्चरण् वातरमयनं यस्य चलम् । उन्मत्ते,प्रयोजनशून्ये पुरुषे, काण्डे, करपाले, कूटे, सरलद्रुमे च
वातरूप पु०वातेन रूप्यते रूप-घञ् । वातूले, उत्कोचे, इन्द्रचापे च । [द्रव्ये त्रि० ।
वातल पु० वातं रोगभेदं लाति ला-क । चणके । वायुकारके
वातव्याधि पु० वातेन कायस्य धातुभेदेन जनितो व्याधिः शाक० । वातरोगे । [फलद्रुमे ।
वाताद पु० वाताय वातनिवृत्तये अद्यतेऽसौ अद-घञ् (बादाम)
वातापि पु० अगस्त्यनाशितेऽसुरभेदे । 'वातापिर्भक्षितो येन वातापिश्च महाबलः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु इति भोजनान्ते पाठमन्त्रः । [अगस्त्ये मुनौ ।
वातापिसूदन पु० वातापिं सूदयति हिनस्ति सूद-ल्यु ।
वातामोदा स्त्री० वातेनामोदो यस्याः । कस्तूर्याम् ।
वातायन न० वातस्यायनं गतिर्येन । गवाक्षे वातस्येव शीघ्रमयनं गतिरस्य । अश्वे पु० ।
वाताय पु० वातमयते अय-उण् । हरिणे ।
वातारि पु० वातस्य रोगभेदस्यारि । एरण्डवृक्षे, यवमूल्यां, शेफालिकायां, यवान्यां, भार्ग्यां, स्नुह्यां, विड़ङ्गे, सूरणे, भल्लातके, जतुकायाञ्च ।
वाताश्व पु० वात इव शीघ्रगोऽश्वः । प्राजानेये अश्वोत्तमे ।
वाति पु० वा-क्तिच् । वायौ ।
वातिक पु०वातादागत ठक् । देहस्य वायुधातुजन्ये रोगभेदे ।
वातिग पु० वातिं वायुं गच्छति गम-ड । वार्त्ताकौ गम-अच् वातिगमोऽप्यत्र । [छम् च । वार्त्ताकौ ।
वातिङ्गण पु० वाति देहस्थवातं रोगात् गमयति गम-खच् ।
वातीय न० वाताय वातनिवृत्तये हितः छ । काञ्जिके ।
वातुल पु० वातानां समूहः उलच् । वातसमूहे ।
वातूल त्रि० वात+अस्त्यर्थे ऊलच् । वातरोगयुक्ते उन्मत्ते समूहार्थे ऊलच् वातसमूहे पु० । [नोनः । वायुहीने त्रि०
वातोना स्त्री० वातमूनयति ऊन-अण् । गोजिह्वाक्षुपे वाते-
वात्या स्त्री० वातानां समूहः यत् । वातसमूहे 'जितश्च वात्यामयचक्रे'ति नैषधम् ।
वात्सक न० वत्सानां समूहः वुञ् । वत्ससंघे ।
वात्सल्य न० वत्सलस्य भावः ष्यञ् । पुत्रादिस्नेहात्मगुणे रसभेदे
वात्स्य पु० वत्सस्यापत्यं यञ् । गोत्रप्रवर्त्तके मुनिभेदे ।
वात्स्यायन पु० वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततोयुनि फक्। वत्सगोत्रोत्पन्ने न्यायसूत्रभाष्यकारके पक्षिलस्वामिमुनौ
वाद पु० वद-घञ् । तत्त्वबुभुत्सया कथने, 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद' इति गौतमोक्ते विचारात्मके वाक्यभेदे च ।
वादन न०वद-णिच्-कर्मणि ल्युट् । मृदङ्गादिवाद्ये। भावे ल्युट्। मृदङ्गादिताडनरूपे व्यापारे । [निर्मिते वस्त्रादौ ।
वादर न० वदरायाः कार्पास्याः विकारः अण् । कार्पाससूत्र-
वादरङ्ग पु० वादरं वदरासंबन्धिपत्रादिसादृश्यं गच्छति गम खच् डिच्च । अश्वत्थवृक्षे ।
वादरत त्रि० वादे विवादे रतः रम-क्त । 'अनुदिनविवादशीले'
वादरा स्त्री० वातं वायु राति ददाति रा-क ष्ट० तस्य दः । कार्पास्याम् ।
वादरायण पु० वदरीप्रधानं स्थानं वादरं वदयनं स्थानं यस्य । नित्यं वदरिकाश्रमवासिनि वेदव्यासे । स्वार्थे इञ् । वादरायणिरप्यत्र । अपत्ये इञ् । व्यासपुत्रे शुकदेवे ।
वादल न०वातं लाति गृह्णाति ला क ष्ट० तस्य दः । मधुयष्टौ
वादाम न० वातमभति हिनस्ति अम-अण् ष्ट० तस्य मः । स्वनामख्याते फलभेदे ।
वादित न०वद-णिच्-क्त । मृदङ्गादिवाद्ये।
वादिन् त्रि० वदति वद-णिनि। वक्तरि-अर्थिनि,विवादकर्त्तरि, विचारस्थले प्रथमपक्षप्रतिपादके च ।
वाद्य न० वद-णिच्-यत् । वादनीये मृदङ्गादौ ।
वाद्यभाण्ड न०कर्म०। वादनीयपात्रे । [णिच्।पक्षे न गुणः
वा(बा)ध विघाते भ्वा०आत्म०सक० सेट् । वा(बा)धते अवा(बा)-
वा(बा)ध पु० वा(बा)ध-घञ् । प्रतिरोधे, प्रतिबन्धे, न्यायोक्ते साध्याभाववत्वेन ज्ञाने, अवा(बा)धाप्यत्र, पीडायाञ्च स्त्री० ल्युट् । वा(बा)धनमप्यत्रार्थे न०।

वृ-णिच्-णिनि । वायुसञ्चारिण्यां देहस्थशिरायाम् ।

**वायुसख** पु० वायोः सखा सहचरः अच् समा० । अग्नौ ।

**वायुसखि** पु० वायुः सखा यस्य । अग्नौ ।

**वाय्वास्पद** न० ६त० । वायुसञ्चारस्थाने आकाशे ।

**वार्** न० पु० वृ-क्विप् । जले ।

**वार** पु० वृ-घञ् । सङ्घे अवसरे स्वयोग्यकाले (पाला) 'वारोऽङ्गराजस्य पुरि'ति मा० १५० द्वारे, शिवे, कुब्जवृक्षे, क्षणे सूर्यादिग्रहाणां अधिकृते दिने, यथा रविवारः रविस्वामिकं दिनम् इत्यादि । मद्यपात्रे च ।

**वारक** त्रि० वारयति वृ-णिच्-ण्वुल् । प्रवृत्तिनिरोधके । अश्वगतिभेदे, अश्वविशेषे च पु० ।

**वारण** न० वृ-णिच् ल्युट् । प्रवृत्तिप्रतिरोधे, निषेधे हस्त्यादिधारणे च । गजे पुं० । वाणवारे कवचे पु० न० ।

**वारणबुषा(सा)** स्त्री० वारणं पुष्णाति पुष-क ष० । कदल्याम्

**वारणवल्लभा** स्त्री० ६त० । कदल्याम् ।

**वारटपा** स्त्री० वारं जलं वर्त्यात्र टप-क । भान्ये । [वेश्यायाम्

**वारमुख्या** स्त्री० वारे वेश्यावृन्दे मुख्या । बहुजनसत्कृतायां

**वारंवारम्** अव्य० वृ-णमुल् द्वित्वम् । पौनःपुन्ये ।

**वारलीक** पु० वाः जलं अलीकं यत्र । (वागुइ तुलसी) द्रुमे ।

**वारयितृ** पु० वृ० वृ-तृच् । पत्यौ । वारणकर्त्तरि त्रि० ।

**वारयोषा** स्त्री० वारस्य जनसमूहस्य योषा साधारणत्वात् । वेश्यायाम् । ६त० । वारवध्वादयोऽप्यत्र ।

**वारवाण** पु० न० वार्य्यते वृ-घञ् वारो वार्य्यो वाणो यस्य । कवचे

**वारवाणि** स्त्री० वारं समूहं वणते वण इण् वा ङीप् । वेश्यायाम्

**वाराणिधि** स्त्री० वारां जलराशीनां निधिराधारः नि+धा-कि अलुक् समा० । समुद्रे ।

**वाराणसी** स्त्री० वरणा च असी च सीमात्वेनास्त्यस्या अण् पृ० । काशीनगरे वराणस्यप्यत्र ।

**वाराह** पु० वराहस्येदं प्रियत्वात् अण् । महापिण्डीतक वृक्षे वराहसम्बन्धिनि त्रि० । [ङीप् । अश्वगन्धायाम् ।

**वाराहकर्णी** स्त्री० वराहस्येव वाराहस्य कर्णः पत्रमस्याः

**वाराहपत्री** स्त्री० वाराहस्य कर्णः इव पत्रमस्याः ङीप् । अश्वगन्धायाम् ।

**वाराहाङ्गी** स्त्री० वाराहमिवाङ्गमस्याः ङीप् । दन्तीवृक्षे ।

**वाराही** स्त्री० वराहस्येयम् ङीप् । अष्टमातृकामध्ये वराहशक्तौ, 'वाराही नारसिंही चे'ति स्मार्त्तमातरः । वराहक्रान्तायाम् वराहयोषिति च ।

**वारि** न० वृ-इञ् । जले, ह्रीवेरे च । वार्य्यतेऽनया वृ-णिच्-इञ् वा ङीप् । गजबन्धन्याम् 'वार्य्यर्गलाभङ्ग इव प्रवृत्त' इति रघुः । वाचिसरस्वत्याम् च स्त्री ।

**वारिकण्टक** पु० न० वारिणः कण्टक इव । शृङ्गाटके ।

**वारिकर्णी** स्त्री० वारिणि कर्ण इव पत्रमस्याः ङीप् । कुम्भ्याम् (पाना) स्वार्थे कन् । तत्रैव । [स्वार्थे कन् । तत्रैव ।

**वारिकुब्ज** पु० वारिणि कुब्ज इव वक्राकृतित्वात् । शृङ्गाटके

**वारिचत्वर** पु० वार्य्येव चत्वररूपमस्याधारत्वात् । कुम्भिकायाम्

**वारिचर** पु० वारिषु चरति चर-अच् । मत्स्ये जलचरजन्तुमात्रे त्रि० । [त्वात् शैवाले

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुपुञ्जाकृति-

**वारिज** न० वारिणि जायते जन-ड । पद्मे, लवङ्गे, गौरसुवर्णे, लवणभेदे च । शङ्खे, शम्बूके च पु० । [च

**वारितस्कर** पु० वारिणस्तस्कर इवापहारकत्वात् । सूर्य्ये, मेघे

**वारित्रा** स्त्री० वारिणस्त्रायते त्रै-क । छत्रे । [त्रि०

**वारिद** न० वारि ददाति दा-क । मेघे, मुस्तके च । जलदातरि

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा-कि ६त० । समुद्रे वारिनिध्यादयोऽप्यत्र । [(पाना)

**वारिपर्णी** स्त्री० वारिणि पर्णान्यस्याः ङीप् । कुम्भिकायाम्

**वारिपालिका** स्त्री० वारीणि पालयति आवृणोति पाल-ण्वुल् । कुम्भिकायाम् (पाना) । [कायाम् (पाना) ।

**वारिपृश्नी** स्त्री० वारिणि पृश्निः पर्णमस्याः ङीप् । कुम्भि-

**वारिबदरा** स्त्री० वारिसमीपभवा बदरेव । प्राचीनामलके ।

**वारिबालक** न० वारिणो बालक इव । ह्रीवेरे

**वारिभव** न० वारिणो भवति प्रभवति भू-अच् । स्रोतोञ्जने ।

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य । मेघे

**वारिमूली** स्त्री० वारिणि मूलमस्याः ङीप् । कुम्भ्याम् (पाना)

**वारिरथ** पु० वारिणि रथ इव गमनसाधनम् । भेलके ।

**वारिराशि** पु० वारीणां राशयोऽत्र । समुद्रे । [त्रि०

**वारिरुह** न० वारिणि रोहति रुह क । पद्मे, जलजातमात्रे

**वारिवदन** न० वारियुक्तं वदनं यस्मात् । प्राचीनामलके तत्सेवने हि मुखे वारिनिस्रावः ।

**वारिवर** न० वारि वृणोति वृ-अच् । करमर्दके । [बदर्य्याम् ।

**वारिवल्लभा** स्त्री० वारि वल्लभमस्याः जलसिक्तत्वात् ।

**वारिवाह** पु० वारीणि वहति वह-अण् । मेघे ।

**वारिश** पु० वारिणि समुद्रमध्ये शेते शी-ड । विष्णौ ।

**वारीश** पु० ६त० । समुद्रे, वरुणे च । वारिनाथादयोऽप्यत्र ।

**वारुण** न० वरुणस्येदम् अण् । जले, वरुणसम्बन्धिनि त्रि० ।

**वारुणि** पु० वरुणस्यापत्यम् इञ् । अगस्त्यमुनौ कुम्भजात-

त्वात् मैत्रावरुणापत्यत्वाच्च तथात्वम् ।

वारुणी स्त्री० वरुणोदेवतास्य वरुणस्येदं वा अण् ङीप् । पश्चिमदिशि, मदिरायाम्, शतभिषानक्षत्रे, दूर्वायां, 'गण्डदूर्वायाम्, इन्द्रवारुण्यां, शतभिषानक्षत्रयुक्तचैत्र-कृष्णत्रयोदश्यां, वरुणस्त्रियाञ्च ।

वारेन्द्री स्त्री देशभेदे, (वारेन्द्रभूमि) (राजसाही)वङ्गदेशप्रदेशे

वार्त्त न० वृत्ति+अण् । आरोग्ये । निरामये, वृत्तिशीले च त्रि० । दुर्गायां,कृषिकर्मणि,वृत्तौ, जनश्रुतौ, वृत्तान्ते,काल-कर्तृके भूतनाशने च स्त्री० 'अस्मिन् महामोहमये कटाहे सूर्य्याग्निना रात्रिदिनेन्धनेन । मासर्तुदर्व्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता इति भारतम् ।

वार्त्ताक पु० वार्त्तमारोग्यमाकयति गमयति अक-णिच्-अण् । वार्त्ताकौ । स्त्रियामपि तत्पक्षे ङीप् । वृ० उक्तम् वार्त्ता कुरथल स्त्री० 'वार्त्ताकुरथा गुणसप्तयुक्ते'ति वैद्यकम् ।

वार्त्तावह पु० वार्त्तामावहति आ+वह-अण् । कृषिवाणिज्या जीविनि वणिग्भेदे । वृत्तान्तवाहके त्रि० ।

वार्त्तिक न० वृत्तिग्रन्थेषु कृतो ग्रन्थ ठक् । 'उक्तानुक्तदुरुक्तार्थ व्यक्तकारि तु वार्त्तिक'मित्युक्ते सूत्राद्युक्ताद्यर्थाविष्कारके ग्रन्थभेदे ।

वार्द्दर न० वारि जलाय दीर्यते दृ-अप् । दक्षिणावर्त्तशङ्खे, काकचिञ्चायाम्, कृष्णनाबीजे, कृमिजे, आम्रबीजे च । वारेः दरम् । जले । [समूहे वृद्धस्य भावे कर्म्मणि च ।

वार्द्धक न० वृद्धानां समूहः तस्य भाव कर्म्म वा वुञ् । वृद्ध

वार्द्धक्य न० वृद्धस्य भाव' कर्म वा ष्यञ् कुक् च । वृद्धत्वे ।

वार्द्धि पु० वारि जलानि धीयन्तेऽत्र धा-कि उप० । समुद्रे ।

वार्द्धिभव न० वार्द्धौ समुद्रे भवति भू-अच् । सामुद्रलवणे ।

वार्द्धुषि पु० वृद्ध्या जीवति इण् वृद्धेर्वृधुषिभाव । वृद्ध्याजीवे । स्वार्थे कन् । तत्रैव । [वृद्ध्याजीविनि

वार्द्धुषिन् त्रि०वृद्धि+अस्त्यर्थे इनि प्रकृतेः नि० वार्धुषिभाव ।

वार्द्धेय न०वार्द्धुषेर्भाव' ष्यञ् । धान्यादेवर्द्धनोपाये (बाड़िदेया)

वार्ध्रीणस पु० वारि जलानि धयति धा-क्विप् वार्ध्री नसा नासिका यस्य णत्वम् वृ० । गण्डके । वृ० वार्ध्रीणस' । 'त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणस' प्रोच्यतेऽसौ' इत्युक्ते पशुभेदे 'वार्ध्रीणसस्य मांसेन तृप्तिर्द्वा-दशवार्षिकी'ति मनु' ।

वार्म्मण न० वर्म्मणां समूह' अण् न टिलोपः । कवचसमूहे ।

वार्म्मिण न० वर्म्मिणां समूह' अण् न टिलोपः । कवचिसमूहे

वार्मुच् पु० वारि जलानि मुञ्चति मुच-क्विप् । मेघे ।

वार्षिक त्रि० वर्षे वर्षासु वा भव' ठञ् । वत्सरभवे,वर्षाकालभवे च । त्रायमाणालतायां न० स्त्री० स्त्रीत्वे ङीप् । वर्षक-र्त्तव्यायां पूजायां स्त्री० ङीप् । 'शरत्काले महापूजा क्रियते या च वार्षिकी'ति चण्डी ।

वार्हत न० वृहत्या फलम् अण् तस्य न लुप् । वृहतीफले ।

वार्हद्रथ(थि) पु० वृहद्रथस्यापत्यमण्, इञ् वा । वृहद्रथराज पुत्रे जरासन्धे न्पे ।

वार्हस्पत्य न० वृहस्पतिना प्रोक्तमधीते अञ् । चार्व्वाके । तेन प्रोक्तं तस्येदं वा अञ् । नीतिशास्त्रे, बौद्धागमे च वृहस्पति सम्बन्धिनि त्रि० । [द्वितीये करणे ।

वालव पु० वल-घञ् व.लयलनमस्त्यस्मिन् व । तिथ्यर्द्धात्मके

वाल्क न० वल्केन निर्वृत्तमण् । वल्कजाते वस्त्रे । [मुनिभेदे

वाल्मिकि पु० वल्मिके भवः इञ् । रामायणग्रन्थकर्त्तरि

वाल्मीक(कि) पु० वल्मीके भव' अण् इञ् वा । मुनिभेदे ।

वावदूक त्रि० वद यङ् लुक्-ऊकञ् । वहुवदनशीले वक्तरि

वावय पु० वय-यङ्लुक् अच् । (बावुइ) तुलसीभेदे ।

वावृत संभक्तौ दि०आत्म०सक०सेट् द्वावेट् । वावृत्यते अवा-वर्त्तिष्ट । 'ततो वावृत्यमाना से'ति भट्टि ।

वावृत्त त्रि० वावृत-क्त । कृतवरणे ।

वाश तिरश्चा शब्दे अक०आह्वाने सक०दि० आत्म० सेट् चङि न ह्रस्वः ।वाश्यते अवाशिष्ट ।'उद्वाश्यमानः पितर'मिति भट्टि

वाशा स्त्री०वां गतिं श्यति शो-क । वासके । स्वार्थे कन् तत्रैव

वाशित न० वाश-भावे क्त । तिरश्चां शब्दे, आह्वाने च ।

वाशिता स्त्री० वाश-क्त । करिण्याम्, स्त्रीमात्रे च ।

वाशि(सि)ष्ठ न० वशि(सि)ष्ठस्येदम् अण् तेन प्रोक्तं वा अण् । वशिष्ठप्रणीते उपपुराणभेदे, योगशास्त्रभेदे च । वशि(सि)ष्ठसम्बन्धिनि त्रि० । गोमत्यां नद्यां स्त्री० ङीप् ।

वाश्र न० वाश-रक् । गृहे, चतुष्पथे च । दिवसे पु० ।

वाष्प(स्प) पु० वा-प पु(षु)क् च । ऊष्मणि, लौहे, नेत्रजले च संज्ञायां कन् । मारिषशाके (नटिया) हिङ्गुपत्र्यां स्त्री० वा गौ०ङीप् । वाष्पी(स्पी)+कन् । वाष्पि(स्पि)कायत्र । 'न

वास सुरभीकरणे अ०चु०उ०सक०सेट् । वासयति ते अववासत्-

वास पु० वस-घञ् । गृहे वस्त्रे अवस्थाने, वास-अच् । वासके, सुगन्धे च । [वासक' कासनाशक' इति वैद्यकम् ।

वासक पु० वास-ण्वुल् । स्वनामख्याते वृक्षे 'देन तत्र प्रकारेण

वासकसज्जा स्त्री० 'कुरुते मण्डनं या तु सज्जिते वासवेश्म नि । सा तु वासकसज्जा स्यादि'त्युक्तलक्षणे नायिकाभेदे वासवज्जायत ।

वासगृह न० वासयोग्यं गृहम् । मध्यगृहे ।

वासतेयी स्त्री०वसतये हिता ढक् । रात्रौ । वसतियोग्ये त्रि० 'वनेषु वासतेयेष्वि'ति भट्टिः ।

वासन न० वास-ल्युट् । सुरभीकरणे धूपने, वारिधान्याम्, वस्त्रे, वासस्थाने, ज्ञाने च वस णिच् ल्युट् । निक्षेपाधारे, निक्षेपार्थे मुद्राङ्किते च । [सुरभीकरणे च

वासना स्त्री०वास-युच् प्रत्याशायां ज्ञाने, स्मृतिहेतौ, संस्कारे,

वासन्त पु० वसन्तस्येदम् वसन्ते भव वा अण् । वसन्तप्रिये-उष्ट्रे, कोकिले च । वसन्तभवे-मलयवायौ उष्ट्रे, कृष्णमुद्गे मदनवृक्षे च । तत्कालभवे त्रि० । यूथ्या माधवीलतायां, पाटलायां नवमल्लिकायां, तत्कालेपूज्यायां-दुर्गायाञ्च स्त्री०

वासयोग पु० वासेन गन्धेन योगोऽत्र । (आविर) चूर्णभेदे

वासर पु०न० । वस-अरट् । दिवसे । नागभेदे पु० ।

वासव पु० वसुरेव स्वार्थेऽण् वसूनि सन्त्यस्य वा अण् । इन्द्रे वसोरपत्यं स्त्री अण् ङीप् । व्यासमातरि मत्स्यायाम् स्त्री० ।

वासवदत्ता स्त्री० वासवदत्तामधिकृत्य कृतो ग्रन्था० अण् आख्यायिकायां तस्य लुक् । वासवदत्ताचरिताख्यापके ग्रन्थभेदे । ३त० इन्द्रदत्ते त्रि० ।

वासस् न० वस-असि । वस्त्रे ।

वासागार न० वासयोग्यमगारम् । वासयोग्ये गृहे गृहमध्ये

वासि(सी) स्त्री० वस-इञ् वा ङीप् । कुठारभेदे (वाइस)

वासित त्रि० वास-क्त । सुरभीकृते ।

वासिनी स्त्री० वासोऽस्त्यस्या इनि । शुक्लझिण्ट्याम् ।

वासु पु० वस-उण् । विष्णौ ।

वासुकि पु० वसुना रत्नेन कायति कै-क वसुकस्तस्य इञ् । सर्पराजे 'भगिनी वासुकेस्त्वं'ति मनसास्तोत्रम् ।

वासुदेव पु० वसुदेवस्यापत्यम् अण् । विष्णौ ।

वासुदेवप्रियङ्करी स्त्री० ६त० । शतावर्य्याम्, श्रीकृष्णप्रियकारित्वात् तथात्वम् ।

वासू स्त्री० वास-ऊ । नाट्योक्तौ बालायाम् ।

वास्तव न० वस्तोरण् । वस्तुगत पदार्थे । [पदार्थे ।

वास्तविक त्रि० वस्तौ निर्वृत्तम् ठञ् । सत सिद्धे वस्तुगत

वास्तव्य त्रि० वसति वस-तव्य णित् । वासकर्त्तरि, वासयोग्ये स्थाने, वसतौ च पु० । [स्वार्थे कन् । शाकभेदे ।

वास्तु पु० वस-तुण् । वासयोग्यभूमौ, स्वनामख्यात शाके च ।

वास्तुक न० वास्तु कन् पु० दीर्घ । वास्तुकाख्ये शिल्लीशाके स्त्री० गौरा० ङीष् ।

वास्तेय त्रि० वस्तेरिदम् वसये हितं वा ढक् । वस्तिसम्बन्धिनि वासयोग्ये च ।

वास्तोष्पति पु०६त० अलुक्समा० । इन्द्रे, वास्तुभूमिपतौ च ।

वास्त्र पु० वस्त्रेणावृतो रथः अण् । वस्त्रेण सम्यगावृते रथे ।

वास्येय पु० वास्याय हितं ढक् । नागकेसरे ।

वाह यत्ने भ्वा०आ०सक०सेट् चङि न ह्रस्व । वाहते अववाहत्

वाह पु० उह्यतेऽनेन अश्वादिना वा वह-घञ् । अश्वे 'वाहोभारचतुष्टयमि'त्युक्ते परिमाणभेदे च । [द्वयोस्तत्र

वाहद्विषत् पु०वाहं द्वेष्टि द्विष शतृ ६त० । महिषे वाहरिपु-

वाहन न० वाहयत्यनेन वह-णिच्-ल्युट् । रथादौ याने ।

वाहस पु० वाह गतिं स्यति षो-क । अजगरे, सुनिषण्णके (सुषनि) शाके च । [ट० । गजकुम्भस्याधोभागे ।

वाहित्थ न० वहतीति णिनि वाही-तस्मिन् तिष्ठति स्था-क

वाहिनी स्त्री० वाहोऽस्त्यस्या इनि ङीप् । सेनायां, वहति वह-णिनि । नद्याम् 'वाहिन्य पार्श्वमेता न जहतीति काव्यप्रकाश ।

वाहिनीपति पु० ६त० । सेनापतौ, समुद्रे च ।

वाहीक पु० वह-ईकण् । जातिभेदे (जाट) । गौर्वाहीक इति अलङ्कार । देशभेदे च ।

वाहु पु० वह-उण् । भुजे अवयवभेदे, अङ्गुमात्मोक्ते चैत्र व्यवहारे भुजाकारे रेखाभेदे च ।

वाहुमूल न० ६त० । भुजद्वयस्य मध्ये कक्षरूपे अङ्गे ।

वाहुवार पु० वाहुं वारयति वृ-णिच्-अण् । श्लेष्मातकवृक्षे

वाह्य न० वाहं वाहनमर्हति यत्,वह-ण्यत् वा । अश्वादौ याने, वानरे च । वहिर्भवः ष्यञ् टिलोप । वहिर्भवे त्रि० ।

वाह्येन्द्रिय न० वाह्यपदार्थानां शब्दादीनां ग्रहणयोग्यमिन्द्रियम् । शब्दादिग्राहके श्रोत्रादौ इन्द्रिये ।

वाह्लि(ह्ली)क पु० । वह-क्लिण् स्वार्थे कन् । देशभेदे । तद्देशजाते-कुङ्कुमे, हिङ्गुनि न० ।

वि अव्य०वा-कि । नियोगे, विशेषे- निश्चये, असहने, निग्रहे, हेतौ, अव्याप्तौ, ईषदर्थे, परिभवे, शुद्धौ,अवलम्बने,ज्ञाने, गतौ, आलस्ये, पालने च । विहगे पु० । [पूर्यते तस्मिन्

विंश त्रि० विंशतेः पूरणः विंशति+डट् । येन विंशतिसङ्ख्या

विंशक न० विंशतेरवयवः कुन् । विंशतिसंख्यायाम् । विंशतिरधिका दीयतेऽस्मिन् शते आयो लाभो वृद्धिर्वा-कुन् । प्रतिशत विंशत्यधिकलाभादौ 'वाममृगा विंशं शतमिति श्रुतिः ।

विंशति स्त्री० द्वे दशतौ नि० । द्विदशकसंख्यायां, तत्सङ्ख्यायुक्ते च

विगीत त्रि० वि+गै-क्त । निन्दिते ।
विगीति स्त्री० वि+गै-क्तिन् । निन्दायाम् ।
विगुण त्रि० विरुद्धो गुणोऽस्य । गुणरहिते ।
विगूढ त्रि० वि+गुह-क्त । गर्हिते, गुप्ते च । [वाक्यस्थे पदे च
विगृहीत त्रि० वि+ग्रह-क्त । गृहीते, व्याकरणोक्ते विग्रह-
विग्र त्रि० विगता नासिकाऽस्य ग्रादेशः । विगतनासिके ।
विग्रह पु० वि+ग्रह-अच् । देहे, विभागे, युद्धे, समासादिवृत्ति
समानार्थकवाक्यभेदे, विशेषज्ञाने च । [त्मके काले ।
विघटिका स्त्री० विभागः घटिकायाः । घटिकाषष्ठिभागे पला-
विघटित त्रि० वि+घट-क्त । वियोजिते विशेषेण रचिते च ।
विघट्टित त्रि० वि+घट्ट-क्त । चालिते, वियोजिते च ।
विघस पु० वि+अद-घञ् । भोजनशेषे, आहारे च सिक्थके न०
विघसाशिन् त्रि० विघसं देवतादिदत्तावशेषमश्नाति अश-
णिनि । देवपैत्रकार्य्यानन्तरं तदवशिष्टभोजिनि ।
विघात पु० वि+हन-क्त । व्याघाते, आघाते च ।
विघातिन् त्रि० वि+हन-णिनुण् । निवारके । नाशके, नष्टे च
'नित्यत्वार्थं मनु निमित्तो विघाती'ति व्याकरणम् । ण्वुल् ।
विघातकोऽप्यत्र ।
विघ्न पु० वि+हन-क । व्याघाते अन्तराये, कृष्णपाकफलायाञ्च
विघ्ननाशक पु० ६त० । गणेशे विघ्नविनाशनादयोऽप्यत्र ।
विघ्नराज पु० विघ्ने राजते अच् । गणेशे । विघ्नेशादयोऽप्यत्र
विघ्नहारिन् पु० विघ्नं हरति हृ-णिनि । गणेशे ।
विघ्नित त्रि० विघ्नो जातोऽस्य इतच् । जातविघ्ने ।
विघ्नेशानकान्ता स्त्री० ६त० । श्वेतदूर्व्वायाम् ।
विच पृथक्करणे रु०जु०च उ०अक०अनिट् । विनक्ति विवेक्ति
विङ्क्ते विविक्ते । अविचत् अवैक्षीत् ।
विचकिल पु० विच+क किल-क कर्म्म० । मदनवृक्षे ।
विचक्षण पु० वि+चक्ष-ल्यु । पण्डिते नागदन्त्यां, स्त्री०टाप्
विचयन न० वि-चि-ल्युट् । अन्वेषणे, पुष्पादिचयने च ।
विचर्चिका स्त्री० वि+चर्च ण्वुल् । पामनि रोगभेदे ।
विचार पु० वि+चर-घञ् । तत्त्वनिर्णये, तदनुगुणे वाक्यसमूहे च
विचारण न० वि+चर-णिच्-ल्युट् । मीमांसायाम् । युच् ।
तत्रैव स्त्री० ।
विचि(ची) पु० स्त्री० विच-इन् । तरङ्गे स्त्रीत्वपक्षे वा ङीप् ।
विचिकित्सा स्त्री० वि+कित-स्वार्थे सन् अ । सन्देहे ।
विचित्र न०विशेषेण चित्रम् । कर्ब्बुरवर्णे । तद्वति, आश्चर्य्ये च
त्रि० । स्वार्थे कन् । भुर्जपत्रद्रुमे पु० ।
विचित्रवीर्य्य पु० शान्तनुनृपात्मजे नृपभेदे ।
विचित्राङ्ग पु०विचित्रमङ्गं यस्य (चिते) व्याघ्रभेदे,आश्चर्य्यदेहे त्रि०
विचेतस् त्रि० विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । दुष्टचित्ते
विशिष्टचित्ते च । [क्त । विशेषेण चेष्टायाम् न० ।
विचेष्टित त्रि० विगतं चेष्टितमस्य । चेष्टाशून्ये, वि+चेष्ट भावे
विच्छ दीप्तौ चु उभ सक०सेट् । विच्छयति ते अविविच्छत् त
विच्छ गतौ तु० पर० आयपक्षे उ० सक०सेट् । विच्छायति
विच्छायते विच्छति । अविच्छायीत् अविच्छायिष्ट अविच्छीत्
विच्छन्दक पु० विशिष्टः छन्दोऽत्र कप् । ईश्वरगृहभेदे ।
विच्छाय न० वीनां पक्षिणां छाया नपुंसकत्वम् । पक्षिसमूह-
च्छायायाम् । विगता छाया यस्य । छायारहिते त्रि० ।
विच्छित्ति स्त्री० वि+छिद-क्तिन् । अङ्गरागे हारभेदे, छेदे,
विनाशे, विच्छेदे, स्त्रीणां चेष्टाभेदे च । [छेदने न०
विच्छिन्न त्रि० वि+छिद-क्त । विभक्ते, समालब्धे च भावे-क्त ।
विच्छेद पु०वि+छिद-घञ् । वियोगे,सन्ततिराहित्ये, विभागे च
विज पृथक्करणे जु०उभ०सक०अनिट् । वेवेक्ति वेविक्ते अवि-
जत् अविक्षीत् अविक्त ।
विज भये कम्पे च रु०प०अक०सेट् । विनक्ति अविजीत् । [विग्नः
विज भये कम्पे च तु०आ०अ० अनिट् । विजते अविजिष्ट । क्त-
विजन त्रि० विगतो जनो यस्मात् । निर्जने ।
विजनन न० वि+जन-ल्युट् । गर्भमोचने, प्रसवे, उद्भवे च ।
विजय पु० वि+जि-कर्त्तरि अच् । अर्ज्जुने, विमाने यमे च ।
भावे अच् । जये, परिभवपूर्व्वकग्रहणे च ।
विजयकुञ्जर पु० विजयाय कुञ्जरः । राजवाहनगजे ।
विजया स्त्री० आश्विनशुक्लपक्षीयदशम्याम् उमायाः सखीभेदे,
'कथयतु विजये'ति मुद्राराक्षसम् । दुर्गायां, जयन्त्यां,
शेफालिकायां, मञ्जिष्ठायां,शमीभेदे, अग्निमन्थे,भङ्गायाम्,
(सिद्धि) व्यष्टद्वादशीमध्ये,'यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं
भवेत् । तदा सा तु महापुण्या द्वादशी विजया स्मृते'त्युक्ते
द्वादशीभेदे, 'शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् ।
सप्तमी विजया नाम'त्युक्ते सप्तमीभेदे च । [वलम्बिनि ।
विजातीय त्रि० विभिन्नां जातिं धर्ममर्हति छ । विभिन्नधर्मा-
विजिगीषा स्त्री० विजेतुमिच्छा वि+जि-सन् अ । सोदर-
पूर्व्वेच्छया निन्दनीयकर्म्मादौ प्रवृत्तौ तन्निन्दाऽगणने,
विजयेच्छायाञ्च । उ । विजिगीषुः । जयेच्छावति त्रि० ।
विजिन न० विज-इन किच्च । वने दृष्टवन्धे ।
विज्जल पु० विज-उलच् किच्च । शाल्मलीकन्दे ।
विजृम्भण न० वि-जृभि-ल्युट् । विकाशे, दृष्टविकाशवेगभूते
वायुव्यापारभेदे (हाइतोला) ।

विजृम्भित त्रि॰ वि+जृभि-क्त। विकसिते भावे क्त। प्रकाशे
विज्जुल न॰ विज-उलच् लुट् च। त्वचे (दारचिनि)।
विज्ञ पु॰ विशेषेण जानाति ज्ञा-क। प्रवीणे, पण्डिते च।
विज्ञात त्रि॰ वि+ज्ञा-क्त। ख्याते, ज्ञाते च।
विज्ञान न॰ वि+ज्ञा-ल्युट्। ज्ञाने, कर्मणि, शिल्पादिज्ञाने, वेदान्तोक्ते अविद्यावृत्तिभेदे च।
विज्ञानमयकोष पु॰ विज्ञानात्मक कोषवदावरकत्वात्। ज्ञानेन्द्रियसहिते बुद्धिवृत्तिभेदे।
विज्ञानिक त्रि॰ विज्ञानमस्त्यस्य ठन्। विज्ञ नयुक्ते।
विट आक्रोशे सक॰ स्वने अक॰भ्वा॰पर॰सेट्। वेटति अवेटीत्
विट पु॰विट-क। विड्गे, जारे, शृङ्गाररसनायकानुचरे धूर्त्ते, 'विट! विटपममुमिति माघ। पर्वतभेदे, लवणभेदे, खदिरभेदे, नाट्कदक्षे, मूषिके च।
विटङ्क न॰ वि टकि-अच्। कपोतपालिकाया प्रासादाद्यग्रस्थे काष्ठनिर्मिते कपोतावासस्थाने। (पायराखोप)
विटप पु॰न॰। विटं विस्तार पाति पा-क। शाखायां, पल्लव-विस्तारे, स्तम्बे, पल्लवे च विटपालके त्रि॰ 'विट! विटप-ममुन्दद्स्वे'ति माघ।
विटपिन् पु॰ विटप+अस्त्यर्थे इनि। वृक्षे, वटवृक्षे च।
विटलवण न॰ विडिव लवणम् प्र॰। विड्लवणे।
विटि(टी) स्त्री॰ विट-कि वा ङीप्। पीतचन्दने।
विट्खदिर पु॰॰विडिव दुर्गन्ध खदिर'। (गुयेबावला) वृक्षे
विट्चर पु॰ विषु-विष्ठायां चरति चर-अच्। ग्राम्यशूकरे
विट्पति पु॰ विशते विश-क्विप् विश॰ कन्याया पति। जामातरि। [लिक] वणिभेदे।
विट्सारिका स्त्री॰ विडिव दुर्गन्ध॰ सारिका। (गुयेसा-
विड आक्रोशे भ्वा॰पर॰सक॰सेट्। वेडति अवेडीत्।
विड न॰ विड क। लवणभेदे। [लि॰
विडङ्ग पु॰न॰विड-अङ्गच्। स्वनामख्याते औषधभेदे।'अभिधा
विडम्बन न॰वि-डबि-ल्युट्। तिरस्कारे अनुकरणे च। युच्। विडम्बनाप्यत्र स्त्री॰। 'इयञ्च तेऽन्या पुरतो विडम्बनेति कु॰
विडाल पु॰ विड-कालन्। स्वनामख्याते पशुभेदे, नेत्रपिण्डे, नयनौषधिभेदे च। विडाली स्त्री॰ ङीप्। संज्ञाया कन्। हरिताले न॰। स्वार्थे कन् विडाले पर्यौ पु॰।
विडीन न॰ वि+डी-क्त। पक्षिणां गतिभेदे।
विडुल पु॰ विड कुलन्। वेतसवृक्षे। [पु॰ वा कौत्। इन्द्रे।
वि(डो)डौजस् पु॰ विष-क्विप् विट् व्य पकमोजो यस्य
विड्गन्ध न॰ विश इव गन्धोऽस्य। विड्लवणे।
विड्लवण न॰ विडिव दुर्गन्धं लवणम्। स्वनामख्याते लवणभेदे
विड्वराह पु॰विट्प्रियो वराह शाक॰। ग्राम्यशूकरे 'लशुनं विड्वराहञ्चे'ति मनु॰।
वितंस पु॰ वि+तनुस-अच्। पक्षिणां बन्धनसाधने रज्ज्वादौ
वितण्डा स्त्री॰वि-तडि-अ। स्वपक्षाव्यवस्थापनेन परपक्षमात्र निराकरणे कथाभेदे, कलम्बीशाके च।
वितथ त्रि॰वि+तन क्थन्। मिथ्याभूते पदार्थे, स्वार्थे यत्। तलेऽ
वितद्रु स्त्री॰ वि+तम-रु दुट् च। पञ्चनदेशस्थे नदीभेदे।
वितरण न॰ वि+तॄ ल्युट्। दाने।
वितर्क पु॰ वि+तर्क घञ्। सन्देहे, ऊहे च।
वितर्द्दि स्त्री॰ वि+तर्द-इन् वा ङीप्। वेदिकायाम्। पु॰। वितर्द्दिरप्यत्र स्त्री॰ वा ङीप्।
वितल न॰ विशेषेण तलम्। पातालभेदे।
वितस्ति पु॰स्त्री॰ वि+तस-क्तिच्। प्रादेशाङ्गुलपरिमाणे विस्तृत सकनिष्ठाङ्गुष्ठमानपरिमाणे। [च। चन्द्रातपे पु॰न॰
वितान न॰ वि+तन-घञ्। वृत्तिभेदे, अवसरे, यज्ञे, विस्तारे
वितानमूलक न॰ वितानं विस्तीर्णं मूलमस्य कप्। उशीरे
वितुन्न न॰ वि तुद-क्त। सुनिषण्णके संज्ञायां कन्। भाल्ये।
वित्त त्यागे चुरा॰पु॰उभ॰स॰सेट्। वित्तयति ते अविवित्तत् त
वित्त न॰विद्यते लभ्यते विद्-क्त। धने। विद-क्त। ख्याते, विचारिते, ज्ञाते, लब्धे च त्रि॰।
वित्ति स्त्री॰ विद-क्तिन्। ज्ञाने, लाभे, विचारे च।
वित्तेश पु॰इत॰। कुबेरे।
विथ याचने भ्वा॰आ॰द्वि॰क॰सेट् चङि न ह्रस्व। वेथते अवेथिष्ट
विद् सुखाद्यनुभवे, आख्याने, वादे च सक॰वादे अक॰चु॰ उभ॰ सेट्। वेदयति ते अवीविदत् त।
विद् लाभे तु॰उभ सक॰अनिट्। विन्दति ते। अविदत् अवित्त
विद् मोचाशे रुधा॰आ॰सक॰अनिट्। विन्ते अवित्त।
विद् भावे, दिवा॰आ॰अक॰अनिट्। विद्यते अवित्त।
विद् ज्ञाने अदा॰पर॰सक॰सेट्। वेत्ति-वेद। अवेदीत्।
विदग्ध त्रि॰ वि+दह-क्त। नागरे, निपुणे, पण्डिते च। नायिकाभेदे स्त्री॰। विशेषेण दग्धे त्रि॰।
विद् पु॰ विद-क्विप्। पण्डिते, बुधग्रहे च।
विद् पु॰ विद-क। पण्डिते, बुधग्रहे च।
विदथ पु॰ विद कथच्। योगिनि, ज्ञानिनि च।
विदर न॰ वि+दॄ-अप्। (फणिमनसा) वृक्षे विदारणे पु॰।
विदर्भ पु॰स्त्री॰विगता दर्भा कुशायत्र। कुण्डिननगरे(नागपुर)
विदल न॰ विशेषेण दल्यते दल-घञर्थे क। द्विधाभूते दाडिम

कन्के, वंशादिपाले च । कलायादौ, रक्तकाञ्चने पिटके च पु० विश्वति (तेयोड़ि) स्त्री० । दल-शून्ये त्रि० ।

विदा स्त्री० विद-अङ् । ज्ञाने बुद्धौ च ।

विदार पु० वि+दृ-घञ् । विदारणे जलोच्छ्वासे च ।

विदारक पु० वि+दृ-ण्वुल् । जलमध्यस्थतरुशिलादौ विदारणकर्त्तरि त्रि० शुष्कनदादेर्जलधारणयोग्ये गर्त्ते न० ।

विदारण न० वि+दृ-णिच् ल्युट् । भेदने, मारणे, विडम्बे च । युद्धे पु० स्त्री० । कर्णिकारवृक्षे पु० ।

विदारी स्त्री० । विदारोऽस्त्यस्याः अच् गौ० ङीष् । शाल-पर्ण्याम् । (शालपान) भूमिकुष्माण्डे च ।

विदारीगन्धा स्त्री० विदार्य्याः भूमिकुष्माण्डस्येव गन्धो यस्याः । शालपर्ण्याम् (शालपान) ।

विदाहिन् न० वि+दह-णिनि । दाहजनकद्रव्ये ।

विदित त्रि० विद-क्त । ज्ञाते, प्रार्थिते च । भावे-क्त । विख्यातौ उपगमे, ज्ञाने च । तदस्यास्ति अच् । ज्ञातरि । 'विदितः समाययाविति भारविः ।

विदिश् स्त्री० विगता दिशम् । दिशोर्मध्ये (कोण) ।

विदु पु० विद-कु । हस्तिकुम्भमध्यभागे ।

विदुर त्रि० विद-कुरच् । नागरे, धीरे, ज्ञातरि च । कौरवाणां मन्त्रिणि दासीगर्भजाते धर्म्मावतारभेदे च पु० ।

विदुल पु० विद-कुलच् । वेतसे, जलवेतसे, गन्धरसे च ।

विदूर न० विशिष्टं दूरम् । अविदूरे तत्स्थे पदार्थे त्रि० 'विदूरे केयूरे, कुरु, इति साहि०दर्प० । वैदूर्य्यमणिसम्भवस्थाने पु० 'विदूरभूमिर्नवमेघशब्दा'दिति कुमार० ।

विदूरज न० विदूरे देशभेदे जायते जन-ड । वैदूर्य्यमणौ ।

विदूरथ पु० । सूर्य्यवंश्ये नृपभेदे ।

विदूराद्रि पु० विदूरे देशेऽद्रिः पर्वतः । पर्वतभेदे । यत्र वैदूर्य्यमणिरुत्पद्यते । [मृगयाभेदे । परनिन्दके त्रि० ।

विदूषक पु० विदूषयति वि+दूष-णिच्-ण्वुल् । शृङ्गारसह-

विदेश पु० विभिन्नो देशः । देशान्तरे, 'सन्ध्याभावे भवति मरणं सञ्जमानां विदेशे' इत्युद्भट० ।

विदेह पु० विगतो देहः देहसम्बन्धो यस्य । जनकाख्ये नृपे, तद्देशे च कैवल्यमुक्तियुते, देहसम्बन्धशून्ये च त्रि० मिथिलादौ स्त्री० ।

विदेहकैवल्य न० कर्म० । 'न तस्य प्राणा उत्क्रामन्ति इहैव समवनीयन्ते इत्यादिश्रुत्युक्ते जीवन्मुक्तस्य देहपातानन्तरं निर्वाणमोक्षे ।

विद्ध त्रि० व्यध क्त । छिद्रिते, क्षिप्ते, तुल्ये, बाधिते ताड़िते च ।

विद्धकर्णी पु० विद्धः कर्ण इव पत्त्रमस्य । (आकनादि) पाठायाम् स्त्रीत्वमपि तत्रैव ङीप् ।

विद्यमान पु० विद-शानच् । वर्त्तमानकाले, तद्वृत्तौ पदार्थे त्रि० ।

विद्या स्त्री० विद क्यप् । ज्ञाने । तत्त्वसाक्षात्कारे 'विद्यया ऽमृतमश्नुते' इतिश्रुतिः । दुर्गायां, गणिकारिकावृक्षे, तन्त्रोक्ते देवीमन्त्रे च । 'तस्य विद्या न सिध्यती'ति श्यामारह० ।

विद्याचण(ञ्चु) त्रि० विद्यया ख्याते चण(चुञ्चु) विद्ययाविख्याते ।

विद्याचुञ्चु पु० विद्यया विख्यातः चुञ्चु । विद्यया ख्याते ।

विद्यादल पु० विद्यायै ज्ञानाय दल्यतेऽसौ । भूर्जवृक्षे ।

विद्यादान न० ६त० अध्यापने, पुस्तकदाने च ।

विद्याधन न० विद्यया लब्धं धनम् । विद्यया लब्धे 'उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकम् । विद्याधनन्तु तद्विद्यादि'ति 'शिष्यादार्त्विज्यतः प्राप्तं सन्दिग्धप्रश्ननिर्णयात् स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् । विद्याधनन्तु तत् प्राहुरि'ति 'शिल्पिष्वपि हि धर्मोऽयमिल्युपक्रम्य परं निरस्य वादेन विद्यया द्यूतपूर्व्वकम् । विद्याधनं तु तद्वि-द्यादि'त्युक्ते धने ।

विद्याधर पु० विद्या मन्त्रादिकं धरति धृ अच् । देवयोनिभेदे

विद्युत् स्त्री० विद्योतते वि+द्युत-क्विप् । तडिति, सन्ध्यायाञ्च

विद्युत्प्रिय न० ६त० । विद्युदाकर्षके कांस्ये, धातौ ।

विद्युन्माला स्त्री० अष्टाक्षरपादके छन्दोभेदे । [रोगभेदे ।

विद्रधि पु० वेत्त्यनेन विद् हृदयं रुणद्धि रुध-कि पृ० । हृदय

विद्रधिनाशन पु० विद्रधिं नाशयति नश-णिच्-ल्यु । शोभाञ्जने

विद्रव(द्राव) पु० वि+द्रु-अप् घञ् वा । पलायने, क्षरणे, द्रवे च

विद्रुत त्रि० वि+द्रु-क्त । प्राप्तद्रवे, पलायिते च । [किसलये

विद्रुम पु० विशिष्टो द्रुमः । प्रवालरत्नवृक्षे विशिष्टो द्रुमो यतः

विद्रुमलता स्त्री० विद्रुमस्य लतेव । नलीनामगन्धद्रव्ये स्वार्थे कन् तत्रैव । [विद्रधि ।

विद्वत्कल्प त्रि० ईषदसमाप्तो विद्वान् विद्वस्+कल्पप् । ईषदूने

विद्वत्तम पु० अतिशयेन विद्वान् विद्वस्+तमप् । अतिपण्डिते तरप् विद्वत्तरोऽप्यत्र । [विद्वत्कल्पे । देश्य । तत्रैव ।

विद्वद्देशीय त्रि० ईषदसमाप्तो विद्वान् विद्वस्+देशीयर् ।

विद्वस् त्रि० विद क्वसु । प्राज्ञे, पण्डिते, आत्मज्ञानयुक्ते च ।

विद्विष् पु० विशेषेण द्वेष्टि द्विष-क्विप् । शत्रौ अविद्विषोऽप्यत्र ।

विद्वेष पु० वि+द्विष-घञ् । वैरिभावे शत्रुतायाम् ।

विद्वेषण न० वि+द्विष-णिच्-ल्युट् । तन्त्रोक्ते अभिचारकर्म्म-भेदे येन शत्रूणां परस्परविद्वेषो भवति तद्विधे व्यापारे । वि+द्विष-ल्युट् । विद्वेषे ।

विध विधाने, तु॰पर॰सक॰सेट् । विधति अवेधीत्

विध पु॰ स्त्री॰ विध-क अड् वा । विमाने, गजभक्ष्यान्ने, प्रकारे, वेधे, ऋद्धौ च । वेतने, कर्म्मणि च स्त्री॰ ।

विधवा स्त्री॰ विगतो धवो यस्याः । मृतपतिकायां स्त्रियाम् ।

विधातृ पु॰ वि+धा-तृच् । प्रजापतौ, ब्रह्मणि, कामदेवे, मदिरायां, भृगुमुनिपुत्रभेदे । विधानकर्त्तरि त्रि॰ । स्त्रियां ङीप् सा च पिप्पल्याञ्च ।

विधान न॰ वि+धा-ल्युट् । करणे, विधौ, गजभक्ष्यान्ने च ।

विधानज्ञ पु॰ विधानं जानाति ज्ञा-क । पण्डिते । विधिज्ञे त्रि॰

विधायक त्रि॰ वि+धा-ण्वुल् । विधानकर्त्तरि ।

विधि पु॰ वि+धा-कि । जगत्स्रष्टरि ब्रह्मणि, भाग्ये, क्रमे, 'चिकीर्षाकृतिसाध्यत्वहेतुधीविषयो विधिरि'त्युक्ते प्रवर्त्तनारूपे नियोगे, तज्जनके वाक्ये, विष्णौ, कर्म्मणि, गजभक्ष्यान्ने, वैद्ये, अप्राप्तप्रापकरूपे वाक्यभेदे, संज्ञा च परिभाषा च विधिर्नियम एव च 'अतिदेशोऽधिकारश्चे'ति व्याकरणोक्ते सूत्रभेदे ।

विधिज्ञ त्रि॰ विधिं क्रमं जानाति ज्ञा-क । विधानक्रमज्ञे

विधित्सा स्त्री॰ विधातुमिच्छा वि+धा-सन् अ । विधानेच्छायाम्

विधिदेशक पु॰ विधिं विधानं दिशति दिश+ल्युट् । विधिदर्शिनि सदस्ये, गुरौ च ।

विधिवत् अव्य॰ विधिमर्हतीति विधि+वति । विध्यनुसारे ।

विधु पु॰ व्यध-कु । चन्द्रे, कर्पूरे, विष्णौ, ब्रह्मणि, शङ्करे, वायौ च

विधुत त्रि॰ वि+धु-क्त । कम्पिते, त्यक्ते च ।

विधूनन न॰ वि+धु-णिच्-नुक् च । चालने ।

विधुन्तुद पु॰ विधुं तुदति तुद खश् मुम् च । राहौ ।

विधुर त्रि॰ विगता धूर्यस्य अच् समा॰ । विश्लिष्टे, विकले च विगता धूः । वैकल्ये, विश्लेषे च न॰ ।

विधुवन न॰ वि+धु-ल्युट् । कम्पने । [त्नी'ति स्मृतिः

विधूत त्रि॰ वि+धू-क्त । कम्पिते त्यक्ते च । 'विधूतपापास्तेभ्या-

विधेय त्रि॰ वि+धा-यत् । विधातुं योग्ये, वचनस्थे आयत्ते विधिना बोधिते च ।

विध्वंस पु॰ वि+ध्वन्स-घञ् । नाशे ।

विनत त्रि॰ वि+नम क्त । प्रणते भुग्ने, शिक्षिते च । गरुडमातरि कश्यपपत्नीभेदे, पिडकीभेदे च स्त्री॰ । [पुंभयत्न ।

विनतासूनु पु॰ ६त॰ । अरुणे, गरुडे च । विनतात्मजादयो

विनद पु॰ विशेषेण नदति नद-अच् । (आविधान) वृक्षे ।

विनम्रक न॰ विशेषेण नम्रमिव स्वार्थे कन् । तगरपुष्पे ।

विनय पु॰ वि+नी-अच् । शिक्षायां, प्रणामे, अनुनये च । वि+नी-कर्त्तरि अच् । विनययुक्ते, जने, निभृते, शिष्टे, जितेन्द्रिये च । वचनस्थिते आयत्ते ।

विनयग्राहिन् त्रि॰ विनयं शिक्षां गृह्णाति ग्रह-णिनि ।

विनयस्थ त्रि॰ विनये तिष्ठति स्था क । वचनग्राहिणि आयत्ते

विनशन न॰ वि+नश-ल्युट् । विनाशे, कुरुक्षेत्रस्थे तीर्थभेदे ।

विना अव्य॰ वि+ना । वर्ज्जने, अन्तरेणेत्यर्थे ।

विनाकृत त्रि॰ विनेति कृतम् विना+कृ क्त । त्यक्ते, रहिते च

विनायक पु॰ वि+नी-ण्वुल् । गणेशे, गरुडे, विघ्ने, गुरौ च विनययुक्ते त्रि ।

विनाश पु॰ वि+नश-घञ् । ध्वंसे, अदर्शने च ।

विनाशोन्मुख त्रि॰ विनाशाय उन्मुख उद्यत । नष्टप्राये ।

वि(वी)नाह पु॰ वि+नह-घञ् वा उपसर्गदीर्घ॰ । कूपमुखपिधाने

विनिद्र त्रि॰ विगता निद्रा यस्य । प्रकाशिते, निद्राहीने च ।

विनिपात पु॰ वि+नि+पत-घञ् । निपाते दैवादिकृते व्यसने, अपमाने च । [द्रव्यान्तरग्रहणे, बन्धके च ।

विनिमय पु॰ वि+नि+मि-अच् । परिवर्त्ते तुल्यद्रव्यदानेन

विनियोग पु॰ वि+नि+युज-घञ् । क्रियासु प्रवर्त्तने 'अनेनेदन्तु कर्त्तव्यं विनियोग प्रकीर्त्तित' इत्युक्ते अनुष्ठानक्रमविधाने च 'आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव चे'ति स्मृतिः ।

विनीत त्रि॰ वि+नी-क्त । विनययुक्ते, कृत-दण्डे, क्षिप्ते, अपनीते, निभृते च । सुशिक्षिताश्वे, दमनकवृक्षे च पु॰ ।

विनीय पु॰ वि+नी-क्यप् । कल्के, पापे च ।

विनेतृ त्रि॰ वि+नी तृच् । शिक्षके । नृपे पु॰ ।

विनेय त्रि॰ वि+नी-यत् । शिक्षणीये, प्राप्ये च ।

विनोक्ति स्त्री॰ अलङ्कारोक्ते अर्थालङ्कारभेदे ।

विनोद पु॰ वि+नुद-घञ् । कौतूहले, क्रीड़ायां, खण्डने च ।

विन्दु पु॰ विद-उ नि॰ । जलकणे भ्रुवोर्मध्ये, रेखागणितोक्ते विभागानर्हे चिह्नभेदे, अनुस्वारे च । ज्ञातरि, दातरि, वेदितव्ये च त्रि॰ । [भेदे स्वार्थे कन् । तत्रैव ।

विन्दुजाल न॰ ६त॰ । हस्तिशुण्डाग्रस्थिते विन्दुरूपे चिह्न-

विन्दुपत्र पु॰ विन्दवः पत्रे यस्य । भूर्ज्जपत्रे ।

विन्दुसरस् न॰ विन्दुभिः कृतं सरः । सरोवरभेदे ।

विन्ध्यपर्णी स्त्री॰ विध क ष॰ मुम् च विन्ध्यं पत्रमस्याः ङीप् । (वेङपुठ) क्षुपभेदे । [एलायां, वनलोहचे च (नोयाड) स्त्री॰

विन्ध्य पु॰ विध-यत् ष॰ मुम् च । पर्वतभेदे व्याधे च ।

विन्ध्यवासिनी स्त्री॰ विन्ध्येऽचले वसति वस-णिनि ङीप् । यशोदागर्भजातायां दुर्गायाम् ।

विन्ध्याचल पु॰ कर्म॰ । विन्ध्यपर्व्वते ।

विन्ध्याटवी स्त्री॰ विन्ध्यस्य अटवी । विन्ध्यपर्व्वतस्थे वनभेदे

विन्न त्रि० विद-क्त। विचारिते, प्राप्ते, ख्याते, स्थिते च।
विन्यांक पु० वि+नि+अक-घञ्।। (आतियान)द्रव्ये।
विन्यास पु० वि+नि+अस-घञ्। स्थापने, रचने, तन्त्रोक्ते मन्त्राद्युच्चारणपूर्व्वकं हृदयादिषु अङ्गुल्यादीनामर्पणे च।
विप क्षेपे चु० उभ०सक० सेट्। वेपयति-ते अवीविपत् त।
विपक्लिम त्रि० विपाकेन निर्वृत्तः। वि+पच-क्त्रि मपच्। विपाकाधीनजाते 'विपक्लिमज्ञानगतिर्मनिरिति' भट्टिः।
विपक्ष त्रि०विरुद्धः पक्षो यस्य। शत्रौ, प्रतिकूलपक्षावलम्बिनि च। विरुद्धः पक्षः कुग० स०। प्रतिकूले पक्षे।
विपञ्ची स्त्री० वि+पचि-अच् गौरा० ङीष्। वीणायाम् स्वार्थे कन् अत इत्त्वम्। तत्रैव।
विपण पु० वि+पण घञर्थे क। विक्रये।
विपणि पु०स्त्री० वि+पण-इन् स्त्रीत्वपक्षे वा ङीप्। पण्य-विक्रयशालायाम् (दोकान) हट्टे च।
विपत्ति स्त्री० वि+पद-क्तिन्। आपदि, नाशे, यातनायाञ्च
विपथ पु० विरुद्ध' पन्थाः अच् समा०। निन्दितमार्गे
विपद्(दा) स्त्री० वि+पद-सम्प० क्विप् वा टाप्। विपत्तौ।
विपन्न त्रि० वि+पद-क्त। विपद्युक्ते, नष्टे च। सर्पे पु०।
विपरीत त्रि० वि+परि+इण्-क्त। प्रतिकूले।
विपर्णक पु० विगतानि पर्णान्यस्य कप्। पलाशवृक्षे।
विपर्य्यय पु० वि+परि+इण्-अच्। व्यतिक्रमे।
विपर्य्यस्त त्रि० वि+परि+अस-क्त। व्यतिक्रान्ते पराहते च।
विपर्य्यास पु० वि+परि+अस-घञ्। वैपरीत्ये, व्यतिक्रमे उत्क्रमे च।
विपल पु०विभागः पलस्य। पलषष्टिभागे कालभेदे। [पण्डिते
विपश्चित् पु० विप्रकृष्टं चेतति वि+प्र+चित-क्विप् पृ०।
विपाक पु० वि+पच भावे घञ्। पाके, स्वेदे च। कर्मणि घञ्। कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे।
विपाश्(शा) स्त्री०विगत पाशो यस्याः। स्वनामख्याते नदीभेदे
विपिन न० वप-इनन् पृ०। वने।
विपुल त्रि०वि+पुल विस्तारे क। विस्तीर्णे, अगाधे, मेरुपश्चिमस्थे भूधरे, मेरौ, हिमाचले च। आर्य्याछन्दोभेदे स्त्री०।
विपुलास्रव स्त्री० विपुलं रसं स्रवति अच्। घृतकुमारीवृक्षे।
विप्र पु० वप-रन् पृ० अत इत्त्वम् वि+प्रा-क वा। ब्राह्मणे।
विप्रकार पु० वि+प्र+कृ-घञ्। अपकारे, तिरस्कारे।
विप्रकाष्ठ न०विशेषेण प्राति प्रा क विप्रं काष्ठं यस्य। तूलवृक्षे
विप्रकर्ष पु० वि+प्र+कृष-घञ्। दूरत्वे।
विप्रकृत त्रि० वि+प्र+कृ-क्त। उपद्रुते, तिरस्कृते च 'तस्मिन् विप्रकृताः काले' इति कुमारः।
विप्रकृष्ट त्रि०वि+प्र+कृष-क्त। दूरस्थे। स्वार्थे कन्। तत्रैवार्थ
विप्रचित्ति पु० वि+प्र+चित-क्तिच्। दानवभेदे।
विप्रतिपत्ति स्त्री० वि+प्रति+पद-क्तिन् विरोधे, 'परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिषिति' स्मृतिः। संशये, विकारे च।
विप्रतिपन्न त्रि० वि+प्रति+पद-क्त। सन्देहयुक्ते कृतविरोधे च
विप्रति(ती)सार पु० वि+प्रति+सृ-घञ् वा दीर्घः। अनुतापे, अनुशये, रोषे च। [च
विप्रयुक्त त्रि० विप्र+युज-क्त। वियुक्ते, विरहिते च। [वियोगे
विप्रयोग पु० वि+प्र+युज-घञ्। विप्रलम्भे, विरोधे विसंवादे
विप्रलब्ध त्रि० वि+प्र+लभ-क्त। वञ्चिते, 'प्रिय कृत्वा च सङ्केतं यस्या नायाति सन्निधिम् विप्रलब्धेति सा ज्ञेये'त्युक्तलक्षणे नायिकाभेदे स्त्री०।
विप्रलम्भ पु० वि+प्र+लभ-घञ् मुम् च। विसंवादे, वञ्चने, विरहे च 'युक्तयुक्तयोर्भावे युक्तयोर्वाथवा मिथः अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेय' इत्युक्ते शृङ्गारावस्थाभेदे।
विप्रलाप पु० वि+प्र+लप-घञ्। विरोधोक्तौ परस्परविरुद्धार्थकथने। [वृक्षे, अशोकवृक्षे।
विप्रलोभिन् पु० विप्रलोभयति लुभ+णिच्-णिनि। किरात
विप्रश्निका स्त्री०विशेषेण प्रश्नो यस्याः पृ०व० कप् अत इत्त्वम्। दैवज्ञायां स्त्रियाम्। [धीनतायाम्।
विप्रसात् अव्य० विप्राधीनं करोति विप्र+साति। विप्रस्य-
विप्रस्व न० ६त०। विप्रस्वामिके धने।
विप्रिय पु० विरुद्धं प्रिय प्री क।। अपराधे, अप्रिये च कृत वानसि विप्रियं न मे इति कुमारः ६व० विगतप्रिये त्रि०।
विप्रुष् स्त्री० वि+प्रुष-क्विप्। बिन्दौ, वेदपाठकाले मुखनिर्गत जलबिन्दौ च।
विप्रोषित त्रि० वि+प्र+वस-क्त गतप्रवासे।
विप्लव पु० वि+प्लु-अप् परचक्रपतिराष्ट्रादितो भये राष्ट्रोपद्रवे प्र
विप्लाव पु०वि+प्लु घञ्। अश्वस्य गतिभेदे समन्तात् जलप्लावे च।
विप्लुत त्रि०वि+प्लु क्त। व्यसनयुक्ते, उपद्रुते च 'अविप्लुतब्रह्मचर्य्य' इति स्मृतिः।
विफल त्रि० विगतं फलमस्य। निरर्थके। केतक्यां स्त्री०।
विबध पु० विगतो वधो हननं गतिर्यस्मात्। संदष्टोत धान्य-तण्डुलादौ 'निरुद्धविबधासारे'ति माघ० पृ०दीर्घ भारे च।
विबन्ध पु० विबध्नाति मलम् वि+बन्ध-घञ्। रोगभेदे।

वृषाङ्क पु० वृषः चह्नोऽस्य । शिवे, भल्लातके, षण्डे च
वृषि(षी) स्त्री० वृष-कि वा ङीप् । व्रतिनां कुशमयासनभेदे ।
वृषोत्सर्ग पु० उत्+सृज-घञ् ६त०। मृतायुद्देशेन तत्तुल्यादिभिः क्रियमाणे विधानेन वृषस्य त्यागे 'वृषोत्सर्गश्च कर्त्तव्य' इति स्मृतिः । [वृष्यभावो जले ।
वृष्टि स्त्री० वृष-क्तिन् । वर्षणे । कर्मणि क्तिन् । मेघादिभिः
वृष्टिघ्नी स्त्री० वृष्टिं हन्ति कारणत्वेन जहाति हन-क ङीप् । सूक्ष्मैलायाम् ।
वृष्टिजीवन त्रि०वृष्टिः वृष्टिजलमेव जीवनं पालनोपायो यस्य। वृष्टिजलमात्राजीविनि चातके । [वृष्टिभवे त्रि० ।
वृष्टिभू पु० वृष्टौ तदुपलक्षिते काले भवति भू-क्विप् । भेके ।
वृष्णि पु० वृष नि किच्च । यादवे वंशे, श्रीकृष्णे, मेषे च ।
वृष्णिगर्भ पु० वृष्णयः यादवकुलं गर्भे यस्य । श्रीकृष्णे ।
वृष्य पु० वृषाय हितो यत्, वृष-क्यप् वा । माषे । शुक्रवृद्धिकारके त्रि० वाजीकरणे न० आमलक्यां शतावर्य्यां, ऋषभनामौषधे च स्त्री० ।
वृष्यकन्दा स्त्री० वृष्यः शुक्रवर्द्धकः कन्दो यस्याः।विदार्य्याम् ।
वृष्यगन्धिका स्त्री० वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्त्वम् । अतिबलायाम् ।
वृष्यवल्ली स्त्री०कर्म० । विदार्य्याम् । कप् अत इत्त्वम् । तत्रैव ।
वृह दीप्तौ वा चु०उभ० सक० पक्षे भ्वा० पर० इदित् । वृंहयति ते अववृंहत् त । वृंहति अवृंहीत् ।
वृह वृद्धौ शब्दे च अक०भ्वा०पर०सेट् ।वर्हति अवृहत् अवर्हीत्
वृह ध्वनौ वृद्धौ च भ्वा०प०अक०सेट् इदित् । वृंहति अवृंहीत्
वृह वृद्धौ भ्वा०पर०सक०सेट् । वर्हति अवर्हीत् ।
वृह उद्यमे तु० पर०अक०वेट् । वृहति । अवर्हीत्-अवृक्षत् ।
वृह वृद्धौ भ्वा० आत्म०सक० सेट् इदित् । वृंहते अवृंहिष्ट
वृहच्चञ्चु पु० वृहती चञ्चुरिव मञ्जरी यस्य । महाचञ्चुशाके ।
वृहच्चित्त पु० वृहत् उदारं चित्तं यस्मात् ५ब० । फलपूरे
वृहत् त्रि० तु० वृह अति । महति । स्त्रियां ङीप् ।
वृहती स्त्री०वृहत्+गौ०ङीष्। महत्यां स्त्रियां,क्षुद्रवार्त्ताक्याम्। वारिधान्यां, वाचि, कण्टकारिकायाम्, नवाक्षरपादके छन्दोभेदे,उत्तरीयवस्त्रे च। स्वार्थे कन् । उत्तरीयवस्त्रे स्त्री०
वृहतीपति पु० वृहतीनां वाचां पतिः वृहस्पतौ ।
वृहत्कन्द पु० वृहत् कन्दो यस्य । गृञ्जने, विष्णुकन्दे च ।
वृहत्कन्द पु० कर्म० । (खामआलु) कन्दभेदे ।
वृहत्कालशाक पु० कर्म० । (वड़ कालकासुन्दे) शाकभेदे ।
वृहत्कुक्षि पु० वृहत् कुक्षिर्यस्य । तुन्दिले ।
वृहत्ताल पु० कर्म० । हिन्ताले ।
वृहत्तिक्ता स्त्री० कर्म० । पाठायाम् (आकनादि) ।
वृहत्तृण पु० वृहत्तृणं यत्र । वंशे ।
वृहत्त्वच् पु० वृहती त्वक् यस्य । (छातियान) वृक्षे ।
वृहत्पत्र पु० वृहत् पत्त्रमस्य । हस्तिकन्दे । (हातिकान्दा)
वृहत्पाटलि पु० पु० पट-अलि कर्म० । धुस्तूरवृक्षे ।
वृहत्पाद पु० वृहत् पादोमूलमस्य । वटवृक्षे ।
वृहत्पालिन् पु० वृहतः पालयति पाल-णिनि । वनजीरके
वृहत्पीलु पु०कर्म० । महापीलौ ।
वृहत्फला स्त्री० वृहत् फलं यस्याः । कटुतुम्ब्याम् ।
वृहत्साम न० कर्म० । 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीयमाने साम्नि ।
वृहदम्ल पु०कर्म० । (कामराङ्गा) वृक्षे ।
वृहदेला स्त्री०कर्म० । स्थूलैलायाम् ।
वृहद्गोल न०कर्म० । (तरमुज) लतावृक्षे ।
वृहद्दल न० वृहत् दलमस्य । पट्टिकालोध्रे, हिन्ताले च ।
वृहद्बल न०कर्म० । महालाङ्गले ।
वृहद्भानु पु० वृहद्भानुः किरणो यस्य । सूर्य्ये, चित्रकवृक्षे च
वृहद्रथ पु०वृहत् रथोऽस्य । इन्द्रे,यज्ञपात्रभेदे,सामायवभेदे च
वृहद्वल्क पु० वृहत् वल्कमस्य। पट्टिकालोध्रे ।
वृहद्वात पु०वृहत् वातो धातुभेदो यस्मात् ५ब०। (देधान) वृक्षे
वृहद्वारुणी स्त्री०कर्म० । महेन्द्रवारुण्याम् ।
वृहद्बीज पु० वृहत् बीजमस्य । आम्रातके ।
वृहन्नल पु० वृहत् नलो यस्य । महापोटगले ।
वृहन्नला(डा) पु०स्त्री०वृहत् नलो यस्य वा लस्य डः । अर्ज्जुने
वृहस्पति पु०वृहत्याः वाचः पतिः पृ० नि० । जीवे देवाचार्य्ये
वृ वरणे क्र्या०आ०उभ०सक०सेट् । वृणाति वृणीते अवारीत् अवरिष्ट-अवरीष्ट-अवृर्ष्ट । [अवासी
वे स्यूतौ भ्वा०उभ०यजा०सक०अनिट् । वयति ते अवासीत्
वेग पु० विज-घञ् । प्रवाहे, जवे,रेतसि, मूलविष्ठादिनि सारणयत्ने,न्यायोक्ते संस्कारभेदे, महाकाले च । [ङीप्
वेगिन् पु०वेग+अस्त्यर्थे इनि। श्येनविहगे,वेगवति त्रि०। स्त्रियां
वेजाना स्त्री० विज-अच् तमानयति आ-नी-ड । सोमराज्याम्
वेण वादादाने, गतौ,घ्राणे चिन्तायाञ्च भ्वा०उभ०सक०सेट् । वेणति ते । अवेणीत् अवेणिष्ट । चङि न ह्रस्वः ।
वेण पु० वेण-अच् । वर्णसङ्करजातिभेदे, वर्णसङ्करकारके पृथुराजपितरि नृपभेदे च ।
वेणि(णी) स्त्री० वेण-इन् वा ङीप् । केशरचनाभेदे, जल-

समूहे, तत्प्रवाहे, देवदारुवृक्षे, नदीभेदे, गङ्गायमुनासर-
स्वतीमिलनस्थाने च ।
वेणीर पु० वेण-ईरन् । अरिष्टवृक्षे (निम) । [भिल्लुङ्गः ।
वेणु पु० वेण-उण् । वंशे तद्विकारे वंशीवाद्ये च 'मा पूरय वेणु-
वेणुक न० वेणुरिव वेणोर्विकारः वा कन् । तोत्त्रे (पाचनवाडि)
वेणुकर्कर पु० वेणुरिव कर्करः । करवीरवृक्षे ।
वेणुज पु० वेणुतो जायते जन-ड । वेणुजाते यवाकारे तण्डुले
वेणुध्म पु० वेणुं धमति ध्मा-क । वेणुवादके ।
वेणुन न० वेण-उनन् । मरिचे ।
वेणुपत्री स्त्री० वेणोरिव पत्त्रमस्याः । वंशपत्रीवृक्षे ।
वेणुयव पु० वेणुजातो यव इव । वंशजाते तण्डुलाकारे पदार्थे
वेणुवाद त्रि० वेणुं वादयति वद-णिच्-अण् । वेणुवादके
ण्वुल् । तत्रैव त्रि० ।
वेणुबीज न० ६त० । वेणुजाते यवाकारे पदार्थे ।
वेतन न० अज-तनन् वीभाव । कृतकर्म्मणो भृतौ ।
वेतनादान न० ६त० । व्यवहारभेदे । [अपि तत्र ङीप् ।
वेतस पु० अज-असुन् तुक् च वीभावः । (वेत) वृक्षभेदे स्त्रीत्व
वेतसाम्ल पु० वेतस एव अम्लः । अम्लवेतसे ।
वेतस्वत् त्रि० वेतसोऽस्त्यस्य ड्मतुप् । बहुवेतसयुक्ते देशे ।
वेताल पु० अज-विच् वीभाव तल-घञ् कर्म० । मन्त्रविशेषे,
भूताधिष्ठितशवभेदे, शिवानुचरभेदे, द्वारपाले च ।
वेत्तृ त्रि० विद-तृच् । ज्ञातरि, बोद्धरि, लब्धरि च ।
वेत्र पु० अज त्रन् वीभावः । (वेत) वेतसवृक्षे ।
वेत्रधर पु० वेत्रं धरति धृ-अच् । द्वारपाले । वेत्रयष्टिधारके त्रि०
वेत्र(त्रा)वती स्त्री० वेत्रो बाहुल्येनास्त्यस्याः मतुप् मस्य वः
वा दीर्घः । मालवदेशस्थे नदीभेदे 'चर्म्मण्वती वेत्रवती'ति
पुराणम् ।
वेत्रासन न० वेत्रनिर्म्मितमासनम् । वेत्रनिर्म्मिते आसने (मोड़ा)
वेथ याचने भ्वा० आ० द्वि० सेट् अदित् न ह्रस्व । वेथते अवेथिष्ट
वेद पु० विद-अच् घञ् वा विष्णौ, ज्ञाने शास्त्रज्ञाने तत्साधने
धर्म्मब्रह्मप्रतिपादके संहिताब्राह्मणात्मके ग्रन्थभेदे, शास्त्रोक्ते
चरित्रे च ।
वेदगर्भ पु० वेदो गर्भे यस्य । सर्वसंहर्त्तरि हिरण्यगर्भे ।
वेदन न० विद ल्युट् । ज्ञाने सुखदुःखाद्यनुभवे, विवाहे
च 'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने' इति मनुः ।
युच् । वेदनापि तत्रार्थेषु स्त्री० । [प्रणववेदाभिधे ।
वेदपारग पु० वेदानां पारमन्तं वेदं गच्छति गम-ड ।
वेदमातृ स्त्री० ६त० । गायत्र्यां मन्त्रभेदे यस्या वेदरूप-
त्वात्तथात्वम् । [तथात्वम् वेदाभ्यासादचोद्यत ।
वेदवास पु० ६त० । ब्राह्मणे तस्य तत्पाठतदुक्ताचाराश्रयत्वात्
वेदविद् पु० वेदं वेत्ति विद-क्विप् । विष्णौ । वेदज्ञे त्रि० ।
वेदव्यास पु० वेदान् व्यस्यति विभिन्नशाखत्वेन पृथक् करोति
वि+अस-अण् । पराशरपुत्रे सत्यवतीगर्भजे मुनिभेदे ।
वेदस् पु० विद असुन् । वेत्तरि ।
वेदाङ्ग न० वेदस्य अङ्गमिव । 'शिक्षा कल्पो व्याकरणं निरुक्तं
छन्दसां चय' । ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु'
इत्युक्तेषु शिक्षादिषु षट्सु शास्त्रेषु । [प्रणवे ओङ्कारे ।
वेदादि पु० वेदस्यादिरिव तत्पाठे प्रथमोच्चार्य्यमाणत्वात् ।
वेदान्त पु० ६त० । वेदशिरोभागे ब्रह्मप्रतिपादके उपनिष-
द्रूपे ग्रन्थभेदे तदुपकारके शारीरकसूत्रभाष्यादौ च ।
वेदाधिप पु० ६त० । 'ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपो
भृगुः । सामवेदाधिपो भौमः शशिजोऽथर्ववेदपः' इत्युक्तेषु
बृहस्पत्यादिषु, विष्णौ च ।
वेदान्तिन् त्रि० वेदान्तो ज्ञेयत्वेनास्त्यस्य इनि । वेदान्तशास्त्रज्ञे
वेदाभ्यास पु० ६त० । 'वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासोहि पञ्चधे'त्युक्तेषु वेदपाठ-
विचाराभ्यसनजपदानेषु ।
वेदि न० विद-इन् । यज्ञाय भू (याजनादि) परिष्कृतायां
भूमौ स्त्री० वा ङीप् । 'मध्येन सा वेदिविलग्नमध्ये'ति
कुमारः । वेदिव डमरुकाकारपरिष्कारतो पशुबन्धनार्थं
होमीयद्रव्यासादनार्थं वा कृतसंस्कारा परिष्कृता चतु-
रस्रादिरूपा भूमिः । पण्डिते पु० ।
वेदिका स्त्री० वेदिरिव इवार्थे कन् । मङ्गलकर्मार्थं गृहद्वारादौ
चतुरस्रदिग्वर्त्तिकास्तम्भाकारेण निर्म्मिते भूखण्डे ।
वेदिजा स्त्री० वेद्याः होमवेदितो जायते जन-ड । द्रौपद्याम् ।
वेदितृ त्रि० विद-तृच् इट् च । ज्ञातरि ।
वेदिन् पु० विद-णिनि । पण्डिते, हिरण्यगर्भे च । ज्ञातरि त्रि० ।
वेध पु० विध-घञ् । (वेंदा) वेधने, उत्खाते (गाढ़ा) 'परिधि-
नवमभाग ऊर्ध्वखातेषु वेध' इति लीलावती । विवाहादौ
वर्ज्ये नक्षत्रविशेषस्थितग्रहभेदकृतसंसर्गे च 'वेध वर्ज्जय
वर्ज्जये'दिति ज्योतिषम् । [वेधकर्त्तरि त्रि० ।
वेधक न० विध-ण्वुल् । कर्पूरे, अम्लवेतसे, धान्ये न० ।
वेधनी स्त्री० विध्यतेऽनया विध ल्युट् ङीप् । (भँवरी) मणि-
रत्नादिवेधकारके शस्त्रभेदे । भावे ल्युट् । तत्रार्थे, मेथि-
कायां, ककूर्यां च ।
वेधमुख्य पु० ६त० । कर्पूरे । संज्ञायां कन् । हरिद्रायाम् ।

वेधस् पु० वि+धा-असुन् गुण । हिरण्यगर्भे जगत्स्रष्टरि, विष्णौ, सूर्ये, श्वेतार्कवृक्षे पण्डिते च ।
वेधित पु० वेधोजातोऽस्य तार० इतच् । विद्धे छिद्रिते ।
वेधिनी स्त्री० विध-णिनि । जलौकायाम् (जोंक)
वेन्या स्त्री० वन-ध पृ० । नदीभेदे । [पुंस्त्व ।
वेप कम्पने भ्वा०आ० अक० सेट् । वेपते अवेपिष्ट । चङि न
वेपथु पु० वेप अथुच् । कम्पे ।
वेपन पु० वेप ल्युट् । कम्पने । [पु०न० ।
वेम पु० वेमन् न व्यालम् । वायदण्डे । मनिन् । अत्रेवार्थे
वेर न०अज-रन् वीभाव । देहे,वार्त्ताकौ,कुङ्कुमे च । सञ्ज्ञाया कन् । कर्पूरे । [ह्रस्व
वेल चालने भ्वा०प०सक० सेट् । वेलति अवेलीत् । चङि न
वेल कालोपदेशे, अ०चु०उ०अक०सेट् । वेलयति ते अविवेलत् त
वेल न० वेल अच् । उपवने । काले समये, मर्यादायां समुद्रकूले च स्त्री० 'वेलामूले विभावरी परिक्षीणे'ति भट्टि ।
वेल्ल चालने भ्वा०पर०सक०सेट्चङि न ह्रस्व । वेल्लति अवेल्लीत्
वेल्ल पु०न० वेल्ल अच् । [विडङ्गे । घञ् । चलने पु० ।
वेल्लज पु०वेल्ल अच् तथाभूतः सन् जायते जन ड । मरिचे ।
वेल्लन न० वेल्ल-ल्युट् । अश्वादेर्भूमौ लुण्ठने काष्ठनिर्मिते पदार्थे (बेलुन) च मावादूर्व्वायां स्त्री० ङीप् । [च त्रि०
वेल्लित न०वेल्ल-भावे क्त । गमने । कर्त्तरि-क्त । कम्पिते, कुटिले
वेल्लि(ल्ली) स्त्री० वेल्ल इन् वा ङीप् । लतायाम् । संज्ञायां कन् । (बेलसुठ) वृक्षे ।
वेवी कान्तौ गतौ व्याप्तौ क्षेपे भोजने च सक० प्रजनने अक० अदा०आत्म०सेट् जक्षादि० वैदिक एवायम् । वेवीते अवेविष्ट
वेश पु० विश घञ् । अलङ्कारादिना कृतरूपान्तरे, नेपथ्य कर्म्मणि, वेश्यागृहे, गृहमात्रे, प्रवेशे च ।
वेशधारिन् पु० वेशं धरति धृ-णिनि । छलेन रूपान्तरधारिणि, कृत्रिमपक्षिप्रभृतौ ।
वेशन्त पु० विश-झच् । क्षुद्रसरोवरे, अग्नौ च ।
वेशर पु० वेश राति रा-क । अश्वतरे ।
वेश्मन् न० विश-मनिन् । गृहे ।
वेशभू स्त्री० ६त० । गृहकरणयोग्ये स्थाने ।
वेश्य न० विश-ण्यत् वेशाय हितं वा यत् । वेश्यालये पाठायाम् (आकनादि) वारयोषिति च स्त्री० । [वेश्याजनालये च
वेष पु० विष-अच् घञ् वा । भूषणादिना रूपान्तरकरणे,
वेषण पु०विष ल्युट् । कासमर्द्दे (कालकासुन्दे)(धन्या) वृक्षे च
वेष्ट वेष्टने भ्वा०आत्म०सक०सेट् । वेष्टते अवेष्टिष्ट ।

वेष्ट पु० वेष्ट-घञ् अच् वा । वेष्टने, श्रीवेष्टे, वृक्षनिर्यासे च ।
वेष्टक न०वेष्ट-ण्वुल् । (पागडी) उष्णीषे । कुष्माण्डे,प्राचीरे च पु०
वेष्टन न० वेष्ट-ल्युट् । कर्णशष्कुल्याम्, उष्णीषे, मुकुटे च ।
वेष्टवंश पु० वेष्ट-अच् कर्म० । (बेडवांश) वंशभेदे ।
वेष्टसार पु० वेष्टस्य सारः । श्रीवेष्टे ।
वेष्टित त्रि० वेष्ट क्त । प्राचीरादिना व्याप्तरे, रुद्धे च ।
वेस गतौ भ्वा०प सक०सेट् चङि न ह्रस्व । वेसति अवेसीत् ।
वेसन न० वेस-ल्युट् । हिदवे, 'दालयश्चणकानान्तु निस्तुषा यन्त्रपेषिताः । तच्चूर्णं वेसनमिति'युक्ते चणकादिद्विदलचूर्णे च
वेसर पु० वेस-अरन् । अश्वतरे । [सर्पादौ
वेसवार पु० वेसं वारयति वृ-अण् । (बाटना) पिष्टधान्याक-
वेह यत्ने भ्वा०आ०अक०सेट् चङि न ह्रस० । वेहते अवेहिष्ट ।
वेहत् स्त्री० वि++हन अति मलोप । गर्भोपघातिन्यां स्त्रियाम् ।
वेहार पु० वि+हृ-घञ् पृ० । स्वनामख्याते देशभेदे । [ह्रस्व
वेह्ल गतौ भ्वा०पर०सक० सेट् । वेह्लति अवेह्लीत् चङि न
वै शोषे भ्वा० प०सक०सेट् अनिट् । वायति अवासीत् । निष्ठातस्य न । वान निर्वाण । [भिनि त्रि० ।
वै अव्य० वा-डै० । पादपूरणे,अनुनये,संबोधने च । [तत्सम्ब-
वैकक्ष न० विशेषेण कक्षति व्याप्नोति अण् । तिर्य्यक्कक्षावलम्बिनि हारभेदे । वुन् । उरसि उपवीताकारेण धृते माल्यभेदे । [विकङ्कतसम्बन्धिनि त्रि०
वैकङ्कत पु०विकङ्कत+स्वार्थेऽण् । (बैंचि) वृक्षभेदे । तस्येदमण् ।
वैकल्पिक त्रि० विकल्पेन प्राप्तः भवो वा ठञ् । पक्षप्राप्ते ।
वैकल्य न० विकलस्य भावः ष्यञ् । विकलत्वे ।
वैकुण्ठ पु० विकुण्ठे भवः अण् विविधा कुण्ठा माया यस्य स्वार्थेऽण् वा । विष्णौ, गरुडे, इन्द्रे, सितार्ज्जके च ।
वैकृत न० विकृतस्य भावः अण् । विकारे ।
वैखरी स्त्री० विशेषेण खं राति रा क स्वार्थेऽण् । अर्थबोधके कण्ठस्थानादिषु उच्चार्य्यमाणे वर्णात्मके शब्दविशेषे ।
वैखानस पु० वि+खन ड अन-अच् कर्म० स्वार्थेऽण् । वानप्रस्थे तापसभेदे 'वैखानसेभ्यः श्रुतरामवार्त्ता' इति भट्टि ।
वैगुण्य न० विगतो विरुद्धो वा गुणोऽस्य तस्य भावः ष्यञ् । यत्र यद्विहितं तस्य रूपान्तरतापादने अचायत्वे,असम्पन्नत्वे च
वैचित्र्य न०विचित्रस्य भावः ष्यञ् । नानारूपत्वे विलक्षणत्वे ।
वैजयन्त पु० विजयते वि+जि-झ स्वार्थेऽण् । इन्द्रप्रासादे, अग्निमन्थवृक्षे, दानवभेदे च पताकायां, जयन्तीवृक्षे च स्त्री० ङीप् ।

**वैजिक** न॰ बीजेन निर्वृत्तं ठक्। शिग्रुतैले। बीजाय हितम् ठक्। आत्मनि। स्वार्थे ठक्। कारणे। तस्येदं ठञ्। बीजसम्बन्धिनि त्रि॰।

**वैज्ञानिक** पु॰ विज्ञानाय साधु ठक्। निपुणे विज्ञानमधिकृत्य कृतो ग्रन्थ ठक्। बौद्धागमे। तदध्येतरि, तत्सम्बन्धिनि च त्रि॰

**वैडालव्रत** न॰ विडालस्येदम् अण् तदिव व्रतम्। 'यस्य धर्म्मध्वजो नित्य शक्रध्वज इवोच्छ्रित। प्रच्छन्नानि च पापानि वैडाल नाम तद्व्रतमि'त्युक्ते प्रकारेण धर्म्माचरणेन गुप्तपापाचारे।

**वैडालव्रतिक** पु॰ वैडालव्रतमस्त्यस्य ठन्। छलेन धर्म्मचारिणि छद्मतापसे। इनि। वैडालव्रतीत्यप्यत्र।

**वैणव** न॰ वेणूनां फलम् अण्, तस्य न लुप्। वेणुफले। वेणुसम्बन्धिनि त्रि॰। [स्त्यस्य ठन्। वंशीवादके

**वैणविक** त्रि॰ वेणोर्विकार अण् वैणव वेणुवाद्य शिल्पम-

**वैणिक** त्रि॰ वीणा तद्वादन शिल्पमस्य ठक्। वीणावादके।

**वैणुक** न॰ वेणोर्विकार ठक्। गजचालनार्थे लौहमये वंशदण्डे। वेणुस्तद्वादन शिल्पमस्य ठक्। वाणुवादके त्रि॰

**वैण्य(न्य)** पु॰ वेण नोऽस्य पत्यम् यञ्। वेणसुते पृथुनामके न्पभेदे

**वैतसिक** त्रि॰ वितसेन मृगपक्ष्यादिबन्धनोपायेन चरति ठक्। मांसविक्रयोपजीवके व्याधे। [भृत्यादौ।

**वैतनिक** त्रि॰ वेतनेन जीवति ठक्। वेतनोपजीवके कर्म्मकरे

**वैतरणी(णि)** स्त्री॰ वितरणेन दानेन तरति अण् ङीप् वा ष्ट ह्रस्व। यमद्वारस्थे नदीभेदे, 'यमद्वारे महाघोरे तप्ता वैतरणी नदी'ति पुराणम्।

**वैतस** पु॰ वेतसएव स्वार्थेऽण्। अम्लवेतसे।

**वैतानिक** पु॰ वितानस्यायम् ठक्। श्रौतविधिनाऽग्निस्थापने 'दाहादूर्द्ध्वमशौच स्यात् 'यस्य वैतानिको विधिरि'ति स्मृति

**वैतालिक** त्रि॰ विविधैस्तालै मङ्गलगीत्यादिशब्दैरनेन व्यवहरति ठक्। मङ्गलस्तुत्यादिभि र्या प्रबोधकारके मागधादौ।

/ **वैतालीय** पु॰ मात्रावृत्तभेदे।

**वैदग्ध** न॰स्त्री॰ विदग्धस्य चतुरस्य भाव अण् स्त्रीत्वपक्षे ङीप्। चातुर्य्ये, भङ्गौ च। ष्यञ्। वैदग्ध्यमप्यत्र न॰।

**वैदर्भ** पु॰ विदर्भाणां जनपदानां राजा अण्। विदर्भदेश नृपे। वाक्यस्य कौटिल्ये न॰। 'अञ्चितिरल्पवृत्तिर्वा वैदर्भी रीतिरुच्यते' इत्युक्ते काव्यरचनाभेदे स्त्री॰ङीप्। विदर्भे भवा अण्। नलराजपत्न्यां दमयन्त्याम् स्त्री॰ ङीप्।

**वैदल** न॰ विदलस्य विकार अण् भिक्षुकस्य भिक्षापात्रभेदे। पिष्टकभेदे पु॰।

**वैदिक** पु॰ वेद वेत्त्यधीते वा ठञ्। वेदज्ञे ब्राह्मणे वेदेषु विहित ठक्। वेदोक्ते त्रि॰। स्त्रियां ङीप् 'वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत' इति तन्त्रम्।

**वैदुष्य** न॰ विदुषो भाव विद्वस्+ष्यञ्। पाण्डित्ये।

**वैदूर्य्य** न॰ विदूरे भव ष्यञ्। कृष्णपीतवर्णे विडालनेत्रतुल्ये मणिभेदे।

**वैदेह** पु॰ विशेषेण देह उपचयो यस्य स्वार्थे प्रज्ञाद्यण्। वणिग्जने। विदेहे भव अण् तत कन्। वणिग्जने शूद्रात् वैश्याजाते जातिभेदे च। ठक्। वैदेहिकोपि। वणिजि। विदेहानां राजा अण्। विदेहराजे जनके न्पे।

**वैदेही** स्त्री॰ विदेहेषु मिथिलादेशेषु भवा अण्। सीतायाम् जनकात्मजायाम्, हरिद्रायाम् पिप्पल्याम्, वणिक् स्त्रियाञ्च

**वैद्य** पु॰ विद्याऽस्त्यस्य अण्। पण्डिते 'नाविद्यानान्त वैद्येने'ति स्मृति भिषजि, तदुपकारके-वासकवृक्षे च।

**वैद्यक** न॰ वैद्य चिकित्सकमधिकृत्य कृतो ग्रन्थ कन्। आयुर्वेदे

**वैद्यबन्धु** पु॰ ६त॰। आरग्बधवृक्षे।

**वैद्यमातृ** स्त्री॰ वैद्यस्य मातेव। वासके तस्य वैद्यजीविकाङ्ग रोगशान्तिकरत्वेन तत्पोषकत्वात् तन्मातृतुल्यत्वम्।

**वैद्यसिंही** स्त्री॰ वैद्यस्य सिंहीव। वासकवृक्षे।

**वैद्या** स्त्री॰ वैद्यस्येय प्रियत्वात् अण्। काकोल्याम्।

**वैध** त्रि॰ विधित आगत अण्। विधिप्रतिपाद्ये।

**वैधात** पु॰ विधातुरपत्यम् अण्। सनत्कुमारादौ मुनिभेदे।

**वैधृति]** पु॰ विगता धृति र्यस्मात् पृ॰ वृद्धि। विष्कम्भादिषु मध्ये अन्तिमे योगे।

**वैधेय** त्रि॰ विधीयतेऽसौ वि+धा यत् तत स्वार्थे अण्। मूर्खे

**वैधर्म्य** न॰ विरुद्धो धर्म्मो यस्य तस्य भाव ष्यञ्। विरुद्धधर्म्मत्वे अन्यलक्षणे च। [विदनमिति कुमार।

**वैधव्य** न॰ विधवाया भाव ष्यञ्। पतिविरहे 'नववैधव्यमसह्य-

**वैनतेय** पु॰ विनताया अपत्य ढक्। गरुडे, अरुणे च।

**वैनयिक** त्रि॰ विनये रत ठक्। शास्त्रज्ञानादिना विनयरते

**वैनाशिक** पु॰ विनाशं खण्डनमधिकृत्य कृतो ग्रन्थ ठक्। बौद्धागमे। उपचारात् तदभिज्ञे त्रि॰।

**वैनाशिक** पु॰ विनाशमधिकृत्य कृतो ग्रन्थ ठक्। सर्व्वेषां क्षणभङ्गुरताप्रतिपादके बौद्धागमे तदभिज्ञे त्रि॰ विनाशाय हितम् ठक्। ज्योतिषोक्ते जन्मनक्षत्रचक्रस्थे जन्मनक्षत्रावधि-त्रयोविंशे नक्षत्रे। क्षणिके, परतन्त्रे च त्रि॰। ऊर्णनाभे पु॰।

**वैनीतक** पु॰न॰। विशेषेण नीयतेऽनेन करणे क्त तत॰ स्वार्थे

कन्। परम्परया वाहने धि विकादौ।
वैपरीत्य न० विपरीतस्य भाव ष्यञ्। विपर्य्यये।
वैभव न० विभोर्भाव अण्। विभुत्वे विभूतौ।
वैभ्राज न० विभ्राजइदम् अण्। देवोद्यानभेदे।
वैमुख्य न० विमुखस्य भाव ष्यञ्। विमुखत्वे।
वैमात्र पु० विमातुरपत्यम् अण्। सापत्ने भ्रातरि तथाभूत भगिन्या स्त्री० ङीप्। [भगिन्या स्त्री० ङीप्
वैमात्रेय पु० विमातुरपत्य ढक्। सापत्ने भ्रातरि तथाभूत
वैयाकरण त्रि० व्याकरणं वेत्त्यधीते वा अण्। व्याकरणाभिज्ञे
वैयाघ्र पु० व्याघ्रचर्मणा परिवृतो रथ अण्। व्याघ्रचर्मपरिवृते रथे।
वैयाघ्रपद्य पु० व्याघ्रपदस्यापत्य यञ्। गोत्रकारके मुनिभेदे 'वैयाघ्रपद्यगोत्राये ति, भीष्मतर्पणमन्त्र। [त्रिभ्यामीति चाव
वैयात्य न० वियातस्य भाव ष्यञ्। निर्लज्जत्वे 'वैयात्य ष्टर
वैयासकि पु० व्यासस्यापत्यम् इञ्। व्यासस्यापत्ये शुकदेवे।
वैयासिकी स्त्री० व्यासेन प्रोक्ता ठञ् ङीप्। व्यासप्रणीताया संहितायाम्।
वैर न० वीरस्य भाव अण्। विरोधे विद्वेषे।
वैरकर त्रि० वैरं करोति कृ-ट। विरोधकारके।
वैरक्त्य न० विरक्तस्य भाव ष्यञ्। विरागे।
वैरनिर्यातन न० वैरस्य वैरकृतापकारस्य निर्यातनम् निर् यत णिच् ल्युट्। वैरकृतापकारप्रतीकारे।
वैरप्रतीकार पु० ६त०। वैरकृतापकारस्य तत्स्वरूपापकार करणेन तस्य शोधने।
वैरशुद्धि स्त्री० ६त०। वैरप्रतीकारे।
वैराग्य न० विरागस्य भाव ष्यञ्। विषयवासनाराहित्ये ऐहिकामुष्मिकविषयरागराहित्ये च।
वैरवृक्ष पु० वीरस्याय तन्नामकत्वात् कर्म०। अर्जुनवृक्षे।
वैरानुबन्धिन् त्रि० वैरं विद्वेषमनुबध्नाति णिनि। विद्वेषा नुरूपकारके, वैरानुगते च।
वैरिन् त्रि० वैरमस्त्यस्य इनि। शत्रौ।
वैरूप्य न० विरूपस्य भाव ष्यञ्। विरूपत्वे, चनतुरूपत्वे, व्यवस्थाभावे वस्तुनो विकारे च।
वैरोच(न)नि पु० विरोचनस्यापत्यम् शिवादाण् इञ् वा। अ ग्निपुत्रे, सूर्यपुत्रे 'बलिराजनामके दानवे च।
वैलक्षण्य न० विलक्षणस्य भाव ष्यञ्। विलक्षणत्वे वैशिष्ट्ये।
वैलक्ष्य न० विलक्षस्य भाव ष्यञ्। लज्जायाम्, स्वभाववैलक्षण्ये च 'वैलक्ष्यहेतोर्गति'मिति नैषधम्।

वैल्व न० बिल्वस्य फलम् अण् तस्य न लुप्। बिल्वफले तत्सम्बन्धिनि त्रि०। [वार्त्तावहे नैगमे (दोकानी)।
वैवधिक त्रि० विवधेन धान्यादिसमूहेण व्यवहरति ठक्।
वैवर्ण्य न० विवर्णस्य भाव ष्यञ्। विवर्णत्वे मालिन्ये।
वैवस्वत पु० विवस्वतोऽपत्यम् तस्येद वा अण्। यमे शनौ, रुद्रभेदे च तत्सम्बन्धिनि त्रि० 'वैवस्वतकरक्रियेत्युद्भट दक्षिणदिशि स्त्री० ङीप्।
वैवाहिक त्रि० विवाहाय हित साधु वा ठक्। विवाहयोग्ये 'वैवाहिकीं तिथिं पृष्टा' इति कुमार विवाहेन सबद्धे कन्यापुत्रयो श्वशुरे, विवाहसम्बन्धिनि च त्रि०। पञ्चमे सप्तमे वापि येषा वैवाहिकी क्रियेति स्मृति।
वैशम्पायन पु० व्यासशिष्ये भारतवक्तरि मुनिभेदे।
वैशस न० विशसस्य भाव स्वार्थे वा अण्। हिंसने हिंसके वा
वैशाख पु० विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा अत्र मासे पुन अण्। स्वनामख्याते वर्षमध्ये द्वितीये चान्द्रे मासे तन्मासस्य पौर्णमास्या स्त्री० ङीप्। विशाखा प्रयोजनमस्य ष्यञ्। मन्थानदण्डे। धनुर्द्धराणामवस्थानभेदे न०।
वैशिष्ट्य न० विशिष्टस्य भाव ष्यञ्। विशेष्यविशेषणसम्बन्धे, विशिष्टबुद्धिनियामके सम्बन्धे, भेदे च।
वैशेषिक न० विशेष पदार्थभेदमधिकृत्य कृतो ग्रन्थ ठञ्। कणादप्रणीते शास्त्रभेदे। तदधीते अण्। काणादशास्त्राभिज्ञे त्रि०। तस्येदम् अण्। काणादशास्त्रसम्बन्धिनि त्रि०।
वैशेष्य न० विशेषस्य भाव ष्यञ्। वैशिष्ट्ये भेदे च 'वैशेष्यात्तद्वाद इति शारीरम्। [ब्राह्मणक्षत्रजाते जातिभेदे
वैश्य पु० विशति उपभुङ्क्ते विश क्विप् स्वार्थे ष्यञ्। वर्णभेदे
वैश्यवृत्ति स्त्री० ६त०। कृषिवाणिज्यादौ।
वैश्रवण पु० विश्रवसोऽपत्यम् अण् विश्रवणादेश। कुबेरे।
वैश्रवणालय पु० ६त०। वटवृक्षे कुबेरपुर्य्याञ्च। वैश्रवणावासादयोऽप्यत्र। [हविषा दीयमाने बलौ।
वैश्वदेव पु० विश्वेभ्यो देवेभ्यो देयो बलि अण्। वैश्वदेवो-
वैश्वानर पु० विश्वेषा नराणामयम् कुक्षिस्थत्वात् अण् पूर्वदीर्घ। वह्नौ, चित्रकवृक्षे, सामवेदावयवभेदे च।
वैषम्य न० विषमस्य भाव ष्यञ्। विषमत्वे वैलक्षण्ये।
वैषयिक त्रि० विषयेण निर्वृत्त ठञ्। विषयनिर्वृत्ते सुखादौ
वैष्णव त्रि० विष्णुर्देवताऽस्य तस्येद वा अण्। विष्णूपासके विष्णुसम्बन्धिनि च स्त्रियां ङीप्। वैष्णव्या शक्तौ 'वैष्णवी समरे वैनमिति चण्डी। विष्णुसम्बन्धिनि त्रि० स्त्रिया ङीप् 'गायत्री वैष्णवी ह्येषेति स्मृति विष्णुधामनि न०।

वैसारिण पु० विसरति वि+सृ-णिनि स्वार्थे अण् । मत्स्ये ।
वैहासिक पु० विहासेऽभिरतस्तं करोति वा ठक् । नाटकादौ प्रसिद्धे शृङ्गाररसनायकसहचरे विदूषके ।
वोढ़ु पु० वह तृन् । मुनिभेदे 'वोढु' पञ्चशिखस्तथे'ति स्मृति'
वोढृ त्रि० वह-तृच् । वाहके स्थानान्तरप्रापके 'भागीरथी निर्झरसीकराणां वोढे'ति कुमार' । पाणिग्राहके पु० 'पिण्डदा वोढुरेव ते' इति स्मृति । भारवाहके मूढे च त्रि०वृषभे पु० ।
वोरट पु० वा-उरट । (बौंटा) इति ख्याते वृन्ते ।
वोरव पु० वा-उर वोर वाति वा क । (बोरो) धान्यभेदे ।
वोल पु० वा उलच् । गन्धरसे गन्धद्रव्यभेदे ।
वौषट् अव्य० वह-डौषट् । देवोद्देशेन हविस्त्यागे ।
व्यंसक पु० विगतोऽंसो यस्य कप् । धूर्त्ते 'मयूरव्यंसकादयश्चे'ति पाणिनिसूत्रम् ।
व्यंसित त्रि० वि+अंस-क्त । वञ्चिते । [च । विष्णौ पु०
व्यक्त त्रि०वि-अञ्ज क्त । स्फुटे, प्रकाशिते, दृश्ये, प्राज्ञे, स्थूले,
व्यक्ति स्त्री० वि+अञ्ज-क्तिन् । प्रकाशे क्तिच् । जने पृथगात्मके, एकैकविशेषे च । [यस्य । विष्णौ पु० ।
व्यग्र त्रि० विगतमग्रं यस्य । व्याकुले, व्यासक्ते च । विशिष्टमग्रं
व्यङ्ग न० विगतं विकलं वाङ्गं कर्म० । विकलाङ्गे, विगतमङ्गं यस्य । अङ्गहीने त्रि० ।
व्यङ्ग्य त्रि० वि+अञ्ज-ण्यत् । व्यञ्जनया वृत्त्या बोध्येऽर्थे,प्रकाश्ये
व्यच व्याजे अक० सम्बन्धे सक० तु० कु० प० सेट् । विचति अविचीत् विव्याच ।
व्यजन न० वि+अज-ल्युट् । तालवृन्तके ।
व्यञ्जक पु० वि+अञ्ज-णिच्-ण्वुल् । हृद्गतभावादिप्रकाशके अभिनये, व्यञ्जनयार्थबोधके शब्दे च । प्रकाशकमात्रे त्रि०
व्यञ्जन न० विशेषेणाज्यते वि+अञ्ज-ल्युट् । सूपशाकादौ ओदनभोजनोपकरणे । वि+अञ्ज-णिच्-ल्युट् । अलङ्कारप्रसिद्धे वृत्तिभेदे। युच् । 'विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः' । सा वृत्तिर्व्यञ्जना नामे'त्युक्ते शब्दशक्तिभेदे ।
व्यञ्जित त्रि० वि+अञ्ज-णिच्-क्त । प्रकाशिते 'अव्यञ्जितवर्णलवा इति कुमार । व्यञ्जनावृत्त्या बोधितेऽर्थे च ।
व्यडम्बक पु०वि+अड-अच् डवि ण्वुल् कर्म०स० । एरण्डवृक्षे
व्यतिकर पु० वि+अति कृ-अप् । सम्बन्धे, व्यसने च ।
व्यतिक्रम पु० वि+अति+क्रम घञ् न वृद्धि । विपर्यये 'विवाहे च व्यतिक्रम' इति स्मृति ।
व्यतिरिक्त त्रि० वि+अति+रिच्-क्त । भिन्ने 'न वृत्त्यवृत्तिव्यतिरिक्तसाधनमि'ति कुमार ।
व्यतिरेक पु० वि+अति+रिच-घञ् । विशेषे, अतिक्रमे, अभावे, विनेत्यर्थे, अर्थालङ्कारभेदे च ।
व्यतिषक्त त्रि० वि+अति+षन्ज-क्त । मिलिते, मथिते च ।
व्यतिषङ्ग पु० वि+अति+षन्ज-घञ् । परस्परमेलने ।
व्यती(ति)हार पु० वि+अति+हृ-घञ् वा दीर्घ । परीवर्त्ते परस्परैकजातीयक्रियाकरणे । [भ्युपेत इति रघु ।
व्यतीत त्रि० वि+अति-इण्-क्त । अतीते 'व्यतीतकालस्त्वहमव्यतीपात पु० वि+अति+पत-घञ् दीर्घ । महोत्पातभेदे, विष्कम्भादिषु मध्ये योगभेदे 'श्रवणा च धनिष्ठाद्री नागदैवमस्तके । यद्यमा रविवारेण व्यतीपात स उच्यते' इत्युक्ते योगभेदे च ।
व्यत्यय पु० वि+अति+इण्-अच् । व्यतिक्रमे, विपर्यये च ।
व्यत्यास पु० वि+अति-अस-घञ् । विपर्यये ।
व्यथ भये चलने दु खानुभवे च भ्वा० आ०अक०सेट् घटा० । व्यथते व्यथिष्ट । अङ् व्यथा ।
व्यथा स्त्री० व्यथ-अङ् । पीड़ायाम्, दुःखे च ।
व्यध ताड़ने दि०प सक०अनिट् । विध्यति अव्यात्सीत् ।
व्यध पु० व्यध अच् । वेधे, छिद्रीकरणे, भेदने च ।
व्यध्व पु० विरुद्ध अध्वा अच्समा० । कुपथे ।
व्यप क्षये चुरा०उभ सक सेट् । व्यापयति ते अविव्यपत् त० ।
व्यपदेश पु०वि+अप+दिश-घञ् । कथने । संज्ञाया,छापट्ये च
व्यपरोपण न० वि+अप+रुह णिच् ल्युट् । छेदने ।
व्यपरोपित त्रि० वि+अप+रुह-णिच् क्त । छिन्ने ।
व्यपाकृति स्त्री वि+अप+आ+कृ-क्तिन् । निराकरणे, अस्वीकारे, निह्नवे च । [यार्थविषये च ।
व्यपाश्रय पु० वि+अप+आ+श्रि-अच् । आश्रये । [अपेक्ष
व्यपेक्षा स्त्री० वि+अप+ईक्ष अ । अपेक्षाया व्याकरणोक्ते
व्यभिचार पु०वि+अभि-चर-घञ् । निन्दिताचारे स्त्रिया परपुरुषगमे,पुंसश्च परस्त्रीसंगमे, न्यायादिप्रसिद्धे हेतुदोषभेदे च
व्यभिचारिन् पु० वि+अभि+चर-णिनि । अलङ्कारोक्ते रसाङ्गभेदे निर्वेदादौ, न्यायोक्ते व्यभिचाररूपहेतुदोषवति पदार्थे च । परपुरुषगामिन्यां स्त्रियां स्त्री०ङीप् । [त
व्यय गतौ स्वार्थेऽद०चु०उभ०सक०सेट् । व्ययदति ते अवव्ययत्
व्यय गतौ भ्वा० उभ०सक०सेट् । व्ययति ते अव्ययीत् अव्ययिष्ट
व्यय नोदे चु०उभ०सक०सेट् । व्याययति ते अविव्ययत् त ।
व्यय पु० वि+इण-अच् । विगमे, धनादेस्त्यागे, ज्योतिषोक्ते लग्नात् द्वादशस्थाने च ।

व्यर्थ त्रि० विगतोऽर्थः प्रयोजनं वाऽस्य । निष्प्रयोजने, विफले, अर्थशून्ये च । [अन्यते च तद्वति त्रि० ।

व्यलीक न० वि+अल-ईकन् । अकार्ये, कामजे,अपराधे,अप्रिये,

व्यवकलन न० वि+अव-कल-ल्युट् । वियोजने, विगमने, हीनतासम्पादने च । 'व्यवकलनमार्गेऽसी'ति लीलावती ।

व्यवकलित त्रि० वि+अव+कल-क्त । वियोजिते ।

व्यवच्छिन्न त्रि० वि+अव+छिद-क्त । छिन्ने, विशेषिते च ।

व्यवच्छेद पु० वि+अव+छिद-घञ् । पृथक्करणे, विशेषकरणे, मोचने च ।

व्यवधा स्त्री० वि+अव+धा-अ । व्यवधाने ।

व्यवधान न० वि+अव+धा-ल्युट् । तिरोधाने द्रव्यान्तरेण द्रव्यान्तरस्याच्छादने च । [आच्छादके च ।

व्यवधायक त्रि० वि+अव+धा-ण्वुल् । व्यवधानकर्त्तरि,

व्यवधि पु० वि+अव+धा-कि । व्यवधाने ।

व्यवसाय पु० वि+अव+सो-घञ् । उद्यमे 'मरणव्यवसायबुद्धिमि'ति कुमार उपजीविकायाम्, अनुष्ठाने, अवधारणे च 'व्यवसायात्मिका बुद्धिरि'ति गीता ।

व्यवस्था स्त्री० वि+अव+स्था अ । शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापने, शास्त्रमर्य्यादायाञ्च ।

व्यवस्थित त्रि० वि+अव+स्था-क्त । विषयान्तरपरिहारेण विषयविशेषे अवस्थिते-शास्त्रविहिते पदार्थे ।

व्यवस्थितविभाषा स्त्री० कर्म० । व्याकरणोक्ते विषयान्तरपरिहारेण विषयविशेषेऽवस्थितरूपे विकल्पे ।

व्यवहर्त्तृ त्रि० वि+अव+हृ-तृच् । व्यवहारकर्त्तरि ।

व्यवहार पु० वि+अव+हृ-घञ् । अर्थविशेषबोधनाय शब्दविशेषप्रयोगे,ऋणादानादिमष्टादशसु विवादेषु । 'स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तदि'ति स्मृतिः । 'परस्परमनुष्याणां स्वार्थविप्रतिपत्तिषु वाक्यात् न्यायाद्व्यवस्थानं व्यवहारउदाहृत' इत्युक्ते विवादनिर्णये, सहासनभोजनादौ च ।

व्यवहारपद न० ६त० । व्यवहारविषये ।

व्यवहारमातृका स्त्री० व्यवहारस्य विवादनिर्णयस्य मातेव पोषकत्वात् परिच्छेदकत्वाद्वा स्वार्थे कन् । व्यवहारनिर्णयार्थं प्राड्विवाकादिकार्य्ये क्रियासमुदाये, विस्तरो वृहद्द्भि०

व्यवहारिक त्रि० व्यवहारः प्रयोजनमस्य ठञ् । व्यवहारयोग्ये लोकप्रसिद्धे घटपटादौ,स्त्रियां ङीप् । इङ्गुदवृक्षे पु०

व्यवहारिकसत्ता स्त्री० कर्म० व्यवहारोपयिके सत्त्वे वेदान्तकल्पिते ब्रह्मभिन्नपदार्थमात्रस्य वस्तुतोऽसत्त्वेऽपि व्यवहारयोग्ये सत्त्वे येन घटादि व्यवह्रियते । तत्कार्य्यकरणोपयोगित्वेन कल्पिते घटादेरर्थक्रियाकारित्वलक्षणे सत्त्वे च ।

व्यवहार्य्य त्रि० वि+अव+हृ-ण्यत् । इदमित्थमेवेत्येवंरूपेण व्यवहारविषये,येन सह भोजनादि क्रियते तस्मिंश्च ।

व्यवहित त्रि० वि+अव+धा-क्त । व्यवधानवति पदार्थे ।

व्यवाय पु० वि+अव+इण-घञ् । ग्राम्यधर्मे मैथुने, अन्तर्द्धाने शुद्धौ-च तेजसि न० । [स्त्रियां ङीप् ।

व्यवायिन् पु० वि+अव+इण्-णिनि । ग्राम्यधर्मकारके

व्यसन न० वि+अस-ल्युट् । विपत्तौ, भ्रंशे, कामजाते, कोपजाते च स्त्रीभोगमद्यपानादौ दोषे,दैवादिकृते उपद्रवे च ।

व्यसनार्त्त त्रि० व्यसनेनार्त्तः । दैवाद्युपद्रवयुक्ते ।

व्यसनिन् त्रि० व्यसनमस्त्यस्य इनि । व्यसनयुक्ते कामजादिमद्यपानादिरूपदोषयुक्ते, दैवाद्युपद्रुते च ।

व्यसु त्रि० विगता असवो यस्य । मृते, 'शेषे जातो भवेद्व्यसुरि'ति ज्योतिषम् ।

व्यस्त त्रि० वि+अस-क्त । व्याकुले, व्याप्ते,विभक्ते च 'व्यस्तरात्रिंदिवस्येति कुमार विपरीते, 'व्यस्तविधिर्विलोम' इति लीलावती । समुदितपदार्थमध्ये एकैकस्मिन् । 'एते व्यस्ताः समस्ता वे'ति स्मृतिः । समस्तभिन्ने च भावे-क्त । व्यतिक्रमे न ।

व्याकरण पु० व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येन वि+आ+कृ-ल्युट् । वेदाङ्गे शब्दव्युत्पत्तिबोधके शास्त्रभेदे, वेदान्तोक्ते नामरूपाभ्यां जगतोविकाशने च ।

व्याकुल त्रि० वि+आ+कुल क । रोगादिना इतिकर्त्तव्यतानिश्चयविहीने । [रणे च

व्याकृति स्त्री० वि+आ+कृ-क्तिन् । भङ्गौ, प्रकाशने, व्याक-

व्याकृत त्रि० वि+आ+कृ-क्त । प्रकाशिते ।

व्याकोश(ष) त्रि०वि+आ+कुश(ष) अच् व्यागतः कोशं (षं) तु प्रा०स० वा । प्रफुल्ले 'व्याकोश(षे)न्दीवराभ इति तन्त्रम् ।

व्याख्या स्त्री० वि+आ+ख्या-अङ् । विवरणात्मके शब्दसमूहरूपे ग्रन्थभेदे कथने च ।

व्याख्यात त्रि० वि+आ+ख्या क्त । कथिते,विवृते च ।

व्याघात त्रि० वि+आ+हन घञ् । अन्तराये,प्रहारे, अर्थालङ्कारभेदे, सम्बन्धेन कथने, प्रतिबन्धभेदे 'व्याघातावधि रामइे'ति खण्डनखण्डखाद्यम् । विष्कम्भादिसप्तविंशतियोगमध्ये योगभेदे च ।

व्याघ्र पु० वि+आ+घ्रा-क । जन्तुभेदे, रक्तैरण्डे, करञ्जे च ।

व्याघ्रदल पु० व्याघ्रपाद इव दलमस्य प्रा० । एरण्डवृक्षे ।

व्याघ्रनख न० व्याघ्रस्य नखमिव । नखीनामगन्धद्रव्ये व्याघ्रस्य नख इव दलान्यस्य । स्नुहीवृक्षे । ६त० । व्याघ्रनखे ।

व्याघ्रपाद(द्) पु० व्याघ्रस्य पाद इव मूलमस्य वा अन्त्यलोपः । विकङ्कतवृक्षे । मुनिभेदे च । [व्याघ्रलाङ्गूले ।

व्याघ्रपुच्छ पु० व्याघ्रस्य पुच्छमिव दलमस्य । एरण्डवृक्षे ६त० ।

व्याघ्रादनी स्त्री० व्याघ्रे खादने अद-ल्युट् ङीप् । त्रिवृतायाम्

व्याघ्रास्य स्त्री० व्याघ्रस्येवास्यं यस्य । विडाले ।

व्याघ्री स्त्री० व्याघ्रस्येवाकारः कण्टकोऽस्त्यस्याः अच् गौ० ङीष् । कण्टकारिकायाम् । जातौ ङीष् व्याघ्रयोषिति ।

व्याज पु० वि+अज-घञ् वीभावाभावः । कपटे, वञ्चनाफले असत्यव्यवहारे कारणान्तरेण प्रवृत्तस्य कारणान्तरत्वेनोद्भवनरूपे व्यपदेशे च ।

व्याजनिन्दा स्त्री० ६त० । कपटनिन्दायाम्, अर्थालङ्कारभेदे च

व्याजस्तुति स्त्री० ६त० । कपटस्तुतौ, अर्थालङ्कारभेदे च ।

व्याजोक्ति स्त्री० ६त० । छद्मेनोक्तौ, अर्थालङ्कारभेदे च ।

व्याड पु० वि+अड-अच् । मांसभक्षके व्याघ्रादौ पशौ, सर्पे, इन्द्रे च वञ्चके त्रि० । [व्याघ्रनखाख्ये गन्धद्रव्ये ।

व्याडायुध न० व्याडस्य व्याघ्रस्यायुधं नख इवास्त्यस्य अच् ।

व्याडि पु० व्याकरणस्य संग्रहकारके कोषकारके च मुनिभेदे ।

व्याध पु० व्यध-ण । मृगहिंसके जातिभेदे ।

व्याधभीत पु० व्याधाद्भीतः भी-क्त । मृगे ।

व्याधि पु० वि+आ+धा-कि । रोगे, कुष्ठरोगे च ।

व्याधिघात पु० व्याधिं हन्ति हन-अण् । आरग्वधे (सोन्दाल)

व्याधिहन्तृ त्रि० व्याधिं हन्ति हन-तृच् । वाराहीकन्दे ।

व्याधित त्रि० व्याधिर्जातोऽस्य तार० इतच् । व्याधियुक्ते ।

व्याधु(धू)त त्रि० वि+आ+धु-धू-वा-क्त । कम्पिते ।

व्यान पु० वि+अन-घञ् । देहस्थे सर्वशरीरव्यापके प्राणादिमध्ये वायुभेदे ।

व्यापक त्रि० विशेषेणाप्नोति वि+आप-ण्वुल् । अधिकदेशवृत्तौ, न्यायोक्ते स्वाधिकरणवृत्त्यभावाप्रतियोगिनि च पदार्थे । तन्त्रोक्ते सर्वाङ्गसम्बन्धिनि न्यासभेदे च ।

व्यापन्न त्रि० वि+आ+पद क्त । मृते, विपद्युक्ते च ।

व्यापाद पु० वि+आ+पद घञ् । द्रोहचिन्तने । [विनाशे च ।

व्यापादन न० वि+आ+पद-णिच्-ल्युट् । मारणे, परानिष्ट

व्यापार पु० वि+आ+पृ-घञ् । 'व्यापारो भावना सैवोत्पादना सैव च क्रियेत्युक्तायां भावयितुः उत्पादनक्रियायाम् ।

व्यापारिन् त्रि० व्यापारोऽस्त्यस्य इनि । व्यापारवति कर-कारी-प्रभृति सचिवजने पु० ।

व्यापिन् त्रि० वि+आप-णिनि । व्यापके । विष्णौ पु० ।

व्यापृत त्रि० वि+आ+पृ-क्त । व्यापारयुक्ते ।

व्याप्त त्रि० वि+आप क्त । पूर्णे, न्यायोक्ते व्याप्तिमति पदार्थे यथा वह्नेर्व्याप्तो धूमः ।

व्याप्ति स्त्री० वि+आप-क्तिन् । ईश्वरस्य ऐश्वर्यभेदे, न्यायमते तदभाववति अविद्यमानत्वरूपे पदार्थे यथा वह्नेरभाववति जलादौ धूमो नास्तीति धूमादौ वह्नेर्व्याप्तिः ।

व्याप्य त्रि० वि-आप-ण्यत् । व्याप्ते । अल्पदेशवृत्तौ पदार्थे अनुमितिसाधने न० । [रज्जुपरिमाणे ।

व्याम पु० वि+अम-घञ् । तिर्यक्पार्श्वतो विस्तृतयोर्बाह्वोरन्त

व्यायत त्रि० वि+आ+यम-क्त । दीर्घे, आयते, दृढे अतिशये च । भावे-क्त । दैर्घ्ये, व्यायामे च न० ।

व्यायाम पु० वि+आ+यम-घञ् । श्रमे, श्रमसाधने व्यापारे, मल्लानां श्रमकारके व्यापारे, पौरुषे, दुर्गसंचारे, विषमे, व्यामपरिमाणे च ।

व्यायोग पु० वि+आ+युज घञ् । दृश्यकाव्यभेदे । [गजे च

व्याल पु० वि+अड-घञ् डस्य लः । सर्पे । हिंस्रपशौ, दुष्ट-

व्यालगन्धा स्त्री० व्यालस्य गन्धो लेशोऽस्त्यस्याः । काकोल्याम्

व्यालग्राह पु० व्यालान् सर्पान् गृह्णाति ग्रह-अण् । (साप्‌ड़े) सर्पधारिणि । णिनि । अत्रैव । [समङ्गायाम् ।

व्यालजिह्वा स्त्री० व्यालस्य सर्पस्य जिह्वेव पत्रमस्याः । महा°

व्यालदंष्ट्र पु० व्यालस्य व्याघ्रस्य दंष्ट्रेव कण्टकमस्य । गोक्षुरे

व्यालनख पु० व्यालस्य व्याघ्रस्य नख इव । गन्धद्रव्यभेदे व्यालदलोत्पल । [कर्कटीभेदे

व्यालपत्रा स्त्री० व्यालस्य पाद इव पत्रमस्याः । इर्वारौ

व्यालम्ब पु० विशेषेण आलम्बते वि+आ+लबि+अच् । रक्तैरण्डे । [द्रव्ये । व्याघ्रनखाख्ये गन्धद्रव्ये पु०

व्यालायुध न० व्यालस्य व्याघ्रस्यायुधं नख इव । नखीनामगन्ध-

व्यावक्रोशी स्त्री० वि+अव+क्रुश-घञ् स्वार्थे ष्यञ् । परस्पराक्रोशे । [परस्परहरणे

व्यावहारी स्त्री० वि+अव+हृ-घञ् स्वार्थे ष्यञ् ङीप् ।

व्यावहासी स्त्री० वि+अव+हस-घञ् स्वार्थे ष्यञ् । परस्परहसने

व्याहत त्रि० वि+आ+हन-क्त । हते, निरस्ते च 'व्याहतगतिस्थाने' इति कुमारः ।

व्याहति स्त्री० वि+आ+हन-क्तिन् । निवारणे ।

व्यास पु० व्यस्यति वेदान् वि+अस-घञ् । पराशरपुत्रे मुनिभेदे, समासादिसमासार्थक विग्रहवाक्ये, विस्तरे, गोलकेन्द्रमध्यस्थरेखायाम् 'इदमं वाचयति

व्याम उच्यते' इत्युक्ते पुराणपाठके विप्रे च ।
**व्यासक्त** त्रि॰ वि+आ+सन्ज-क्त । आसक्ते तत्परे,संलग्ने च
**व्यासङ्ग** पु॰ वि+आ+सन्ज-घञ् । कार्य्यान्तरत्यागेनैकपरत्वे आसक्तौ च । [पिष्टे च
**व्यासिद्ध** त्रि॰ वि+आ+षिध-क्त । राजाद्यादेनावरुद्धे नि-
**व्याहत** त्रि॰ वि+आ+हन-क्त । व्याघातयुक्ते ।
**व्याहार** पु॰ वि+आ+हृ-घञ् । वाक्ये उक्तौ ।
**व्याहृति** स्त्री॰ वि+आ+हृ-क्तिन् । उक्तौ,भूर्भुवःस्वरादिषु सप्तसु मन्त्रभेदेषु च ।
**व्युत्क्रम** पु॰ वि+उद्+क्रम-घञ् । क्रमवैपरीत्ये, व्यतिक्रमे च
**व्युत्थान** न॰ वि+उद्+स्था-ल्युट् । विरोधकरणे,स्वातन्त्र्यकरणे, प्रतिरोधने, नृत्यभेदे विशेषेण उत्थाने च । वि+उद्+स्था-क्तिन् । व्युत्थितिरप्यत्र स्त्री॰ ।
**व्युत्पत्ति** स्त्री॰ वि+उद्+पद-क्तिन् । विशेषेण उत्पत्तौ, शास्त्रजन्ये शब्दार्थज्ञानादिसम्पादौ संस्कारभेदे, शब्दानामर्थावबोधकशक्तौ च । [संस्कारयुक्ते पुरुषे च
**व्युत्पन्न** त्रि॰ वि+उद्+पद-क्त । व्युत्पत्तियुक्ते शब्दे, तत्-
**व्युदस्त** त्रि॰ वि+उद्+अस-क्त । निरासिते ।
**व्युदास** पु॰ वि+उद्+अस-घञ् । निराकरणे ।
**व्युष** त्यागे चुरा॰उभ॰सक॰सेट् । व्युषयति ते अवुव्युषत् त
**व्युष्ट** त्रि॰वि+वस-क्त । दग्धे,वि+वस-क्त इडभावः। पर्युषिते, प्रभाते च । फले, दिवसे च न॰ ।
**व्युष्टि** स्त्री॰ वि+वस-क्तिन् । समृद्धौ, स्तुतौ, फले च ।
**व्युस** त्यागे दिवा॰पर॰सक॰सेट् । व्युस्यति अव्युसत् अव्युसीत्
**व्यूढ** त्रि॰ वि+वह-क्त । विवेशनविशेषेण स्थिते सैन्यादौ 'व्यूढां द्रुपदपुत्रेणे'ति गीता। संहते, 'व्यूढोरस्को वृषस्कन्ध इति रघुः । प्रवृद्धे, परिणीते विवाहिते च त्रि॰ 'व्यूढा का चन कन्यके'ति प्रबोधचन्द्रोदयः ।
**व्यूढकङ्कट** त्रि॰ व्यूढःपरिहितः कङ्कटःवर्म येन । सन्नद्धकवचे
**व्यूत** त्रि॰ वि+वे-क्त । तन्तुभिर्ग्रथिते ।
**व्यूति** स्त्री॰ वि+वे-क्तिन् । वस्त्रादिवयनकर्मणि ।
**व्यूह** पु॰ वि+ऊह-घञ्। समूहे निर्म्माणे च । अवयवस्थाने, देहे सैन्ये, युद्धार्थं सैन्यरचनाविशेषप्रकारविशेषे च । [पश्चाद्भागे ।
**व्यूहपार्ष्णि** पु॰ ६त॰ । युद्धार्थरचितव्यूहस्य सैन्यानां
**व्ये** वृतौ ढतौ च भ्वा॰उभ॰सक॰अनिट् यज्ञा॰ । व्ययति ते अव्यासीत् अव्यास्त विव्याय विव्ये ।
**व्यो** अव्य॰ व्ये-डो । कौपे, रोपे च ।
**व्योकार** पु॰ व्यो+कृ-अण् । लौहकारे ।
**व्योमकेश** पु॰ व्योम्नि केशो यस्य । शिवे महादेवे ।
**व्योमकेशिन्** पु॰ व्योमाकारः केशोऽस्त्यस्य इनि । महादेवे ।
**व्योमचारिन्** पु॰ व्योम्नि चरति चर-णिनि । विहगे, देवे, चन्द्रनक्षत्रादौ च ।
**व्योमधूम** पु॰ व्योम्नः धूम इव नीलत्वात् । मेघे ।
**व्योमन्** न॰ व्ये-मनिन् पृ॰ । आकाशे, (आव) अभ्रके, जले च
**व्योममण्डल** न॰ व्योम मण्डलमिव । मण्डलाकारे आकाशे ६त॰ । पताकायाम् । [अकस्मादुत्थिते वायोर्निर्घाते च
**व्योममुद्गर** पु॰ व्योम्नो मुद्गर इव आघातहेतुत्वात् । गगनात्
**व्योमयान** न॰७त॰ । आकाशगमनयोग्ये वाहने विमाने ।
**व्योष** न॰ वि+उष-अच् । शुण्ठीमरीचपिप्पलीरूपे त्रिकटुनि
**व्रज** गतौ भ्वा॰पर॰सक॰सेट् । व्रजति अव्राजीत् । [जत् त
**व्रज** संस्कारे गतौ च चु॰उ॰सक॰सेट् । 'व्राजयति ते अविव्र-
**व्रज** पु॰ व्रज-घञर्थे क । समूहे, गोष्ठे, पथि, मथुरासमीपस्थे देशभेदे च ।
**व्रजनाथ** पु॰६त॰ । श्रीकृष्णे व्रजवासादयोऽप्यत्र । [श्रीकृष्णे ।
**व्रजमोहन** पु॰ व्रजान् व्रजस्थान् मोहयति मुह-णिच्-ल्यु ।
**व्रजवर** पु॰ व्रजानां वरः प्रार्थनीयः । श्रीकृष्णे ।
**व्रजवल्लभ** पु॰ ६त॰ । श्रीकृष्णे ।
**व्रजाङ्गना** स्त्री॰ ६त॰। व्रजस्य स्त्रियां गोप्याम् ।
**व्रज्या** स्त्री॰व्रज-क्यप्। पर्य्यटने, गमने,जिगीषोर्युद्धार्थप्रयाणे च
**व्रण** शब्दे भ्वा॰पर॰अक॰सेट् । व्रणति अव्रणीत् अव्राणीत्
**व्रण** अङ्गक्षतौ अद॰चु॰उ॰सक॰सेट्। व्रणयति ते अववणत् त
**व्रण** पु॰न॰ चु॰व्रण-अच् । क्षते ।
**व्रणकृत्** पु॰ व्रणं करोति कृ-क्विप् । भल्लातके, व्रणकारके त्रि॰
**व्रणद्विष्** पु॰ व्रणं द्वेष्टि द्विष-क्विप् । ब्राह्मयष्टिकायाम् । व्रणघातके त्रि॰ ।
**व्रणहन्** पु॰व्रणं हन्ति हन-ड । एरण्डवृक्षे। गुडूच्याम् स्त्री॰ ।
**व्रणाश** पु॰ व्रणमश्नाति अश-अण् । पोते,गन्धरसे गडुच्यां च
**व्रत** न॰व्रज-घ जस्य तः । भक्षणभेदे,पुण्यसाधने उपवासादि नियमभेदे च ।
**व्रतति(ती)** स्त्री॰ प्रतन-क्तिन् पृ॰ वा ङीप् । लतायां विस्तारे च
**व्रतसंग्रह** पु॰ ६त॰ । व्रतधारणार्थं व्रतदीक्षायाम् ।
**व्रतादेश** पु॰ ६त॰ । उपनयनादिव्रतोपदेशे ।
**व्रतिन्** पु॰ व्रतमस्त्यस्य इनि । व्रतधारके,यजमाने च ।
**व्रश्च** छेदे तु॰पर॰सक॰ वेट् । वृश्चति अव्रश्चीत् अव्राक्षीत् ।
**व्रश्चन** पु॰ वृश्च्यतेऽनेन व्रश्च-ल्युट् । (करात) स्वर्णादिच्छेदनार्थे पदार्थे । भावे ल्युट् । छेदने न॰ ।

व्रात पु० वृ-अतच् पृ० । समूहे ।

व्रातीन त्रि० व्रातेन संघेन जीवति । संघजीविनि ।

व्रात्य न०व्रातात् समूहात् च्यवति यत् । अध्ययनशून्ये, संस्कार-हीने, जातिमात्रोपजीविनि, 'अत ऊर्द्धं त्रयोऽप्येते यथा-कालमसंस्कृताः । सावित्रीपतिता व्रात्या' इति मनुः ।

व्रात्यस्तोम पु० व्रात्ययोग्यः स्तोमः । यज्ञभेदे ।

व्री वृतौ क्र्या०प्रा०पर०सक०अनिट् । व्रिणाति-व्रीणाति अव्रैषीत्

व्री गतौ दिवा०आत्म०सक०अनिट् । व्रीयते अव्रेष्ट-निष्ठातस्य नः । व्रीणः ।

व्रीड क्षेपे सक०लज्जायाम् अक दि०प०सेट् । व्रीड्यति अव्रीडीत्

व्रीड पु० व्रीड-घञ् । लज्जायाम् ।अ । तत्रैव स्त्री० ।

व्रीश वधे वा चु०उभ० पक्षे भ्वा०पर०सक०सेट् । व्रीशयति ते व्रीशति अविव्रिशत् त अव्रीशीत् ।

व्रीहि पु० व्री हि किच् । धान्यमात्रे, आशुधान्ये च । [धान्य

व्रीहिक त्रि० व्रीहिरस्त्यस्य ठन् । धान्यवति । इति व्रीहित्य०

व्रीहिकाञ्चन पु० व्रीहिषु काञ्चनं तद्रूपमस्त्यस्य अच् । मसूरे

व्रीहिपर्णी स्त्री० व्रीहीणामिव पर्णा यस्याः ङीप् । (शाल पान) क्षुपभेदे । [पर्ण्यादौ ।

व्रीहिमय पु० व्रीहिप्रचुरः मयट् । व्रीहिनिर्मिते हविर्द्रव्ये

व्रीहिराजिक पु० व्रीहिषु राजते राज-ण्वुल् ततःस्वार्थे ठ । (काङ्गनि) धान्यभेदे ।

व्रुड संवरणे सक० संघाते अक० तु० कु० पर० सेट् । व्रुडति अव्रुडीत् । [वि व्रूशयति अवव्रूशीत् ।

व्रूश वधे वा चु०उभ०पक्षे भ्वा०पर०स०सेट् । व्रूशयते अवुव्रूशत्

व्रैहेय त्रि० व्रीहीणां भवनं क्षेत्रं ढञ् । व्रीहिभवनयोग्ये क्षेत्रे

व्ली गतौ वरणे च क्र्या०प्रा० पर सक०अनिट् । व्लीनाति व्लिनाति अव्लैषीत् ।

## श

श न० शो-ड । मङ्गले । महादेवे, शस्त्रे च पु० ।

शंयु त्रि० शमस्त्यस्य शम्+युस् । शुभान्विते ।

शंव त्रि०शमस्त्यस्य शम्+व । शुभयुक्ते, मुषलाग्रलौहे वज्रे च पु०

शंवर न० शं वृणोति शम्+वृ-अच् । जले ।

शंसा स्त्री० शन्स-अ । वाक्ये, वाञ्छायां, प्रशंसायाञ्च ।

शंसित त्रि० शन्स-क्त । निर्दिते, हिंसिते, कथिते स्तुते च ।

शंस्य त्रि०शन्स-ण्यत् । हिंस्ये, स्तुत्ये वाच्ये, च ।

शक भासे सह० क्षमे सक०भ्वा० आ०सेट् इदित् । शङ्कते अशङ्किष्ट । [कीत् अशकिष्ट ।

शक सामर्थ्ये अक० दि०उभ०सेट् । शक्यति ते अशाकीत्-अश-

शक सामर्थ्ये स्वा०पर०अक०अनिट् । शक्नोति ऌदित्-अशकत्-अशाक्षीत् पुषादिरित्येके तेन अशकदित्येव ।

शक पु० शक-अच् । जातिभेदे, देशभेदे, स्वराज्यावधिवत्सराङ्क प्रवर्त्तके नृपभेदे, तदीये वत्सरे च । कलियुगे शककर्त्तृषु युधिष्ठिरः विक्रमादित्यः शालिवाहनश्चेति त्रयोगताः ।

शकट पु०न० शक अटन् । यानभेदे, असुरविशेषे, स्वल्पार्थे ङीप् । क्षुद्रशकटे स्वार्थे कन् । शकटिका तत्रैव ।

शकटहन् पु०शकटमसुरभेदं हतवान् हन-भूते क्विप् । श्रीकृष्णे

शकटाख्या स्त्री० शकटाकारत्वात् तदाख्या यस्याः । रोहिणी-नक्षत्रे तस्याः शकटाकारचतुस्तारात्मकत्वेन तथात्वम् ।

शकल पु० न० शक-कलच् । खण्डे, एकभागे, त्वचि वल्कले, शल्के, (आंश) च न० ।

शकलिन् पु० शकलं शल्कमस्त्यस्ति इनि । मत्स्ये ।

शकाब्द पु० शककर्त्तृनृपसंबन्धी अब्दः । शकनृपकर्त्तृकस्व-राज्यावधिवत्सरे तत्संख्यायाञ्च ।

शकार पु० 'मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः । सोऽय-मनूढाभ्राता राज्ञः श्यालः शकार' इत्युक्तलक्षणे राज्ञो-ऽनूढभार्याभ्रातरि ।

शकारि पु० शकानां म्लेच्छजातिभेदानामरिः । विक्रमादित्ये ।

शकुन न० शक-उनन् । शुभाशुभसूचकनिमित्ते-बाहुस्पन्दन-काकादिदर्शनादौ, पक्षिमात्रे, पक्षिभेदे, गृध्रे च पु० । [स्त्री०

शकुनज्ञ त्रि० शकुनं जानाति ज्ञा-क । निमित्ताभिज्ञे, ज्योतिर्विदि

शकुनि पु० शक-उनि । पक्षिमात्रे, चिल्लपक्षिणि, गान्धारराज-पुत्रे दुर्योधनमातुले च । श्यामापक्षिणि स्त्री० ङीप् ।

शकुनिप्रपा स्त्री० ६त० । पक्षिणां पानीयशालायाम् ।

शकुन्त पु०शक-उन्त । पक्षिमात्रे, भासपक्षिणि, कीटभेदे च ।

शकुन्तला स्त्री० शकुन्तैः लायते ला कर्मणि-क । मेनकागर्भ-जातायां विश्वामित्रसुतायाम् सा च जन्मान्ते मातापित्रोः त्यक्ता शकुन्तपालिता पश्चात् कण्वमुनिना प्रतिपालिता दुष्मन्तनृपेण गान्धर्वविधिना व्यूढेति भारतम् ।

शकुन्तलात्मज पु० ६त० । भरतनृपे ।

शकुन्ति पु० शक-उन्ति । पक्षिमात्रे, भासपक्षिणि च ।

शकुल पु० शक-उलच् । मत्स्यभेदे (शउल) । [कूर्म्यायाम् ।

शकुलाक्षी स्त्री० शकुलस्याक्षीव अक्षि यस्याः ङीप् । गण्ड-

शकुलादनी स्त्री० शकुलैरद्यते अद-ल्युट् । (कट्की) शाक-भेदे जटामांस्यां, जलपिप्पल्यां, कटुकायां च ।

शकुलार्भक पु० शकुलस्यार्भक इव क्षुद्राकारत्वात् । (गड्ड) मत्स्ये ।

शकृत स्त्री॰ शक ऋतन्। विष्ठायाम्। [स्त्री॰ ङीप्।

शकृत्करि पु॰ शकृत किरति कृ इन्। गवादीनां वत्से वत्सायां

शकृद्द्वार न॰ ६त॰। मलद्वारे अपानस्थाने।

शक्क(क्व)र पु॰ शक क्विप् कृ अच् कर्म॰ शक करण वा।

वृषे। चतुर्द्दशाक्षरपादके छन्दोभेदे नदीभेदे मेखलायाञ्च

स्त्री॰ ङीप्। शक्करीत्यपि चतुर्द्दशाक्षरपादके छन्दसि।

शक्त त्रि॰ शक क्त। समर्थे।

शक्ति स्त्री॰ शक क्तिन्। सामर्थ्ये स्त्रीदेवतायाञ्च। न्यायाद्युक्ते

कारणनिष्ठे कार्य्योत्पादनयोग्ये धर्म्मभेदे शब्दनिष्ठे अर्थ-

बोधकत्वरूपे वृत्तिभेदे अस्त्रभेदे च।

शक्तिग्रह पु॰ ६त॰। शक्ते अर्थबोधकतारूपवृत्तेर्ज्ञाने।

शक्तिग्राहक पु॰ शक्तिं गृह्णाति ग्रह ण्वुल्। कार्त्तिकेये

शक्तिं ग्राहयति बोधयति ग्रह णिच् ण्वुल्। 'शक्तिग्रहं

व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च वाक्यस्य

शेषाद्विवृतेर्वदन्ति' इत्युक्ते शक्तिबोधके हेतौ।

शक्तिधर पु॰ शक्तिं धरति धृ-अच्। कार्त्तिकेये सामर्थ्यधरे

त्रि॰ 'शक्तिधर कुमार' इति रघुः शक्तिभृदादयोऽप्यत्र।

शक्तिपर्ण पु॰ शक्तिरिव पर्णं यस्य। सप्तपर्णे।

शक्तिपाणि पु॰ शक्तिः पाणौ यस्य। कार्त्तिकेये शक्तिहस्ता-

दयोऽप्यत्र। [वोद्धरि।

शक्तिहेतिक पु॰ शक्तिर्हेतिः प्रहरणास्त्रं यस्य कप्। शक्त्या

शं(स)क्तु पु॰ श(स)च तुन्। (छातु) भ्रष्टयवादिचूर्णे।

शक्तुफला(ली) स्त्री॰ शक्तव इव सूक्ष्माणि फलान्यस्याः वा

ङीप्। शमीवृक्षे।

शक्त्रि(क्ति) पु॰ वशिष्ठसुते पुत्रे पराशरस्य पितरि मुनौ।

शक्रु त्रि॰ शक रु। प्रियभाषिणि।

शक्य त्रि॰ शक यत्। शक्तियुक्ते शब्दा बोध्येऽर्थे, समर्थनीये,

साधयितुं योग्ये, वाक्ये च।

शक्यतावच्छेदक त्रि॰ ६त॰। शक्यपदार्थस्य धर्म्मो येन धर्मेण

अर्थस्य शब्दसङ्केतविषयता तस्मिन् धर्मे। यथा घटशब्द

घटत्वेन घटं बोधयति अतस्तद्धर्मो घटत्वं घटशब्दस्य

शक्यतावच्छेदकम्। [पेचके च।

शक्र पु॰ शक रक्। इन्द्रे, कुटजवृक्षे, अर्ज्जुनवृक्षे, ऐशानदले,

शक्रगोप पु॰ शक्र शक्रधनुर्गोपायति समवर्णत्वात्। इन्द्रगोपे

शक्रज पु॰ शक्रात् जायते जन ड। काके। इन्द्रजन्ये त्रि॰

शक्रजातादयोऽप्यत्र। [मेघनादे राक्षसे, इन्द्रजेतरि त्रि॰।

शक्रजित् पु॰ शक्रं जितवान् जि-क्विप् तुक् च। रावणात्मजे

शक्रधनुस् न॰ ६त॰। मेघनाम्ब्वने शक्रधनुराकारे सूर्य-

किरणसम्पर्कजे पदार्थभेदे (रामधनुक)। [कारे पदार्थे।

शक्रध्वज पु॰६त॰। भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजा-

शक्रनन्दन पु॰ ६त॰। अर्ज्जुने। इन्द्रानन्दके त्रि॰।

शक्रपर्य्याय पु॰ शक्रस्य पर्य्यायो नाम नाम यस्य शक्र॰।

कुटजवृक्षे ६त॰। इन्द्रस्य वाचकशब्दे।

शक्रपादप पु॰ ६त॰। देवदारुवृक्षे। [स्वार्थे कन्। तत्रैव।

शक्रपुष्पी स्त्री॰ शक्रस्येव पुष्पमस्याः ङीप्। अग्निशिखावृक्षे

शक्रभवन न॰६त॰। स्वर्गे। शक्रावासादयोऽप्यत्र। [रुण्याम्।

शक्रभूभवा स्त्री॰ शक्रस्य भुवि भवति भू अच्। इन्द्रवा-

शक्रमातृ स्त्री॰शक्रस्य मातेव। भार्ग्याम्। ६त॰। इन्द्रजनन्याम्

शक्रमूर्द्धन् पु॰ शक्रस्येव शिखावान् मूर्द्धा यस्य। वल्मीके।

६त॰। इन्द्रमस्तके शक्रशिर आदयोऽप्यत्र।

शक्रवल्ली स्त्री॰ शक्रप्रिया वल्ली। इन्द्रवारुण्याम्।

शक्रवाहन पु॰ शक्रं वाहयति वह णिच् ल्यु। मेघे इन्द्रवा-

हनादयोऽप्यत्र।

शक्रवीज न॰ शक्रस्य कुटजस्य वीजम्। इन्द्रयवे।

शक्रशाखिन् पु॰ शक्रनामकः शाखी। कुटजवृक्षे।

शक्रसारथि पु॰ ६त॰। इन्द्रसारथौ मातलौ।

शक्रसुत पु॰ शक्रस्य सुत। वालिनामके वानरराजे।

शक्रसुधा स्त्री॰ शक्रस्य सुधेव। पालङ्क्याम्।

शक्रसृष्टा स्त्री॰ ६त॰। हरीतक्याम्।

शक्राख्य पु॰ शक्रस्येवाख्या यस्य। पेचके॰। [मिन्द्रपत्न्याम्।

शक्राणी स्त्री॰ शक्रस्य पत्नी ङीप् आनुक् च। पुलोमजाया-

शक्राशन न॰ शक्रेणाश्यते अश ल्युट्। भङ्गायाम्।

शक्राह्वन पु॰ शक्रं तन्नामाह्वयते ह्वे ल्यु। कुटजवृक्षे।

शक्रोत्थान न॰ शक्रस्य तद्ध्वजस्य उत्थानम्। शक्रध्वजस्यो

त्थाने, तदुपलक्षित उत्सवे च। ६त॰ शक्रोत्सवोऽप्यत्र।

शङ्कर पु॰ शं करोति कृ अच्। महादेवे कल्याणकरे त्रि॰

शिवपत्न्यां स्त्री॰ ङीप्। [शुभ्रत्वात्। कर्पूरे।

शङ्करावास पु॰ ६त॰। 'कैलासाचले शङ्करस्यावास इव

शङ्का स्त्री॰ शकि अ। त्रासे वितर्के, संशये च। [ङ्किते च।

शङ्कित त्रि॰ शङ्का जातास्य तार॰ इतच्। भीते सन्दिग्धे शि

शङ्कु पु॰शकि उण्। स्थाणौ मत्स्यभेदे, शल्यास्त्रे, कीलके,

दशकोटिसंख्यायां, तत्संख्याते, महादेवे, कलुषे, पञ्चषि

राजके, मेढ्रे, नखीनामद्रव्ये, छायापरिमाणार्थे काष्ठादि

निर्मिते, 'चक्राङ्कुशा च सूक्ष्मपा काष्ठाद्यङ्कुसमूर्त्तिका।

शङ्कुस्ता भवदिन्युक्ते कीलभटे च।

शङ्कुकर्ण पु॰ शङ्कुरिव कर्णोऽस्य। गर्द्दभे।

शङ्कुतरु पु० शङ्कुयोग्यस्तरुः । शालवृक्षे शङ्कुरवादयोऽप्यत्र ।
शङ्कुला स्त्री० शकि-उलच् । उत्पलपत्रिकायाम् पूगच्छेदकास्त्र-भेदे (जाँति) शङ्कुलाखण्ड इति सिद्धान्तकौमुदी ।
शङ्ख पु० न० शम-ख । स्वनामख्याते समुद्रजाते पदार्थे, ललाटास्थ्नि, निधिभेदे, नखीनामगन्धद्रव्ये, कर्णसमीपस्थे-अस्थ्नि नागभेदे, हस्तिदन्तमध्ये, दशनिखर्वसंख्यायां, तत्संख्याते च
शङ्खक न० शङ्खस्य विकारः वुञ् । शङ्खजाते वलयाकारे पदार्थे
शङ्खकार पु० शङ्खं तद्विकारं वलयाकारं पदार्थं करोति कृ-अण् । वर्णसङ्करजातिभेदे (शाँखारी)
शङ्खचूर्ण न० ६त० । शङ्खजाते चूर्णे ।
शङ्खद्राविन् पु० शङ्खं द्रावयति द्रु-णिच्-णिनि । अम्लवेतसे
शङ्खधरा स्त्री० धृ-अच् ६त० । हिलमोचिकायाम् ।
शङ्खध्म पु० शङ्खं धमति ध्मा-क । शङ्खवादके । क्विप् । शङ्खध्मा इत्यप्यत्र । [अपि तत्र ङीप्
शङ्खनख पु० शङ्खस्य नख इव । क्षुद्रशङ्खे (जोङ्गड़ा) स्त्रीत्व-
शङ्खपुष्पी स्त्री० शङ्ख इव पुष्पमस्या ङीप् । (शङ्खाली) वृक्षे
शङ्खभृत् पु० शङ्खं बिभर्त्ति भृ-क्विप् तुक् च । विष्णौ ।
शङ्खमुख पु० शङ्ख इव मुखमस्य । कुम्भीरे ।
शङ्खिका स्त्री० शङ्खोऽस्त्यस्याः ठन् । (चोरकावका) क्षुपभेदे
शङ्खिन् पु० शङ्ख+अस्त्यर्थे इनि । विष्णौ, समुद्रे च ।
शङ्खिनी स्त्री० शङ्खोऽस्त्यस्याः इनि । चोरपुष्प्याम्, श्वेतचुक्रायां, यवतिक्तायां, स्त्रीभेदे, उपदेवताभेदे, (शाँकचिन्नी) शङ्खवल्यां स्त्रियाञ्च ।
शङ्खिनीफल पु० शङ्खिन्या इव फलमस्य । शिरीषवृक्षे ।
शङ्खिनीवास पु० ६त० । शाखोटकवृक्षे ।
शच गतौ भ्वा० आ० स० सेट् इदित् । शञ्चते, अशञ्चिष्ट ।
शच वाचि भ्वा० आ० सक० सेट् । शचते अशचिष्ट ।
शचि(ची) स्त्री० शच-इन् वा ङीप् । इन्द्रपत्न्याम् ।
शचीपति पु० ६त० । इन्द्रे । शचीभर्त्रादयोऽप्यत्र ।
शट(ठ) श्लाघायां चु० उभ० सक० सेट् । शाट(ठ)यते अशीशट(ठ)त
शट सादे गतौ भेदे च भ्वा० पर० अक० रोगे सक० सेट् । शटति । अशाटीत्-अशटीत् ।
शट पु० शटति रुजति शट-अच् । अम्ले, पिङ्गवर्णे, जटायाञ्च स्त्री० ।
शटि(टी) स्त्री० शट-इन् वा ङीप् । (वन आदा) स्वनामख्याते ओषधिभेदे । [अशाटीत्-अशटीत्
शठ वधे सक० कैतवे क्लेशे च अक० भ्वा० पर० सेट् । शठति
शठ श्लाघायां चु० पर० सक० सेट् । शाठयति ते अशीशठत् त
शठ दुष्टवचने चुरा० उभ० सक० सेट् । शठयति ते अशशठत् त,

शठ न० शठ-अच् । तगरे, कुङ्कुमे, लौहे च । धुस्तूरे, मध्यस्थपुरुषे च पु० । धूर्त्ते त्रि० ।
शठता स्त्री० शठस्य भावः तल् । शाठ्ये वञ्चनायाञ्च ।
शठम्बा स्त्री० शठ-अच् अवि-अच् कर्म० स० । अम्बष्ठायाम् ।
शड संघाते रोगे च अक० भ्वा० प० सेट् इदित् । शण्डति अशण्डीत् ।
शण दाने भ्वा० पर० सक० सेट् । शणति अशाणीत् अशणीत्
शण पु० शण-अच् । स्वनामख्याते क्षुपभेदे ।
शणघण्टिका स्त्री० शणस्य घण्टेव इवार्थे कन् । शणपुष्पजाते घण्टारववति फले ।
शणपर्णी स्त्री० शणस्येव पर्णान्यस्याः ङीप् । गगनपर्ण्याम् ।
शणपुष्पी स्त्री० शणस्येव पुष्पमस्याः ङीप् (झनझने, वनशणे) स्वार्थे कन् । तत्रैव ।
शणसूत्र न० शणाज्जातम् सूत्रम् । शणजाते जाले ।
शणालुक पु० शण इवालुकः । आरेवतवृक्षे (शोणालु)
शणिका स्त्री० शणस्येव पुष्पमस्त्यस्याः ठन् । शणपुष्प्याम् ।
शण्ड न० शडि-अच् । पद्मादिसमूहे, नपुंसके, वृषे च ।
शण्डिल पु० शडि-इलच् । शाण्डिल्यस्य पितरि मुनिभेदे ।
शण्ढ पु० शम-ढ तस्य नेत्त्वम् । अन्तःपुररक्षके क्लीबे ।
शत न० शो-कतन् । स्वनामख्यातसंख्यायाम्, तत्संख्येये बहुसंख्यायां च । स्वार्थे कन् । तत्रैव न० ।
शतक त्रि० शतं परिमाणमस्य कन् । शतसंख्यायुक्ते ।
शतकुम्भ पु० शतं कुम्भा यत्र । स्वर्णखनिपर्वतभेदे ।
शतकोटि पु० शतं कोटयोऽग्राणि यस्य । वज्रे शतगुणिता कोटिः शाक० । शतगुणितकोटिसंख्यायां स्त्री० ।
शतक्रतु पु० शतं क्रतवोऽस्य । इन्द्रे ।
शतग्रन्थि स्त्री० शतं ग्रन्थयोऽस्य । दूर्वायाम् । [करञ्जे च
शतघ्नी स्त्री० शतं हन्ति हन टक् । अस्त्रभेदे, वृश्चिकाल्याम्,
शततम त्रि० शतस्य पूरणः तमप् । शतसंख्यापूरणे ।
शततारा स्त्री० शतमितः तारा शाक० । शतभिषानक्षत्रे ।
शतदन्तिका स्त्री० शत दन्ता इव सन्त्यस्य कन् । नागदन्त्याम्
शतद्रु पु० शतधा द्रवति द्रु-कु-नि० । नदीभेदे । [शतप्रकारे अव्य०
शतधा स्त्री० शतं पर्व्वाण्यस्य धा-क । दूर्वायाम् । शत+धाच् ।
शतधामन् पु० शतं धामानि यस्य । विष्णौ ।
शतधार पु० शतं धाराः अग्राणि यस्य । वज्रे शतधारायुक्ते त्रि० । "रक्षो" पवित्रमपि शतधारमिति श्रुतिः ।
शतधृति पु० शतं धृतयोऽस्य । इन्द्रे, ब्रह्मणि, स्वर्गे च ।
शतपत्र न० शतं पत्राणि यस्य । पद्मे ।

शकृत् स्त्री० शक-ऋतन् । विष्ठायाम् । [स्त्री० ङीप् ।
शकृत्करि पु० शकृतं किरति कॄ-इन् । गवादीनां वत्से वत्सायां
शकृद्द्वार न० ६त० । मलद्वारे अपानस्थाने ।
शक्वर पु० शक-क्विप् ह-अच् कर्म० शक-करप् वा । वृषे । चतुर्दशाक्षरपादके छन्दोभेदे, नदीभेदे मेखलायाञ्च स्त्री० ङीप् । शक्वरीत्यपि चतुर्दशाक्षरपादके छन्दसि ।
शक्त त्रि० शक-क्त । समर्थे ।
शक्ति स्त्री० शक-क्तिन् । सामर्थ्ये स्त्रीदेवतायाञ्च । न्यायाद्युक्ते कारणनिष्ठे कार्य्योत्पादनयोग्ये धर्मभेदे, शब्दनिष्ठे अर्थबोधकताख्ये वृत्तिभेदे अस्त्रभेदे च ।
शक्तिग्रह पु० ६त० । शक्तेः अर्थबोधकताख्यवृत्तेर्ज्ञाने ।
शक्तिग्राहक पु० शक्तिं गृह्णाति ग्रह-ण्वुल् । कार्त्तिकेये शक्तिं ग्राहयति बोधयति ग्रह-णिच् ण्वुल् । 'शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च वाक्यस्य शेषाद्विवृतेर्वदन्ति' इत्युक्ते शक्तिबोधके हेतौ ।
शक्तिधर पु० शक्तिं धरति धृ-अच् । कार्त्तिकेये सामर्थ्यधरे त्रि० 'शक्तिधरः कुमारः' इति रघु० शक्तिभृदादयोऽप्यत्र ।
शक्तिपर्ण पु० शक्तिरिव पर्णं यस्य । सप्तपर्णे ।
शक्तिपाणि पु० शक्तिः पाणौ यस्य । कार्त्तिकेये शक्तिहस्तादयोऽप्यत्र । [योद्धरि ।
शक्तिहेतिक पु० शक्तिर्हेतिः प्रहरणमस्य यस्य कप् । शक्त्या
शँ(स)क्तु पु० ष(स)च-तुन् । (छातु) भृष्टयवादिचूर्णे ।
शक्तुफला(ली) स्त्री० शक्तव इव सूक्ष्माणि फलान्यस्याः वा ङीप् । शमीवृक्षे ।
शक्ति(क्त्रि) पु० वशिष्ठमुनेः पुत्रे पराशरस्य पितरि मुनौ ।
शक्नु त्रि० शक-नु । प्रियभाषिणि ।
शक्य त्रि० शक-यत् । शक्तियुक्ते शक्त्या बोध्येऽर्थे, समर्थनीये, साधयितुं योग्ये, वाच्ये च ।
शक्यतावच्छेदक त्रि० ६त० । शक्यपदार्थस्य धर्मो येन धर्मेण पदार्थस्य शब्दसङ्केतविषयता तस्मिन् धर्मे । यथा घटशब्दः घटत्ववन्तं पदार्थं बोधयति अतस्तद्धर्मो घटत्वं घटशब्दस्य शक्यतावच्छेदकम् । [पेचके च ।
शक्र पु० शक-रक् । इन्द्रे, कुटजवृक्षे, अर्ज्जुनवृक्षे, ज्येष्ठानक्षत्रे,
शक्रगोप पु० शक्रं शक्रधनुर्गोपायति समवर्णत्वात् । इन्द्रगोपे
शक्रज पु० शक्रात् जायते जन-ड । काके । इन्द्रजन्ये त्रि० शक्रजातादयोऽप्यत्र । [मेघनादे रावणे, इन्द्रजेतरि त्रि० ।
शक्रजित् पु० शक्रं जितवान् जि-क्विप् तुक् च । रावणात्मजे
शक्रधनुस् न० ६त० । मेघनाम्नि शक्रधनुराकारे सूर्य्य-किरणसम्पर्कजे पदार्थभेदे (रामधनुक) । [कारे पदार्थे ।
शक्रध्वज पु० ६त० । भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजा-
शक्रनन्दन पु० ६त० । अर्ज्जुने । इन्द्रानन्दके त्रि० ।
शक्रपर्य्याय पु० शक्रस्य पर्य्यायो नाम नाम यस्य शाक० । कुटजवृक्षे ६त० । इन्द्रस्य वाचकशब्दे ।
शक्रपादप पु० ६त० । देवदारुवृक्षे । [स्वार्थे कन् । तत्रैव ।
शक्रपुष्पी स्त्री० शक्रस्येव पुष्पमस्याः ङीप् । अग्निशिखावृक्षे
शक्रभवन न० ६त० । स्वर्गे । शक्रावासादयोऽप्यत्र । [ण्याम् ।
शक्रभूभवा स्त्री० शक्रस्य भुवि भवति भू-अच् । इन्द्रवारु-
शक्रमातृ स्त्री० शक्रस्य मातेव । भार्ग्याम् । ६त० । इन्द्रजनन्याम्
शक्रमूर्द्धन् पु० शक्रस्येव शिखावान् मूर्द्धा यस्य । वल्मीके । ६त० । इन्द्रमस्तके शक्रशिर आदयोऽप्यत्र ।
शक्रवल्ली स्त्री० शक्रप्रिया वल्ली । इन्द्रवारुण्याम् ।
शक्रवाहन पु० शक्रं वाहयति वह-णिच्-ल्यु । मेघे इन्द्रवाहनादयोऽप्यत्र ।
शक्रबीज न० शक्रस्य कुटजस्य बीजम् । इन्द्रयवे ।
शक्रशाखिन् पु० शक्रनामकः शाखी । कुटजवृक्षे ।
शक्रसारथि पु० ६त० । इन्द्रसारथौ मातलौ ।
शक्रसुत पु० शक्रस्य सुतः । वालिनामके वानरराजे ।
शक्रसुधा स्त्री० शक्रस्य सुधेव । पालङ्क्याम् ।
शक्रसृष्टा स्त्री० ६त० । हरीतक्याम् ।
शक्राख्य पु० शक्रस्येवाख्या यस्य । पेचके । [मिन्द्रपत्न्याम् ।
शक्राणी स्त्री० शक्रस्य पत्नी ङीप् आनुक् च । पुलोमजाया-
शक्राशन न० शक्रेणाश्यते अश-ल्युट् । भङ्गायाम् ।
शक्राशन पु० शक्रं तदाख्यामश्नुते अश-ल्यु । कुटजवृक्षे ।
शक्रोत्थान न० शक्रस्य तद्ध्वजस्य उत्थानम् । शक्रध्वजस्योत्थाने, तदुपलक्षिते उत्सवे च । ६त० शक्रोत्सवोऽप्यत्र ।
शङ्कर पु० शं करोति कृ अच् । महादेवे कल्याणकरे त्रि० शिवपत्न्यां स्त्री० ङीप् । [शुभ्रत्वात् । कर्पूरे ।
शङ्करावास पु० ६त० । कैलासाचले शङ्करस्यावास इव
शङ्का स्त्री० शकि-अ । त्रासे, वितर्के, संशये च । [चिते च ।
शङ्कित त्रि० शङ्का जातास्य तार० इतच् । भीते संदिग्धे चित
शङ्कु पु० शकि-उण् । स्थाणौ मत्स्यभेदे, शल्यास्त्रे, कीलके, दशकोटिसंख्यायां, तत्संख्याते, महादेवे, कलुषे, पञ्चाशि राजाखे, मेढ्रे, नखीनामद्रव्ये, छायापरिमाणार्थं काष्ठादि निर्मिते, 'शङ्कोस्त्वा तु सूच्यग्रा काष्ठाङ्कुशसन्निभा । शङ्कुसंज्ञा भवेदि'त्युक्ते कीलभेदे च ।
शङ्कुकर्ण पु० शङ्कुरिव कर्णोऽस्य । गर्द्दभे ।

शङ्खतरु पु० शङ्खयोग्यतरुः । शालवृक्षे शङ्खवाद्ययोग्यत्वा ।
शङ्खुला स्त्री० शकि-उलच् । पत्रपत्रिकायाम् पूगच्छेदकास्त्र-
भेदे (जाति) शङ्खुलाखण्ड इति सिद्धान्तकौमुदी ।
शङ्ख पु० न० शम-ख । स्वनामख्याते समुद्रजाते पदार्थे, ललाटास्थि, निधिभेदे, नखोनामगन्धद्रव्ये, कर्णसमीपस्थे-अस्थि नागभेदे, हस्तिदन्तमध्ये, दशनिखर्वसंख्यायां, तत्संख्याते च
शङ्खक न० शङ्खस्य विकारः कन् । शङ्खजाते वलयाकारे पदार्थे
शङ्खकार पु० शङ्खं तद्विकारं वलयाकारं पदार्थं करोति कृ-
अण् । वर्णसङ्करजातिभेदे (शांखारी)
शङ्खचूर्ण न० ६त० । शङ्खजाते चूर्णे ।
शङ्खद्राविन् पु० शङ्खं द्रावयति द्रु-णिच्-णिनि । अम्लवेतसे
शङ्खधरा स्त्री० धृ-अच् ६त० । हिलमोचिकायाम् ।
शङ्खध्म पु० शङ्खं धमति ध्मा-क । शङ्खवादके । क्विप् । शङ्खा-
ध्मा इत्यप्यत्र । [अपि तत्र ङीप्
शङ्खनख पु० शङ्खस्य नख इव । क्षुद्रशङ्खे (जोङ्गड़ा) स्त्रीत्व-
शङ्खपुष्पी स्त्री० शङ्ख इव पुष्पमस्याः ङीप् । (शङ्खाखी) वृक्षे
शङ्खभृत् पु० शङ्खं बिभर्त्ति भृ-क्विप् तुक् च । विष्णौ ।
शङ्खमुख पु० शङ्ख इव मुखमस्य । कुम्भीरे ।
शङ्खिका स्त्री० शङ्खोऽस्त्यस्याः ठन् । (चोरकाकुका) क्षुपभेदे
शङ्खिन् पु० शङ्ख+अस्त्यर्थे इनि । विष्णौ, समुद्रे च ।
शङ्खिनी स्त्री० शङ्खोऽस्त्यस्याः इनि । चोरपुष्पयाम्, श्वेतबुह्नायां, यवतिक्तायां, स्त्रीभेदे, उपदेवताभेदे, (शाकचिल्ली) शङ्खवल्ल्यां स्त्रियाञ्च ।
शङ्खिनीफल पु० शङ्खिन्या इव फलमस्य । शिरीषवृक्षे ।
शङ्खिनीवास पु० ६त० । शाखोटकवृक्षे ।
शच गतौ भ्वा० आ० स० सेट् इदित् । शञ्चते, अशञ्चिष्ट ।
शच व्यक्तायां वाचि भ्वा० आ० सक० सेट् । शचते अशचिष्ट ।
शचि(ची) स्त्री० शच-इन् वा ङीप् । इन्द्रपत्न्याम् ।
शचीपति पु० ६त० । इन्द्रे । शचीभर्त्त्रादयोऽप्यत्र ।
शट(ठ) श्लाघायां चु० आ० सक० सेट् । शाट(ठ)यते अशीशट(ठ) त
शट सादे गतौ भेदे च भ्वा० पर० सक० रोगे अक० सेट् ।
शटति । अशाटीत्-अशटीत् ।
शट पु० शटति रुजति शट-अच् । अम्ले, सिंहकेसरे, जटायाञ्च स्त्री०
शटि(टी) स्त्री० शट-इन् वा ङीप् । (शठ कचूर) स्वनामख्याते
औषधिभेदे । [अशाठीत्-अशठीत्
शठ वधे सक० कैतवे क्लेशे च अक० भ्वा० पर० सेट् । शठति
शठ आलस्ये चु० पर० अक० सेट् । शाठयति ते अशीशठत् त
शठ दुष्टवचने अद० चु० उभ० सक० सेट् । शठयति ते अशशठत् त

शठ न० शठ-अच् । तगरे, कुङ्कुमे, लौहे च । धुस्तूरे, मध्यस्थ
पुरुषे च पु० । धूर्त्ते त्रि० ।
शठता स्त्री० शठस्य भावः तल् । शाठ्ये वञ्चनायाञ्च ।
शठम्बा स्त्री० शठ-अच् अबि-अच् कर्म० शक० । अम्बष्ठायाम् ।
शड संघाते रोगे च अक० भ्वा० प० सेट् इदित् । शण्डति
अशण्डिष्ट ।
शण दाने भ्वा० पर० सक० सेट् । शणति अशाणीत् अशणीत्
शण पु० शण-अच् । स्वनामख्याते क्षुपभेदे ।
शणघण्टिका स्त्री० शणस्य घण्टेव इवार्थे कन् । शणपुष्प-
जाते घण्टाकारवति फले ।
शणपर्णी स्त्री० शणस्येव पर्णान्यस्याः ङीप् । अशनपर्ण्याम् ।
शणपुष्पी स्त्री० शणस्येव पुष्पमस्याः ङीप् (झनझने, वनशणे
स्वार्थे कन् । तत्रैव ।
शणसूत्र न० शणाज्जातम् सूत्रम् । शणजाते जाले ।
शणालुक पु० शण इवालुकः । आरेवतवृक्षे (सोंदाल)
शणिका स्त्री० शणस्तत्पुष्पमस्त्यस्याः ठन् । शणपुष्प्याम् ।
शण्ड न० शडि-अच् । पद्मादिसमूहे, नपुंसके, वृषे च ।
शण्डिल पु० शडि-इलच् । शाण्डिल्यस्य पितरि मुनिभेदे ।
शण्ढ पु० शम-ढ तस्य नेत्त्वम् । अन्तःपुररक्षके क्लीबे ।
शत न० शो-डतच् । स्वनामख्यातसंख्यायाम्, तत्संख्येये
बहुसंख्यायां च । स्वार्थे कन् । तत्रैव न० ।
शतक त्रि० शतं परिमाणमस्य कन् । शतसंख्यायुक्ते ।
शतकुम्भ पु० शतं कुम्भा यत्र । स्वर्णखनिपर्व्वतभेदे ।
शतकोटि पु० शतं कोटयोऽग्राणि यस्य । वज्रे शतगुणिता
कोटिः शाक० । शतगुणितकोटिसंख्यायां स्त्री० ।
शतक्रतु पु० शतं क्रतवोऽस्य । इन्द्रे ।
शतग्रन्थि स्त्री० शतं ग्रन्थयोऽस्य । दूर्व्वायाम् । [करञ्जे च
शतघ्नी स्त्री० शतं हन्ति हन-टक् । अस्त्रभेदे, वृश्चिकाल्यां,
शततम त्रि० शतस्य पूरणः तमप् । शतसंख्यापूरणे ।
शततारा स्त्री० शतभिषक् तारा शाक० । शतभिषानक्षत्रे ।
शतदन्तिका स्त्री० शत दन्ता इव सन्त्यस्य ठन् । नागदन्त्याम्
शतद्रु पु० शतधा द्रवति गु-द्रु-कु० । नदीभेदे । [शतप्रकारे अव्य०
शतधा स्त्री० शतं पर्व्वाणि धत्ते धा-क । दूर्व्वायाम् । शत+धाच् ।
शतधामन् पु० शतं धामानि यस्य । विष्णौ ।
शतधार पु० शतं धारा कणा यस्य । वज्रे शतधारायुक्ते
त्रि० । 'वज्रोः पवित्रमसि शतधारमि'ति श्रुतिः ।
शतधृति पु० शतं धृतयोऽस्य । इन्द्रे, ब्रह्मणि, स्वर्गे च ।
शतपत्र न० शतं पत्राणि यस्य । पद्मे ।

शतपत्री स्त्री॰ शतं पत्राणि दला यस्याः ङीप्। (सेओती) पुष्पवृक्षभेदे स्वार्थे कन्। तत्रैव। [तिकपन्यभेदे।
शतपथ पु॰ शतं पन्थानो यत्र अच् समा॰। यजुर्वेदीयब्राह्मणा-
शतपथिक त्रि॰ शतपथं वेत्त्यधीते वा ठन्। शतपथब्राह्मणात्मक पन्थाध्यायिनि।
शतपद् न॰ शतं पदानि यत्र। ज्योतिषोक्ते नक्षत्रपादानुसारेण नामकरणोपयोगिप्रथमवर्णस्य चक्रे चक्रभेदे। शतं पादाः यस्याः पादभावः समा॰ ङीपि पद्भावः। कीटभेदे (कानखाइ) स्त्री॰।
शतपद्म न॰ शतदलयुक्तं पद्मम्। शतदलकमले, श्वेतपद्मे च।
शतपर्वन् पु॰ शतं पर्वाणि ग्रन्थयो यस्य। वंशे, इक्षुभेदे च कटुकायां,वचायां,दूर्वायां च स्त्री॰। कन्। तासु,यवे च
शतपाद् स्त्री॰शतं पादा यस्याः पाद्भावः। कीटभेदे (कानखाइ)
शतपादिका स्त्री॰ शतं पादा मूलान्यस्याः। काकोल्याम्।
शतपुष्पा स्त्री॰शतं पुष्पाणि यस्याः। (सलुफा) शाकभेदे (मौरी) क्षुपभेदे च। कन्। तत्रैव।
शतप्रसूना स्त्री॰ शतं प्रसूनानि यस्याः। (सलुफा) शाके
शतप्रास पु॰ शतं प्रासा इव फलानि यस्य। करवीरवृक्षे।
शतभिषज् स्त्री॰शतं भिषज इव ताराः यत्र। शतताराात्मके अश्विन्यादिषु चतुर्विंशे नक्षत्रे। शतभिषायल स्त्री॰।
शतभीरु स्त्री॰ शतं बहवो वियोगिनो भीरवो यस्याः ब॰त॰। मल्लिकायाम् तद्दर्शने हि वियोगिनां कामोद्दीपनात् ततो भीरुत्वम्।
शतमख पु॰ शतं मखा यज्ञा यस्य। इन्द्रे।
शतमन्यु पु॰ शतं मन्यवो यज्ञा यस्य, शते दैत्येषु मन्युः क्रोधो वा यस्य। इन्द्रे।
शतमान पु॰न॰ शतेन मीयते मि-ल्युट्। पले, तत्परिमिते च
शतमारिन् पु॰ शतं मारयति मृ-णिच्-णिनि। विशिष्टचिकित्सके। [शतसंख्यायुक्ते त्रि॰।
शतमुखी पु॰ शतं मुखानि यस्याः ङीप्। संमार्जन्याम्।
शतमूली स्त्री॰शतं मूलान्यस्याः ङीप्। दूर्वायां, स्वनामख्यातायां वचायाञ्च।
शतयष्टिक पु॰ शतं यष्टयो गुच्छा यस्य। शतगुच्छके हारभेदे
शतरुद्रीय न॰शतं रुद्रा देवता यस्य। यजुर्वेदोक्ते रुद्राध्याये
शतरूपा स्त्री॰ शतं रूपाण्यस्याः। ब्रह्मणः पत्न्याम्।
शतवीर्य्या स्त्री॰ शतं वीर्याणि यस्याः ब॰व॰। श्वेतदूर्व्वायाम्।
शतवेधिन् पु॰शतं विध्यति विध-णिनि। अम्लवेतसे।
शतसहस्र न॰ शतगुणितं सहस्रम् शाक॰। लक्षसंख्यायाम्।
शतसाहस्र त्रि॰ शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः। लक्षसंख्याते।
शतह्रदा स्त्री॰शत ह्रादाः शब्दायस्याः पृ॰ह्रस्वः। विद्युति।
शताक्षी स्त्री॰ शतमक्षीणीव पुष्पाण्यस्याः षच् समा॰ ङीप्। शतपुष्पायाम् दुर्गायाञ्च।
शताङ्ग पु॰ शतमङ्गान्यवयवायस्य। रथे, तिनिशवृक्षे च।
शतानन्द पु॰ शतमानन्दयति अण्। गौतमपुत्रे अहल्यागर्भजे मुनिभेदे। शतजनानन्दके त्रि॰। [शतसैन्यवति त्रि॰
शतानीक पु॰ शतमनीकानि यस्य। व्यासशिष्ये मुनिभेदे।
शतार न॰ शतमाराण्यस्य। वज्रे।
शतायुस् त्रि॰शतमायुर्वर्षकालोऽस्य। शतवर्षमितवयस्के 'शतायुर्वै पुरुष' इति श्रुतिः। [मूल्याम् इन्द्रभार्यायाम्
शतावरी स्त्री॰ शतमावृणोति आ+वृ अच् गौ॰ङीप्। शत-
शतावर्त्त पु॰ शतमावर्त्ता यस्य। विष्णौ शतधा वर्त्तते णिनि। तत्रैव। [उत्तरलोपः। शतमूल्यां, शतपुष्पायाञ्च
शताह्वा स्त्री॰ शतं शतमूली शतपुष्पा वेति आह्वा यस्याः
शतिक त्रि॰ शतेन क्रीतः ठन्। शतेन क्रीते पदार्थे।
शत्य त्रि॰ शतेन क्रीतः यत्। शतसंख्यातद्रव्येण क्रीते।
शत्रु पु॰शद-त्रुन्। रिपौ, राज्ञां विषयानन्तरस्थे नृपे, ज्योतिषोक्ते लग्नावधि षष्ठस्थाने, कामादिषु च। शातके त्रि॰
शत्रुघ्न पु॰ शत्रुन् हन्ति हन-क। दशरथात्मजे सुमित्रागर्भजे लक्ष्मणानुजे।
शद् शातने भ्वा॰पर॰सक॰अनिट्। शीयते अशदत्। शत्स्यति
शद् गतौ भ्वा॰पर॰सक॰अनिट्। शीयते अशात्सीत्।
शनकावलि(ली) स्त्री॰ शनैः कायति कै-क इ॰ तेषामावलिर्यत्र वा ङीप्। गजपिप्पल्याम्।
शनपर्णी स्त्री॰शणस्येव पर्णान्यस्याः पृ॰ षस्य नः। कटुक्याम्
शनि पु॰ शो-अनि किच्च। सूर्यपुत्रे छायागर्भजाते ग्रहभेदे, तत्स्वामिकदिने च।
शनिवार पु॰शनिस्वामिकोवारः। सूर्यादिवारमध्ये सप्तमे वारे
शनैश्चर पु॰ शनैश्चरति चर-अच्। शनिपक्षे तस्य ग्रहाणां मध्ये सर्वोपरिकक्षस्थितत्वात् बहुकालेनैकराशिभोगात् मन्दगतित्वम्।
शनैस् अव्य॰ शण इस् पृ॰ तुट् च। मन्दे, अधैर्य्ये च।
शन्स् हिंसायां स्तुतौ कथने च भ्वा॰पर॰सक॰सेट् इदा वेट्। शंसति अशंसीत्। [शम्यति ते अशासीत्।
शप आक्रोशे वा भ्वा॰पर॰ दिवा॰उभ॰सक॰अनिट्। शपति ते
शपथ पु॰ शप अथन्। सत्यताकरणाय दिव्यभेदकरणे, यथा

एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यादित्यादि
शपन पु० शप ल्युट्। शपथे।
शप्त त्रि० शप-क्त। अभिशापग्रस्ते। उशपास्ये तृणभेदे पु०।
शफ न० शम-अच् पृ० मस्य फः। गवादीनां खुरे, वृक्षमूले च।
शफर पु० स्त्री० शफं राति रा-क। (पुंटी) मत्स्यभेदे स्त्रीत्व
पक्षे ङीप्। [न्दृत् व
शब्द शब्दकरणे अ०चु०उभ०सक०सेट्। शब्दयति ते अशश-
शब्द पु० शब्द-घञ्। ध्वन्यात्मके वर्णात्मके च श्रोत्रेन्द्रियग्राह्ये
आकाशादिस्थे गुणभेदे। [क ६त०। शब्दज्ञाने।
शब्दग्रह पु० शब्दं गृह्णाति ग्रह-अच्। श्रोत्रेन्द्रियेषजर्थे
शब्दब्रह्मन् न० शब्दात्मकं ब्रह्म। वेदात्मके, स्फोटात्मके च
नित्ये शब्दरूपे ब्रह्मणि। [वाणभेदे।
शब्दभेदिन् पु० शब्दानुसारेण भिनत्ति लक्ष्यम् णिनि।
शब्दवेधिन् पु० शब्दानुसारेण विध्यति लक्ष्यं विध-णिनि।
वाणभेदे, अर्जुने च। [उच्चयादौ वृत्तिरूपे सामर्थ्ये।
शब्दशक्ति स्त्री० ६त०। शब्दानामर्थावबोधकतारूपे अभिधा-
शब्दानुशासन न० अनुशिष्यतेऽनेन अनु+शास-ल्युट् ६त०।
शब्दसाधुताज्ञापके व्याकरणे।
शब्दालङ्कार पु० शब्दमात्रगतोऽलङ्कार। अलङ्कारशास्त्र-
प्रसिद्धेऽनुप्रासादौ अलङ्कारे।
शब्दित त्रि० शब्द-क्त। आहूते।
शम शान्तौ अक० शान्तीकरणे सक० दि० शमा०पर०सेट्।
शाम्यति शुशमत्-अशमीत्। क्त्वा वेट्। [शमत्-त
शम आलोचने चु०उ०सक०सेट्। शामयति शमयति ते अशी-
शम पु० शम घञ्। शान्तौ अन्तरिन्द्रियदमने।
शमथ पु० शम अथच्। शान्तौ।
शमन पु० शमयति शम-णिच्-ल्यु। लोकानां पुण्यापुण्यफल-
दातृत्वेन दण्डकारके यमे। शम-णिच्-भावे ल्युट्।
शान्तीकरणे न०।
शमनस्वसृ स्त्री० ६त०। यमुनायाम्।
शमल न० शम कलच्। विष्ठायाम्। [विष्ठायाञ्च।
शमि(मी) स्त्री० शम-इन् वा ङीप्। (शाइ) वृक्षभेदे (शुंटि)
शमिन् त्रि० शाम्यति शम-णिनि। शान्ते।
शमीक पु० शम-ईकन्। मुनिभेदे।
शमीगर्भ पु० शमी गर्भ आधारत्वेनास्त्यस्य अच्। वह्नौ, विप्रे च
शमीधान्य न० शमी शिम्बैव धान्यम्। शिम्बात्मके माष
मुद्गादौ धान्ये।
शमीपत्री स्त्री० शम्या इव पत्रमस्याः ङीप्। लज्जालुवृक्षे
शमीर पु० अल्पा शमी अल्पार्थे र 'क्वचित् स्वार्थिका अपि
प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति भाष्योक्तेः
पुंस्त्वम्। क्षुद्रायां शम्याम्।
शम्पा स्त्री० शं पाति पा-क। विद्युति।
शम्पाक पु० शं शिवं पाके फले यस्य। आरग्वधे।
शम्ब गतौ भ्वा पर०सक०सेट्। शम्बति अशम्बीत्।
शम्ब पु० शम्ब-अच्। वज्रे मुषलपरिस्थितलौहे लोहकाञ्च्याम्
अनुलोमकर्षणे, दरिद्रे च।
शम्बर न० शम्ब-अरन्। जले धने, व्रते, चित्ते च। मृगभेदे
दैत्यभेदे मत्स्यभेदे, पर्वतभेदे, युद्धे, चित्रवृक्षे, लोध्रे,
अर्जुनवृक्षे च पु०। श्रेष्ठे त्रि०।
शम्बरकन्द पु० शम्बरः श्वेतः कन्दो यस्य। वाराहीकन्दे।
शम्बरचन्दन न० ६त०। शम्बरपर्वतजाते चन्दनभेदे।
शम्बरसूदन पु० शम्बरमसुरं सूदयति हिनस्ति चु०सूद-ल्यु।
कामदेवे।
शम्बरारि पु० ६त०। कामदेवे शम्बररिपादयोऽप्यत्र।
शम्बरी स्त्री० शम्बरं जलमाकुलत्वेनास्त्यस्य अच् गौरा० ङीष्।
आखुपर्ण्याम्।
शम्बल पु०न० शम्ब-कलच्। कूले, पाथेये, मत्सरे च।
शम्बाकृत त्रि० शम्बं कृष्टमथ प्रतिलोममाकृष्यते शम्ब+कर्षणार्थे
डाच्+कृ-क्त। अनुलोमेन द्विराकृष्टे कृष्टे क्षेत्रे।
शम्बु(म्बू) पु०स्त्री० शम्ब-उन् ऊ वा। जलशुक्तौ (शामुक) गज
कुम्भान्तभागे च। रामायणप्रसिद्धे शूद्रतापसे, पुंसि.
दैत्यभेदे च पु०।
शम्भ त्रि० शमस्त्यस्य शम्+भ। कल्याणयुक्ते।
शम्भल पु० शम्भं कल्याणदायकं तीर्थं लाति-ला क। ग्रामभेदे
यत्र कल्की भविष्यति तस्मिन्। गुरु दा स्त्री० गौरा० ङीष्
शम्भु पु० शम्+भू-डु। महादेवे।
शम्भुतनय पु० ६त०। गणेशे, कार्त्तिकेये च शम्भुसुतादयोऽप्यत्र
शम्भुप्रिया स्त्री० ६त०। आमलक्याम् दुर्गायाञ्च।
शम्भुवल्लभ न० ६त०। श्वेतपद्मे। महादेवप्रिये त्रि०।
शम्या स्त्री० शम यत् टाप्। युगकीलके।
शय पु० शी-अच्। हस्ते, सर्पे, निद्राया नामयते, पणे च।
शयथ पु० शी-अथच्। अजगरसर्पे, मत्स्ये वराहे, मृत्यौ च
निद्राशीले त्रि०।
शयनी न० शी ल्युट्। निद्रायाम्, शय्यायां, मैथुने च।
शयनीय न० शी-अनीयर्। शय्यायाम् शयनार्थे अर्थः। सर्वम्।
शयनैकादशी स्त्री० ६त०। आषाढशुक्लैकादश्याम्।

शयालु त्रि॰ शी-आलुच् । निद्राशीले । अजगरे, कुक्कुरे च पु॰ ।
शयित त्रि॰ शी-कर्त्तरि क्त । निद्रिते । भावे-क्त । निद्रायां न॰
शयु पु॰ शी उ । अजगरे सर्पे । उनन् । शयुनोऽप्यत्र ।
शय्या स्त्री॰ शी क्यप् । खट्वायाम् । [तृणभेदे च पु॰ ।
शर न॰ शॄ-अच् । जले । बाणे दधिदुग्धाग्रसारे, रुपुधावने
शरकाण्ड पु॰ ६त॰ । शरस्तम्बे, तन्निमित्तकबाणे च ।
शरज न॰ शरात् दधिदुग्धसारात् जायते जन-ड । हैयङ्ग-
वीने । शरवणे-जाते कार्त्तिकेये पु॰ ।
शरजन्मन् पु॰ शरवणे जन्म यस्य । कार्त्तिकेये ।
शरट पु॰ शॄ-अटन् । कृकलासे, कुसुम्भशाके च ।
शरण न॰ शॄ-ल्युट् । गृहे, रक्षके, रक्षणे, वधे, घातके च
। प्रसारण्यां स्त्री॰ टाप् ।
शरणागत त्रि॰ शरणमागतः आ+गम-क्त । शरणापन्ने ।
शरणापन्न त्रि॰ शरणमापन्नः आ+पद क्त । शरणागते ।
शरणार्थिन् त्रि॰ शरणमर्थयते अर्थ-णिनि । शरणकामे ।
श(स)रणि(णी) स्त्री॰ शॄ(सृ)-अनि वा ङीप् । पथि, कोषलस्तु
जयन्त्याञ्च । [योग्ये ।
शरण्य त्रि॰ शरणाय साधुः यत् । शरणागतत्राणकरण-
शरत्कामिन् पु॰ शरदि कामयते कम-णिनि । कुक्कुरे ।
शरत्पद्म न॰ शरदिव शुभ्रं पद्मम् । श्वेतपद्मे ।
शरत्पर्व्वन् न॰ ७त॰ । कोजागरपूर्णिमानिमित्तोत्सवे ।
शरद् स्त्री॰ शॄ-अदि । वत्सरे, आश्विनकार्त्तिकमासात्मके ऋतौ च
शरधि पु॰ शरा धीयन्तेऽत्र धा-कि । तूणे । [पुङ्खाख्ये ।
शरपुङ्खा स्त्री॰ शरस्येव पुङ्खा यस्य । नीलीवृक्षाकृतौ क्षुप-
शरभ पु॰ शॄ-अभच् । 'अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टय' इत्यु-
क्तलक्षणे मृगभेदे, करभे, वानरभेदे, उष्ट्रे च ।
शरभू पु॰ शरे शरवणे भवति भू-क्विप् । कार्त्तिकेये ।
शरमय त्रि॰ शरस्य विकारः मयट् । शरजाते पदार्थे ।
श(स)रयु(यू) स्त्री॰ शॄ(सृ)-अयु वा ऊङ् । अयोध्यानिम्नगामिन्यां
नद्याम् । [वृक्षभेदे च ।
श(स)रल त्रि॰ शॄ(सृ)-अलच् । सुगमे, अकुटिलचित्ते (सरल)
शरवणोद्भव पु॰ शरवणे उद्भवः उत्पत्तिस्थानमस्य । कार्त्तिकेये
शरव्य न॰ शरो बाणनिपातं ऋतं शर+यत् । लक्ष्ये, शरेण
वेधनार्थोद्देश्ये । [टस्य ड न वा । (शराड) पक्षिभेदे ।
शराटि(टी) स्त्री॰ शरमनुलक्ष्य अटति अट-इन् पु॰
शराभ्यास पु॰ ६त॰ । शरप्रक्षेपणाभ्यासे ।
शरारु त्रि॰ शॄ-आरु । हिंस्रे । [धनुषि ।
शरारोप पु॰ शरा आरोप्यन्तेऽत्र आ+रुह णिच्-घञ् पश्च ।
शराव पु॰ शरं दध्यादिसारमवति अव-अण् । मृण्मये पात्र
भेदे, (शरा) कुडवद्वयपरिमाणे च । [नदीभेदे
शरावती स्त्री॰ शराः सन्त्यस्याम् मतुप् मस्य वः पूर्व्वदीर्घश्च ।
शराश्रय पु॰ ६त॰ । तूणे । [शरासनम् । तूणे ।
शरासन पु॰ शराः अस्यन्तेऽनेन अस-ल्युट् । धनुषि शरा-
शरी स्त्री॰ शीर्य्यते शॄ-ई । एरकातृणे ।
शरीर न॰ शॄ-ईरन् । प्रतिक्षणं शीर्य्यमाणे देहे ।
शरीरक पु॰ शरीरं कायति आत्मत्वेनाभिमन्यते कै-क ।
जीवे । स्वार्थे वुन् । शरीरकोऽप्यत्र । [त्रि॰
शरीरज पु॰ शरीरात् जायते जन-ड । रोगे । देहजातमात्रे
शरीरावरण न॰ शरीरमावृणोति आ+वृ-युच् । देहव्या-
पिनि चर्म्मणि । देहावरके त्रि॰ ल्युट् । देहाच्छादने न॰
शरीरिन् पु॰ शरीरमात्माभिमानाश्रयत्वेनास्त्यस्य इनि । जीवे
शरु पु॰ शॄ-उन् । क्रोधे, वज्रे, बाणे, आयुधे च । [आत्मनि ।
शरेष्ट पु॰ शृणाति कामिनं शॄ अच् शरः कामःतस्य इष्ट इष-क्त ।
शर्करक पु॰ शर्करायाः रसः अण् तद्भावः शर्करः रस इव
कायति मधुरत्वात् कै-क । मधुरजम्बीरे ।
शर्करजा स्त्री॰ शर्करात् जायते जन-ड । सितारखण्डे ।
शर्करा स्त्री॰ शॄ करन् कस्य नेत्त्वम् । खण्डविकारे (चिनि)
उपलखण्डे, कर्परखण्डे च । शर्करा अस्त्यस्य मतुप्
तस्य लुक् । शर्करावति देशे, रोगभेदे, शकले च ।
शर्कराचल पु॰ दानार्थं कल्पिते शर्करामये पर्व्वते ।
शर्कराधेनु स्त्री॰ दानार्थं कल्पिते शर्करामये धेन्वाकारे द्रव्ये
शर्करावत् त्रि॰ शर्कराः सन्त्यस्मिन् मतुप् मस्य वः । शर्करायुक्तदेशे
शर्करिक त्रि॰ शर्कराः सन्त्यस्य ठन् । शर्करायुक्तदेशे इलच् । तत्रैव
शर्द्ध पु॰ शृध-घञ् । अपानवायूत्सर्गे । ल्युट् । तत्रैव न॰ ।
शर्द्धञ्जहा पु॰ शर्द्धमपानवायूत्सर्गं जहाति हा-खश् मुम् च । माषे
शर्व्व हिंसायां गतौ च भ्वा॰ प॰ स॰ सेट् । शर्व्वति अशर्व्वीत् ।
शर्म्मद त्रि॰ शर्म्म ददाति दा-क । सुखदायके । विष्णौ पु॰ ।
शर्म्मन् शॄ-मनिन् । सुखे, तद्वति त्रि॰ ब्राह्मणोपाधौ पु॰ । [त्रि॰
शर्म्मरा स्त्री॰ शर्म्म राति रा-क । दारुहरिद्रायाम् । सुखदायके
शर्य्याति पु॰ वैवस्वतमनोः पुत्रभेदे ।
शर्व्व हिंसे भ्वा॰ पर॰ सक॰ सेट् । शर्व्वति अशर्व्वीत् ।
शर्व्व पु॰ शर्व्व-अच् । महादेवे ।
शर्व्वर पु॰ शर्व्व-अरन् । कामदेवे तमसि न॰ । [सन्ध्यायाञ्च ।
शर्व्वरी स्त्री॰ शॄ-वनिप् ङीप् रनो र च । रात्रौ हरिद्रायां,
शर्व्विला स्त्री॰ शर्व्व-पत्ल् तं शर्व्वं लाति ला-क । तोमराख्ये
शर्म्माणी स्त्री॰ शर्म्मस्य पत्नी ङीप् आनुक् च । भवान्याम्

शल चलने भ्वा०आ०सक०सेट्। शलते अशलिष्ट।
शल गतौ भ्वा०पर०सक०सेट् ज्वलादि०। शलति अशालीत्
शल श्लाघायां चु०आ०सक०सेट्। शालयते अशीशलत।
शल वेगे भ्वा०पर०सक०सेट्। शलति अशालीत्।
शल न० शल-अच्। शल्लकीलोम्नि (सजारुकांटा)।
शलभ पु० शल-अभच्। कीटभेदे पतङ्गे।
शलल न० स्त्री० शल-कलच्। शल्लकीलोम्नि (साजारुकांटा) स्त्रीत्वे गौ०ङीष्।
शलाका स्त्री०शल-आकन्। शल्ये, मदनवृक्षे (मयना) शारिकायां, शल्लक्याम्, शरे, आलेख्यतूलिकायां, अस्थ्नि च।
शलाकापरि अव्य०अव्ययी० शलाकासाधनक्रीडायां पराजये
शलाटु त्रि० शल-आटु। अपक्वफले मूलभेदे। विल्वे च पु०।
शलालु पु० शल-आलुच्। सुगन्धिद्रव्यभेदे। [पदार्थे
शलालुक त्रि० शलालुना क्रीतं कन्। शलालुद्रव्येण क्रीते
शल्क न० शल-क कस्य नेत्वम्। खण्डे, वृक्षवल्कले, मत्स्यत्वचि च(आंश)। [त्वचि च
शल्कल न० शल-कलन् कस्य नेत्वम्। मत्स्यवल्कले, वृक्ष
शल्कलिन् पु० शल्कलमस्त्यस्य इनि। मत्स्ये।
शल्किन् पु० शल्कमस्त्यस्य इनि। मत्स्ये।
शल्भ प्रशंसायां भ्वा०आ०सक०सेट्। शल्भते अशल्भिष्ट।
श(शा)ल्मलि पु०शल-मलच् स्वार्थे इन् इञ् वा। शाल्मलिवृक्षे (शिमुल)। [वृक्षे
शाल्मलि स्त्री० शल-मलिन् स्वार्थे इञ् वा ङीप्। (शिमुल)
शल्य न०शल-यत्। वाणे,तोमरे, स्त्रीवे, वंशकविकायां, कीलके च
शल्यक पु० शल्यमिव कायति कै क। मदनवृक्षे (मयना)
शल्यलोमन् न० शल्यमिव लोम। शल्लकीलोम्नि।
शल्ल गतौ भ्वा०पर०सक०सेट्। शल्लति अशल्लीत्।
शल्ल न० शल्ल-अच्। त्वचि, भेके पु०। स्वार्थे कन्। त्वचि न० शणवृक्षे पु०। (धनार) पक्षिभेदे स्त्री० गौ०ङीष्।
शल्लकद्रुव पु० शल्लकोद्रुव इव स्वादु। शिह्लके।
शल्व पु० शल-व। शाल्वदेशे। [अशवीत्
शव विकारे गतौ च भ्वा०पर०सक०सेट्। शवति-अशावीत्-
शव पु०न०। शव-अच्। मृतदेहे न्यायादि देहे। जले न०।
शवकाम्य पु० शवं काम्यति अव+काम्य च। कुकुरे।
शवयान न० शवस्य यानम्। शव देहवाहनार्थे तल्पे।
शवर न० शव-अरन्। यवनजातिभेदे। पानीये, शिवे च पु० तत्पत्न्यां स्त्री० ङीप्।
शवरघ्न पु० शवरादनार्थ रघ। अवलम्बनार्थे दाने।

शवरलोध्र पु० शवरप्रियः लोध्रः। श्वेतलोध्रे।
शवरालय पु० ६त०। शवरावासस्थाने।
शवल पु० शव-कलन्। कर्बुरवर्णे तद्वति त्रि०। तद्वर्णवत्यां धेनौ स्त्री०।
शश प्लुतगतौ भ्वा०पर०सक०सेट्। शशति। अशाशीत्-अशशीत्
शश पु०शश-अच्। मृगभेदे (खरगोश) स्वार्थे कन्। तत्रैव।
शशधर पु० शशं मृगभेदं धरति धृ अच्। चन्द्रे, कर्पूरे च शशभृदादयोऽप्यत्र। [योऽप्यत्र
शशलाञ्छन पु०शशः मृगभेदो लाञ्छनं यस्य चन्द्रे, शशाङ्कादि
शशविन्दु पु० राजभेदे, विष्णौ च।
शशशिम्बिका स्त्री०शश शिम्बीतया कायति कै-क। जीवन्त्याम्
शशस्थली स्त्री० शशवासयोग्या स्थली। अन्तर्वेद्याम् देशभेदे
शशाण्डुलि पु० अडि-उलि ६त०। कर्कटीभेदे।
शशाद पु० शशमत्ति अद-अण्। श्येनविहगे, ल्यु। तत्रैव।
शशिकला स्त्री०६त०। चन्द्रस्य षोडशभागे।
शशिकान्त न०शशी कान्तो यस्य। कुमुदे। चन्द्रकान्तमणौ पु०
शशिन् पु० शशोऽस्त्यस्य इनि। चन्द्रे।
शशिप्रभ न० शशिना प्रभा यस्य। कुमुदे ६त०। ज्योत्स्नायाम्
शशिभूषण पु०शशी भूषणं यस्य। महादेवे, शशिमण्डनादयोऽप्यत्र
शशिलेखा स्त्री० शशिनो रेखा इव रेखा यस्याः। चन्द्रकलायाम्। शशिनो लेखेव अमृतास्वादत्वात्। गुडूच्याम्।
शशिवाटिका स्त्री० शशिनोवाटीव इवार्थे। पुनर्नवायाम्।
शशिशेखर पु०शशी शेखरं यस्य। महादेवे शशिमौल्यादयोऽप्यत्र
शशोर्ण न० ६त०। शशस्य लोम्नि।
शश्वत् अव्य० शश-वति। नैरन्तर्ये पुनःपुनरित्यर्थे च।
शष वधे भ्वा०प०सक०सेट्। शषति अशाषीत् अशषीत्।
शष्कुल पु० शष-कुलच् कस्य नेत्वम्। (कडरकारमणा) इति अपूपभेदे, कर्णरन्ध्रे, 'अवलम्बितकर्णशष्कुली'ति नैषध मत्स्यभेदे च इन्द्यमध्योऽप्ययमत्रार्थे।
शष्प न० शष-पक्। बालतृणे घासे। प्रतिभाक्षये पु०।
शस वधे भ्वा०प०सक०सेट् ह्रस्व वेद। शसति। अशासीत् अशसीत्
शंस आशिषि भ्वा०आ०सक० इदित् सेट्। प्रायेणाङ्पूर्वः। आशंसते आशंसिष्ट।
शस स्तुतौ भ्वा०पर०सक०सेट् इदित्। शंसति च शस्
शसन न० शस वधे ल्युट्। यज्ञार्थं पशुहनने।
शस्त न० शंस क्त। मङ्गलादौ तद्वति, स्तुते, प्रशस्ते च त्रि०।
शस्त्र न० शस-ष्ट्रन्। लौह, खड्गादौ प्रहरणार्थे अस्त्रे। तत्रैव
शस्त्रकोपतरु पु० शस्त्रकोपस्य हितत्वात्। महानिम्बवृक्षे

**शस्त्रजीविन्** पु० शस्त्रेण जीवति णिनि। शस्त्राजीविनि।
**शस्त्रपाणि** पु०शस्त्रं पाणौ यस्य। शस्त्रधारके आततायिभेदे 'शस्त्रपाणिर्धनापह' इति स्मृतिः। [निकरे सैन्यभेदे
**शस्त्रमार्ज्ज** पु०शस्त्रं मार्ष्टि मृज अण्। (शिकलकर)शस्त्रमार्ज्ज
**शस्त्राभ्यास** पु० ६त०। शस्त्रप्रयोगशिक्षायाम्।
**शस्त्रायस** शस्त्रयोग्यमयः अच्समा०। लौहभेदे(इस्पात)।
**शस्त्रिन्** त्रि० शस्त्रमस्त्यस्य इनि। शस्त्रविशिष्टे।
**शस्त्री** स्त्री० स्वल्पं शस्त्रं ङीप्। छुरिकायाम्।
**शस्म** न० शस-प। बालतृणे घासे।
**शस्य** न० शस यत्। वृक्षादीनां फले। 'शस्यं क्षेत्रगतं प्रोक्त-मित्युक्ते क्षेत्रस्थे धान्यादौ च। [शस्यनाशके त्रि०।
**शस्यध्वंसिन्** पु० शस्यं ध्वंसयति ध्वंस णिच् णिनि। तृणद्रुमे
**शस्यमञ्जरी** स्त्री० ६त०। अभिनवधान्यादिशीर्षे।
**शस्यसूक** न०। धान्यादेः शीर्षे।
**शस्यसम्बर** पु० शस्यं सवृणोति सम्+वृ अच्। शालवृक्षे।
**शस्याद** पु०शस्यमत्ति अद अण्। क्षुद्रशमीवृक्षे (सेगुन)वृक्षे च
**शाक** पु०न०शक-घञ्। पत्रपुष्पादौ वृक्षभेदे पु० शक्तौ शिरीष वृक्षे, खराव्दावधि वत्सरप्रवर्त्तके राजभेदे, तद्दीये वत्सरे, च पु० हरितकायां न०। शक्ति सामर्थ्यं शोक तस्य नेत्वम्। 'मूलपत्रकरीराग्रे फलकाण्डाधिरूढकम्। त्वक् पुष्पं कवकञ्चैव शाकं दशविधं स्मृतं'मित्युक्तेषु वृक्षादीनां पत्रादिषु न० 'अयशाकभुक् सोऽहमित्युद्भट।
**शाकचुक्रिका** स्त्री० शाकेषु मध्ये चुक्रिका। चिञ्चायाम्।
**शाकट** न० शकटाय हितम् अण्। शकटसम्बन्धियुगादौ। श्लेष्मातके-वृक्षे, धववृक्षे च पु०।
**शाकटायन** पु० व्याकरणकारके मुनिभेदे।
**शाकटिक** पु० शकटेन चरति ठञ्। शकटेन गन्तरि।
**शाकटीन** पु०शकट परिमाणमस्य खञ्। विंशतितुलापरिमाणे
**शाकतरु** पु०शाकाख्य तरु।(सेगुण) वृक्षे। शाकवृक्षादयोऽप्यत्र
**शाकपत्र** पु० शाकं पत्रमस्य। शिग्रुवृक्षे।
**शाकवालेय** पु० बलये हितम् ढक् शाकप्रधानो बालेयः। मधुयष्टिकायाम्।
**शाकम्भरी** स्त्री० शाकैर्बिभर्त्ति भृ खच् मुम्च। 'भरिष्यामि सुराः! शाकैरावृष्टे प्राणधारकैः। शाकम्भरीति विख्यातिमि'ति चण्डी निरुक्तायाम् दुर्गायाम्।
**शाकयोग्य** पु०शाके तद्भक्षणे योग्य। धन्याके। [वास्तूकशाके
**शाकराज** पु० शाकेषु राजते अच्,शाकानां वा राजा टच्।
**शाकविल्व** पु०शाकोपि बिल्व इव। वार्त्ताकौ स्वार्थे कन् तत्रैव
**शाकवीर** पु० शाकेषु वीरः वीर्याधायकत्वात्। वास्तूकशाके
**शाकशाकट** न० शाकस्य क्षेत्रं शाकटच्। शाकक्षेत्रे। शाक-टिनच्। अत्रार्थे।
**शाकश्रेष्ठ** पु०शाकेषु श्रेष्ठ। वास्तूकशाके जीवन्त्यां वार्त्ताकौ स्त्री०
**शाकाङ्ग** न० शाकस्य तद्भक्षणस्याङ्गमुपयोगि। मरिचे।
**शाकाम्ल** न० शाकमेवाम्लम्। वृक्षाम्ले।
**शाकाम्लभेदन** न० शाकरूपम् अम्लं भिनत्ति भिद्-ल्यु। चुक्रे (चुकोपालङ्ग)।
**शाकालाबू** स्त्री० शाकप्रधानालाबु। अलाबुभेदे।
**शाकिनी** स्त्री० शाकोऽस्त्यस्याः इनि। शाकभवनयोग्यायां भूमौ, देवीसहचरीभेदे च।
**शाकुन** पु० शकुनं शुभाशुभसूचकं निमित्तमधिकृत्य कृतो ग्रन्थः अण्। शकुनज्ञानसाधने ग्रन्थे (काकचरित)। [घातके।
**शाकुनिक** पु० शकुनेन पक्षिबधादिना जीवति ठञ्। पक्षि-
**शाकुन्तलेय** पु० शकुन्तलाया अपत्यं ढक्। दुष्मन्तात्मजे शकुन्तलागर्भजे भरते नृपे।
**शाक्त** त्रि० शक्तिर्देवताऽस्य अण्। तन्त्रोक्ते शक्तिदेवतोपासके
**शाक्तीक** पु० शक्तिः प्रहरणमस्य ईकक्। शक्त्या योद्धरि।
**शाक्य** पु० शक शत्रु-तत्र साधु यत्। बुद्धे।
**शाक्यमुनि** पु० शाक्यो मुनि। बुद्धभेदे।
**शाक्यसिंह** पु० शाक्य वंशे सिंह इव। बुद्धभेदे। [व्यशाखीत्
**शाख** व्याप्तौ भ्वा-पर०सक०सेट् चङि न०ह्रस्व। शाखति
**शाख** पु० शाख अच्। कार्त्तिकेयानुजे गणभेदे,ग्रन्थ परिच्छेदे, सर्गस्थानीये ग्रन्थांशभेदे, वृक्षावयवभेदे च (डाल)पक्षान्तरे, बाहौ,लतायाम्,अन्तिके, वेदैकदेशे च स्त्री०
**शाखाकण्ट** पु० शाखास्थायी कण्ट कण्टको यस्य। स्नुहीवृक्षे
**शाखानगर** न० शाखेव नगरम्। मूलनगरसमीपस्थे क्षुद्र पुरे शाखापुरादयोऽप्यत्र।
**शाखामृग** पु० शाखास्थो मृग पशु, वानरे।
**शाखाम्ला** स्त्री० शाखाम्ला। वृक्षाम्ले।
**शाखारण्ड** पु० शाखाया वेदशाखाया रण्ड तदुदिति कर्मानाचरणात्। स्वशाखात्यागेन कर्मकर्त्तरि।
**शाखाल** पु० शाखा वाहुल्येन सन्त्यस्य लच्। वानीरवृक्षे।
**शाखाशिफा** स्त्री० शाखारूढा शिफा मूलम् शाक०। वटा-दीनां शाखाजाते मूले। शिफामारभ्य शाखा। गुडूच्यादि लतायाम्। [क्षेत्रभेदे च।
**शाखिन्** पु० शाखाऽस्त्यस्य इनि। वृक्षे। वेदैकदेशमति,नृपभेदे.
**शाखोट** पु०शाखा-व्याप्तौ ओटन् (स्याओडा) वृक्षे स्वार्थे कन्।

तत्रैव। [जातिभेदे (शांखारी)।
शाङ्खिक पु० शङ्खस्तद्विकारवलयनिर्म्माणं शिल्पमस्य ठञ्।
शाड्वला स्त्री० श्यति शो-क शः अङ्कुर इव यस्याः। गुञ्जायाम्
शाट पु० शट-घञ्। वस्त्रे। स्त्रीत्वमपि गौ० ङीष्।
शाटक पु०न० शट-ण्वुल्। वस्त्रे स्त्रीत्वमपि टाप्।
शाट्यायन पु० मुनिभेदे, तेन प्रोक्तम् अण्। प्रकृतहोमकर्म्मणि वैगुण्यसमाधानार्थं विहिते होमभेदे न०।
शाठ्य न० शठस्य भावः ष्यञ्। शठतायाम्।
शाड श्लाघायां भ्वा०आत्म० सक० सेट्। शाडते अशाडिष्ट
शाण न० शणेन निर्वृत्तम् अण्। शणसूत्रनिर्म्मिते वस्त्रादौ। शण-घञ्। (कष्टिपाथर) कषपाषाणे शस्त्रादीनां निकर्षेण तीक्ष्णीकरणयन्त्रभेदे।
शाणाजीव पु० शाणमाजीवति आ+जीव-अण्। अस्त्रतीक्ष्णताकारके शिल्पिनि।
शाणि पु० शण-इण्। शद्रवत्ते शणेन निर्वृत्ता इञ् वा ङीप्। शणनिर्म्मिते पट्टिकावस्त्रे छिद्रवस्त्रे च।
शाणित त्रि० शण-णिच्-क्त। तीक्ष्णीकृते।
शाण्डिल्य पु० शण्डिलस्यापत्यम् यञ्। गोत्रप्रवर्त्तके भक्तिशास्त्रकारके मुनिभेदे, तत्प्रियत्वात्, बिल्वे वह्निभेदे च।
शात न० शो-क्त। सुखे, तद्वति, छिन्ने, कृशे, दुर्ब्बले, निशिते च त्रि० धुस्तूरे पु०।
शातकुम्भ न० शतकुम्भे भवः अण्। हिरण्ये। धुस्तूरे करवीरे च पु०। [धुस्तूरे पु०।
शातकौम्भ न० शतकुम्भे भवम् अण् द्विपदवृद्धिः। हिरण्ये
शातन न० शो-णिच्-तडुक् ल्युट्। तनूकरणे, विनाशने च 'आयते पत्रशातनमि'ति मीमांसा।
शातभीरु पु० शाता दुर्बलाः पान्था भीरवो यस्याः। मल्लिकाभेदे
शातला स्त्री० शातं कार्श्यं लाति ला क। (चामकषा) वृक्षे।
शात्रव पु० शत्रुरेव स्वार्थे अण्। रिपौ। तस्य भावः संघो वा अण्। वैरे, रिपुसमूहे च न०।
शाद पु० शद-घञ्। कर्द्दमे, शष्पे च।
शादहरित पु० शादेन हरिततृणेन युक्तः। शाद्वले देशे।
शाद्वल पु० शादाः सन्त्यत्र ड्वलच्। शष्पतृणयुक्ते देशे।
शान भेदने भ्वा० उभ० सक० सेट् स्वार्थे सन्। शीशांसति ते अशीशांसीत् अशीशांसिष्ट।
शान पु० शान-घञ्। अस्त्रादीनां तीक्ष्णताकारके दृषद्भेदे।
शानी स्त्री० शान-इञ् ङीप्। इन्द्रवारुण्याम्।
शान्त त्रि० शम-क्त। शमयुक्ते, दमियुक्ते च शम-णिच्-क्त त्रि०

शान्तिं गमिते त्रि०। निर्वेदस्थायिभावके रसभेदे पु०। लोमपादराजकन्यायां, ऋष्यशृङ्गपत्न्यां, शमीभेदे च स्त्री०।
शान्तनव पु० शान्तनोरपत्यम् अण्। भीष्मे, 'भीष्मः शान्तनव इति तत्पर्य्यायमन्त्रः।
शान्तनु पु० द्वापरयुगभवे चन्द्रवंश्ये प्रतीपराजपुत्रे नृपभेदे।
शान्ति स्त्री० शम-क्तिन्। कामक्रोधादिजये, विषयेभ्यो मनसो निवारणे, उपद्रवनिवारणे, निवारणे च।
शान्तिक त्रि० शान्तये हितम् ठञ्। शान्तिकारके होमादौ।
शाप पु० शप-घञ्। 'अनिष्टं भूयादित्येवम् आक्रोशे, शपथे च
शापास्त्र पु० शाप एवास्त्रं यस्य। मुनौ।
शाब्दबोध पु० शब्देन निर्वृत्तः अण्। अन्वयबोधे शब्दज्ञानजन्ये पदार्थस्मृतिद्वारके ज्ञानभेदे।
शाब्दिक पु० शब्दं शब्दसाधुताज्ञापकं शास्त्रं वेत्त्यधीते वा ठक्। व्याकरणशास्त्राभिज्ञे। [जालादौ।
शामित्र न० शम-णिच् इत्रच्। यज्ञपशुबन्धनस्थाने। [इन्द्र-
शाम्बरी स्त्री० शम्बरेण निर्वृत्ता अण् ङीप्। मायायाम्
शाम्बविक त्रि० शम्बुः पण्यमस्य ठक्। शाङ्खिके। (शाखारी)
शा(म्बु)म्बूक पु० श(म्बु)म्बूक+स्वार्थेऽण्। शम्बुके (शामुक)।
शाम्भव पु० शम्भोरयम् अण्। गुग्गुलौ, कर्पूरे, विषभेदे, शम्भुपुत्रे, मल्लिकाभेदे, देवदारुण्यि च। शिवसम्बन्धिनि, तदुपासके च त्रि०। दुर्गायां स्त्री० 'शाम्भवी कुपिता तस्ये'ति तन्त्रम्।
शा(षा)यक पु० शो(षो)-ण्वुल्। वाणे, खड्गे च।
शार दौर्ब्बल्ये अद० चु० उभ० सक० सेट्। शारयति-ते अशशारत्
शार न० शार-अच्, शॄ-घञ् वा। कर्ब्बुरवर्णे। तद्वति त्रि०।
शारङ्ग पु० शारं कर्ब्बुरमङ्गं यस्य शक०। चातकपक्षिणि, हरिणे गजे, भृङ्गे, मयूरे च।
शारद न० शरदि भवम्-अण्। श्वेतपद्मे। कासे, वकुले, हरिन्मुद्गे च पु०। शरद्भवमात्रे त्रि० शारं श्वेतपद्ममस्त्यस्याः अण्। शरत्कालभवायाम् स्त्री०। [स्वादौ तत्कालजे रोगे पु०।
शारदिक न० शरदि भव श्राद्धं रोगो वा ठञ्। शरत्काले भवे
शारदीया स्त्री० शरदि भवा छण्। शरत्काले कर्त्तव्यायां दुर्गापूजायाम्।
शारि(री) स्त्री० शॄ-इञ् वा ङीप्। पाशकादिगुटिकायां, पक्षिभेदे च शारी चर्च्चैर्वत्स। भारत्ये'ति मेघदूतम्। युद्धार्थं गजपर्याणे, व्यवहारभेदे, कपटे च। स्वार्थे कन् पक्षिभेदे।
शारिफल पु०न० शारेः फलमाधारः। शारिपट्टे प्रा० मट्टक्रीडाधारभूते द्रव्ये (छक) स्वार्थे कन्। तत्रैव।

शारिवा स्त्री॰शारिरिव वनति वन-ड । श्यामालतायाम् ।

शारीर त्रि॰ शरीरस्येदं अण् । देहसम्बन्धे सुखदुःखादौ तन्मोचमस्य पुन अण् । वृषे पु॰। शरीरमात्मत्वेनाभिमन्यते अण् । जीवे । स्वार्थे क । जीवे । शारीरं द्रु र्थं जीवं वा अधिकाय कृतो ग्रन्थः अण् । व्यासकृते वेदान्तसूत्रे चिकित्साङ्गे सुश्रुतग्रन्थाद्येकदेशे च ।

शारीरिक त्रि॰ शरीरे भवः ठञ् । देहजाते दुःखादौ ।

शारुक त्रि॰ शॄ-उकञ् । हिंसके ।

शार्कर त्रि॰शर्करा अस्त्यस्य अण् । शर्करायुक्ते देशे शर्करायाः विकारः अण् । फाणिते, दग्धफेणे च पु॰ ।

शार्ङ्ग त्रि॰शृङ्गस्य विकारः अण् । शृङ्गजाते पदार्थे । विष्णुधनुषि, धनुर्मात्रे च पु॰ आर्द्रके न॰ ।

शार्ङ्गिन् पु॰शार्ङ्ग॰ अस्त्यस्य इनि । विष्णौ धन्विमात्रे त्रि॰ ।

शार्दूल पु॰ शॄ-ऊलञ् दुक् च । व्याघ्रभेदे, पक्षिभेदे, राक्षसभेदे, च उत्तरपदस्य । श्रेष्ठार्थे ।

शार्दूलललित न॰ अष्टादशाक्षरपादके छन्दोभेदे ।

शार्दूलविक्रीडित न॰ ऊनविंशत्यक्षरपादके छन्दोभेदे ।

शार्वर न॰ शर्वर्यां इदम् अण् । अत्यन्ततमसि । रात्रिसम्बन्धिनि, घातके च त्रि॰ । [कृष्णालिप्ते ।

शाल कथने भ्वा॰आ॰सक॰सेट् घटि न ह्रस्वः । शालते

शाल पु॰शल-घञ् । मत्स्यभेदे, प्राकारे, स्वनामख्याते, वृक्षभेदे, वृक्षमात्रे, दन्त्यादिस्तु वृक्षमात्रे 'रसाल॰ सालः समदृश्यतासने'ति नैषधम् ।

शालग्राम पु॰ शालाना रचाणा ग्राम समूहो यत्र । पर्वतभेदे तत्र जात॰ अण् । तत्र जाते विष्णोर्मूर्त्तिभेदे ।

शा(सा)लज पु॰शा(सा)लात् जायते जन ड । सर्जरसे (धुना)

शालनिर्य्यास पु॰६त॰ । सर्जरसे (धुना) । [वृक्षभेदे ।

शालपर्णी स्त्री॰ शालस्येव पर्णं यस्या ङीप् । (शालपानी)

शालभञ्जिका स्त्री॰ शालेन भज्यते निर्मीयते भन्ज-ण्वुल् । काष्ठनिर्म्मितपुत्तलिकायां, वेश्यायाञ्च । [लोभे ।

शालव पु॰ शाल तत्प्रियाय इव वसति वहिर्गच्छति वल-ड ।

शालवेष्ट पु॰ शालस्य वेष्ट इव । सर्ज्जरसे (धुना) ।

शालसार पु॰शालस्य सारः । हिङ्गुनि शालेषु सारः । वृक्षश्रेष्ठे

शाला स्त्री॰ शाल अच् । गृहे, वृक्षस्य स्कन्दस्यशाखायाञ्च ।

शालाजिर पु॰शाल इवाजति अज-इन् । शाकभेदे (शाङ्गा)

शालातुरीय पु॰ शालातुरे भव । तद्ग्रामवासिनि मुनौ ।

शालानी स्त्री॰शालमानयति आ+नी-ड गौ॰ङीप् । विदार्य्याम्

शालामृग पु॰ शाखाया मृगे मृग इव । शृगाले ।

शालावृक पु॰ शालाया वृके, शाखायां वृक इव वा । कुक्कुरे, शृगाले, बिडाले, मृगे, वानरे च ।

शालि पु॰ शल+इञ् । कलमादिधान्ये, पक्षिकादिधान्ये, गन्धमार्ज्जारे च ।

शालिका स्त्री॰ शालिरिव कायति कै क । विदार्य्याम् ।

शालिञ्च पु॰ शालि चमति चम-ड पृ॰ मुम् । शाकभेदे ।

शालिपर्णी स्त्री॰ शालेरिव पर्णान्यस्या ङीप् । माषपर्ण्याम्

शालिवाहन पु॰। विक्रमादित्य हत्वा शकाब्दप्रवर्त्तके नृपभेदे

शालिहोत्र पु॰ शालयो ह्रयन्तेऽत्र हु त्रन् । घोटके ।

शाली स्त्री॰ शाल-घञ् गौ॰ ङीप् । कृष्णजीरके ।

शालीन त्रि॰ शालामर्हति ख । धृष्टे लज्जे, निर्लज्जे च ।

शालु न॰ शाल-उण् । शालूके, कषायद्रव्ये, चौरनामगन्धद्रव्ये च भेके पु॰ । [जातीफले ।

शालूक न॰ शाल-ऊकञ् । कुमुदादिमूले उकञ् । तत्र

शालूर पु॰ शाल-ऊरच् । भेके ।

शालेय पु॰ शालाया भवं ढक् । मधुरिकायाम् ।

शालोत्तर पु॰ ग्रामभेदे ।

शालोत्तरीय पु॰ शालोत्तरे भवः । पाणिनिमुनौ ।

शाल्मल पु॰ शाल-मलच् । (शिमुल) वृक्षे तच्चिह्नितद्वीपभेदे च

शाल्मलि(ली) पु॰ स्त्री॰ शाल मलिच् वा ङीप् (शिमुल) वृक्षे

शाल्मलिक पु॰ शाल्मलिरिव कायति कै-क । रोहितकवृक्षे

शाल्मलीफल पु॰ शाल्मल्या इव फलमस्य । तेजफलवृक्षे ।

शाल्मलीवेष्ट पु॰ शाल्मलीं वेष्टयति वेष्ट अच् । शाल्मलीनिर्यासे स्वलु । तत्रैव ।

शाल्व पु॰ शाल-व । देशभेदे ।

शाव पु॰शव-घञ् । शिशौ स्वार्थे कन् । तत्रैव शवस्येदम् अण् । शवसम्बन्धे 'त्रिरात्रं शावमाशौच'मिति स्मृति ।

शावर पु॰ शावयति विकारयति शव-णिच् अरन् । पापे, अपराधे, लोध्रद्रुमे च शबरस्य प्रोक्तमण् । शबरकृते मीमांसाभाष्ये । शबरस्येदम् अण् । शबर सम्बन्धिनि त्रि॰।

शावरी स्त्री॰शबरस्य प्रिया अण् । शूकशिम्ब्याम्, विद्याभेदे च

शाश्वत त्रि॰ शश्वद् भवः अण् । सतते नित्ये ।

शाष्कुलिक न॰ शष्कुलीनां समूह ठञ् । शष्कुलीसमूहे ।

शास शासने अदा॰पर॰सक॰सेट् क्त्वा वेट् । आङ्पूर्वक आयसते आशंसिष्ट । [पूर्व्व । आयास्ते आशासिष्ट

शास आशीर्वादे अदा॰ आ॰ सक॰ सेट् क्त्वा वेट् । आङ्पूर्वक

शास शासने अदा॰प॰द्विक॰सेट् क्त्वा वेट् । शास्ति अशासत् ।

शासन न॰ शास-ल्युट् । निग्रहस्य हितसाधनादौ प्रवर्त्तने ।

शासनहर पु॰ शासनं हरति हृ-अच् । आज्ञाहारके दूते ।
शासितृ त्रि॰ शास-तृच् इट् । शासनकर्त्तरि ।
शास्तृ त्रि॰ शास-तृच् इडभावः । शासनकर्त्तरि ।
शास्त्र न॰ शिष्यतेऽनेन शास-ष्ट्रन् । हितानुशासने ग्रन्थे ।
शास्त्रदर्शिन् त्रि दृश-णिनि इत॰ । शास्त्रज्ञे शास्त्रविदादयोऽप्यत्र
शास्त्रिन् त्रि॰ शास्त्रं वेत्त्यधीते वा इनि । शास्त्रज्ञे ।
शास्त्रीय त्रि॰ शास्त्रेण विहितः छ । शास्त्रोक्ते धर्मादौ ।
शास्य त्रि॰ शास-यत् । अनुशासनीये शिष्यादौ । [अशैषीत् ।
शि छेदने भ्वा॰उभ॰सक॰अनिट् । शिनोति शिनुते अशैषीत्
शिंशपा स्त्री॰ शिव पाति पा-क पृ॰। (शिशु) वृक्षे ।
शि(शि)कृथ न॰ शिच-थक् कुक् च पृ॰ इस्व शोना । (मोम) मधूच्छिष्टे । स्वार्थे कन् । तत्रैव । [शते पदार्थे
शिक्य न॰ स्त्री॰ शिकं-यत्, शि-यत् कुक् च । (शिका) रज्जु
शिक्यित त्रि॰ शिक्यं शिक्यस्थं करोति शिक्य+णिच्-कर्म्मणि क्त । शिक्याधारे स्थापिते पदार्थे ।
शिक्ष स्त्री॰ अभ्यासे भ्वा॰आ॰सक॰ सेट् । शिक्षते अशिक्षिष्ट
शिक्षा स्त्री॰ शिक्ष-अ । अभ्यासे वर्णानामुच्चारणप्रदर्शके वेदाङ्गे ग्रन्थभेदे 'शिक्षा कल्पो व्याकरणमि'ति पु॰ ।
शिक्षागुरु पु॰७त॰ । विद्यादातरि ।
शिक्षित त्रि॰शिक्षा जाताऽस्य तार॰ इतच् शिक्ष-क्त वा। कृताभ्यासे, निपुणे, विज्ञे च ।
शिख गतौ भ्वा॰पर॰सक॰सेट् इदित् । शिङ्खति अशिङ्खीत्
शिखण्ड पु॰शिखामणति अण-ड तस्य नेत्वम् इव॰वा शक॰ । मयूरपिच्छे, चूड़ायाञ्च ।
शिखण्डक पु॰ शिखण्ड इव जनु । काकपक्षे (काकजन्धी) स्त्रीत्वमपि तत्र, सा च चूड़ायाञ्च ।
शिखण्डिक पु॰ शिखण्डोऽस्त्यस्य ठन् । कुक्कुटे ।
शिखण्डिन् पु॰ शिखण्डोऽस्त्यस्य इनि । मयूरे द्रुपदराजस्य पुत्रभेदे, विष्णौ च । यूथिकायां, गुञ्जायां च स्त्री
शिखर न॰ शिखा अस्त्यस्य अरच् अलोप । पर्व्वताग्रे वनमाले च । वृक्षाग्रे पु॰न॰ । पुलके, कुम्भजपादौ, रत्नभेदे, च मर्य्यादां स्त्री॰ ।
शिखरिन् पु॰ शिखरोऽस्त्यस्य इनि । पर्व्वते, कोयष्टी, वन्दाके, वृक्षे, अपामार्गे, कुन्दुरुके, यावनाले च । रसालायां खाद्यभेदे, मत्तदयावरणादेश्छन्दोभेदे, मल्लिकायां रोमावल्यां च स्त्री॰ङीप् । (कुङ्कुमडा) गुल्मभेदे ।
शिखलोहित पु॰ शिखाभ्यस्य अच् तथाभूतः सन् लोहित
शिखा स्त्री॰ शी-खक् ह्रस्व नेत्वम् इ॰। अग्निज्वालायां,मस्तकमध्यस्थकेशगुच्छे च 'कल्पोपनिषदां शिखा'रिति स्मृतिः

शिखाकन्द न॰ शिखेव कन्दोऽस्य । ग्रञ्जने । (शलगम)
शिखातरु पु॰ शिखायादे प्रशिखायाास्तरुरिव । दीपवृक्षे ।
शिखाधर पु॰ शिखां चूडां धरति धृ-अच् । मयूरे, शिखाधारके त्रि॰ ।
शिखामूल न॰ शिखेव मूलमस्य । ग्रञ्जने, (गाजर) ।
शिखालु पु॰ शिखाऽस्त्यस्य आलुच् । मयूरशिखावृक्षे ।
शिखावत् पु॰ शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः । वह्नौ, केतुग्रहे,चित्रकवृक्षे च । शिखावति त्रि॰मूर्व्वायां स्त्री॰ङीप्
शिखावर पु॰ शिखा वृणोति वृ-अच् । पनसवृक्षे ।
शिखावल पु॰ शिखाऽस्त्यस्य वलच् । मयूरे मयूरशिख वृक्षे च
शिखिकण्ठ न॰ शिखिनो मयूरस्य कण्ठस्तद्वर्णोऽस्त्यस्य अर्श आद्यच् । तुत्थे (तुते) शिखिग्रीवादयोऽप्यत्र ।
शिखिध्वज शिखिनो वह्नेर्ध्वज इव । धूमे ।
शिखिन् पु॰ शिखा अस्त्यस्य इनि । मयूरे, वह्नौ, चित्रक वृक्षे, केतुग्रहे; कुक्कुटे, वृषे, अश्वे, अजलोम्नि, पर्व्वते, ब्राह्मणे, मेथिकायां,मयूरशिखावृक्षे च । शिखायुक्ते त्रि॰
शिखिप्रिय पु॰ शिखिनं प्रीणयति प्री-क । लघुबदरे ।
शिखिमण्डल पु॰ शिखिनां मण्डलमिव यत्र । वरुणवृक्षे ।
शिखिमोदा स्त्री॰ शिखिनं मोदयति मुद-णिच्-अच् । अजमोदायाम् । [कुष्माण्डे ।
शिखिवर्द्धक पु॰ शिखिनं वर्द्धयति वृध-णिच्-ण्वुल् ।
शिखिवाहन पु॰ शिखी मयूरो वाहनं यस्य । कार्त्तिकेये ।
शिग्रु पु॰ शि-रक् गुक् च । (सजिना) वृक्षे शाकमात्रे च ।
शिघ आघ्राणे भ्वा पर॰सक॰सेट् इदित् । शिङ्घति अशिङ्घीत्
शिङ्घाण न॰ शिघि-आनच् पृ॰ णत्वम् । काचपात्रे लोहमले, नासिकामले, श्लेष्मणि च । स्वार्थे कन् । नासिकामले न॰।
शिज अव्यक्तध्वनौ इदित् वा पु॰उभ॰पक्षे अदा॰आ॰सक॰ सेट् । शिञ्जयति ते शिङ्क्ते अशिशिञ्जत् त अशिञ्जिष्ट आदिरप्ययं पर॰ इत्येके तेन शिञ्जति अशिञ्जीत् ।
शिञ्जा स्त्री॰शिजि-अ । भूषणशब्दे । शिजि-अच् । धनुर्गुणे
शिञ्जिनी स्त्री॰ शिञ्जति शिजि-णिनि । धनुर्गुणे ।
शिट अनादरे भ्वा॰पर सक॰सेट् । शेटति अशेटीत् ।
शित त्रि॰ शो क्त । दुर्ब्बले, शाणिते च ।
शितद्रु पु॰ शत द्रवति द्रु-कु-नि॰ । (शतद्रुज) नदीभेदे ।
शितशूक पु॰ शितमीक्ष्णः शूको यस्य । यवे । [इङ्गुदवृक्षे च
शिति त्रि॰ शि-क्तिच् । भूर्जवृक्षे, शुक्लवर्णे, कृष्णवर्णे च ।
शितिकण्ठ पु॰ । शितिः कण्ठो यस्य । शिवे,दात्यूहपक्षिणि च

शितिचार पु० शिति श्वेत चरति चर अच्। (सुषनि) शाके
शितिसारक पु० शिति शुभ्र सारो यस्य कप्। तिन्दुकवृक्षे
शिथिल त्रि० श्लथ-किलच् पृ०। श्लथे, श्वाढे संयोगभेदे, मन्दे च
शिनि पु० शि निक्। यदुवंश्ये, क्षत्रियभेदे यस्य सात्यकिर्नप्ता
शिप्र पु० शि रक् पुक् च। सरोवरभेदे, नदीभेदे स्त्री० ।
शिफ पु०स्त्री० शि फक्। वृक्षाणां जटाकारे मूले ।
शिफाक पु० शिफेव स्वार्थे कन्। पद्ममूले ।
शिफाकन्द पु० शिफेव कन्दः। पद्ममूले ।
शिफाधर पु० शिफां धरति धृ अच्। शाखायाम् ।
शिफारुह पु० शिफायां रोहति रुह-क। वटवृक्षे ।
शि(सि)म्बा स्त्री० शाम्यति शमति वा शम (सम) वम्बच् पृ० (छिमी) ख्याते पदार्थे चक्रमर्दे च ।
शिम्बि(म्बी) स्त्री०शम-वि नि० वा ङीप्। शिम्बायाम्, (शिम्) लतायां, परकायाञ्च, स्वार्थे कन् तत्रैव । [कन्। तत्रैव ।
शिम्बिपर्णी स्त्री० शिम्बिरिव पर्णमस्याः। मुद्गपर्ण्याम् स्वार्थे
शिर न०शॄ क। मस्तके, पिप्पलीमूले, शय्यायाम्, अजगरे च ।
शिरःफल पु० शिर इव फलमस्य। नारिकेले ।
शिरःशूल न० शिरसः शूलमिव तापकत्वात्। रोगभेदे ।
शिरज पु० शिरे जायते जन-ड। केशे ।
शिरस् न० शॄ असुन् नि०। मस्तके, अग्रे च ।
शिरसिरुह पु० शिरसि रोहति रुह-क-अलुक् स०। केशे ।
शिरस्क न० शिरसि कायति प्रकाशते कै क। शिरस्त्राणे ।
शिरस्त्र न० शिरस्त्रायते त्रै क। शिरोरक्षके उष्णीषे । [त्रि०
शिरस्य पु० शिरसि भव यत्। निर्मलकेशे शिरोजातमात्रे
शिरा स्त्री० शॄ-क। नाड्याम् (शिर)।
शिरापत्त्र पु० शिरेव पत्त्रं यस्य। हिन्तालवृक्षे ।
शिराल न० शिराऽस्त्यस्य लच्। कर्मरङ्गे शिरायुक्ते त्रि० ।
शिरावृत्त न० शिरेव वर्त्तते वृत-क। सीसके ।
शिरीष पु० शॄ ईषन्। स्वनामख्याते वृक्षे । [शालायाम्
शिरोगृह न० शिरः स्थ सुपरिस्थं गृहम्। (चिलेघर) चन्द्र
शिरोधरा स्त्री० शिरो मस्तकं धरति धृ अच्। ग्रीवायाम् ।
शिरोधि स्त्री० शिरो धीयतेऽत्र धा कि। ग्रीवायाम् ।
शिरोमणि पु० स्त्री० शिरसि धार्य्यो मणिः। शिरोधार्य्ये रत्ने चूडामणौ। स्त्रीपक्षे वा ङीप्। शिरोरत्नादयोऽप्यत्र ।
शिरोरुजा स्त्री० शिरो रुजति व्यथयति रुज क। सप्तच्छद-वृक्षे। कृत०। मस्तकरोगे ।
शिरोरुह पु० शिरसि रोहति रुह क। केशे ।
शिरोवल्ली स्त्री० शिरसि वल्लीव। मयूरचूडायाम ।
शिरोवृत्त न० शिर इव वृत्तं वर्तुलम्। मरिचे । [पाषाणे
शिरोवृत्तफल पु० शिरो वृत्तं मरिचमिव फलमस्य। एरण्डे
शिरोवेष्ट पु० वेष्ट-घञ् शिरसो वेष्ट। उष्णीषे ल्युट्। तत्रैव न० ।
शिल उञ्छे कणश आदाने तु०पर०सक०सेट्। शिलति अशेलीत्
शिल न० शिल-क। क्षेत्रस्वामिना गृहीतशस्यात् क्षेत्रात् कणशः शस्यादानरूपायां वृत्तौ, पाषाणे द्वाराध स्थितकाष्ठ खण्डे च स्त्री० ।
शिलाकर्णी स्त्री० शिलेव कर्णमस्य ङीप्। शल्लकीवृक्षे ।
शिलाकुट्टक पु० शिलां कुट्टयति कुट्ट-ण्वुल्। पाषाणभेदके अस्त्रभेदे। शिलया कुट्टति विदारीकरोति। टाङ्गनभेदे ।
शिलाज न० शिलातो जायते जन-ड। शैलेये गन्धद्रव्ये ।
शिलाजतु न० शिलाजातं जतु। पर्वतजाते उपधातुभेदे ।
शिलाञ्जनी स्त्री० शिला अज्यतेऽनया अनुज ल्युट्। कालाञ्जनीवृक्षे ।
शिलात्मज न० शिलाया आत्मज इव। लौहे ।
शिलादद्रु पु० शिलाया दद्रुरिव। शैलेये गन्धद्रव्ये ।
शिलाधातु पु० शिलाया धातुश्चरमधातुरिव शुभ्रत्वात्। श्वेतोपले, (खड़ी) पीतवर्णे-गैरिकभेदे च ।
शिलापुत्र पु० शिलाया पुत्र इव। (लोड़ा)। प्रस्तरखण्डे ।
शिलापुष्प न० शिलाया पुष्पम्। शैलेये गन्धद्रव्ये ।
शिलाभेद पु० शिलामपि भिनत्ति भिद्-अण्। पाषाणभेदि वृक्षे, पाषाणभेदकास्त्रे च ।
शिलाव्याधि पु० शिलाया व्याधिरिव। शैलेये गन्धद्रव्ये ।
शिलासन न० शिलाया आसनम्। शैलेये गन्धद्रव्ये ।
शिलासार न० शिलाया सार इव। लौहे ।
शिलि पु० शिल कि। भूर्जपत्त्रवृक्षे द्वारस्थे काष्ठे (गोवराट) भेक्याञ्च शलाकुष्ये च स्त्री०ङीष ।
शिलीन्ध्र न० शिलीं धरति धृ-क पृ०मुम्। कदलीपुष्पे ।
शिलीन्ध्रका न० शिलीन्ध्र इव कै-कन्। गोमयच्छत्राके ।
शिलीपद पु० शिलीव पदमस्य। रोगभेदे (गोद)।
शिलीमुख पु०शिली शल्य इ मुखमस्य। भ्रमरे, वाणे, युद्धे, जडीभूते च ।
शिलोच्चय पु० शिलानामुच्चयो यत्र। पर्वते ।
शिलोञ्छ पु० शिलेनोञ्छः उञ्छि घञ्। उपात्तशस्यात् क्षेत्रात् शेषावचयने । [शिलोद्भवादयोऽप्यत्र ।
शिलोत्थ शिलाया उत्तिष्ठति उद्+स्था क। शैलेये गन्धद्रव्ये
शिल्प न०शिल-पक्। चित्रकलादिकर्मणि। [चित्रादिकर्त्तरि।
शिल्पकारिन् त्रि० शिल्पं चित्रादिकला करोति कृ णिनि ।

**शिल्पशाला** स्त्री० ६त०। चित्रकरादीनां शिल्पकरणगृहे।
**शिल्पशास्त्र** न० शिल्पज्ञापनं शास्त्रम्। वास्तुविद्यादिज्ञापके शास्त्रे।
**शिल्पिन्** त्रि० शिल्पं वेत्त्यधीते वा इनि। चित्रादिकर्मकरे।
**शिव** न० शी वन् इ०। मङ्गले, सुखे, जले। सैन्धवे सामुद्रे च लवणे, श्वेतटङ्कणे च। मङ्गलवति त्रि०। महादेवे, मोक्षे, मालधने, वालुके गुग्गुलौ, वेदे, पुण्डरीकवृक्षे, कृष्णधुस्तूरे, पारदे, देवे, लिङ्गे, विष्कुम्भादिषु मध्ये विंशतितमे योगे च पु०। [यनार्थं गोष्ठे निखाते काष्ठे।
**शिवक** पु० शिव इव इवार्थे कन्। कीलके गवां गात्रकण्डू-
**शिवकाञ्ची** स्त्री० ६त०। पुरीभेदे।
**शिवधर्मज** शिवधर्माज्जायते जन ड। मङ्गलग्रहे।
**शिवचतुर्दशी** स्त्री० शिवप्रिया चतुर्दशी। फाल्गुनकृष्ण-चतुर्दश्याम्।
**शिवदारु** न० शिवो देवस्तदादिकं दारु। देवदारुवृक्षे।
**शिवदूती** स्त्री० शिवो दूतो यस्याः। दुर्गामूर्त्तिभेदे।
**शिवद्रुम** पु० शिवप्रियः द्रुमः। बिल्ववृक्षे।
**शिवद्विष्टा** स्त्री० ३त०। केतक्याम्।
**शिवधातु** पु० ६त०। पारदे।
**शिवपुरी** स्त्री० ६त०। काश्याम्।
**शिवप्रिय** न०६त०। रुद्राक्षे, महादेववल्लभे त्रि०। वकवृक्षे, धत्तूरे, स्फटिके च पु०। दुर्गायां स्त्री०।
**शिवमल्लक** पु० शिवं कल्याणकरं मल्ल इव कायति कै क। अर्जुनवृक्षे।
**शिवमल्ली** स्त्री० शिवस्य मल्लीव प्रिया। वकवृक्षे।
**शिवरात्रि** स्त्री० शिवप्रिया तदुपासनार्था रात्रिः। शिव-चतुर्दश्याम् माघीय परस्याः कृष्णचतुर्दश्याम्। तद्रात्रौ हि शिवपूजनैर्व्रतादिकं क्रियते इति तस्याः रात्रेस्तत्प्रिय-त्वम् तद्विषयकर्त्तव्ये व्रते च।
**शिवलिङ्ग** न०६त०। शिवस्य लिङ्गाकारे प्रस्तरादिमये पदार्थे।
**शिवलोक** पु० ६त०। कैलासनामके स्थाने।
**शिववल्लभ** त्रि० ६त०। महादेवप्रिये। शतपत्र्यां स्त्री०।
**शिववल्ली** स्त्री० शिवप्रिया वल्ली। लिङ्गिनीलतायां, शीवल्ल्याञ्च।
**शिववाहन** न० शिवं वाहयति वह णिच् ल्यु। वृषभे।
**शिववीज** न० ६त०। पारदे शिववीर्य्यादुत्पन्नं।
**शिवशेखर** पु० शिवस्य शेखर इव। धुस्तूरे, वकपुष्पे च।
**शिवसुन्दरी** स्त्री० ६त०। दुर्गायाम्।
**शिवा** स्त्री० शी-वन् नि०। मङ्गलरूपायां, दुर्गायां, सक्तौ, शृगाले, हरीतक्याम्, शमीवृक्षे, आमलक्यां, दूर्वायां, गोरोचनायाञ्च।
**शिवानी** स्त्री० शिवं कल्याणमानयति आ+नी ड गौ० ङीष्। जयन्तीवृक्षे। शिवस्य पत्नी ङीप् आनुक् च। दुर्गायाम्।
**शिवापीड** पु० ६त०। वकवृक्षे।
**शिवाफला** स्त्री० शिवाया इव फलं यस्याः। शमीवृक्षे।
**शिवालय** न० शिवः आलीयतेऽत्र ली-अच्। श्मशाने ६त०। रक्ततुलस्यां महादेवगृहे च पु०।
**शिवाश्मृति** स्त्री० शिवाया स्मृतिर्यस्याः। जयन्तीवृक्षे तन्ना-मोच्चारणे हि जयन्तीनामकदुर्गायाः स्मरणम्। [वकवृक्षे
**शिवाह्लाद** पु० शिवमाह्लादयति आ+ह्लद णिच् अण्।
**शिवाह्वा** स्त्री० शिवस्येवाह्वा यस्याः। रुद्रजटायाम्।
**शिवि** पु० शि वि नि० न गुणः। हिंस्रपशौ, भूर्जवृक्षे उशी-नरराजसुते नृपभेदे च। [(दुन्नो)।
**शिविका** स्त्री० शिवं करोति शिव+णिच ण्वुल्। यानभेदे
**शिविर** न० शी+किरच् वुक् च। कटके सैन्यनिवासस्थाने
**शिवेष्ट** पु० ६त०। वकवृक्षे दूर्वायां स्त्री०। महादेवप्रिये त्रि०
**शिशिर** न० शश किरच् नि०। हिमे, माघफाल्गुनमास-द्वयात्मके ऋतुभेदे शीतले स्पर्शे च तद्वति त्रि०।
**शिशु** पु० शो कु सन्वद्भाव द्वित्वम्। बालके सत्त्वे च।
**शिशुक** पु० शिशुरिव इवार्थे कन्। जलजन्तुभेदे (शुशुक)।
**शिशुगन्धा** स्त्री० शिशुः स्वल्पो गन्धो यस्याः। मल्लिकाभेदे
**शिशुचान्द्रायण** न० चतुरः प्रातरश्नीयात् पिण्डान् विप्र समाहितः चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृत-मित्युक्ते व्रते। [स्त्री०।
**शिशुत्व** न०६त०। शिशोर्भावः त्व। बाल्ये तल् शिशुतापत्र
**शिशुपाल** पु० चेदिदेशीयराजभेदे दमघोषात्मजे। [श्रीकृष्णे
**शिशुपालघ्न** पु० शिशुपालं हतवान् हन-भूते क्विप्।
**शिशुमार** पु० शिशु मारयति मृ णिच्। जलजन्तुभेदे गगनस्थे तारापञ्जभेदे च।
**शिश्न** पु० शश नक् नि०। मेढ्रे पुंचिह्नभेदे।
**शिश्विदान** त्रि० श्विद-कानच् द्वित्वम्। पापकारके।
**शिष** वधे भ्वा०पर०सक०सेट्। शेषति अशेषीत्।
**शिष** परिशेषीकरणे वा चु०उ०पक्षे भ्वा०प०सक० सेट् शेष यति ते शेषति अशीशिषत् त अशेषीत्। [च।
**शिष** विशेषे रुधा०प सक०अनिट्। शिनष्टि अशिषत्। [र्थे ४
**शिष्ट** त्रि० शास क्त। शान्ते, वदशास्त्रे विधायके, धर्म्मे
**शिष्टाचार** पु० शिष्टानामाचारः। सदाचारे।

**शिष्टि** स्त्री० शास-क्तिन् । आज्ञायाम्, शासने, ताडने च 'शिष्यशिष्टिरवधेने'ति स्मृतिः ।

**शिष्य** त्रि० शास-क्यप् । शिक्षणीये, छात्रे, उपदेश्ये च ।

**शि(सि)ह्ल** पु०सिह्-लक् नि०सस्य शो वा । गन्धद्रव्यभेदे स्वार्थे कन् । तत्रैव । [अशीकिष्ट ।

**शी** शयने अदा० आ०अक०सेट् । शेते अशयिष्ट । [शीकति

**शीक** सेके सर्पणे च भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।

**शीक** आमर्षे सेके च चु० उभ० पक्षे भ्वा०प०सक० सेट् । शीकयति ते शीकति अशीशिकत्-त अशीकीत् ।

**शीकर** न० शीक-अरन् । सरलद्रवे, जलकणे, वायौ च ।

**शीघ्र** न० शिघि रक् पृ०। विलम्बाभावे त्वरिते च तद्वति त्रि०

**शीघ्रजन्मन्** पु० शीघ्रं जन्म यस्य । करञ्जवृक्षे ।

**शीघ्रपुष्प** पु० शीघ्रं पुष्पं यस्य । वकवृक्षे । [कर्त्तरि ।

**शीघ्रवेधिन्** पु० शीघ्रं विध्यति विध-णिनि । शीघ्रलक्ष्यवेधन-

**शीत** न० श्यै-क्त । शीतले, जले, हिमे च । बहुवारवृक्षे असनवृक्षे वेतसवृक्षे च पु० । शीतस्पर्शवति त्रि० ।

**शीतक** पु० शीतमिव करोति । दीर्घसूत्रिणि आलस्यहेतुना कार्य्याकरणाय शीतबाधामभिनीय सुखिते शीत+स्वार्थे कन् । शीतपदार्थे, शीतकाले, वृश्चिके च ।

**शीतकर** पु०शीतं शीतलं करो यस्य । चन्द्रे । कर्पूरे च । शीतकिरणादयोऽप्यत्र त्रि० शीतकारके ।

**शीतकाल** पु०६त०। हिमऋतौ मार्गपौषमाघद्वयात्मके काले ।

**शीतकुम्भ** पु० शीतं स्कुम्नाति स्कुम्भ-अच् नि० । करवीरे ।

**शीतकृच्छ्र** पु० 'त्र्यहं शीतं पिवेत् तोयं त्र्यहं शीतं पयः पिवेत् । त्र्यहंशीतं घृतं पीत्वा वायुभक्षपरत्र्यहमि'-त्युक्ते व्रते ।

**शीतक्षार** न० कर्म० । श्वेतटङ्कणे ।

**शीतगन्ध** न०शीतः शीतलः गन्धो यस्य । श्वेतचन्दने ।

**शीतगु** पु० शीता गावः किरणा यस्य । चन्द्रे, कर्पूरे च ।

**शीतपर्णी** स्त्री० शीतं पर्णं यस्याः ङीप् । अर्कपुष्पिकायाम् ।

**शीतपल्लवा** स्त्री० शीतः पल्लवो यस्याः । भूमिजम्ब्वाम् ।

**शीतपाकिनी** स्त्री० शीते पाकोऽस्त्यस्याः इनि । काकोल्याम्

**शीतपाकी** स्त्री० शीतेन पाको यस्याः ङीप् । गाङ्गेरुके, काकोल्याञ्च । [स्वार्थे कन् । शैलेये । अर्कवृक्षे च ।

**शीतपुष्प** पु० शीतं शीतवीर्य्यकरं पुष्पं यस्याः । शिरीषवृक्षे

**शीतप्रभ** पु० शीतस्य हिमस्येव प्रभा यस्य । कर्पूरे ।

**शीतप्रिय** पु० ६त० । पर्पटे ।

**शीतफल** पु०शीतं शीतलवीर्य्यकरं फलमस्य । उडुम्बरे, पीलौ च

**शीतबला** स्त्री० शीतं बलं च यस्याः । महासमङ्गायाम् ।

**शीतभानु** पु० शीताः शीतलाभानवोऽस्य । चन्द्रे, कर्पूरे च ।

**शीतभीरु** स्त्री०६त०। मल्लिकायाम् शीतभीते त्रि० ।

**शीतमञ्जरी** स्त्री० शीतकाले मञ्जरी यस्याः न कप् । शेफा-लिकायाम् ।

**शीतमूलक** न० शीतं शीतवीर्य्यकरं मूलमस्य कप् । उशीरे ।

**शीतरश्मि** पु० शीतारश्मयोऽस्य । चन्द्रे, कर्पूरे च ।

**शीतल** पु० शीतं लाति ला-क शीतस्पर्शस्य लक्षणा। शीतस्पर्शे तद्वति त्रि० । मलयोद्भवे-चन्दने, शैलेये, पद्मके, मौक्तिके वीरणमूले, शैलेये च न० । आसनपर्य्याये वङ्गारवृक्षे, चम्पके, चन्द्रे, कर्पूरे, राले च पु० ।

**शीतलक** न० शीतलमिव इव धे कन् । श्वेतोत्पले मरुवके पु०

**शीतलच्छद** पु० शीतलं शीतलस्पर्शवान् छदोऽस्य । चम्पके कर्म० । शीतलपत्रे पु० । [वारिणि न०

**शीतलजल** न० शीतलं जलं यस्मात् । उत्पले कर्म०। शीतल

**शीतलवातक** पु० शीतलो वातो धातुभेदो यस्मात् । अगन-पर्य्यायम् । तत्सेवने हि वायोः शीतलता ।

**शीतला** स्त्री० देवीभेदे अलजह्नभेदे च । तत्र ङीप् च ।

**शीतवल्क** पु०,शीतः शीतकरः वल्कोऽस्य । उडुम्बरे ।

**शीतवीर्य्यक** पु० शीतं शीतलकरं वीर्य्यं यस्मात् । प्लक्षवृक्षे ।

**शीतशिव** न०शीतं शीतलमपि शिवम् । सैन्धवलवणे । मिश्रे-यायाम्, शमीवृक्षे च स्त्री० । मधुरिकायाम् पु० ।

**शीतसह** पु० शीतं सहते सह-अच् । पीलुवृक्षे, नीलसिन्धु-वारे च वासन्त्याम् स्त्री० । [उदुम्बरिका, दूर्वायाञ्च ।

**शीता** स्त्री०श्यै क्त । लाङ्गलपद्धतौ, रामपत्न्याम्, अतिबलायाम्

**शीतांशु** पु० शीताः अंशवो यस्य । चन्द्रे, कर्पूरे च । [त्रि०

**शीताङ्गी** स्त्री०शीतमङ्गमस्याः ङीप् । हंसपदीवृक्षे । शीतवद्देहे

**शीतार्त्त** त्रि० शीतेन ऋतः । शीतार्त्ते ।

**शीतालु** त्रि शीत+अस्त्यर्थे आलुच् । शीतबाधायुक्ते ।

**शीतावश्या** स्त्री०शीतमावश्यति आ+वश-णिच्-अण् । महास-मङ्गायाम् । [काले ध्वनिभेदे ।

**शीत्कार** पु० शीदित्यस्य कारः शीत्+कृ-घञ् । स्त्रीणां रति

**शी(सी)त्य** त्रि०शी(सी)ताम् अर्हति यत् । हलकृष्टे क्षेत्रादौ ।

**शीधु** पु०न० । शी-धुक्। इक्षुरसजाते मद्यभेदे ।

**शीधुगन्ध** पु० शीधोरिव गन्धोऽस्य । बकुलवृक्षे ।

**शीन** त्रि०श्यै-क्त । घनं भूते घृतादौ । मूर्खे, अजगरे च पु० ।

**शीभ** कथने भ्वा०आ०स०सेट् चङि न ह्रस्वः। शीभते अशीभिष्ट

**शीर** पु० शी-रक् । अजगरसर्पे ।

चान्द्रमासार्द्धे काले, श्वेतच्छदे, काके, बके च।

शुक्लपुष्प पु॰ शुक्लं पुष्पमस्य। कुवाकवृक्षे, कुन्दवृक्षे, मरुवके च। श्वेतपुष्पवति त्रि॰ नागदन्त्यां स्त्री॰ ङीप्। कर्म॰ शुभ्रपुष्पे न॰

शुक्लपृष्ठक पु॰ शुक्लं पृष्ठमस्य कप्। सिन्धुकवृक्षे। [त्रि॰

शुक्लरोहित पु॰ वर्णोवर्णेनेति कर्म॰। श्वेतरक्ते वर्णे, तद्वति

शुक्लला स्त्री॰ शुक्लं लाति ला-क। उष्ट्रायाम्।

शुक्लवायस पु॰ कर्म॰। बके, श्वेतकाके च।

शुक्लशाल पु॰ कर्म॰। गिरिनिम्बे श्वेतवर्णवृक्षे च।

शुक्ला स्त्री॰ शुक्ल+अर्श आद्यच् टाप्। सरस्वत्यां, शर्करायां, काकोल्यां, विदार्यां, स्नुह्यां, श्वेतवर्णवत्यां, स्त्रियाञ्च।

शुक्लाङ्गी स्त्री शुक्लमङ्गमस्याः ङीप्। शेफालिकायाम्, श्वेताङ्गयुक्ते त्रि॰।

शुक्लापाङ्ग पु॰ शुक्लः अपाङ्गो यस्य। मयूरे।

शुक्लाम्ल न॰ कर्म॰। अम्लशाके।

शुक्लिमन् पु॰ शुक्लस्य भावः इमनिच्। श्वेतवर्णे।

शुक्लोपला स्त्री॰ कर्म॰ स अस्त्यस्याः अच्। शर्करायाम्।

शुङ्ग पु॰ शम-ग तस्य नेत्त्वं नि॰ अत उत्त्वञ्च। वटवृक्षे, आम्रातके, प्लक्षे च। यवादिशूके धान्यादिशूके च स्त्री॰।

शुङ्गाकर्म्मन् न॰ शुङ्गैः वटपल्लवैः या सम्यक् कर्म॰ यत्र। पुंसवनसंस्कारभेदे।

शुङ्गिन् पु॰ शुङ्गोऽस्त्यस्य इनि। वटवृक्षे। शुङ्गवति त्रि॰।

शुच् स्त्री॰ शुच-क्विप्। शोके। वा टाप्। तत्रैव।

शुच शौचे क्लेदे च दिवा॰ उभ॰ अक॰ सेट्। शुच्यति ते अशुचत्-अशोचीत् अशोचिष्ट।

शुच शोके भ्वा॰ पर॰ सक॰ सेट्। शोचति अशोचीत्।

शुचि पु॰ शुच-किन्। वह्नौ, चित्रकवृक्षे, ज्येष्ठमासे, आषाढमासे शुद्धाचरणे, ग्रीष्मे, श्रृङ्गारे, शुद्धमन्त्रिणि, अग्निभेदे श्वेतवर्णे च। तद्वति त्रि॰।

शुचिद्रुम पु॰ कर्म॰। अश्वत्थवृक्षे।

शुचिमल्लिका स्त्री॰ कर्म॰। नवमल्लिकायाम्। [अशुच्यीत्।

शुच्य अभिषवे भ्वा॰ पर॰ सक॰ सेट् निष्ठा अनिट्। शुच्यति

शुठ गतिविघाते भ्वा॰ पर॰ सक॰ सेट्। शोठति अशोठीत्।

शुठ आलस्ये चु॰ उभ॰ सक॰ सेट्। शोठयति ते अशूशुठत्।

शुठ शोषणे वा॰ चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् इदित्। शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत्।

शुण्ठि(ण्ठी) स्त्री॰ शुठि-इन् वा ङीप्। (शुंठ)। द्रव्ये।

शुण गतौ तु॰ पर॰ सक॰ सेट्। शुणति अशोणीत्। [स्त्री॰।

शुण्ड पु॰ शुण-ड तस्य नेत्त्वम्। मदनिर्झरे, गजहस्ते पु॰ स्त्रीपक्षे टाप् मद्यपानगृहे वेश्यायाम् सुरायां नलिन्यां कुट्टियाम् जलहस्तिन्याञ्च स्त्री॰।

शुण्डार पु॰ शुण्डा अस्त्यर्थे र। शौण्डिके, हस्तिनि च। अपकर्षे र। अपकृष्टशुण्डायाम्। तच्। हस्तिनि।

शुण्डी स्त्री॰ शुण्डाकारोऽस्त्यस्याः अच् गौ॰ ङीप्। (हातिशुण्डा) वृक्षे। [पवित्रे, शुभ्रे च त्रि॰

शुद्ध न॰ शुध-क्त। सैन्धवलवणे, मरिचे च। केवले, निर्दोषे,

शुद्धवल्ली स्त्री॰ कर्म॰। गुडूच्याम्, पवित्रायां-लतायाञ्च।

शुद्धान्त पु॰ शुद्ध अन्तः पर्यन्तो यस्य। अन्तःपुरे, उपचारात् तत्र स्थितायां राजयोषिति पु॰ स्त्री॰। 'शुद्धान्तसंभोगनितान्ततुष्टे इति नैषधम्।

शुद्धापह्नुति स्त्री॰ कर्म॰। अर्थालङ्कारभेदे।

शुद्धि स्त्री॰ शुध-क्तिन्। मार्ज्जने नैर्मल्यसम्पादने वैदिककर्मयोग्यतासम्पादकसंस्कारभेदे च।

शुद्धोदनि पु॰ बौद्धभेदे।

शुध शौचे शोधने, निःशेषभवने च दि॰ पर॰ सक॰ अनिट्। शुध्यति अशुधत्। 'भक्तोहरः शुध्यति यद्गुणः स्यादिति सौ॰

शुन गतौ तु॰ पर॰ सक॰ सेट्। शुनति अशोनीत्।

शुन पु॰ शुन-क। कुक्कुरे। इक्। तत्रैव। [मुनिभेदे।

शुनःशेफ पु॰ शुनइव शेफोऽस्य अलुक्स॰। विश्वामित्रशिष्ये

शुनक पु॰ शुनइव कन्। मुनिभेदे स्वार्थे कन्। कुक्कुरे।

शुनी स्त्री॰ श्वन्+स्त्रियां ङीप्। कुक्कुरयोषिति, कुष्माण्ड्यां च

शुन्ध शुद्धौ चु॰ उ॰ सक॰ सेट्। शुन्धयति ते अशुशुन्धत् त।

शुन्ध शुद्धौ अक॰ शुद्धीकरणे सक॰ भ्वा॰ उभ॰ सेट्। शुन्धति ते 'आप॰ शुन्धन्तुमैनसः' इति वेदमन्त्रः। अशुन्धीत् अशुन्धिष्ट।

शुन्भ दीप्तौ अक॰ मर्दने च सक॰ तु॰ पर॰ सेट्। शुभति अशुम्भीत् 'प्रागप्राप्तनिशुम्भशाम्भवधनु रिति वीरचरितम्

शुभ दीप्तौ अक॰ हिंसने स तु तुदा॰ प॰ सेट्। शुभति अशोभीत्

शुभ दीप्तौ भ्वा॰ आ॰ अक॰ सेट्। शोभते अशुभत्।

शुभ न॰ शुभ-क। मङ्गले, पद्मकाष्ठे च। शुभयुक्ते त्रि॰। विष्कम्भादिषु मध्ये त्रयोविंशयोगे पु॰। [रिति भट्टिः

शुभंयु त्रि॰ शुभम्+अस्त्यर्थे युस्। शुभान्विते 'क्षितिपः शुभंयु'

शुभगन्धक न॰ शुभोगन्धोऽस्य। बोले।

शुभग्रह पु॰ शुभः शुभदायकः ग्रहः। सौम्यग्रहे गुरौ शुक्रेऽर्द्धाधिकचन्द्रे, पापग्रहायुक्ते बुधे च। [दुर्गायां स्त्री॰।

शुभङ्कर त्रि॰ शुभं करोति कृ-अच् मुम् च। मङ्गलकारके।

शुभद पु॰ शुभं ददाति दा-क। अश्वत्थवृक्षे मङ्गलदातरि त्रि॰

शूद्रासुत पु० शूद्रायाः द्विजातिभिः जातः सुतः । द्विजाति जाते शूद्रजातिस्त्रिया सुते पुत्रभेदे ।
शूना स्त्री० श्वि-अधिकरणे-क्त । प्राणिवधस्थाने 'पञ्च सूना-गृहस्थस्ये'ति स्मृतिः (चानजिभ) अधो जिह्वायाञ्च ।
शून्य त्रि०शूनायै प्राणिवधाय हितम् रहस्यस्थानत्वात् यत् । निर्ज्जनस्थाने. आकाशे, बिन्दुमात्रे, अभावे च । अम-सूर्ये, वने तुच्छे च त्रि० । [त्रि०
शून्यमध्य पु० शून्यमाकाशो मध्ये यस्य । नले । शून्यमध्ययुक्ते
शून्यवादिन् पु० शून्यमभावमात्रं सर्वकारणतया वदति वद णिनि । बौद्धभेदे । [(फणिमनसा)
शून्या स्त्री०शून्यमस्त्यस्याः अच् । नल्याम् महाकण्टकयाञ्च ।
शूर हिंसे स्तम्भे च दि०-आत्म० सक०सेट् । शूर्यते अशूरिष्ट
शूर विक्रमे अ०चु०उभ०सक०सेट् । शूरयति ते अशुशूरत् त ।
शूर पु०शूर-अच् । वीरे, विक्रमवति, वसुदेवनामके, यादवे, सूर्य्ये, सिंहे, शूकरे,चित्रकवृक्षे, शाले, लिकुचे,मल्लभेदे च ।
शूरण पु० शूर-ल्यु (ओल) मूलभेदे, श्योनाकवृक्षे च ।
शूरसेन पु० शूरा सेना यत्र,यस्य वा । देशभेदे, नृपभेदे च
शूर्प माने चु०उ सक०सेट् । शूर्पयति ते अशुशूर्पत् त ।
शूर्प पु० शूर्यते धान्यादिकमनेन शूर्प-घञ् । (कुला) धान्य-स्फोटके, वंशमयपात्रे, द्रोणद्वयपरिमाणे च ।
शूर्पकर्ण पु०शूर्प इव कर्णोयस्य । गजे । [रावणभगिन्याम् ।
शूर्पणखा(खी) स्त्री०शूर्प इव नखा यस्याः णत्वम् वा ङीप् ।
शूर्पपर्णी स्त्री० शूर्प इव पर्णान्यस्याः ङीप् । मिस्सीभेदे ।
शूर्म्म पु० सुष्ठु ऊर्म्मिरस्त्यस्याः पृ० । लौहप्रतिमायाम् ।
शू(सू)र्म्मि(र्मी) स्त्री० सुष्ठु ऊर्म्मिः यस्याः वा णत्वम् वा ङीप् । लौहादिनिर्मितप्रतिमायाम् ।
शूल रुजायां भ्वा०प०अक०सेट् । शूलति अशूलीत् ।
शूल पु०न०शूल-क । रोगभेदे, व्यथायां, सुतीक्ष्णे अस्त्र भाजे, विष्कुम्भे च । चिह्ने, मुनिभेदे, विष्कम्भादिषु नवमयोगे च पु०।
शूलग्रन्थि पु शूलाकारः ग्रन्थिरस्य । मालादूर्वायाम् ।
शूलघातन न०शूलं रोगभेदं घातयति हन णिच्-ल्यु । मण्डूरे
शूलघ्न पु० शूलं हन्ति हन-क । तुम्बुरुवृक्षे ।
शूलद्विष् पु० द्वेत० । हिङ्गौ ।
शूलधन्वन् पु० शूलं धनुरायुधमस्य अनङ् समा० । शिवे ।
शूलधर पु० शूलं धारयति धारि-अच् । शिवे । शूलभृदा-दयोऽप्यत्र ।
शूलधारिन् पु० शूलं धरति धृ-णिनि । शिवे दुर्गायां स्त्री०
शूलधृष् पु० शूलेन धर्षति धृष-क्विप् । शिवे । दुर्गायां स्त्री० ।
शूलनाशन न० शूलं नाशयति नश-णिच्-ल्यु । सौवर्च्चलवणे
शूलपाणि पु०शूलं पाणौ यस्य । शिवे । शूलहस्तादयोऽप्यत्र ।
शूलशत्रु पु० शूलस्य शत्रुः । एरण्डवृक्षे ।
शूलहन्त्री स्त्री० शूलं हन्ति हन-तृच् ङीप् । यवान्याम् ।
शूलहृत् पु० शूलं-हरति हृ-क्विप् । हिङ्गौ ।
शूलाकृत त्रि० शूलेन विद्धा कृतं पक्वम् शूल+डाच्+कृ-क्त । लौहादिकीलकेन विद्धा पक्वे मांसे । (काबाब) ।
शूलिक त्रि० शूलं पाकसाधनत्वे नास्त्यस्य ठन् । शूलाकृते ।
शूलिन् पु० शूलमस्त्यस्य इनि । शूलरोगयुक्ते,शूलास्त्रधारके त्रि०
शूलिन पु० शूलाकारं फलमस्त्यस्य इनन् । भाण्डीरवृक्षे ।
शूलोत्खा स्त्री०शूलेन उत्खन्यते उद्+खन-ड । सोमराज्याम्
शूल्य त्रि० शूले संस्कृतं यत् । शूलाकृते मांसे ।
शृध प्रसवे भ्वा० प०सक०सेट् । शृधति अशृधीत् ।
शृ(स)गाल पु० असृजं लाति ला-क पृ० (शेयाल) पशौ दैत्य-भेदे, वासुदेवे, निष्ठुरे, खले च । [काटा) क्षुपभेदे ।
शृगालकण्टक पु० शृगालनख इव कण्टको यस्य । (शेयाल
शृगालकोलि पु० शृगाल इव कण्टकितः कोलिः । (शेया-कुल) क्षुपभेदे । [लाले क्षुपभेदे ।
शृगालघण्टी स्त्री० शृगाल इव कण्टकिनो घण्टी । कोकि-
शृगालजम्बु स्त्री० शृगालप्रिया जम्बुः । गोडुम्बे (गोमुक) ।
शृगालविन्ना स्त्री० शृगालैर्विद्यते विद-क्त । पृश्निपर्ण्याम् ।
शृगालिका स्त्री०शृगालस्य भार्य्या ङीप् स्वार्थे कन् । शृगाल योषिति, शृगालीव इवार्थे कन् । भयात् पलायने ।
शृगाली स्त्री० शृगालवत्पलायनं सादृश्येनास्त्यस्य अच् ङीप् । पलायने । [लौहमते पादबन्धने च ।
शृङ्खल पु० शृङ्गात् प्राधान्यात् खलति अनेन पृ० । निगडे,
शृङ्खली स्त्री० शृङ्खलः तदाकारोऽस्त्यस्याः अच् गौ० ङीप् । कोकिलाक्षे इवे पुरुषकटीवस्त्रबन्धने च । रोगो स्त्री०टाप् ।
शृङ्ग न०शृ-गन् पृ० ह्रस्व० । पर्वतोपरिभागे, प्राधान्ये, कामोद्रेके, पश्वादेर्विषाणे, वाद्यभेदे च । (शिङ्गा) मत्स्यस्त्रियां स्त्री०ङीप्
शृङ्गक पु० शृङ्गमिव इवार्थे कन् । जीरकवृक्षे ।
शृङ्गकन्द पु० शृङ्गमिव कन्दोऽस्य । शृङ्गाटके (पानीफल)
शृङ्गज न० शृङ्गे पर्वताग्रे जायते जन-ड । अगुरुचन्दने सरलवृक्षे पु० । शृङ्गजातमात्रे त्रि० ।
शृङ्गमूल पु० शृङ्गमिव मूलमस्य । शृङ्गाटके ।
शृङ्गमोहिन् पु० शृङ्गाय कामोद्रेकाय मोहयति मुह-णिच्-णिनि । चम्पके । [(गाड़रशिङ्गा)
शृङ्गला स्त्री०शृङ्गं तदाकारफलं लाति ला-क । अजशृङ्ग्याम्

शृङ्गवत् पु० शृङ्गं प्राधान्येनास्त्यस्य मतुप् मस्य वः । भारतवर्षस्य 'नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः' इत्युक्ते सीमापर्वतभेदे । शृङ्गयुक्ते त्रि० ।

शृङ्गवेर न० शृङ्गमिव वेरमवयवो यस्य । आर्द्रके, शुण्ठ्याम्, राममित्रगुहचण्डालस्य पुरे च । स्वार्थे कन् । आर्द्रके

शृङ्गवेराभमूलक पु० शृङ्गवेरेण तुल्यं मूलमस्य कप् । एरकाढ्ये ।

शृङ्गाट पु० शृङ्गं प्राधान्यमटति अट-अण् । उत्तरस्थपर्वतभेदे चतुष्पथे, जलकण्टकाढ्ये च तत्फले न० । (पानीफल) स्वार्थे कन् । तत्र, चतुष्पथे, अलङ्कारोक्तबन्धभेदरूपे शब्दालङ्कारे च ।

शृङ्गार पु० शृङ्गं कामोद्रेकमृच्छत्यनेन ऋ-अण् । नाट्योक्ते रसभेदे लवङ्गे सिन्दूरे । चूर्णे च शृङ्गं कारणत्वेन ऋच्छति अण् । कालागुरुणि आर्द्रके च । शृङ्गं प्राधान्यमृच्छत्यनेन अण् । भूषणे, गजभूषणे च स्वार्थे कन् । सिन्दूरे ।

शृङ्गारिन् पु० शृङ्गारः जन्यत्वेनास्त्यस्य इनि । पूगे । तत्फलभक्षणे हि कामोद्रेको भवति तथात्वम् । गजे च । सुवेशे त्रि०

शृङ्गिक न० शृङ्गाकारोऽस्त्यस्य ठन् । विषभेदे । प्रतिविषायां स्त्री०

शृङ्गिण पु० शृङ्गं प्राधान्येनास्त्यस्य इनच् । मेषे ।

शृङ्गिन् पु० शृङ्गमस्त्यस्य इनि । मेषे, भारतवर्षस्य सीमापर्वतभेदे, पर्वतमात्रे, ऋषिभेदे, वृषे च । शृङ्गयुक्ते त्रि० स्त्रियां स्त्री० ङीप् ।

शृत त्रि० श्रै-क्त । पक्वे ।

शृध अपानशब्दे भ्वा० आ० लुङि लृटि लृङि च उ० अक० सेट् क्त्वावेट् इता० । शर्द्धते अशृधत् शर्त्स्यति शर्द्धिष्यते ।

शृध छेदने भ्वा उ० स० सेट् क्त्वावेट् । शर्द्धति ते अशर्द्धीत् अशर्द्धिष्ट

शॄ हिंसने क्र्या० प० सक० सेट् । शृणाति अशारीत् । शीर्णः

शेखर पु० शिखि गतौ अरच् पृ० । शिखायां, मूर्द्धस्थितमाल्ये, च । वन्दायां स्त्री० ।

शेप पु० शी पन् । शेफे शिश्ने । शयनकर्त्तरि त्रि० ।

शेफ पु० न० । शी-फन् । शिश्ने शी-असि फुक् च शेफोऽप्यत्र न०

शेफालिका स्त्री० शेरते इति शेफाः अलयो यत्र कप् । (शिउलि) वृक्षभेदे । शेफालिकायाम् ।

शेफाली स्त्री० शेफाः शयनशालिनः अलयो यत्र ङीप् ।

शेमुषी स्त्री० शी-क्विप् शे मोहस्तं मुष्णाति मुष-क । बुद्धौ ।

शेल गतौ चालने च भ्वा० पर० सक० सेट् । शेलति अशेलीत् ऋदित् न ह्रस्वः ।

शेलु पु० शेल-उन् । बहुवारवृक्षे ।

शेव पु० शी वन् । पुचिह्ने शिश्ने ।

शेवधि पु० शेः धनादिनोहस्तस्य अवधिः । 'पद्मोऽस्त्रिया महापद्म पद्मोमकरकच्छपौ । मुकुन्दकुन्दनील च खर्व्वश्च निधयोनवे'त्युक्ते नवविधे निधौ । (शेवोता)

शेवल न० शी-विच् तथाभूतः सन् वलते अच् । शैवाले ।

शेवाल न० शे विच् शे-सन् वलते अच् । शैवाले ।

शेष पु० शिष अच् । अनन्ते सर्पराजे सर्पभेदे, अवशेषे च ।

शेषा स्त्री० शिष-घञ् । निर्माल्यमाल्यादौ 'शेषामिव महीं राघामिति, कुमार ।

शैक्ष पु० शिक्षा तदाम्नायमधीते वेत्ति वा अण् । शिक्षाध्याध्यायिनि, तद्वेत्तरि च । कन् । शिष्यकोऽप्यत्र ।

शैखरिक पु० शिखरे प्राचीरादौ भवः ठक् । अपामार्गे ।

शैखरेय पु० शिखरे भवः ढक् । अपामार्गे ।

शैत्य न० शीतस्य भावः ष्यञ् । शीतत्वे ।

शैथिल्य न० शिथिलस्य भावः ष्यञ् । अदृढसंयोगभेदे ।

शैनेय पु० शिनेर्गोत्रापत्यम् ढक् । सात्यकिनाम्नि यादवे ।

शैल न० शिलाया भवः अण् । शैलेये गन्धद्रव्यभेदे । स्वार्थे कन् । तत्र, शिलाजतुनि च । शिलाः सन्त्यस्य प्रशा० अण् । पर्वते पु० ।

शैलगन्ध न० शैलस्य शैलजस्येव गन्धोऽस्य । शावरचन्दने ।

शैलज न० शैले पर्वते जायते जन-ड । स्वनामख्याते गन्धद्रव्यभेदे । गजपिप्पल्याम् दुर्गायाञ्च स्त्री० ।

शैलधर पु० शैलं गोवर्द्धनपर्वतं धरति धृ-अच् । श्रीकृष्णे ।

शैलपत्त्र पु० शैलमिव सुगन्धि पत्त्रमस्य । बिल्ववृक्षे ।

शैलभित्ति पु० शैलं भिनत्ति भिद क्तिच् । टङ्के पाषाणदारणास्त्रे

शैलराज पु० शैलानां नगानां राजा टच् समा० । हिमालये

शैलवीज पु० शैलं तत्पर्यन्तं दूरं धावति अण् शैल बीजं यस्य । भल्लातके ।

शैलशिविर न० शैलानां नगानां शिविरमिव । समुद्रे ।

शैलसार पु० न० शैलस्य साररूप । शिलाजतुनि ।

शैलसुता स्त्री० ६त० । पार्व्वत्याम् ।

शैलाग्र न० शैलस्याग्रम् । पर्वतशृङ्गे ।

शैलाज न० शिलाया जायते जन ड स्वार्थेऽण् । शैलजे ।

शैलाट पु० शैले पर्वतमटति अट-अच् । सिंहे, किराते, शुक्लकाचे, देवले च ।

शैलादि पु० शिलादस्यापत्यम् इञ् । शिवपार्षदे नन्दिनि

शैलालिन् पु० शिलालिना ऋषिणा प्रोक्तं नटसूत्रमधीयते णिनि । नटे शैलूषे ।

शोभाञ्जन पु० शोभायै अज्यते अन्ज-ल्युट् । (सजना)वृक्षे
शोष पु० शुष-घञ् । वातादिना जलाद्यपहारेण कठिनकरणे शोषयति शुष० णिच्-ण्वुल् । यक्ष्मरोगे ।
शोषण न०शुष-ल्युट् । शोषणेन,रसस्य हने,शोषे च शोषयति शुष-णिच्-ल्यु । उन्मादन० शोषणश्चेत्युक्ते स्मरशरभेदे, शोनाकवृक्षे च पु० ।
शोषसम्भव न० सम्भवत्यस्मात् संभू-अप् हेत० । पिप्पलीमूले
शौक न० शुकानां समूहः अण् । शुकसमुदाये ।
शौकर न० शूकरस्य वराहस्येदम् अण् । तीर्थभेदे ।
शौक्तिकेय न० शुक्तिकाया भवम् । ढक् । मुक्तायाम् ।
शौक्तेय न० शुक्तौ भवम् ढक् । मुक्तायाम् ।
शौक्ल्य पु० शुक्लस्य भावः ष्यञ् । श्वेततायाम् श्वेतवर्णे ।
शौच न०शुचेर्भावः अण् । शुद्धौ, पवित्रतायाम् 'अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते इति स्मृत्युक्ते धर्मविशेषे च । [हुस्वः
शौट गर्वे भ्वा०पर०अक०सेट् । शौटति अशौटीत् । चङि न
शौटीर पु० शौट-ईरन् । त्यागिनि-वीरे च । गर्वान्विते त्रि०
शौटीर्य न०शौटीरस्य वीरस्य भावः ष्यञ् । वैर्ये, पराक्रमे, गर्वे च । [शौडीत्
शौड गर्वे भ्वा०पर०अक०सेट् चङि न ह्रस्वः । शौडति अ-
शौण्ड त्रि०शुण्डायां सुरायामभिरतः अण् । मत्ते, दक्षे च ।
शौण्डिक पु० शुण्डा सुरा पण्यमस्य ठक् । मद्यविक्रेतरि जातिभेदे । [ङीप् । चव्ये, गजपिप्पल्याञ्च ।
शौण्डी स्त्री० शुण्डा करिकरस्तदाकारः अस्त्यस्य अण्
शौण्डीर पु० शुण्डा गर्वोऽस्त्यस्य ईरन् स्वार्थेऽण् । गर्वान्विते त्रि० ।
शौद्र पु० शूद्रायां द्विजातिभिरूढायां भवः अण् । द्वादशपुत्रमध्ये शूद्राजाते द्विजातिपुत्रभेदे ।
शौद्धोदनि पु० शुद्धोदनस्यापत्यम् इञ् । बौद्धमुनिभेदे ।
शौधिका स्त्री० शोधः शोधनं मलविरेकस्तस्मै हितः ठक् । रक्तवृद्धौ ।
शौनक पु० शुनकस्यापत्यम् अण् । मुनिभेदे 'नैमिषे निमिषक्षेत्रे ऋषयः शौनकादय इति भागवतम् ।
शौनिक पु० शूना प्राणिवधस्थानं पण्यमस्य ठक् । मांसविक्रेतरि (कसाई) मृगयायां, मृगयाशीले च ।
शौभ न०शोभायै हितम् अण् । व्योमगामिनि पुरभेदे । देवे पु०
शौभाञ्जन पु० शोभाञ्जनस्य स्वार्थेऽण् । (सजना) वृक्षभेदे
शौभिक त्रि० शोभा शिल्पमस्य ठक् । इन्द्रजालिके ।

शौरि पु० शूरस्य यादवभेदस्य वसुदेवस्य सूर्यस्य वा गोत्रापत्यम् इञ् । विष्णौ, शनैश्चरे च ।
शौर्य न० शूरस्य भावः ष्यञ् । वीर्ये शक्तौ च ।
शौल्किक पु० शुल्के राजादिदेये करे तदादाने अधिकृतः ठक् । शुल्कादानाधिकृते ।
शौल्किकेय पु०शुल्किकः देशभेदः तत्र भवः ढक् । विषभेदे ।
शौल्विक पु० शुल्वः कांस्यताम्रमयपात्रादि पण्यमस्य ठक् । कांस्यकारे (कासारी) जातिभेदे ।
शौवस्तिक त्रि० श्व-परदिने भवः श्वस्+ठक् तुट् च । भाविदिनस्थायिनि पदार्थे ।
शौष्कल पु० शुष्कलं शुष्कमांसं पण्यमस्य अण् । शुष्कमांसविक्रेतरि । तद्भक्ष्यमस्य अण् । शुष्कमांसभक्षके त्रि० ।
श्चुत क्षरणे भ्वा०पर०अक०सेट् । श्चोतति अश्चुतत् अश्चोतीत्
श्च्युत क्षरणे भ्वा पर अक० सेचने सक०सेट् । श्च्योतति अश्च्युतत् अश्च्योतीत् ।
श्च्योत पु० श्च्युत-घञ् । समन्तात् सेचने ।
श्मन् न० शेते शी-मनिन् डिच्च । मुखे, शवे, अष्टनोऽप्यत्र ।
श्मशान न० श्मानः शवाः शेरतेऽत्र शी-आनच् डिच्च । 'श्मन् शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते' इति निरुक्ते । शवदाहस्थाने ।
श्मशानकाली स्त्री० श्मशानस्था काली । कालिकाभेदे ।
श्मशानवासिन् पु० श्मशाने वसति वस-णिनि । महादेवे बटुकभैरवे च । श्मशानवासकर्त्तरि चण्डालादौ त्रि० ।
श्मश्रु न० श्म मुखं श्रूयते आश्रीयतेऽनेन श्रु-डु । पुरुषस्य मुखे लोमसङ्घे । [श्छायां षोडशाख्यायां स्त्रियाम् ।
श्मश्रुमुखी स्त्री० श्मश्रु मुखे यस्याः ङीष् । पुरुषवत्श्मश्रु-
श्मश्रुल पु० श्मश्रु विद्यतेऽस्य लच् । श्मश्रुयुक्ते 'श्मश्रुलैर्मुखै रिति रघुः । [क्षुरकर्मकारके ।
श्मश्रुवर्द्धक पु० श्मश्रु वर्द्धयति छिनत्ति वृध-ण्वुल् । नापिते
श्मील निमेषे भ्वा०पर०अक सेट् । श्मीलति अशिश्मीलत् ।
श्यान त्रि० श्यै-क्त । घनीभावप्राप्ते घनीभूते घनश्यानकर्द्दमा'मिति रघु' ।
श्याम पु० श्यै-मक् । वृद्धदारकवृक्षे, प्रयागतीर्थस्थे वटे,कोकिले, धुस्तूरे,मेघे,श्यामाके, मरुवके, कृष्णवर्णे, हरिद्वर्णे च । तद्वति त्रि० मरिचे, सिन्धुलवणे च न० ।
श्यामक न० श्याम+संज्ञायां कन् । रोहिषतृणे, श्यामाके (श्यामा) धान्यभेदे पु० । [पिङ्गले च
श्यामकण्ठ पु० श्यामः कण्ठोऽस्य । मयूरे, शिवे, नीलकण्ठ

**श्यामकन्दा** स्त्री० श्यामः कन्दोऽस्याः । अतिविषायाम् ।
**श्यामकाण्डा** स्त्री० श्यामं काण्डोऽस्याः । गण्डदूर्वायाम् ।
**श्यामग्रन्थि** स्त्री० श्यामो ग्रन्थिरस्याः । गण्डदूर्वायाम् ।
**श्यामपत्त्र** पु० श्यामानि पत्त्राणि यस्य । तमालवृक्षे ।
**श्यामल** पु० श्यामवर्णं लाति ला-क । पिप्पले कृष्णवर्णयुक्ते त्रि० । चर्म्मचटायां, कटभ्यां, जम्ब्वां, कस्तूर्य्यां च स्त्री० ।
**श्यामलचूडा** स्त्री० श्यामला चूडाऽस्याः । गुञ्जायाम् ।
**श्यामलता** स्त्री० कर्म० । स्वनामख्याते लताभेदे । श्यामलस्य भावः तल् । कृष्णवर्णे, हरिद्वर्णे च ।
**श्यामलिका** स्त्री० श्यामलो वर्णोऽस्त्यस्याः ठन् । नीलाख्यौषधौ
**श्यामलेक्षु** पु० कर्म० (काजला) इक्षुभेदे ।
**श्यामसुन्दर** पु० श्यामोऽपि सुन्दरः । श्रीकृष्णे 'श्यामसुन्दर! ते दास' इति भागवतम् ।
**श्यामा** स्त्री० श्यै-मक् । शारिवौषधौ, प्रियङ्गौ, यमुनायां, रात्रौ, कृष्णत्रिवृति, नील्याम्, गुग्गुलौ, सोमलतायां, गुन्द्रायाम्, कृष्णायाम्, अम्बिकायां, गुडूच्यां, कस्तूर्य्याम्, वटपत्र्यां, वन्दायां, नीलपुनर्णवायां, पिप्पल्यां, हरिद्रायां, नीलदूर्वायां, तुलस्यां, पद्मबीजे, गवि, छायायां, शिंशपायां, पक्षिभेदे (शामा) स्त्रीमात्रे 'शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तिता' इत्युक्तलक्षणे स्त्रीविशेषे च ।
**श्यामाक** पु० श्याम इव इवार्थे कन् । (श्यामा) धान्यभेदे ।
**श्यामाङ्ग** पु० श्यामं हरिद्वर्णमङ्गमस्य । बुधग्रहे, कृष्णदेहे त्रि० स्त्रियां ङीप् 'श्यामाङ्गी विगताम्बरा'मिति तन्त्रम् ।
**श्यामाम्ली** स्त्री० कर्म० । नीलाम्लीक्षुपे ।
**श्याल** पु० श्यै कालन् । पत्नीभ्रातरि स्वार्थे ठक् । श्यालिकोऽप्यत्र
**श्यालिका** स्त्री० श्यै-कालन् सञ्ज्ञायां कन् । अत इत्त्वम् । पत्नीभगिन्याम् ।
**श्याव** पु० श्यै-वन् । कृष्णपीतमिश्रवर्णे । तद्वति त्रि० ।
**श्यावदत्** त्रि० श्यावो दन्तो यस्य दत्रादेशः । श्यामवर्णदन्तयुक्ते
**श्यावदन्त** पु० कर्म० । स्वभावतः कृष्णवर्णयुक्ते दन्ते, इव० कप् । तद्युक्ते त्रि० 'सुरापः श्यावदन्तक' इति स्मृतिः ।
**श्येत** पु० श्यै-इतच् । शुक्लवर्णे तद्वति त्रि० स्त्रियां ङीप् तस्य नश्च । श्येनी ।
**श्येन** पु० श्यै-इनन् । पक्षिभेदे (बाज) पाण्डुरवर्णे च तद्वति त्रि०
**श्येनघण्टा** स्त्री० श्येना घण्टेव । दन्तीवृक्षे ।
**श्यै** गतौ भ्वा० आ० सक० अनिट् । श्यायते अश्यास्त ।
**श्यैनम्पाता** स्त्री० श्येनस्य पातो यत्र अनुस्वारप । मृगयायाम्

**श्यो(श्यो)नाक** पु० श्यै-ना(शा)क । (शोणा) क्षुपभेदे ।
**श्रक** सर्पणे भ्वा० आ० सक० सेट् इदित् । श्रङ्कते अश्रङ्किष्ट ।
**श्रग** गतौ भ्वा० पर० सक० सेट् इदित् । श्रङ्गति अश्रङ्गीत् ।
**श्रण** दाने भ्वा० पर० सक० सेट् । श्रणति अश्राणीत् अश्रणीत् घटादि० श्रणयति ।
**श्रण** दाने चु० उ० सक० सेट् । श्राणयति ते अशिश्रणत् त ।
**श्रत्** अव्य० श्री-डति । श्रद्धायाम् । [अशिश्रथत् त ।
**श्रथ** यत्ने अक० प्रतिहर्षे सक० चु० उभ० सेट् । श्राथयति ते
**श्रथ** दौर्बल्ये अ० चु० उभ० अक० सेट् । श्रथयति ते अशश्रथत् त
**श्रथ** बधे भ्वा० पर० सक० सेट् । श्रथति अश्रथीत् अश्राथीत् ।
**श्रथ** बन्धे मोक्षे बधे च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । श्राथयति ते श्रथति अशिश्रथत् त अश्रथीत्-अश्राथीत् ।
**श्रथ** शैथिल्ये अक० तत्करणे सक० भ्वा० आ० सेट् इदित् । श्रन्थते अश्रन्थिष्ट ।
**श्रथन** न० श्रथ-ल्युट् । बधे यत्ने प्रतिहर्षे च ।
**श्रद्धा** स्त्री श्रत्-धा अङ् । आदरे गुरुवेदान्तवाक्यादिषु विश्वासे, स्पृहायां, शुद्धौ, चित्तप्रसादे प्रत्ययो 'धर्मकार्य्येषु सा श्रद्धेत्यभिधीयते' इति स्मृत्युक्ते धर्मकार्य्येषु प्रत्यये च । [त्रि०
**श्रद्धालु** स्त्री० श्रद्धा+आलुच् । स्पृहावत्यां स्त्रियाम् श्रद्धायुक्ते
**श्रन्थ** ग्रन्थने बधे च वा चु० उ० पक्षे भ्वा० प० सक० सेट् । श्रन्थयति-ते श्रन्थति अशश्रन्थत् त अश्रन्थीत् ।
**श्रन्थ** मोचने प्रतिहर्षे च क्र्या० प० सक० सेट् । श्रथ्नाति अश्रन्थीत्
**श्रन्थन** न० श्रन्थ-ल्युट् । ग्रन्थने ।
**श्रपित** त्रि० पु० श्रा क्त-णिच्-पुक् ह्रस्वश्च । पक्वे ।
**श्रम** तपसि, आयासे खेदे च अक० भ्वा० शम० दि० प० सेट् क्त्वावेट् । श्राम्यति अश्रमत् अश्रमीत् । श्रान्त्वा श्रमित्वा । [व्यायामे च
**श्रम** पु० श्रम-घञ् न वृद्धिः । तपसि, खेदे, आयासे, शस्त्राभ्यासे
**श्रमण** पु० श्रम-युच् । यतिभेदे । भिक्षाजीविनि त्रि० । जटामांस्यां, मुण्डीर्य्यां, शरीरभेदे, सुदर्शनायां स्त्रियां च स्त्री०
**श्रमिन्** त्रि० श्रम-इनि । श्रमयुक्ते ।
**श्रम्भ** प्रमादे भ्वा० आ० अक० सेट् । श्रम्भते अश्रम्भिष्ट ।
**श्रय** पु० श्रि-अच् । आश्रये । ल्युट् । तत्रैव न० ।
**श्रव** पु० श्रूयतेऽनेन श्रु-अप् । कर्णे, ख्यातौ च ।
**श्रवण** न० श्रूयतेऽनेन श्रु-ल्युट् । कर्णे शब्दग्राहकेन्द्रियभेदे भावे ल्युट् । श्रुतौ । अश्विन्यादिषु द्वाविंशे नक्षत्रे पुंस्त्री० स्त्रीत्वमपि 'श्रवणार्कपाते श्रवणा यदि स्यादिति' स्मृतिः । मुण्डीरिकावृक्षे स्त्री० ।
**श्रवणद्वादशी** स्त्री० श्रवणेन युक्ता द्वादशी शाक० । 'भाद्रे

भाद्रपदे शुक्ले द्वादशी श्रवणान्विते'त्युक्तायां भाद्रशुक्लद्वादश्याम् । [रूचनम् । श्रग्मोञ्चने ।

श्रवणाशोर्षिका स्त्री० श्रवणमिव शोर्षमस्या कप् अत

श्रविष्ठा स्त्री० श्रूयते श्रु अप् श्रवः प्रशिष्टिरस्त्यस्या मतुप् अतिशयेन श्रववती इष्ठन् मतुपो लुक् । धनिष्ठानक्षत्रे ।

श्रविष्ठाज पु० श्रविष्ठानक्षत्रे जायते जन ड । बुधग्रहे ।

श्रवस् न० श्रूयतेऽनेन श्रु-असि । कर्णे । कर्म्मणि असि । कीर्त्तौ ।

श्रा विक्लृत्तौ अदा०प०अनिट् । श्राति अश्रासीत् । [श्रपयति

श्रा पाके अदा० प०सक०अनिट् घटा० । श्राति अश्रासीत्

श्राण त्रि० श्रा-क्त । पक्वे । यवाग्वां स्त्री० ।

श्राद्ध न० श्रद्धा-हेतुत्वेनास्त्यस्य अण् । 'श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते' इत्युक्ते पित्रादिभ्य श्रद्धया देये द्रव्ये अस्त्यर्थे अण् । श्रद्धायुक्ते त्रि० । [भेदे च ।

श्राद्धदेव पु०श्राद्धाद्देव्य वा पितृषां देव शाक० । यमे, मह

श्राद्धदेवता स्त्री० श्राद्ध देवता त्यक्तद्रव्यस्योद्देश्या । 'पितरः श्राद्ध देवता' इति स्मृत्युक्तेषु पितृषु ।

श्राद्धशाक न० श्राद्धयोग्य शाकम् । कालशाके ।

श्राद्धिक त्रि० श्राद्धे देयं श्राद्धं तद्द्रव्य भक्ष्यत्वेनास्त्यस्य वा ठन् । श्राद्धदेये भक्ष्ये, श्राद्धीयद्रव्यभोक्तरि च ।

श्राद्धिन् त्रि०श्राद्धं तद्द्रव्य भक्ष्यत्वेनास्त्यस्य इनि । श्राद्धदेयाद्यभोक्तरि ।

श्रान्त त्रि० श्रम क्त । श्रमयुक्ते, शान्ते, जितेन्द्रिये च ।

श्रान्तसंवाह न० श्रान्तस्य श्रमस्य संवाहः दूरीकरणम् । पादाद्युपमर्द्दनादिना श्रमनिवारणे ।

श्राम मन्त्रणे अद०चु०उभ०सक०सेट् । श्रामयति ते अशश्रामत् त

श्रावण पु० श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासे अण् । मेषादिषु चतुर्थे चान्द्रे मासे उपचारात् कर्कटस्थरविके सौरमासे, पाषण्डे च श्रवणेन कर्णेन निर्वृत्तः अण् । कर्णसाध्ये प्रत्यक्षभेदे । श्रवणनक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री०ङीप् । (मुण्डरि) वृक्षभेदे च ।

श्रावणिक पु० श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्मिन् मासे ठञ् । चान्द्रश्रावणमासे ।

श्रावस्ती स्त्री० श्रु क्तिच् ह० डीप् । धर्म्मपत्तनाख्ये नगरीभेदे

श्रि सेवने भ्वा० उ०सक०सेट् । श्रयति ते अशिश्रियत् त ।

श्रित त्रि० श्रि क्त । सेवित, आश्रिते च ।

श्रिष दाहे भ्वा पर०सक०सेट् उदा सेट् । श्रेषति अश्रेषीत् ।

श्री पाके क्र्या०उ०सक० अनिट् । श्रीणाति श्रीणीते अश्रैषीत्

श्री स्त्री० श्रि क्विप् नि० । लक्ष्म्यां, लवङ्गे, शोभायां, रचनायां, वेशरचनायां, सरलद्रवे, धर्म्मार्थकामेषु सम्पत्तौ, प्रकारे, उपकरणे, बुद्धौ, विभूतौ, अधिकारे, प्रभायां कीर्त्तौ, वृद्धौ सिद्धौ, कमले, बिल्ववृक्षे वृद्धिनामौषधौ, 'देव गुरुं गुरुस्थान क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरये'दित्युक्तेषु देवादीनां नामोच्चारणीयोपाधिभेदे च । रागभेदे पु० ।

श्रीकण्ठ पु० श्रीः शोभा कण्ठेऽस्य शिवे, श्वेतस्य ह्यस्य विषधारणे शोभाधिक्यात्तस्य । हस्तिनापुरस्य उत्तरपश्चिमस्थे कुरुजाङ्गलाख्ये देशे च । [कर्कथाम् ।

श्रीकन्दा स्त्री० श्रीः शोभा तया युक्तः कन्दोऽस्याः । वन्ध्या-

श्रीकर न० श्रियं शोभां करोति कृ-अच् । रक्तोत्पले, विष्णौ, दायनिबन्धकारके पण्डितभेदे च । शोभाकारके त्रि० ।

श्रीकान्त पु०६त० विष्णौ । श्रीनाथश्रीपत्यादयोऽप्यत्र ।

श्रीखण्ड न० श्रिया शोभाया खण्ड इव यत्र । चन्दने ।

श्रीगर्भ पु० श्रीः गर्भेऽस्य । विष्णौ, खड्गे च 'श्रीगर्भो विजयश्चे'ति खड्गनामाष्टकम् ।

श्रीग्रह पु०श्रियः ग्रह इव यत्र । पक्षिणां पानीयपात्राधारायाम्

श्रीघन पु० श्रिया बुद्धा घन । बुद्धभेदे । दध्नि न० ।

श्रीचक्र न०श्रिया चक्र यन्त्रभेद । 'बिन्दुत्रिकोणवसुकोणदशारयुग्म मन्वस्रनागदलसङ्गतषोडशारम् । वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदितं परदेवतायाः' इति तन्त्रोक्ते त्रिपुरसुन्दरीपूजाङ्गे यन्त्रभेदे ।

श्रीज पु० श्रियो जायते जन-ड । कामदेवे । श्रीनन्दनादयोऽप्यत्र

श्रीताल पु० श्रीयुक्तस्तालः । तालसदृशतद्ध्ये वृक्षभेदे ।

श्रीद पु० श्रियं धनं ददाति दा-क । कुबेरे । धनदातरि त्रि० ।

श्रीधर पु० श्रियं धरति धृ अच् । विष्णौ, 'अतिशुद्धं द्विजश्रेष्ठ वनमालाविभूषितम् । श्रीधरं देहि । विषय'मित्युक्ते शालग्राममूर्त्तिभेदे न० ।

श्रीनिकेतन पु०श्रियः निकेतमिव निवासं नाययति नि+कितणिच् ल्यु । विष्णौ । ६त० । श्रीवासे न० ।

श्रीनिवास पु० निवसत्यस्मिन् नि+वस घञ् ६त० । विष्णौ

श्रीपथ पु० श्रीयुक्त पन्थाः । राजपथे ।

श्रीपर्ण न०श्रीर्लक्ष्मी पर्णे दलेऽस्य । अग्नौ । श्रीयुक्तं पर्णमस्य अग्निमन्थवृक्षे पु० । [वृक्षम् । कट्फलवृक्षे ।

श्रीपर्णिका स्त्री० श्रीयुक्त पर्णमस्याः स्वार्थे कन् अत

श्रीपर्णी स्त्री० श्रीयुक्तानि पर्णान्यस्याः ङीप् । गाम्भारीवृक्षे, कट्फलवृक्षे, शाल्मलीवृक्षे अग्निमन्थवृक्षे च ।

श्रीपिष्ट पु० श्रियै शोभायै पिष्यते पिष-क्त । सरलद्रवरसे ।
श्रीपुत्र पु० ६त० कामदेवे श्रियः पुत्रो भ्राता चन्द्रजातत्वात् । चन्द्रे, उच्चैःश्रवसि च ।
श्रीपुष्प न० श्रीयुक्तं पुष्पम् । लवङ्गे । पद्मकाष्ठे च ।
श्रीफल पु० श्रीयुक्तं फलमस्य । बिल्ववृक्षे राजादन्यां च ।
श्रीभद्रा स्त्री० श्रीयुक्ता भद्रमस्याः । भद्रमुस्तके ।
श्रीभागवत न० श्रीयुक्तं भागवतम् । अष्टादशपुराणेषु मध्ये द्वादशस्कन्धयुक्ते अष्टादशसाहस्रे व्यासप्रणीते पुराणे ।
श्रीभ्रात पु० श्रियः लक्ष्म्या भ्राता अनुजत्वात् । अश्वे, चन्द्रे च
श्रीमत् पु० श्रीरस्त्यस्य मतुप् । तिलकवृक्षे, अश्वत्थवृक्षे, विष्णौ, शिवे, कुक्कुटे च । शोभायुक्ते त्रि० स्त्रियां ङीप् सा च राधिकायाम् । [ड । धूम्रपत्रायां लतायाम् ।
श्रीमलापहा स्त्री० श्रिया शोभया मलमपहन्ति अप+हन-
श्रीमूर्त्ति स्त्री० श्रीपूर्व्वकथनयोग्यामूर्त्तिः । देवताप्रतिमायाम् ।
श्रीरङ्गपत्तन न० श्रिया रङ्गस्य पत्तनमिव । दक्षिणस्थदेशभेदे
श्रीरस पु० श्रियै रसोऽस्य । श्रीवेष्टे सरलद्रवे ।
श्रीराम पु० श्रीशब्दयुक्तो रामः । दशरथात्मजे नृपभेदे ।
श्रील त्रि० श्री+अस्त्यर्थे लच् । शोभायुक्ते सम्पदादियुक्ते च ।
श्रीलता स्त्री० श्रीयुक्ता लता । महाज्योतिष्मत्यां लतायाम् ।
श्रीवत्स पु० वदति महत्त्वं वद-स श्रीयुक्तो वत्सः । महत्त्वलक्षणश्वेतरोमावर्त्तविशेषे । स अस्त्यस्य अच् । विष्णौ ।
श्रीवत्सक पु० श्रीवत्सः चिह्नभेदः तेन कायति कै-क । हृदयस्थश्वेतरक्ताकाररोमयुक्ते अश्वभेदे ।
श्रीवत्सभृत् पु० श्रीवत्सं बिभर्त्ति भृ-क्विप् । विष्णौ ।
श्रीवत्सलाञ्छन पु० श्रीवत्सो लाञ्छनं यस्य । विष्णौ । श्रीवत्साङ्कादयोऽप्यत्र । [वराहावतारे ।
श्रीवराह पु० श्रिया युक्तो वराहः विष्णोर्दशस्ववतारेषु
श्रीवाटी स्त्री० श्रिया वाटीव । नागवल्लीभेदे ।
श्रीवारक पु० श्रियं वारयति कामयते ण्वुल् । शितावरके ।
श्रीवास पु० श्रियै वासः सौरभमस्य । सरलद्रवरसे (टारपिन्)
श्रीवासस् न० श्रियै वासयति वस-णिच् असि । सरलद्रवरसे
श्रीविद्या स्त्री० श्रियै त्रिवर्गाय विद्या । त्रिपुरसुन्दर्य्याम् ।
श्रीवृक्ष पु० श्रियः शोभायाः वृक्ष इव । अश्वस्य हृदयस्थे श्वेतरोमावर्त्तभेदे । [(तारपिन) ।
श्रीवेष्ट पु० श्रियै वेष्ट्यतेऽसौ वेष्ट-घञ् । सरलद्रवनिर्यासे
श्रीश पु० ६त० । विष्णौ ।
श्रीसहोदर पु० ६त० । चन्द्रे, उच्चैःश्रवसि अश्वे च ।
श्रीहस्तिनी स्त्री० श्रीयुक्ता हस्तिनी । (हातिशुण्डा) वृक्षभेदे

श्रु गतौ भ्वा० पर० सक० अनिट् । श्रवति अश्रौषीत् ।
श्रु श्रवणे स्वा० पर० सक० अनिट् । शृणोति अश्रौषीत् ।
श्रु(स्रु)घ्निका स्त्री० श्रु(स्रु)घ्नः देशभेदः कारणत्वेनास्त्यस्य ठन् । सर्ज्जिकाक्षारे ।
श्रुत न० श्रूयते श्रु-क्त । शास्त्रे, वस्तुज्ञाने च 'श्रुतान्वित' इति भट्टिः । श्रवणेन गृहीते, अवश्रुते च त्रि० ।
श्रुतकीर्त्ति स्त्री० । कुशध्वजकन्यायां शत्रुघ्नपत्न्याम् । श्रुता विख्याता कीर्त्तिरस्य । विख्यातयशसि त्रि० ।
श्रुतदेवी स्त्री० श्रुतस्य शास्त्रस्य देवी । सरस्वत्याम् ।
श्रुतबोध पु० श्रुत-मात्रं बोधयति बुध-णिच्-अच् । कालिदासकृते छन्दोग्रन्थभेदे ।
श्रुतश्रवस् पु० श्रुतं श्रवो यशोऽस्य । शिशुपालपितरि 'निर्वर्त्तितेऽरिक्रियया स श्रुतश्रवसः सुतः' इति माघः ।
श्रुति स्त्री० श्रु-क्तिन् । कर्णे, श्रवणेन्द्रियजन्ये, ज्ञाने, वेदे च । अङ्कशास्त्रोक्ते त्रिभुजक्षेत्रादौ भुजकोट्योः संयुज्यमानरेखाभेदे च । [कठोरशब्दविशेषरूपे काव्यदोषभेदे ।
श्रुतिकटु पु० श्रुतौ श्रवणे कटुः कठोरः । अलङ्कारोक्ते
श्रुतिजीविका स्त्री० श्रुतिं जीवयति मूलतयानुसरति जीव-ण्वुल् । स्मृतिशास्त्रे । [श्रवणमात्रेण धारणायुक्ते ।
श्रुतिधर त्रि० श्रुत्या श्रवणमात्रेण धरति धारयति धृ-अच् ।
श्रुतिमूल न० श्रुतिरेव मूलं धर्म्मप्रमाणे कारणम् । वेदरूपे धर्म्मबोधनप्रमाणे ६त० । यज्ञादौ, वेदप्रतिबोधिते धर्म्मादौ च ६त० । कर्णमूले ।
श्रुतिवर्ज्जित त्रि० श्रुत्या वेदाध्ययनेन कर्णेन वा वर्ज्जितः ३त-क्त । वेदपाठहीने बधिरे च । [भेदे ।
श्रुतिवेध पु० श्रुतेः कर्णस्य वेधो यत्र । कर्णवेधाख्ये संस्कार
श्रुतिस्फोटा स्त्री० श्रुताविव पत्रे स्फोटो यस्याः । कर्णस्फोटालतायाम् । [द्वारोक्ते शब्दालङ्कारभेदे ।
श्रुत्यनुप्रास पु० श्रूयते इति श्रुतिः शब्दस्तस्यानुप्रासः । अल-
श्रुत्युक्त त्रि० श्रुतौ वेदे उक्त विहित० । वेदविहित धर्म्मादौ ।
श्रु(स्रु)वा स्त्री० श्रु(स्रु) क । स्रुचायां यज्ञपात्रभेदे । [वृक्षे ।
श्रु(स्रु)वावृक्ष पु० श्रु(स्रु)-वार्थो वृक्षः । (वइचि) विकङ्कत
श्रेढी स्त्री० श्रेण्यै राशीकरणाय ढौकते ढौक ड पृ० गौ० ङीष् । भिन्नजातीयद्रव्याणां मिश्रकरणाय अङ्कशास्त्रोक्ते गणनाप्रकारभेदे ।
श्रेढीव्यवहार पु० श्रेढ्या व्यवहारः । श्रेढीगणनार्थे लीलावत्युक्ते उपायभेदे ।
श्रेणि(णी) स्त्री० श्रि-नि वा ङीप् । छिद्ररहितायां पङ्क्तौ ।

श्रेयस् न० अतिशयेन प्रशस्तम् ईयसुः श्रादेशः । धर्म्मे, मोक्षे, शुभे च । अतिप्रशस्ते त्रि० स्त्रियां ङीप् । सा च हरीतक्याम्, पाठायाम्, गजपिप्पल्याम्, रास्नायाञ्च ।

श्रेष्ठ पु० अतिशयेन प्रशस्तः इष्ठन् श्रादेशः । कुवेरे, नृपे, विप्रे, विष्णौ च । गोदुग्धे न० अत्यन्तशस्ते त्रि० । स्थलपद्मिन्याम्, मेदायाञ्च स्त्री० ।

श्रेष्ठकाष्ठ पु० श्रेष्ठं काष्ठमस्य । शाकवृक्षे (सेगुन) ।

श्रेष्ठाम्ल न० श्रेष्ठमम्लमस्य । वृक्षाम्ले ।

श्रेष्ठिन् पु० श्रेष्ठं धनादिकमस्य इनि । शिल्पिश्रेणिजा श्रेष्ठे 'सहि श्रेष्ठिचत्वरे प्रतिवसतीति मृच्छकटिकटीका ।

श्रै स्वेदे भ्वा० प०अक०अनिट् । श्रायति अश्रासीत् । णिच्ङि श्रपयति ।

श्रोण पु० श्रोण-अच् । पङ्गौ । काञ्जिके स्त्री० । [अश्रोणीत् ।

श्रोण संघाते भ्वा०प०अक०सेट् चङि न ह्रस्वः । श्रोणति

श्रोणि(णी) स्त्री० श्रोण-इन् वा ङीप् । कट्याम् पथि च ।

श्रोणिफलक न० श्रोणि फलकमिव । प्रशस्तकटौ इत० । कटिपार्श्वे । [बन्धनसूत्रे ।

श्रोणिसूत्र न० श्रोणौ स्थितं सूत्रम् । श्रोणिस्थे खड्गादि

श्रोतस् न० स्रु-असुन् तुट् च । कर्णे, नदीवेगे, इन्द्रिये च ।

श्रोत्र न० श्रूयतेऽनेन श्रु ष्ट्रन् । शब्दज्ञानसाधने कर्णरूपे इन्द्रिये

श्रोत्रिय पु० छन्दो वेदमधीते वेत्ति वा छन्दस्+घन् । वेदाध्ययनानुरते, 'एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवि द्'त्युक्ते विप्रे च ।

श्रौत त्रि० श्रुतौ विहितमण् । वेदविहिते धर्मादौ 'श्रौतं कर्म स्वयं कुर्यादि'ति स्मृतिः । गार्हपत्याहवनीयदक्षिणाग्निषु पु०

श्रौत्र न० श्रोत्र-स्वार्थे अण् । कर्णे । श्रोत्रियस्य भावः कर्म वा अण् । वैदिकस्य भावे 'श्रौत्राहर्न्नोश्चर्यैरिति' सिद्धान्तकौ०

श्रौषट् अव्य० श्रु डौषटि । यज्ञादौ हविर्दाने ।

श्लक वर्चने भ्वा०आ०सक०सेट् इदित् । श्लङ्कते अश्लङ्किष्ट

श्लक्ष्ण त्रि० श्लिष-क्स्न नि० । चक्ले, विरले, सौक्ष्म्ये च ।

श्लक्ष्णत्वच् पु० श्लक्ष्णा त्वगस्य । पर्ण्णवृक्षे ।

श्लग गतौ भ्वा०प०सक०सेट् इदित् । श्लङ्गति अश्लङ्गीत् ।

श्लथ दौर्बल्ये चुरा०चु०उभ०अक०सेट् । श्लथयति ते अशश्लथत् त

श्लथ पु० श्लथ-अच् । विरलसंयोगे, शिथिले, दुर्बले च ।

श्लाखृ व्याप्तौ भ्वा०प०सक०सेट् चङि न ह्रस्वः । श्लाखति अश्लाखीत् । [श्लाघते अश्लाघिष्ट ।

श्लाघ आत्मगुणाविष्करणे भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।

श्लाघा स्त्री० श्लाघ-अ । प्रशंसायाम्, निजगुणाविष्करणे परिचर्य्यायाम्, अभिलाषे च । [चण्डी

श्लाघ्य त्रि० श्लाघ ण्यत् । प्रशस्ते 'श्लाघ्यस्तनूमत्युरावयोरिति

श्लिष दाहे भ्वा०प०सक०सेट् क्त्वा वेट् । श्लेषति अश्लेषीत् ।

श्लिष आलिङ्गने संसर्गे च सक०दि०अनिट् । श्लिष्यति अश्लिषत् आलिङ्गने तु अश्लिक्षत् ।

श्लिष श्लेषे चु० उ० सक०सेट् । श्लेषयति ते अशिश्लेषत् त । भिन्नार्थकेऽभिन्नशब्दे 'आश्लेषिं न श्लेषकवेरिति' नैषधम् ।

श्लिष्ट त्रि०श्लिष क्त । आलिङ्गिते, संसृष्टे, श्लेषरूपशब्दालङ्कारयुक्ते शब्दे च । [भेदे तद्रोगयुक्ते त्रि० ।

श्लीपद न० श्रीयुक्तं वृद्धियुक्तं पदमस्मात् पृ० । (गोद) रोग-

श्लीपदप्रभव पु० श्लीपदाय रोगाय प्रभवति प्र+भू-अच् । आम्रवृक्षे । [जीवद्वृक्षे ।

श्लीपदापह पु० श्लीपदं रोगमपहन्ति अप+हन-ड । पुत्र

श्लील त्रि० श्रीरस्त्यस्य लच् पृ० रस्य लः । शोभायुक्ते तद्विपरीतोऽपि अश्लीलः ।

श्लेष पु०श्लिष-घञ् । संसर्गे, दाहे, आलिङ्गने, शब्दालङ्कारभेदे च

श्लेष्मघ्नी स्त्री० श्लेष्माणं हन्ति हन-क टाप् । मल्लिकायाम्, केतक्याञ्च । ज्योतिष्मत्यां ङीप् ।

श्लेष्मण पु० श्लेष्माऽस्त्यस्य न । कफविशिष्टे ।

श्लेष्मन् पु० श्लिष-मनिन् । कफे ।

श्लेष्मल त्रि० श्लेष्म+अस्त्यर्थे लच् । कफयुक्ते (वहुयार)वृक्षे पु०

श्लेष्मह्न पु० श्लेष्माणं हन्ति । कट्फलवृक्षे ।

श्लेष्मात पु० श्लेष्मणे अतति अत-अच् । श्लेष्मातकवृक्षे ।

श्लेष्मातक पु० श्लेष्मणा सेवनजनितकफेन अतति अत-ण्वुल् (वहुयार) वृक्षभेदे ।

श्लेष्मान्तक पु० श्लेष्मणा सेवनजकफेन अन्तक इव नाशकत्वात् (वहुयार) वृक्षभेदे । [श्लोकते अश्लोकिष्ट ।

श्लोक वर्द्धने संघाते च भ्वा०आ०सक सेट् चङि न ह्रस्वः ।

श्लोक पु० श्लोक-अच् । चतुष्पादात्मके अविकृते वाक्यभेदे, यशसि च । [अश्लोणीत् ।

श्लोण संघाते भ्वा०प०सक० सेट् चङि न ह्रस्वः । श्लोणति

श्वःश्रेयस न० श्वः परदिने भाविकाले श्रेयो यस्मात् अच् समा० । मङ्गले, शुभे परमात्मनि च । कल्याणयुक्ते त्रि० ।

श्वक्क वर्त्तने भ्वा० आ०सक०सेट् इदित् । श्वङ्कते अश्वङ्किष्ट ।

श्वच गतौ भ्वा०आ०सक०सेट् । श्वचते अश्वचिष्ट इदित्त्वादयम् ।

श्वठ गतौ संस्कारे च चु० उ० सक० सेट् । श्वठयति-ते अशिश्वठत् त । इदित्त्वादयम् श्वण्ठयति ।

श्वठ दुर्वचने अद०चु०उभ०सक०सेट्। श्वठयति ते अशश्वठत् त
श्वदंष्ट्रक पु० शुनो दंष्ट्रेव कण्टकोऽस्य कन्। गोक्षुरे क्षुपे।
श्वदंष्ट्रा स्त्री० शुनोदंष्ट्रेव कण्टकाढ्यत्वात्। गोक्षुरे क्षुपे।
श्वधूर्त्त पु० श्वेव शुनां वञ्चनार्थं वा धूर्त्तः। शृगाले।
श्वन् पु० श्वि-कनिन् नि०। कुक्कुरे तज्जातिस्त्रियां ङीप् शुनी।
श्वनिश न० स्त्री० शुनां कुक्कुराणां निशा वा शुरवः। कक्कु-
रमादकरात्रौ। [चण्डाले।
श्वपच पु० श्वानः पच्यन्ते यैः भोजनाय पच-घञर्थे क।
श्वपाक पु० श्वानं पचति कर्त्तरि घञ्। चण्डाले।
श्वफल पु० शुनः प्रियं फलमस्य। वीजपूरवृक्षे।
श्वफल्क पु०। वृष्णिवंश्ये अक्रूरपितरि नृपभेदे।
श्वभीरु पु० श्वभ्यो भीरुः। शृगाले। [ते अशश्वभ्रत् त।
श्वभ्र गतौ छिद्रकरणे सक०दौ स्यो अक०चु०उ०सेट्। श्वभ्रयति
श्वभ्र न० श्वभ्र-घञ्। छिद्रे।
श्वयथु पु० श्वि-अथुच्। शोथे।
श्वल वेगे भ्वा०पर०अक० सेट्। श्वलति अश्वालीत्।
श्वल्क भाषणे चु०उ०सक०सेट्। श्वल्कयति ते अशश्वल्कत् त।
श्वल्ल वेगे भ्वा०प०अक०सेट्। श्वल्लति अश्वल्लीत्।
श्ववृत्ति पु० शुन इव पराधीना वृत्तिः। दास्ये 'न श्ववृत्त्या
कदाचने'ति स्मृतिः।
श्वशुर पु० शु आशु अश्नुते आशु+अश-उरच् पृ०। पत्युः
पितरि, भार्य्यायाः पितरि च।
श्वशुर्य्य पु० श्वशुरस्यापत्यम् यत्। देवरे, श्याले च।
श्वश्रू स्त्री० श्वशुरस्य पत्नी ऊङ् उकाराकारलोपश्च। श्वशुर-
भार्य्यायाम्।
श्वस् अव्य० आगामि अह्न पृ० नि०। आगामिनि दिवसे।
श्वस जीवने अदा०जक्षा०प०अक०सेट्। श्वसिति अश्वसीत्।
श्वस् स्पर्शे अदा०प०अक०वैदिकयोगः। श्वस्ति अश्वसीत्।
श्वसन पु० श्वसित्यनेन श्वस-ल्युट्। वायौ, मदनवृक्षे च। भावे
ल्युट्। निश्वासे न०।
श्वसनेश्वर पु० श्वसनो वायुरीश्वरोऽस्य। अर्ज्जुनवृक्षे।
श्वसित न० श्वस-क्त। निश्वासे, तत्रनासिकाभ्यां वहिर्गमनयोग्ये
हृदयस्थमारुते।
श्वसुन पु० श्वस-उनन्। (कुकुरमोछा) वृक्षे। [श्वस्तनि।
श्वस्तन त्रि० श्वोभवः श्वस्+ट्युल् तुट् च। भाविदिनस्थायि-
श्वस्त्य त्रि० श्वोभवः श्वस्+त्यप्। भाविदिनस्थायिवस्तुनि।
श्वागणिक पु० श्वगणेन चरति ठञ् नि० दी०। कुक्कुरादिना
मृगयाकर्त्तरि व्याधे।

श्वादन्त त्रि० शुन इव दन्तोऽस्य दी०। कुकुरतुल्यदशने।
श्वान पु० श्वेव अण्। कुक्कुरे तज्जातिस्त्रियां ङीप्।
श्वापद पु० शुन इवापदस्मात् अच्। हिंस्रपशौ, व्याघ्रे च।
श्वाविध् पु० शुना आविध्यते आ-व्यध् क्विप् ६त०। शल्यके।
(सजारु) क। श्वाविधोऽप्यत्र पु०।
श्वास पु० श्वस-घञ्। वायौ, कासरोगभेदे, शिक्षोक्ते वर्णो-
च्चारणार्थे बाह्यप्रयत्नभेदे च। [प्राणव्यापारे।
श्वासधारण न० श्वासः प्राणवायुः ध्रियतेऽनेन। प्राणा-
श्वासारि पु० श्वासस्य रोगभेदस्यारिः नाशकत्वात्। पुष्करमूले
श्वि गतौ सक०वृद्धौ अक०भ्वा०प०यजा०सेट्। श्वयति अशि-
श्वत्-अश्वयीत्-अश्वत्। [अश्वितत् अश्वेतिष्ट।
श्वित शुक्लतापादने भ्वा०आ०लुङि उ० सक० सेट्। श्वेतते
श्वित्र न० श्वित-रक्। श्वेतकुष्ठभेदे (धवल)। [(विकृती)।
श्वित्रघ्नी स्त्री० श्वित्रं हन्ति हन-ट ङीप्। पीतपर्ण्याम्
श्वित्रिन् त्रि० श्वित्रमस्त्यस्य इनि। श्वेतकुष्ठयुक्ते।
श्विद् शुक्लतापादने भ्वा० आ० सक०सेट् इदित्। श्विन्दति
अश्विन्दीत्।
श्वेत पु० श्वित-अच् घञ् वा। द्वीपभेदे, पर्वतभेदे, कपर्दके,
शुक्रग्रहे, शङ्खे, शुभ्राभ्रे, जीरके, शुक्लवर्णे च। तद्वति
त्रि०। रौप्ये न०। स्वार्थे कन्। रौप्ये न०। वराटके पु०।
श्वेतकण्टकारी स्त्री० कर्म०। शुभ्रवर्णकण्टकारिकायाम्।
श्वेतकन्दा स्त्री०श्वेत. कन्दोऽस्या०। अतिविषायाम् (आतइच्)
श्वेतकुञ्जर पु० कर्म०। ऐरावतगजे, श्वेतगजमात्रे च श्वेत-
गजादयोऽप्यत्र।
श्वेतकुष्ठ पु० कर्म०। शुक्लवर्णे कुष्ठभेदे।
श्वेतकेतु पु० कर्म०। केतुग्रहभेदे, सामवेदप्रसिद्धे ऋषिभेदे च।
श्वेतकेश पु० श्वेतः केश इव यस्य। रक्तशिग्रौ। शुक्लवर्णकेश-
वति वृद्धे त्रि०। कर्म०। शुक्ले केशे पु०।
श्वेतखदिर पु० कर्म०। शुक्ले खदिरभेदे।
श्वेतगरुत् पु० श्वेतागरुतोऽस्य। हंसे। शुक्लपक्षयुक्ते त्रि०।
श्वेतगुञ्जा स्त्री० कर्म०। शुभ्रगुञ्जायां पु० भद्रनोपथ।
श्वेतचिल्ली स्त्री० कर्म०। शाकभेदे, (गाङ्गाचिल्ल)।
श्वेतच्छद पु० श्वेत छदः पक्षोऽस्य। हंसे। शुक्लपत्रयुक्ते त्रि०।
श्वेतजीरक पु० कर्म०। शुक्लजीरके। [शाकभेदे।
श्वेतटङ्कण न० कर्म०। शुक्लटङ्कणे सामुद्रोद्भवक्षारभेदे
श्वेतदूर्व्वा स्त्री० कर्म०। शुक्लदूर्व्वायाम्।
श्वेतद्वीप पु० कर्म०। वैकुण्ठाख्यविष्णुधाम्नि, द्वीपभेदे च।
श्वेतधातु पु०कर्म०। खटिकायाम्, शुक्लवर्णधातुद्रव्ये च।

सेट्। सट्टयति ते असषट्टत् त।

**षट्तिलिन्** पु० षट् तिला तिलोद्वर्त्तनादय कर्माख्यस्य। 'तिलो द्वर्त्ती तिलस्नायी तिलहोमी तिलप्रद। तिलभुक् तिलवापी च षट्तिली नावसीदति' इत्युक्ते तिलोद्वर्त्तनादिकारिणि

**षट्त्रिंशत्** स्त्री० षडधिका त्रिंशत् शाक०। (छत्रिश) सङ्ख्याभेदे तत्सङ्ख्यान्विते च।

**षट्पञ्चाशत्** स्त्री० षडधिका पञ्चाशत् शाक०। (छाप्पान्न) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च। [भ्रमरप्रियत्वम्

**षट्पदप्रिय** पु० ६त०। नागकेशरे तस्य हि प्रचुरमधुत्वात्

**षट्पदातिथि** पु० षट्पद अतिथिरिव यस्य। आम्रवृक्षे।

**षट्पदानन्दवर्द्धन** पु०षट्पदस्यानन्दं वर्द्धयति वृध-णिच्-ल्यु उप०। अशोकवृक्षे।

**षट्पदी** स्त्री०षट् पादा अस्याः पादस्य पाद्भाव ङीपि पद्भाव। यूकाया, भ्रमरयोषिति च द्विगु'। षट्चरणयुक्ते छन्दोभेदे च। षट् श्लोकात्मकपद्यसंघाते।

**षट्प्रज्ञ** पु० षट्सु प्रज्ञा यस्य। 'धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि। षट्सु प्रज्ञा तु यस्यासौ षट्प्रज्ञ परिकीर्त्तित' इत्युक्ते धर्मार्थाद्यभिज्ञे बौद्धे।

**षडङ्ग** न० षण्णामङ्गानां समाहारः पात्रा०। 'जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते' इत्युक्ते देहावयवभेदे तन्त्रोक्ते हृदयाद्यवयवभेदे यत्र हृदयादिषु षट्सु अङ्गेषु मन्त्रविशेषो न्यस्यते तेषु। षट् अङ्गानीव यस्य। 'शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसां चितिः'। 'ज्योतिषामयनञ्चैव षडङ्गो वेद इष्यते' इत्युक्ते वेदे, क्षुद्रगोक्षुरक्षुपे च पु०।

**षडभिज्ञ** पु० षट् अभिज्ञा 'दिव्य चक्षुः श्रोत्रं, परचित्तज्ञानं पूर्वनिवासानुस्मृति, आत्मज्ञानम्, वियद्गतिः कायव्यूहसिद्धिश्चेत्येतानि अभिज्ञा अभिज्ञायमानानि यस्य। बौद्धभेदे।

**षडशीति** स्त्री० षड्धिका अशीतिः शाक०। (छियाशि) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च। षडशीतिमुखवत्सु मिथुनकन्याधनुर्मीनेषु रवेः संक्रान्तौ च 'अयनविषुवपदी षडशीतयो विषुवविष्णुपदीषडशीतय इति ज्योतिषम्।

**षडशीतिमुख** न० षडशीतेः तन्नामसंक्रान्ते र्मुखम्। 'तुलादिषडशीत्यह्नां षडशीतिमुखम् क्रमात्। तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु' इति षड्विंशे धनुषो भागे, द्वाविंशेऽनिमिषस्य च मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे, इति सूर्यसिद्धान्तोक्ते तत्कालेन. षडशीतिदिनात्मकेऽकाले।

**षडानन** पु०षट् आननानि यस्य। कार्त्तिकेये षड्वदनादयोऽप्यत्र

**षडूर्म्मि** पु०षट् ऊर्म्मय ऐश्वर्याणि यस्य। षड्विधैश्वर्ये परमेश्वरे

**षड्गव** त्रि० षड्भिर्गोभिरायुक्तः शकटः हलो वा शाक० अच् समा०। षड्भिर्गोभिराकृष्टे हलादौ 'अष्टागवं धर्म्यहलं षड्गवं जीविकार्थिना'मिति स्मृतिः'। षण्णां गवां समाहारः द्विगु। षट्सु गोषु न०।

**षड्गुण** पु०षड्भिः गुणिता गुणा शाक०। राज्ञां सन्ध्यादिषु षट्सु गुणेषु। [शियाम्, महाकरञ्जे च।

**षड्ग्रन्था** स्त्री० ग्रन्थ० ग्रन्थिः षट् ग्रन्था अस्याः। वचायां

**षड्ग्रन्थि** न० षट् ग्रन्थयोऽस्य। पिप्पलीमूले, षट्पर्वयुक्ते त्रि० संज्ञायां कन्। शठ्यां स्त्री० टाप्। अत इत्त्वम् वा ङीप् वाचायां स्त्री०।

**षड्ज** पु० षड्भ्यो नासादिस्थानेभ्यो जायते जन-ड। 'नासाकण्ठमुरस्तालु जिह्वा दन्तांश्च संश्रितः। षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृत' इत्युक्ते स्वरभेदे 'षड्जसंवादिनीः केका' इति रघु०।

**षड्दीर्घ** पु० षड्भिर्गुणिता दीर्घाः। तन्त्रोक्तेषु आ, ई, ऊ, ऐ, औ, अः इत्येवंरूपेषु षट्सु दीर्घेषु।

**षड्धा** अव्य० षष्+प्रकारे धाच्। षट्प्रकारे।

**षड्भुजा** स्त्री० षट् भुजा इव यस्याः (खरमुज) फललताभेदे षड्हस्तयुक्ते त्रि०।

**षड्रस** न०षण्णां रसानां समाहारः पा०। 'मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथे'त्युक्तेषु 'मधुरं लौल्यमित्याहुरिक्ष्वादौ स च लक्ष्यते। लवणस्तु पटु प्रोक्तः सैन्धवादौ स दृश्यते। तिक्तस्तु पिचुमर्दादौ व्यक्तमास्वाद्यते रसः। कषायस्तुवरः प्रोक्तः स च पूगीफलादिषु। कटुस्तु तीक्ष्ण संज्ञः स्यात् मरीचादौ स चेष्यते' इत्युक्तस्थानेषु लवणेषु षट्सु रसेषु।

**षड्वर्ग** पु० ६त०। 'कामक्रोधलोभमोहमदमात्सर्येषु 'अजैष षड्वर्गमिति भट्टिः। 'क्षेत्रं होरा च द्रेक्काणं नवांशद्वादशांशके। त्रिंशांशकश्चेति विज्ञैः षड्वर्गः समुदाहृतः' इति ज्योतिषोक्तेषु क्षेत्रादिषु षट्सु त्रिंशांशो इत्यभिधाने।

**षण** संभक्तौ भ्वा० पर० सक० सेट्। दन्त्य सत्वे षस्य नत्वम्। सनति असनीत् असानीत्।

**षण** दाने तना० उभ० सक० सेट् दन्त्य सत्वे षस्य नत्वम्। सनोति असनीत्-असानीत् असनिष्ट-असत।

**षण्ड** पु० षण-ड तस्य नेत्वम् पृ० णत्वं षत्वं वा। वृषे, नपुंसके, पद्मादिसमूहे पु०न०।

**षण्ढ** पु० षण-ढ तस्य नेत्वम् पृ० प०। नपुंसके।

**साक्षात्कार** पु० साक्षात्+कृ घञ् । प्रत्यक्षे ।

**साक्षिन्** त्रि० सह अक्षि अस्य इनि साक्षाद्द्रष्टा इनि वा नि० । साक्षाद्द्रष्टरि । स्त्रियां ङीप् । परमेश्वरे पु० साक्षी चेता केवलो निर्गुणश्चे'ति श्रुतिः । अयमेव साक्षिचैतन्यत्वेन वेदान्तपरिभाषादौ स्वीकृतः ।

**साक्ष्य** न० साक्षिणो भावः कर्म वा ष्यञ् । साक्षिकर्मणि, व्यवहारविषयवृत्तवृत्तान्तकथनरूपे तद्भावे च । 'य साक्ष्यमनृतं वदेदि'ति स्मृतिः । [च ।

**सागर** पु०सगरेण निर्वृत्तः अण् । समुद्रे, मृगभेदे, सङ्ख्याभेदे

**सागरगामिनी** स्त्री०सागरं गच्छति गम+णिनि न षत्वम् । नद्यां, सूक्ष्मैलायाञ्च । [पृथिव्याम्

**सागरनेमि** स्त्री० सागरः नेमिरिव वेष्टनाकारो यस्याः ।

**सागरमेखला** स्त्री० सागरो मेखलेव यस्याः । पृथिव्याम्

**सागरालय** पु०सागरः आलयो यस्य । वरुणे ।

**सागरोत्थ** न० सागरात् उत्तिष्ठति उद्+स्था क । सामुद्रलवणे

**साग्निक** पु०सहाग्निना अग्निहोत्रेण वा कप् । यौतस्मार्त्ताग्नियुक्ते, अग्निहोत्रिणि द्विजे च ।

**साङ्कर्य्य** न०सङ्करस्य भावः ष्यञ् । परस्पराभावसमानाधिकरणवृत्तित्वरूपे न्यायोक्ते जातिबाधके दोषभेदे पूर्वोक्तसङ्करस्य धर्मे च

**साङ्ग** त्रि० सहाङ्गेन । अङ्गयुक्ते 'साङ्ग तत् क्रियते पुन'रिति स्मृ०

**साङ्गतिक** त्रि० सङ्गत्या निर्वृत्तः ठण् । सङ्गते ।

**साङ्ग्रामिक** त्रि० सङ्ग्रामाय प्रभवति ठञ् । सेनापतौ, युद्धोपयोगिरथादौ च ।

**साचि** अव्य०सच-इण् । वक्रे, तिर्य्यगर्थे च । [नर्य्यावायाम् ।

**साचिवाटिका** स्त्री० साचि यथा तथा वटति ण्वुल् । श्वेतपु-

**साचीकृत** त्रि० असाचि साचि क्रियते च्वि नि० दीर्घः । वक्रीकृते 'साचीकृता चारुतरेण तस्या'वि'ति कुमार ।

**साट** प्रकाशने अद०चु०उ०स०सेट् । साटयति ते असमाटत् त

**साटोप** त्रि० सहाटोपेन । सगर्वे विकटे च ।

**सात** सुखे अ०चु०उभ०अक०सेट् । सातयति ते असमातत् त

**सात** न० सात-अच् । सुखे । सन क्त । दत्ते, नष्टे च ।

**सातला** स्त्री० सातं सुखं लाति ला क । चर्मकषायाम् ।

**साति** स्त्री० सन-क्तिन् । अवसाने । दाने, तीव्रपीडायाञ्च ।

**सातीनक** पु० सतीनएव स्वार्थे अण् । सतीनकद्रव्ये (क्षुद्रमटर

**सात्यकि** पु०सत्यकस्य वृष्णिवंश्यनृपस्यापत्यम् अण् । शिनेर्नप्तरि स्वनामख्याते वृष्णिवंश्ये क्षत्रियभेदे । [भिन्नदेशभेदे

**सात्वत्** पु० सत्त्वमेव सात्वमतति अत क्विप् शक० । यादवा-

**सात्वत** पु० सत्त्वमेव सात्वमस्यस्य त सत्त्वगुणोपाधिके विष्णौ । सात्वतो देशस्य राजा अण् । विष्णौ, सात्वद्देशाधिपे नृपे बहुत्वे तस्य लुक् 'भगवान् सात्वतां पति'रिति पुराणम् । 'सत्त्वं सत्वाश्रयं सत्त्वगुणं सेवेत केशवम् । योऽनन्यत्वेन मनसा सात्वतः समुदाहृत' इत्युक्ते वैष्णवे यदुवंश्ये अंशुपुत्रे नृपभेदे च । यदुवंश्योत्पन्नत्वेन विष्णुमातृमातरि स्त्री० ङीप् । सा च नाटकस्य वृत्तिभेदे च ।

**सात्त्विक** पु० सत्त्वात् सत्त्वगुणप्रधानात् विष्णोर्भवति ठण् । चतुर्मुखे ब्रह्मणि तस्य विष्णुनाभिकमलजत्वात् तथात्वम् । सत्त्वमेव सात्वमस्त्यस्य ठन् । विष्णौ । सत्त्वगुणेन तत्कार्य्येण मनसा वा निर्वृत्तः ठण् । सत्त्वगुणजाते, सत्त्वप्रधानमनोविशेषजे ते च शृङ्गारादिरसानुगुणे भावभेदे च । सत्त्वप्रधाने जने त्रि० । 'आहाराः सात्त्विकप्रिया' इति गीता । दुर्गायां स्त्री० ङीप् ।

**सादनी** स्त्री० साद्यन्ते रोगा अनया सद णिच् ल्युट् । कटुक्याम्

**सादि** पु० सद-इण् । सारथौ, योद्धरि च । अवसन्ने त्रि०

**सादिन्** पु० सद-णिनि । अश्वारोहणकर्त्तरि, गजारोहिणि, रथारोहिणि च । अवसन्ने त्रि० ।

**सादृश्य** न० सदृशस्य भावः ष्यञ् । तद्भिन्नत्वे सति तद्गतभूयोधर्मरूपे समानधर्मे, येन सह यस्य सादृश्यं प्रसिद्धं तत् इत्युदभिधाने वक्ष्यते ।

**साधक** त्रि०साध ण्वुल्, सिध-णिच् ण्वुल् साधादेश वा । साधनकर्त्तरि, तन्त्रोक्ते मन्त्रादिसिद्धिकारके शिष्ये च । 'साधकः सिद्धिमाप्नुयादि'ति तन्त्रम् ।

**साधन** न०साध्यतेऽनेन सिध णिच् ल्युट् साधादेशः । करणे, क्रियोत्पादके हेतुभेदे 'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमि'त्युक्ते क्रियासाधकव्यापारवतिकरणे, सैन्ये युद्धोपकरणे पुचिह्ने, कारकभेदे, प्रमाणे, अनुमापके हेतौ च । भावे ल्युट् । मारणे, मृतसंस्कारे, अग्निदाने, गतौ, निष्पादने, अनुगमने, सिद्धौ च । कर्मणि ल्युट् । द्रव्ये, धने, मेढ्रे च ।

**साधर्म्य** न० सधर्मस्य समानधर्मस्य भावः ष्यञ् । स्वकीयासाधारणधर्मरूपे लक्षणे 'यद्गुक्तं यस्य साधर्म्यमि'ति भाषापरिच्छेदः । समानो धर्मोऽस्य तस्य भावः ष्यञ् । समानधर्मे यथा पद्ममिव सुन्दरं मुखमित्यादौ सौन्दर्य्यम् ।

**साधारण** त्रि० सह धारणया स्वार्थेऽण् । बहूनां अनेकस्वत्वत्वकधने 'साधारणं समाश्रित्य यत्किञ्चिद्वाहनादिकमिति'स्मृतिः । स्त्रियां गौरा० ङीप् । सा च कुञ्चिकाया, वेश्यादिनायिकायाञ्च न्यायोक्ते 'य सपक्षे विपक्षे च

भवेत् साधारणस्तु सः' इत्युक्ते हेत्वाभासभेदे पु॰। यथा वह्निमान् द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः सपक्षे पर्वते, विपक्षे ह्रदादौ च स्थित इति साधारणः।

**साधारणधर्म्म** पु॰ कर्म॰। 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः। दमः क्षमार्ज्जवं दानं धर्मं साधारणं विदु'रित्युक्ते अहिंसादौ सर्व्ववर्णाश्रमतुल्ये धर्म्मे। न्यायोक्ते संशयहेतौ समानधर्म्मे च रज्जुं रजतं नवेति संशये रज्जुरजतयोः सामान्यधर्मशाकचिक्यशुभ्रत्वादिः।

**साधित** त्रि॰ सिध-णिच्-क्त। दापिते, प्रमाणादिनोद्भाविते च 'साधितात् दशकं शत'मिति स्मृतिः निष्पादिते' शोधिते च

**साधिदैव** त्रि॰ सह अधिदैवेन साकल्येऽव्य॰ द्विपदस॰। अधिदैवतासहिते साधिभूतसाधियज्ञावपि परमेश्वरे।

**साधिष्ठ** त्रि॰ अतिशयेन साधुः बाढो वा इष्ठन् साधादेशः टिलोपो वा। अत्यन्तदृढे, अतिसाधौ, अतिशोभने च।

**साधिष्ठान** त्रि॰ सह अधिष्ठानेन। सन्निहिते तन्त्रोक्ते षट्चक्रमध्ये सुषुम्नामध्यस्थे चक्रभेदे न॰।

**साधीयस्** त्रि॰ अतिशयेन साधुः बाढो वा साधादेशः टिलोपो वा। अत्यन्तदृढे, न्याय्ये, साधुतरे च। स्त्रियां ङीप्।

**साधु** त्रि॰ साध-उन्। उत्तमकुलजाते, सुन्दरे, मनोहरे, उचिते च। स्त्रियां वा ङीप्। मुनौ, जिने च 'न प्रहृष्यति सम्माने नावमाने न कुप्यति। न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षण'मित्याद्युक्तधर्मवति जने वार्द्धुषिके च पु॰।

**साधुपुष्प** न॰ साधु पुष्पं यस्य। स्थलपद्मे। कर्म॰। उत्तमकुसुमे

**साधुवाह** पु॰ कर्म॰। विनीते सुशिक्षिते घोटके।

**साधुवाहिन्** पु॰ साधु यथा तथा वहति णिनि। विनीतेऽश्वे सुन्दरवहनकर्त्तरि त्रि॰।

**साधुवृक्ष** पु॰ कर्म॰। कदम्बवृक्षे, वरुणवृक्षे, शोभनवृक्षमात्रे च

**साध्य** पु॰ सिध-णिच्-यत्। 'मनोमन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान्। निर्भयो नरकश्चैव दंशो नारायणो वृषः प्रभुश्चेति समाख्याताः साध्या द्वादश देवता' इत्युक्ते द्वादशसंख्यके गणदेवताभेदे, विष्कम्भादिषु योगेषु एकविंशे योगे च। साधनीये त्रि॰। अष्टादशविवादेषु प्रमाणादिना उद्भाव्ये पदार्थे। 'प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्। निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदु'रित्युक्ते व्यवहारे साधनार्हे प्रतिज्ञेये पक्षे पु॰। अनुमित्या साधनीये वह्न्यादौ च यथा वह्निमान् धूमादित्यादौ सिषाधयिषितः वह्निः साध्यः। साध्यमस्यास्ति अर्श आद्यच्। साध्यवति पक्षे पु॰ 'साध्यनिर्द्देशः प्रतिज्ञे'ति न्यायसूत्रम् साध्यवत्तया पक्षनिर्द्देश इति दीधितिकारः। साध्यै [illegible] मन्त्रमात्रे, पाशमन्त्रस्य स्वानुकूलता [illegible] स्ये द्वितीयपञ्चमादिके 'सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभिरि'त्युक्ते मन्त्रभेदे च विस्तरो वृहदभिधाने।

**साध्यता** स्त्री॰ साध्यस्यानुमितिविधेयस्य भावः तल्। अनुमितिविधेयतारूपे न्यायोक्ते विषयताभेदे।

**साध्यतावच्छेदक** पु॰ साध्यतामवच्छिनत्ति विशेषयति अव+छिद-ण्वुल्। येन रूपेण यस्य साध्यतारूपा विषयता तस्मिन् धर्मे। यथा वह्निमान् धूमादित्यत्र वह्निः साध्यः तस्य साध्यता वह्नित्वमवच्छिनत्तीति वह्नित्वं साध्यतावच्छेदकम्।

**साध्यसिद्धि** स्त्री॰ साध्यस्य सिद्धिः विनिर्णयः सिध-क्तिन्। साध्यस्य वह्न्यादेः अनुमित्यादिना साधनाधीने निर्णये, निष्पत्तौ, साध्यस्य प्रतिज्ञेयार्थस्य सिद्धिर्निर्णयो यत्र। *व्यवहारे प्रतिज्ञातार्थस्य साक्षिलेख्यादिभिः विनिर्णयरूपे* व्यवहारपादे च।

**साध्वस** न॰ साधु+अस्यति अस-अच्। भये।

**साध्वी** स्त्री॰ साधु-ङीप्। मेदायां, 'आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा। मृते म्रियते या पत्यौ साध्वी ज्ञेया पतिव्रते'त्युक्तलक्षणायां स्त्रियाञ्च।

**सानन्द** त्रि॰ सह आनन्देन। आनन्दसहिते 'सानन्दं नन्दिहस्ते'ति मालतीमाधवम्।

**सानु** पु॰ न॰ सन-ञुण्। पर्वतस्य समभूमिदेशे प्रस्थे, वने, वातसमूहे, पथि, आपे, कोविदे, अर्के, पल्लवे च।

**सानुज** न॰ सानौ जायते जन-ड। प्रपौण्डरीके। तुम्बुरुवृक्षे पु॰। सहानुजेन अनुजसहिते त्रि॰।

**सानुमत्** पु॰ सानुरस्त्यस्य मतुप्। पर्वते।

**सान्तपन** न॰ सन्तापयति सम्+तप-णिच् ल्युट् स्वार्थेऽण्। 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं विदु'रित्युक्ते कृच्छ्रसाध्ये व्रतभेदे।

**सान्तर** न॰ सह अन्तरेण सादेशः। विरले व्यवधानसहिते च

**सान्तानिक** त्रि॰ सन्तानः प्रयोजनमस्य ठक्। सन्तानसाधने विधानभेदे। [अदन्तस्तु सान्त्वापयतीत्यन्ये।

**सान्त्व** आनुकूल्यकरणे अद॰चु॰उभ॰सक॰सेट्। सान्त्वयति ते

**सान्त्व** न॰ सान्त्व-अच्। अत्यर्थमधुरे, आनुकूल्ये, शोभनप्रीतिदवाक्ये, प्रियवाक्यादिना क्रोधोपशमनरूपे, सान्त्वने च

**सान्त्वन** न॰ सान्त्व-ल्युट्। आनुकूल्यकरणे प्रियवादादिना क्रोधाद्युपशमने च। युच्। अत्रैव स्त्री॰।

**सान्दीपनि** पु०स० सान्द्रात्+इधम् इञ् । रामकृष्णयोराचार्य्ये अवन्तिपुरवासिन्यृषिभेदे । [मनोज्ञे च वने न० ।

**सान्द्र** त्रि० अदि-रक् अर्द्ध चन्द्रेण । निविडे, मृदौ, स्निग्धे,

**सान्द्रपुष्प** पु० सान्द्रं पुष्पमस्य । विभीतकवृक्षे ।

**सान्द्रस्निग्ध** त्रि० सान्द्रं स्निग्धः । अतिहृद्ये अतिमनोहरे च

**सान्धिक** पु० सन्धा सुराच्यावनं शिल्पं वेत्ति ठक् । शौण्डिके सन्धिः प्रयोजनमस्य ठण् । सन्धिकर्त्तरि त्रि० ।

**सान्ध्य** त्रि० सन्ध्यायां भवः अण् । सन्ध्याकालिके ।

**सान्नाय्य** न० सन्नीयते सम्+नी-ण्यत् नि० । मन्त्रादिना संस्कार्य्ये घृतादौ । [ति' दुर्गावाहनमन्त्रः ।

**सान्निध्य** न० सन्निधिरेव ष्यञ् । नैकट्ये, 'सान्निध्यमिह कल्पये

**सान्निपातिक** त्रि० सन्निपातात् त्रिदोषविकारात् आगतः तेन निर्वृत्तो वा ठक् । सन्निपाताज्जाते रोगे 'विकारे सन्निपातिके' इति कुमारः ।

**सान्न्यासिक** पु० सन्न्यासः प्रयोजनमस्य ठक् । सन्न्यासिनि ।

**सापत्न** पु० सपत्न एव स्वार्थे ष्यञ् । शत्रौ, सपत्न्यां भवः तस्या अपत्यं वा यञ् । सपत्नीपुत्रे । अण् । सापत्नोऽप्युभयत्र

**साપिण्ड्य** न० सपिण्डस्य भावः ष्यञ् । दायाशौचपिण्डदानाद्युपयोगिनि ज्ञातिधर्मे 'सापिण्ड्यं साप्तपौरुषमि'ति स्मृतिः [हार्द्दे

**साप्तपदीन** न०सप्तभिःपदैः उच्चारितैर्निर्वृत्तम् खञ् । सख्ये सौ-

**साप्तपौरुष** त्रि०सप्त पुरुषान् व्याप्नोति अण् । सप्तपुरुषव्यापके

**साफल्य** न०सफलस्य भावः ष्यञ् । सार्थक्ये, सम्पूर्णतायाञ्च ।

**साम** सान्त्वने अद०चु०उ०स०सेट् । सामयति ते अससामत् त

**सामग** पु० साम तद्वेदं गायति । सामवेदाध्यायिनि ।

**सामगर्भ** पु० साम गर्भे यस्य । विष्णौ ।

**सामग्री** स्त्री० न० समग्रस्य भावः ष्यञ् स्त्रीत्वपक्षे ङीप् ङीपि यलोपः । समस्ततायाम् 'प्रावेण सामग्र्यविधौ'विति कुमारः स्वार्थे ष्यञ् । कारणसमूहे, द्रव्ये च स्त्री० ।

**सामञ्जस्य** न० समञ्जसस्य भावः ष्यञ् । औचित्ये ।

**सामन्** न० सो-मनिन् । 'अग्निं दूतं वृणीमहे, इत्यादिके वेदभेदे, तत्रोक्तासु ऋक्षु गानभेदे 'ऋच्यध्यूढं साम गीयते इति' छान्दोग्यम् । राज्ञां 'साम भेदस्तथा दानं दण्डश्चे'त्युक्ते शत्रुवशीकरणोपायभेदे, प्रियवाक्यादिना सान्त्वने च । शणबन्धनरज्जौ स्त्री० ङीप् ।

**सामन्त** पु०संश्लिष्टोऽन्तः एकदेशो यस्य समन्तस्तस्येश्वरः अण् । स्वविषयानन्तरवर्त्तिदेशाधिपे नृपे । समन्ताद्भवः अण् टिलोपः । श्रेष्ठप्रजासु (मडल) यं परस्परया भोक्ताः सामन्ता'मिति श्रुतिः । [कार्य्योचिते च ।

**सामयिक** त्रि० समये भवः उचितो वा ठञ् । समयभवे,

**सामयोनि** पु० साम योनिरुत्पत्तिस्थानं यस्य । हस्तिनि, तेषाञ्च सामयोनित्वमुक्तं मातङ्गलीलायां 'सूर्य्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्य गायत । गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजा' इति । चतुर्मुखे ब्रह्मणि च ।

**सामर्थ्य** न० समर्थस्य भावः ष्यञ् । देहजे बले शक्तौ योग्यतायां, सङ्गतार्थतायाञ्च । [समवायसम्बन्धिनि त्रि० ।

**सामवायिक** पु०समवाये प्रसृतः ठञ् । मन्त्रिणि । तस्येदम् ठञ् ।

**सामाजिक** पु० समाजः सभावेशनं प्रयोजनमस्य । सभ्ये ।

**सामान्य** न० समानस्य भावः ष्यञ् । सादृश्यप्रयोजकधर्मे यथा मुखं पद्ममिव सुन्दरमित्यादौ सौन्दर्य्यादि । समानमेव स्वार्थे ष्यञ् । द्रव्यगुणकर्मसु तुल्यतया स्थितायां जातौ ।

**सामान्यलक्षणा** स्त्री०सामान्यं साधारणधर्मः लक्षणं यस्याः । न्यायोक्ते अलौकिकप्रत्यक्षसाधने उपायभेदे । यथा एकघटज्ञाने घटत्वरूपसामान्यधर्मज्ञानात् सकलस्य घटत्ववतो ज्ञानम् । [रूपक्लियां वेश्यायाम् ।

**सामान्या** स्त्री० समानैव स्वार्थे ष्यञ् अजा० टाप् । साधा-

**सामि** अव्य० साम-इन् । अर्द्धे 'सामिघटिते'ति नैषधम् ।

**सामिधेनी** स्त्री० सम्-इन्ध करणे ल्युट् नि० । अग्निसमिन्धनसाधने ऋग्भेदे, समित्काष्ठे च ।

**सामीप्य** न० समीपस्य भावः स्वार्थे वा ष्यञ् । नैकट्ये निकटे च । 'सामीप्याश्लेषविषयैर्व्याप्याधारश्चतुर्विधः' इति व्याकरणम् ।

**सामुद्र** न० समुद्रे भवः अण् । (करकच) लवणे ।

**सामुद्रक** न०समुद्रेण प्रोक्तम् वुञ् । हस्तादिरेखादिना स्त्रीपुंसयोः शुभाशुभलक्षणज्ञापके ग्रन्थभेदे, 'वामभागे तु नारीणां दक्षिणे पुरुषस्य च निर्दिष्टं लक्षणं तेषां समुद्रेण यथोदितमिति' 'सामुद्रकसारसद्रूपे'ति नैषधम् ।

**सामुद्रिक** त्रि० समुद्रेण प्रोक्तम् ठञ् । °स्त्रीपुंसयोः शुभाशुभलक्षणज्ञापके ग्रन्थे । [ठण् । युद्धे परलोकसाधने त्रि०

**साम्परायिक** न०सम्परायाय आपदे परलोकाय वा हितम् ।

**साम्प्रतम्** अव्य० सम्+प्र+तन-अद्युक्ते । उचिते ।

**साम्बर** न० सम्बरदेशे भवम् अण् । सम्बरदेशोद्भवे लवणे

**साम्भवा** स्त्री०सम्भवः अस्त्यस्य प्रज्ञाद्यण् गौ०ङीप् । रक्तलोध्रे

**साम्य** न० समस्य भावः ष्यञ् । तुल्यत्वप्रयोजके साधारणधर्मे

**साम्राज्य** न० सम्राजः भावः ष्यञ् । सार्व्वभौमत्वे 'भेजे साम्राज्यदीक्षितमिति रघुः 'नक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशयोजने' इत्युक्ते दशनवयोजनाधिराज्ये च ।

सायम्‌ पु० सो-घञ्‌। दिनान्ते, बाणे च।

सायसन्ध्या स्त्री० सायम्‌ दिनान्ते सन्ध्या, तत्र सन्ध्यायते सम्+ध्यै-घञर्थे क वा। दिनान्तसन्ध्यायाम्‌ दिनान्ते-उपास्य देवताभेदे च। भावे अङ्‌। तत्रोपासनायाम्‌।

सायक पु० सो-ण्वुल्‌। बाणे-खड्गे च।

सायन्तन त्रि० सायम्भव ट्युल्‌ तुट्‌ च। दिनान्तभवे। स्त्रियां ङीप्‌। "सायन्तनीं तिथिप्रस्थ" इति नैषध।

सायपुङ्खा स्त्री० सायकस्य पुङ्खोयस्या ५ ब०। शरपुङ्खावृक्षे।

सायस्‌ अव्य०सो-असुन्‌।दिनान्ते"साय सम्प्रति वर्त्तते"इत्युद्भट

सायाह्न पु० सायोऽह्न एक० त० टच्‌ ह्नादेश। दिनान्ते, "सायाह्नस्त्रिमुहूर्त्तः स्यात्‌ श्राद्धं तत्र न कारयेदिति" स्मृत्युक्ते पञ्चधाविभक्तदिनस्य त्रिमूर्त्तात्मके पञ्चमे भेदे ये च।

सायुज्य न० सह युनक्ति-युज-क्विप्‌ सादेश सयुज्‌ तस्य भाव ष्यञ्‌। सहयोगे, पञ्चविधमुक्तिमध्ये एकात्मसमवस्थानरूपे मुक्तिभेदे च। [सारत्‌ ते।

सार दौर्बल्ये चुरा० उभ० सक० सेट्‌। सारयति ते असा

सार न० सृ-घञ्‌, सार-अच्‌ वा। जले, धने, न्याय्ये, नवनीते, लौहे, वने च। बले, स्थिरांशे, मज्जनि, सर्जेच्चारे, वायौ, रोगे, अतिकृष्टे दध्यग्रे च पु० न०। श्रेष्ठे, वरे च त्रि०

सारक पु० सारयति रेचयति सृ-णिच्‌-ण्वुल्‌। जयपाले। रेचकद्रव्ये त्रि०।

सारखदिर पु० कर्म०। विट्खदिरे।

सारगन्ध पु० सार श्रेष्ठोगन्धोयस्य। चन्दने।

सारघ न० सरघाभिर्निर्वृत्तम्‌ अण्‌। मधुनि क्षौद्रे।

सारङ्ग पु० सृ-अङ्गच्‌। चातकखगे, हरिणे, गजे, भृङ्गे छत्रे, राजहंसे, चित्रमृगे, वाद्यभेदे,वस्त्रे,नानावर्णे, मयूरे कामदेवे, चापे, केशे, आभरणे, पद्मे, शङ्खे, चन्दने, कर्पूरे पुष्पे, कोकिले, मेघे, सिंहे, रात्रौ, भूमौ,दीप्तौ च। सारङ्गमस्य शक०। सारङ्गोऽपि चित्रमृगादौ।

साराङ्गिक पु० सारङ्ग मृगं हन्ति ठक्‌। व्याधे।

सारज न० सारात्‌ दध्यग्रात्‌ जायते जन-ड। नवनीते।

सारण न० सृ-णिच्‌-ल्युट्‌। गन्धभेदे, अतीसाररोगे, रावणसचिवे च। भद्रवलायाम्‌, आम्रातके च पु०।

सारणि(णी) स्त्री० सृ-णिच्‌-अनि वा ङीप्‌। क्षुद्रनद्याम्‌, प्रसारिण्याम्‌ सङ्क्षेपेण ग्रहगत्यादिबोधके ज्योतिषग्रन्थभेदे च।

सारतरु पु० सारप्रधान जलप्रधानस्तरुः। कदलीवृक्षे।

सारथि पु० सृ-अथिण्‌, सह रथेन सरथ घोटक तत्र नियुक्त इञ्‌ वा। रथादिवाहनप्रेरके नियन्तरि।

सारदा स्त्री० सार ददाति दा-क। सरस्वत्याम्‌ "लिखति यदि गृहीत्वा सारदेवि" शिवस्तव। सारदातरि त्रि०।

सारद्रुम पु० साराढ्योद्रुम। खदिरवृक्षे।

सारभाण्ड न० कर्म०। वस्त्रादिमपात्रे, श्रेष्ठपात्रे च। [वृक्षे।

सारभूषिका स्त्री० सारे भूमिकेवापहारकत्वात्‌। देवदाली

सारमेय पु० स्त्री० सरमाया कश्यपपत्न्या अपत्यम्‌ ढक्‌। कुक्कुरे। तस्योषिति स्त्री०।

सारलौह न० लौहेषु सारः राज०। लौहसारे(इस्पात)।

सारव त्रि० सरय्वा भव अण्‌ नि०। सरयूनदीभवे।

सारस न० सरोऽभिजनोनिवासयस्य तस्य अण्‌। पद्मे, कण्ठाभरणे च। सह रसेन स्वार्थे अण्‌। चन्द्रे, स्वनामख्याते पक्षिणि च पु०। तस्योषिति स्त्री०। सरसइदम्‌ अण्‌। सरोवरसम्बन्धिनि त्रि०।

सारसन न० सार सनोति सन-अच्‌। स्त्रीकट्याभरणे, काञ्च्याम्‌, कञ्चुकदाढ्यार्थं मध्यकाये निबद्धे, पट्टिकादौ च।

सारस्वत पु० सरस्वती देवताऽस्य, सरस्वत्याइद वा अण्‌। बिल्वदण्डे, देशभेदे, पञ्चगौडमध्ये ब्राह्मणभेदे सरस्वती प्रतिपालितमुनिभेदे, ब्राह्मदिनरूपे कल्पभेदे च "सारस्वतस्य कल्पस्येति" पुराणम्‌। सरस्वतीसम्बन्धिनि "वत्सा पूर्वाह्णसमये कुर्यात्‌ सारस्वतोत्सवमिति" पुराणम्‌। सरस्वतीदेवताके च त्रि० "तत्पावनाय निर्वाप्यश्चरु सारस्वतोद्विजैरिति" स्मृति।

सारस्वतकल्प पु० कर्म०। तन्त्रोक्ते सरस्वत्या उपासनार्थके विधानभेदे, तन्नामके ब्राह्मदिने च। [दुर्व्याङ्ग।

सारा स्त्री० सारयति सृ णिच्‌- अच्‌। कृष्णत्रिवृतायाम्‌,

साराल पु० सारमालाति आ+ला-क। तिलवृक्षे।

सारि(री) पु० स्त्री० सृ इण्‌ स्त्रीत्वपक्षे वा ङीप्‌। पाशके "सारीं चरन्तीं सखि। मारयेति नैषधम्‌ पक्षिभेदे च।

सारिका स्त्री० सरति गच्छति सृ-ण्वुल्‌। पक्षिभेदे(शालिक)

सारिणी स्त्री० सृ-णिनि। सहदेवीलतायाम्‌ कार्पासी दुरालभाया,कपिलशिंशपाया,प्रसारिण्यां, रक्तपुनर्णवायाञ्च।

सारिवा स्त्री० सारिरिव वाति वा क। (अनन्तमूल) लताभेदे [भव ठक्‌। विषभेदे।

सारोष्ट्रिक पु० सारः श्रेष्ठ उष्ट्रोयत्र सारोष्ट्र देशभेदस्तत्र

सार्थ पु० सृ-थन्‌ सार्थेऽण्‌। समूहे,जन्तुसमूहे"स जयत्यरि-

सार्थसार्थकीति ' नैषधम् सह अर्थेन वाच्येन वा। वणिक्समूहे। धनिनि त्रि० त्रत्। सार्थक। अर्थसहिते जने त्रि० शब्दादौ "सार्थक स्वार्थबोधकदिति 'शब्दशक्तिप्रकाशिका"

**सार्थवाह** पु० सार्थं वहति वह–अण्। वणिग्जने।

**सार्द्र** त्रि० सह आर्द्रेन। आर्द्रतायुक्ते। [अर्द्धयुक्ते त्रि०।

**सार्द्धम्** अव्य० सह+ऋध–अम्। साहित्ये। सह अर्द्धेन।

**सार्प** न० सर्पोदेवतास्य अण्। अश्लेषानक्षत्रे।

**सार्पिष्क** त्रि० सर्पिषा संस्कृतम् ठण्। घृतसंस्कृते व्यञ्जनादौ

**सार्व्वजनीन** त्रि० सर्व्वेषु जनेषु विदित खञ् द्विपदवृद्धि। सर्व्वलोकविदिते।

**सार्व्वत्रिक** त्रि० सर्व्वत्रभवम् ठञ्। सर्व्वस्मिन् कालादौभवे।

**सार्व्वधातुक** न० सर्व्वधातून् व्याप्नोति ठञ्। व्याकरणोक्ते सर्व्वधातुप्रकृतिके तिङादौ प्रत्यये।

**सार्व्वभौतिक** त्रि० सर्व्वाणि-भूतानि व्याप्नोति ठञ् द्विपदवृद्धि। सर्व्वभूतव्यापके।

**सार्व्वभौम** पु० सर्व्वस्या भूमेरीश्वर सर्व्वासु भूमिषु विदितो वा अण्। चक्रवर्त्तिनि नृपे, उत्तरदिक्स्थे गजे च।

**सार्व्वलौकिक** त्रि० सर्व्वेषु लोकेषु विदित ठञ् द्विपदवृद्धि। सर्व्वललोकेषु विदिते "स राम सार्व्वलौकिक"इति भट्टि।

**सार्व्वविभक्तिक** त्रि० सर्व्वासु विभक्तिषु तदर्थे भव –ठञ्। सर्व्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये।

**सार्षप** त्रि० सर्षपस्य विकार अण्। सर्षपविकारतैलादौ "अदुष्टं सार्षपं तैलमिति, स्मृति"।

**साल** पु० सल–घञ्। वृक्षमात्रे, "रसालः साल समदृश्यतेति 'नैषधम् स्वनामख्याते वृक्षभेदे, प्राकारे च।

**सालन** पु० साल कारणत्वेनास्त्यस्य पामादित्वात् न। सालनिर्यासे (धुना)।

**सालनिर्यास** पु० ६त०। धुना) सर्ज्जरसे। [वृक्षे।

**सालपर्णी** स्त्री० सालस्येव पर्णान्यस्या ङीप्। (सालपानि)

**सालपुष्प** न० सालस्येव पुष्प यस्य। स्थलपद्मे।

**सालभञ्जिका** स्त्री० साल भनक्ति भन्ज–ण्वुल्। काष्ठादिनिर्म्मिते कृत्रिमक्रीड़ासाधने पुत्तलिका याम्, वेश्यायाञ्च।

**सालरस** पु० ६त०। (धुना) रावे।

**सालवेष्ट** पु० साल वेष्टयति वेष्ट–अण्। रावे (धुना)।

**साला** स्त्री० साल प्राकारोऽस्त्यस्या अच्। गृहे।

**सालारक** पु० सालायां वृकइव। कुक्कुरे।

**सालूर** पु० सल–ऊरच् णिच्। भेके मण्डूके

**सालेय** पु० सालाया भव ढक्। मधुरिकायाम्।

**सालोक्य** न० समानोलोकोऽस्य तस्य भाव ष्यञ्। पञ्चविधमुक्तिमध्ये एकलोकसहवासरूपे मुक्तिभेदे। [न्द्रिये।

**साल्व** पु० व०व० सौभदेशे। तेषा राजा अण्। तद्देशाधिपे

**साल्वहन्** पु० साल्व नृप हतवान् हन–क्विप्। विष्णौ।

**सावधान** त्रि० सह अवधानेन। सचेतने, सतर्के, मनोभिनिवेशयुक्ते च।

**सावन** न०सवन। सोमयागाङ्ग स्नान तस्येदम् अण्। "अहोरात्रेण चैकेन सावनो दिवस स्मृत ' इति ज्योतिषोक्ते अहोरात्रात्मके दिवसे, सवनत्रयस्य अहोरात्रसाध्यत्वात्-तत्सम्बन्धित्वम्। तन्त्रिंशद्दिवसात्मके मासभेदे च पु० 'विवाहादौ स्मृत सौरं यज्ञेषु सावनोमत इति स्मृति। "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तित " इति सूर्यसिद्धान्त।

**सा(शा)वर** पु० स(श)वरेण निर्वृत्त अण्। पापे,अपवादे च।

**सावर्णि** पु० सवर्णाया सूर्यपत्न्या छायाया भव अण्। सवर्णागर्भजे सूर्यजे अष्टमे मनौ। इञ्। सावर्णिरप्यत्र "सूर्यात्मजन्म समासाद्य सावर्णिर्भविता मनुरिति"चण्डी।

**सावित्र** पु० सविता देवताऽस्य अण्। विप्रे। ऋषिविशेषे, स्त्री० ङीप्। "सावित्रीमात्रसारोऽपीति ' स्मृतिः। सा च सत्यवतोभार्य्यायाञ्च। सवितृदेवताके चर्व्वादौ त्रि० यज्ञोपवीते न०। स्वार्थादौ अण्। सूर्य्ये। तस्येदम् अण्। महादेवे, गर्भे वसौ च पु०।

**सावित्रीव्रत** न० सावित्रीपूजनमुद्दिश्य कर्त्तव्य व्रतम्। ज्यैष्ठकृष्णचतुर्द्दश्यां सावित्रीपूजनार्थे व्रते। [पवीते।

**सावित्रीसूत्र** न० सावित्रीदीक्षाकालिक सूत्रम् शाक०। यज्ञो-

**सास्ना** स्त्री० सस–न णिच्। गोगलस्थिते लोमशचर्म्मात्मके कम्बले। [करणले च।

**साह** त्रि० सह क्षमेण। चतुर्जलान्विते। [सामानाधि

**साहचर्य्य** न० सहचरस्य भाव ष्यञ्। समभिव्याहारे, साहित्ये,

**साहस** न० सहसा बलेन निर्वृत्तम् अण्। बलेन कृते चौर्य्यस्त्रीधर्षणादौ दुष्टकर्म्मणि,' सहसा क्रियते यत्तु तत् साहसमिति स्मृत मिति ' स्मृति तत्र पञ्चविधम् "मनुष्यमारणं स्तेयं परदाराभिमर्षणम्। पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतमिति ' स्मृति। सहसा अविवेचनेन कृतम् कर्म्म। अविमृश्यकृतकर्म्मणि, त्रि०। साहसमनुसरति अण्। सम्पूर्णे दण्डविशेषे,"साशीतिपणसाहस्रो दण्डउत्तमसाहस।

तदर्द्धं मध्यमं प्रोक्तस्तदर्द्धमधमं स्मृतः” इति स्मृतिः। “पा-कयज्ञे तु साहसः” इत्युक्ते अग्निभेदे च पु०।

**साहसिक** त्रि० साहसे प्रसृत ठन्। मनुष्यमारणाद्यभिरते चौरे, पारदारिके, मिथ्यावादिनि,परुषवादिनि च।

**साहस्र** न० सहस्राणां समूहः अण्। सहस्रसमूहे। स्वार्थे अण्। सहस्रसङ्ख्यायाम् न०। सहस्रं परिमाणमस्य अण्। सहस्रसंख्यान्विते त्रि०। सहस्रसंख्यकगजसमूहे पु०।

**साहायक** न० सहायस्य भावः वुञ्। साहाय्ये।

**साहाय्य** न० सहायस्य भावः ष्यञ्। सहायतायाम्।

**साहित्य** न० सहितस्य भावः ष्यञ्। मेलने परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वे, तुल्यवदेकक्रियान्वयित्वे, एकक्रियान्वयित्वे, बुद्धिविशेषविषयत्वे, काव्यभेदे च।

**साह्य** न० सह्यस्य भावः ष्यञ् सह-ण्यत् वा। सह्यत्वे सहनीये त्रि०।

**साह्वय** पु० सह आह्वयेनाभिधानेन। अभिधानसहिते“जगाम गजसाह्वयमिति” भारतम्। मेषादिप्राणिकरणद्यूतरूपे समाह्वये च।

**सिंह** पु० हिनस्-अच् पृ० वर्णविपर्य्ययः। स्वनामख्याते पशुभेदे, रक्तशोभाञ्जने, मेषादितः पञ्चमे राशौ च। म-दान्तस्य। श्रेष्ठार्थे।

**सिंहकेशर** पु० सिंहस्येव केशरोऽस्य। बकुले।

**सिंहतल** पु० सिंहस्येव तलमत्र। करद्वयमेलनरूपे अञ्जलौ।

**सिंहतुण्ड** पु० सिंहस्येव तुण्डं मुखमस्य। सेहुण्डवृक्षे।

**सिंहद्वार** न० सिंहचिह्नितं द्वारम्। पुरप्रवेशनयोग्ये द्वारे

**सिंहध्वनि** पु० सिंहस्येव ध्वनिः। सिंहतुल्यनादे सिंहनादा-दयोऽप्यत्र। ६त०। सिंहस्य शब्दे। [वाद्यभेदे।

**सिंहनर्दिका** पु० सिंहइव नर्दति नर्द-ण्वुल्। (सिङ्गा)

**सिंहनादिका** स्त्री० सिंहमपि नादयति नद-णिच्-ण्वुल्। दुरालभायाम्।

**सिंहपर्णी** स्त्री० सिंहस्य पुच्छइव पर्णमस्याः ङीप्। वासकवृक्षे

**सिंहपुच्छिका** स्त्री० सिंहस्य पुच्छइव पत्राण्यस्याः -कप्, अत इत्वम्। (चुटुचाकुले) वृक्षे।

**सिंहपुच्छी** स्त्री० सिंहस्य पुच्छइव पुष्पाणि पर्णानि वास्याः ङीप्। चित्रपर्ण्यां, पृश्निपर्ण्याम, माषपर्ण्याञ्च।

**सिंहपुष्पी** स्त्री० सिंहस्य पुच्छइव पुष्पाण्यस्याः। पृश्निपर्ण्याम

**सिंहमुखी** स्त्री० सिंहस्य मुखमिव मुखमस्त्यन्त इव पुष्पमस्याः ङीप्। वासके। [वाहनादयोऽप्यत्र।

**सिंहयाना** स्त्री० सिंहोयानं वाहनं यस्याः। दुर्गायाम् सिंह

**सिंहल** पु० सिंहोऽस्त्यत्र लच्। देशभेदे। तद्देशप्रभवत्वात् रङ्गे,रीतौ त्वचे च न०।

**सिंहलास्थान** पु० सिंहल आस्थानं यस्य। तालसदृशे वृक्षभेदे।

**सिंहवाहिनी** स्त्री० सिंहरूपो वाहो विद्यतेऽस्याः इनि। दुर्गायाम्। [विक्रमे त्रि०।

**सिंहविक्रान्त** पु० सिंहइव विक्रान्तः। अश्वे। सिंहतुल्य

**सिंहविन्ना** स्त्री० सिंहइव विन्ना विद-क्त। माषपर्ण्याम्।

**सिंहसंहनन** त्रि० सिंहस्येव संहननमङ्गमस्य। वराङ्गयुक्ते सिंहतुल्य दृढाङ्गे, च। “सिंहसंहननो युवेति” रघुः।

**सिंहा(सिङ्घा)न** न० शिघि-आनच् पृ०। लौहमले।

**सिंहासन** न० सिंहचिह्नितमासनम्। राजासने चन्द्रराजी-क्रीडायां जयभेदे, योगासनभेदे च तल्लक्षणं हठदभिधाने।

**सिंहास्य** पु० सिंहस्यास्यमिवास्यमन्तइव पुष्पं यस्य। वासके।

**सिंहिका** स्त्री०। काश्यपपत्न्यां राहुमातरि।

**सिंहिकासुत** पु० ६त०। राहौ सिंहिकापुत्रादयोऽप्यत्र।

**सिंही** स्त्री० हिनस्ति रोगान् हिंस अच् पृ०। वार्ताक्यां, कण्टकारिकायाम्, वासके, बृहत्यां, मुद्गपर्ण्याम्, राहुमा-तरि, च। सिंह+जातौ ङीप्। सिंहयोषिति।

**सिक** सेचने सौत्र० पर० सक० सेट्। सेकति असेकीत्।

**सिकता** स्त्री० ब० व०। सिक-अतच् कित्। वालुकायाम्। सिकता सन्त्यत्र अण् तस्य लुप्। सिकतायुक्तदेशे स्त्री०।

**सिकतामय** त्रि० सिकता+मयट्। वालुकामये तटादौ [देशे।

**सिकतावत्** त्रि० सिकता सन्त्यत्र मतुप् मस्य वः। वालुकायुक्त-

**सिकतिल** त्रि० सिकता सन्त्यत्र इलच्। वालुकायुक्तदेशे

**सिक्थ** न० षिच-थक्। मधूच्छिष्टे, (मोम) नीलद्रव्ये। स्वार्थे कन्। तत्र, भक्तपुलाके, मासे च पु०।

**सिक्य** न० सिक-यत्। (सिके) रज्जुनिर्मिते पदार्थे [कुनी]।

**सिङ्घा (घा)न** न० शिघ-आनच् पृ०। नासिकामले। (सि-

**सिच्** त्रि० सिच-क्विप्। सेचनकर्त्तरि,कर्मणि क्विप्। वस्त्रे

**सिचय** पु० सिच-अयच् कित्। वस्त्रे।

**सिञ्चिता** स्त्री० सिच-इतच् पृ०। पिप्पल्याम्

**सित** न० षो-क्त। रौप्ये, मूलके, चन्दने च। शरे, शुक्लपक्षे, शुक्रवर्णे च पु०। तद्वति, समाप्ते, बद्धे, ज्ञाते च त्रि०।

**सितकण्ठ** पु० सितः कण्ठोऽस्य। दात्यूहे, पक्षिणि।

**सितकर** पु० सितः करः किरणो यस्य। चन्द्रे, कर्पूरे च सित-मयूखादयोऽप्यत्र।

**सितकर्णी** स्त्री० सितः कर्ण इव पुष्पमस्याः ङीप्। वासके

सितकुञ्जर पु० सित कुञ्जरोऽस्य। इन्द्रे। कर्म०। ऐरावतगजे
सितगुञ्जा स्त्री० कर्म०। श्वेतगुञ्जायाम्।
सितच्छत्रा स्त्री० सित छत्रमिव पुष्पमस्या। श्वेतपुष्पायाम्।
सितच्छद पु० सितश्छद पत्रमस्य। हंसे। श्वेतदूर्व्वायां,स्त्री०।
सितदर्भ पु० कर्म०। श्वेतकुशे। [जीरके।
सितदीप्य पु० दीपयत्यग्निम् दीप-णिच्-यत् कर्म०। श्वेत
सितदूर्व्वा स्त्री० कर्म०। श्वेतदूर्व्वायाम्।
सितद्रु पु० कर्म०। मोरटभेदे, शुक्लवर्णवृक्षे च।
सितधातु पु० कर्म०। कठिन्याम्।
सितपक्ष पु० सित पक्षोऽस्य। हंसे। कर्म०। चन्द्रस्य हृद्धिकारक मसृदयतिथ्यात्मके शुक्ले पक्षे। [वृक्षे।
सितपर्णी स्त्री० सितानि पर्णान्यस्या ङीप्। अर्कपुष्पिका
सितपाटलिका स्त्री० कर्म०। (श्वेतपारुल) वृक्षे।
सितपुङ्खा स्त्री० सित पुङ्खोऽस्या। श्वेतशरपुङ्खावृक्षे।
सितपुष्प न० सितानि पुष्पाण्यस्य। श्वेतकीहृक्षके। तगर-वृक्षे, काशे, श्वेतरोहितकवृक्षे च पु०। श्वेतापराजिताया स्त्री० ङीप्। मल्लिकायां स्त्री० टाप्। कर्म०। श्वेतपुष्पे न०।
सितमरिच न० कर्म०। शुभ्रमरिचे।
सितमाष पु० कर्म०। राजमाषे (बरवटी) [वायाम्।
सितवर्षाभू स्त्री० वर्षासु भवति भू-क्विप् कर्म०। श्वेतपुनर्न-
सितसायका स्त्री० सित सायकोऽस्या ५ब०। शुभ्र-शरपुङ्खावृक्षे।
सितशिम्बिक पु० सिता शिम्बिर्यस्य कप्। गोधूमे,
सितशूक पु० सित, शुभ्र' शूकोऽस्य। यवे।
सितशूरण पु० कर्म०। वनशूरणे (वनओल)।
सितसर्षप पु० कर्म०। गौरसर्षपे। [शाके।
सितसार(क) पु० सित सारोनिर्यासोऽस्य वा कप्। शालिञ्च-
सिता स्त्री० सो-क्त। शर्करायाम्।
सिताखण्ड पु० सिताया खण्ड इव। मधुजातशर्करायाम्।
सिताग्र पु० सितमग्र यस्य। कण्टके
सितादि पु० सितायाआदि कारणम्। गुडे।
सितापाङ्ग पु० सितमपाङ्ग यस्य। मयूरे
सिताब्ज न० कर्म०। श्वेतकमले। सिताम्भोजादयोऽप्यत्र।
सिताभ पु० सिता आभा यस्य। कर्पूरे,चन्द्रे च। तन्मे स्त्री०
सिताभ्र पु० अभ्रइव सित शुभ्र राज०। कर्पूरे।
सिताभ्रक न० अभ्रकमिव सितम् राज०। कर्पूर
सितार्जक पु० कर्म०। श्वेतार्जकाम्।

सितालक पु० आलयति भूषयति अल णिच् ण्वुल् कर्म०। श्वेतमन्दारे। [श्वेतदूर्व्वायाम्
सितालता स्त्री० सिता सती आलतते आ+लत अच्।
सितावर पु० सित श्वेततामाऽऽवृणोति आ+वृ-अच् (सुसुनि) शाकभेदे।
सिति पु० षो-क्तिच्। शुक्लवर्णे, कृष्णवर्णे च। तद्वति त्रि०।
सितिमन् पु० सितस्य भाव इमनिच्। शुभ्रतायाम
सितिवार पु० सिति श्वेतता वृणोति वृ-अण्। सुनिषण्णके (सुसुनि)शाके।
सितिवासस् पु० सिति कृष्ण वासोऽस्य। बलदेवे।
सितेतर पु० सितादितर। श्यामशालौ कुलत्थे च श्यामेतर वर्णे पु० तद्वति त्रि०।
सितोपल पु० कर्म०। स्फटिके। कठिन्यां न०। शर्करायां स्त्री०
सिद्ध न० सिध-क्त। सैन्धवलवणे अलौकिकशक्तियुक्तात्मन् निष्पन्ने,पक्वे,, नित्ये च त्रि०। सिद्धिरस्त्यस्य अच्। व्यासादौ मुनौ देवयोनिभेदे च पु०। निश्चिते त्रि० विष्कम्भादिषु मध्ये द्वाविंशयोगे, गुडे, कृष्णधुस्तूरे च पु०। ज्योतिषोक्ते योगिनीदशामध्ये सप्तम्यां दशायां स्त्री०। तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे पु०।
सिद्धक पु० सिद्ध इव इवार्थे कन्। सिन्धुवारे, श वृक्षे च
सिद्धजल न० सिद्धपक्व जलम्। काञ्जिके। सिद्धतोयादयोऽप्यत्र
सिद्धदेव पु० सिद्धाना देव। महादेवे
सिद्धधातु पु० सिद्ध प्रसिद्धोधातुः। पारदे
सिद्धपीठ पु० न० कर्म०। 'जातोऽयवलिर्येन होमोवा कोटि-सङ्ख्यक। महाविद्यानमा कोऽपि सिद्धपीठ प्रकीर्त्तित' इति तन्त्रोक्ते स्थानभेदे।
सिद्धपुर न० कर्म०। "लङ्काकुमध्ये यमकोटिरस्या प्राक् पश्चिमे रोमकपत्तनञ्च। अधस्ततः सिद्धपुरञ्च"इत्युक्ते भूगो-लस्थेषु भूकम्प दानान्तरितदेशस्थेषु चतुर्षु देवनिर्मितेषु पुरेषु मध्ये लङ्काधोभागस्थे पुरभेदे।
सिद्धपुष्प पु० सिद्ध नित्य पुष्प यस्य। करवीरवृक्षे।
सिद्धप्रयोजन पु० सिद्ध प्रयोजन यस्मात् ५ब०। गौरसर्षपे
सिद्धरस पु० सिद्ध प्रसिद्धोरस। पारदे सिद्धोरसोऽत्र धातुमात्रे त्रि०।
सिद्धविद्या स्त्री० सिद्धा विद्या मन्त्रोऽस्या। काली तारा महाविद्या षोडशी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी क-

मात्मिका। एता दश महाविद्या सिद्धविद्या प्रकीर्त्तिता" इति तन्त्रोक्तासु दशसु काल्यादिषु।

**सिद्धसाधन** न० सिद्धस्य निश्चितस्य साधनमनुमानम्। न्यायोक्ते सिषाधयिषाविरहकाले साध्यवत्त्वेन निश्चितस्य पुनरनुमानरूपे दोषे। सिद्धं साधयति ल्यु। श्वेतसर्षपे पु०।

**सिद्धसाध्य** पु० सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिद्वितीयकोष्ठस्थाद्याक्षरयुक्ते तन्त्रोक्ते मन्त्रभेदे।

**सिद्धसिद्ध** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धसिन्धु** स्त्री० ६ त०। गङ्गायाम् सिद्धनद्यादयोऽप्यत्र।

**सिद्धसुसिद्ध** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधितृतीयकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धान्त** पु० सिद्ध निश्चितोऽन्तोयस्मात्। प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासेन सिद्धपक्षस्य स्थापनरूपे वाक्यसन्दर्भे, ज्योतिःशास्त्रभेदे च स च सूर्य्यसिद्धान्त सोमसिद्धान्तादि

**सिद्धारि** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिचतुर्थकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धार्थ** (क) पु० सिद्ध अर्थोयस्मात् ५ब० वा कप्। श्वेतसर्षपे वटीवृक्षे च। ६ब०। प्रसिद्धार्थे त्रि०। "सिद्धार्थं सिद्धसम्बन्धमिति" माघः।

**सिद्धि** स्त्री० सिध–क्तिन्। ऋद्धिनामौषधे, योगभेदे, अन्तर्द्धाने, निष्पत्तौ, पाके, पादुकायाम्, मोक्षे, सम्पत्तौ, अणिमाद्यष्टविधैश्वर्य्ये, बुद्धौ, साध्यवत्तया निश्चये च।

**सिद्धिद** पु० सिद्धिं ददाति दा–क। बटुकभैरवे। सिद्धिदातरि त्रि०।

**सिद्धियोग** पु० सिद्धिहेतुर्योग। "शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया। गुरौ पूर्णा च संयुक्ता सिद्धियोग प्रकीर्त्तित" इति ज्योतिषोक्ते शुक्रादिवारयुक्तनन्दादौ

**सिध्म** न० सिध-मन् किञ्च। किलासरोगे।

**सिध्मन्** न० सिध–मनिन् किञ्च। किलासरोगे तद्रोगवति त्रि०।

**सिध्मल** त्रि० सिध्मन्+अस्त्यर्थे लच्। किलासरोगवति। विकारे स्त्री०। [मित्स्ये।

**सिध्य** पु० कार्य्यं साधयति सिध–णिच्–कर्मणि यत् नि०। पुष्य

**सिध्रक** पु० सेधति रोगान् सिध–रक् स्वार्थे कन्। (पुष) वृक्षभेदे "वनानिर्ग्रौ" रित्यादिसूत्रेण सिध्रकवनस्य शादित्विना दीर्घविधानात् पु स्त्रमेवास्य, अधीरोक्ष स्वीत्यल्पापर्तनीयम्।

**सिध्रकावण** न० सिध्रकप्रधानं वनं णत्वम् दीर्घश्च। देवोद्याने।

**सिन** पु० सीयते बध्यते सि–णाक्दस्य न। ग्रासे, काणे च

**सिनी** स्त्री० सि–क्त तस्य नश्च स्त्रियां ङीप्। शुक्लवर्णस्त्रियाम्।

**सिनीवाली** स्त्री० सिनी श्वेता चन्द्रकला वलति धारयति अण् ङीप्। चतुर्द्दशीयुक्तायाममावास्यायाम्।

**सिन्दु(न्धु)क** पु० स्यन्दते स्यन्द–उ सम्प्रसारणञ्च दृ० दस्य वा ध स्वार्थे वा कन्। सिन्दुवारवृक्षे।

**सिन्दु(न्धु)वार** पु० सिन्धुं गजमदं वारयति तिक्तत्वात् वृ–अण्। (निसिन्दा)वृक्षे। "मुक्ताकलापीकृत सिन्दुवारमिति" कुमार तस्य च श्वेतपुष्पत्वात् मुक्तातुल्यत्वम्।

**सिन्दूर** न० स्यन्द–ऊरन् सम्प्रसारणम्। स्वनामख्याते रक्तवर्णे चूर्णभेदे, वृक्षभेदे पु०।

**सिन्दूरकारण** न० ६ त०। सीसके। [सधवायाम् स्त्री०।

**सिन्दूरतिलक** पु० सिन्दूरवर्णस्तिलकचिह्नमेदोयस्य। हस्तिनि

**सिन्दूरी** स्त्री० सिन्दूरवर्णानि पुष्पाणि सन्त्यस्या अच् गौ० ङीप्। सिन्दूररोचन्याम्, धातक्याञ्च।

**सिन्धु** पु० स्यन्द–उ सम्प्रसारणं दस्य धश्च। समुद्रे, नदभेदे, वृक्षे, श्वेतटङ्कणे, रागभेदे, गजमदे, देशभेदे च। तद्देशवासिनि पु० ब० व। नदीभेदे स्त्री०।

**सिन्धुकफ** पु० सिन्धोः कफइव। समुद्रफेने। [श्वेतटङ्कणे।

**सिन्धुकार** न० सिन्धुदेशे क्रीयते क्रियते वा कृ–क–वा अण्।

**सिन्धुखेल** पु० सिन्धुसमीपे खेलति खेल–अच्। सिन्धुदेशे।

**सिन्धुज** न० सिन्धुदेशे समुद्रे वा जायते जन–ड। "सैन्धवलवणे। चन्द्रे, कर्पूरे च पु०। लक्ष्म्यां स्त्री०। सिन्धुजाताद्योऽप्यत्र।

**सिन्धुनन्दन** पु० ६त०। चन्द्रे, सिन्धुसुतादयोऽप्यत्र लक्ष्म्यां स्त्री०।

**सिन्धुपुष्प** पु० सिन्धौ पुष्प्यति विकाशते पुष–अच्। शङ्खे।

**सिन्धुसम्भज** न० सिन्धुसम्भवे जायते जन–ड। सैन्धव लवणे, अमृते च।

तरङ्गानिलकम्पितास्विति' रघु।

**सिम** पु० सि-मन् किच्च। सर्व्वस्मिन् इत्यर्थे,तदर्थेऽस्य सर्व्वनामता

**सिम्बा(म्बि)** स्त्री० शाम्यति क्षुद्बिरनया शम-वन् इन् वा पृ०। (छुटि) शिम्बायाम् इनन्त। नखीनामगन्धद्रव्ये। वा ङीप्। ङीबन्त। निष्पाव्याञ्च।

**सिम्बिजा** स्त्री० सिम्बेर्जायते जन-ड। शमीधान्ये कलायादौ

**सिर** पु० सि-रक्। पिप्पलीमूले। नाड्याम् अम्बुवाहिन्याञ्च स्त्री०। [सल्लकीवृक्षे।

**सिल्हकी** स्त्री० सि-क्विप् लक-अच् गौरा० ङीष् कर्म०।

**सिहुण्ड** पु० सो-क्वि सि छेदस्तं हुण्डते कण्टकाष्टतयाद् हुडि-अण्। स्नुहीवृक्षे [तत्रैव।

**सिह्ल** पु० स्निह-लक् पृ०। तुरुष्काख्ये गन्धद्रव्ये। स्वार्थे कन्।

**सिह्लकी** स्त्री० स्निह-लकन् पृ० गौ० ङीष्। सल्लकीवृक्षे।

**सिह्लभूमि** स्त्री० सिह्लस्य गन्धद्रव्यस्य भूमि। सल्लकीवृक्षे।

**सीक** सेचने भ्वा० आ० सक० सेट्। सीकते असीकिष्ट। चङि न ह्रस्वः। अपोपदेशत्वान्न षत्वम्।

**सीक** स्पर्शे वा चु० उभ० पक्षे भ्वा० प० सक० सेट्। सीकयति ते सीकति असीसिकत् त असीकीत्। न षत्वम्।

**सीकर** पु० सीक्यते सिच्यतेऽनेन सीक-अरन्। जलकणे।

**सीता** स्त्री० सि त पृ० दीर्घः। लाङ्गलपद्धतौ, जनकराजदुहितरि, भद्राश्ववर्षस्थितगङ्गायाञ्च।

**सीतापति** पु० ६ त०। श्रीरामे।

**सीतायाःपति** पु० ६त० अलुक्समा०। श्रीरामे "सीतायाः पतये नमः" इतिपुराणम् असमस्तत्वे पत्येइति स्यात्।

**सीत्कार** पु० सीदित्यव्यक्तस्य कार सीत्+कृ-घञ्। अनुरागजे शब्दे।

**सीत्कृत** न० सीत्×कृ भावे क्त। सीत्कारे, अनुरागजशब्दे

**सीत्य** न० सीतया लाङ्गलपद्धत्या निर्वृत्तं यत्। धान्ये। सीतामर्हति यत्। हलकर्षणयोग्ये क्षेत्रादौ त्रि०।

**सीधु** पु० सिध-उ पृ०। मद्ये "इक्षोः पक्वरसैः सिद्धः सीधुरित्यभिधीयते" इत्युक्ते मद्यभेदे च।

**सीधुगन्ध** पु० सीधोरिव गन्धोऽस्य न इत् अनित्यत्वात्। बकुले।

**सीधुपुष्प** पु० सीधुगन्धयुक्तं पुष्पमस्य। कदम्बे, बकुले च। धातक्यां स्त्री० ङीप्।

**सीधुरस** पु० सीधोरिव रस आस्वादोऽस्य। आम्रवृक्षे।

**सीमन्त** पु० सीम्नोऽन्तः शक०। (सिंथि) केशान्तर्गतपङ्क्त्याकारे पदार्थे "षष्ठेऽष्टमे वा सीमन्त" इत्युक्ते गर्भाद्वधिके षष्ठे अष्टमे वा मासि कर्त्तव्ये संस्कारभेदे च।

**सीमन्तक** न० सीमन्ते कायति कै-क। सिन्दूरे। नरकावासे पु०

**सीमन्तिनी** स्त्री० सीमन्त+अस्त्यर्थे इनि। योषिति नार्य्याम्।

**सीमन्तोन्नयन** न० सीमन्तस्य तदाख्यगर्भसंस्कारस्य उन्नयनमुद्भावनमत्र। स्मृत्युक्ते गर्भसंस्कारककर्मभेदे

**सीमन्** स्त्री० सि-इमनि पृ० न गुणादि। मर्यादायाम्,अवधौ, स्थितौ-क्षेत्रे, अमरकोषे "सीम्नि पुंस्यधकोऽस्त" इति सिद्धान्तकौमुदी। वेलायाञ्च। [सीमन्शब्दार्थे च।

**सीमा** स्त्री० सीमन्×डाप्। मर्यादायां, ग्रामादेरन्तभागे,

**सीमाविवाद** पु० सीमाया विवादः। अष्टादशसु विवादेषु मध्ये स्वनामख्याते विवादभेदे।

**सीर** पु० सि रक् पृ०। सूर्य्ये, अर्कवृक्षे, हले च। [जनकनृपे।

**सीरध्वज** पु० सीरो हलं तच्चिह्नितो ध्वजोऽयस्य। चन्द्रवंश्ये

**सीरपाणि** पु० सीरं हलं पाणौ यस्य। बलदेवे

**सीरिन्** पु० सीरो हलोऽस्त्यस्यायुधत्वेन इनि। बलरामे

**सी(से)वन** न० सिव-ल्युट् नि० वा दीर्घः। सेवने तन्तुसन्ताने (सेलाइ) [स्वार्थे कन्। तत्रार्थे

**सीस** न० सि-क्विप् पृ० सी-क कर्म०। (सीसे) धातुभेदे

**सीहुण्ड** पु० सिहुण्ड+पृ० दीर्घः। स्नुहीवृक्षे,

**सु** अव्य० सु-डु। पूजायाम्,अतिशये, कृच्छ्रे, अनुमतौ, समृद्धौ, अनायासे च।

**सुकण्टका** स्त्री० सुष्ठु कण्टकोऽस्याः। घृतकुमार्य्याम्।

**सुकण्डु** स्त्री० सु+कण्डु+यक् डु। कण्डुरोगे (चुलकाना)

**सुकन्द** पु० शोभनः कन्दोऽस्य। कशेरौ, शोभनकन्दयुक्ते त्रि० स्त्रियाया कन्। पलाण्डौ

**सुकन्दिन्** पु० शोभन हितकर कन्दोऽस्त्यस्य इनि। वाराहीकन्दे, धरणीकन्दे, शूरणे, च। (ओल)

**सुकरा** स्त्री० सुखेन क्रियते दुह्यते वा सु+कृ-खल्। सुशीलाया गवि। सुखसाध्ये त्रि०। [कर्णयुक्ते त्रि०।

**सुकर्णक** पु० सुष्ठु कर्ण इव कन्दोऽस्य कप्। हस्तिकन्दे। शोभन

**सुकर्णिका** स्त्री० सुष्ठु-कर्णाविव पर्णान्यस्याः कप् अत इत्वम्। मूषिकपर्ण्याम्। [वारुण्याम् (राखालशशा)।

**सुकर्णी** स्त्री० सुष्ठु कर्णाविव पत्राण्यस्याः ङीप्। इन्द्र-

**सुकर्म्मन्** पु० सुष्ठु कर्म्म यस्मात् ५ब०। विष्कम्भादिषु मध्ये सप्तमे योगे। शोभनकृत्यवति त्रि०। प्रादि०। शोभने कृत्ये न०

**सुकल** पु० सुष्ठु कल्यते ख्यायतेऽसौ सु+कल+घञ्। दातृत्वभोक्तृत्वादिना विख्याते जने सुन्दरमधुराव्यक्तशब्दे च।

**सुकाण्ड** पु० सुष्ठु काण्डोऽस्य। कारवेल्ले, सुन्दरकाण्डयुक्ते त्रि० च काण्डीरलतायां स्त्री०। स्वार्थे कन् अत इत्वम्। तत्रैव

सुकामा स्त्री० सुष्ठु काम्यतेऽसौ सु×कम-घञ्। त्रायमाणा लतायाम्। शोभनकामवति त्रि०।
सुकाष्ठ न० सुष्ठु काष्ठ प्रा०। देवदारुकाष्ठे, शोभनकाष्ठे च।
सुकाष्ठा स्त्री० सुष्ठु काष्ठं यस्याम्। काष्ठकदल्याम्, कटुर्यां च
सुकुन्दक पु० सु+कुदि-ण्वुल्। पलाण्डौ।
सुकुन्दन न० सु+कुदि-ल्यु-। बर्बरे
सुकुमारा स्त्री० सु+कुमार-अच् पञ् वा। जातीदले, नवमालिकायाम्, कदल्या, पृक्कायाम्, मालत्याञ्च। अतिकोमले त्रि०। प्रा०। सुन्दरकुमारावस्थान्विते त्रि० स्त्रियां ङीप्
सुकृत् त्रि० सु+कृ-क्विप्। पुण्यकारके, धार्मिके जने।
सुकृत न० सु+कृ-क्त। पुण्ये, धर्म्मे, शुभे च। सुकर्म्मणि न०
सुकृति स्त्री० सु+कृ-क्तिन्। पुण्ये, मङ्गले, सत्कर्मणि च।
सुकृतिन् त्रि० सुकृतमनेन इनि। पुण्यशीले, शुभयुक्ते, सत्कर्म्माचे च।
सुकेसर पु० सुष्ठु केसरो यस्य। वीजपूरे।
सुकोली स्त्री० प्रा०। चीरकाकोल्याम्।
सुकोषक पु० सुष्ठु कोषोऽस्य कप्। कोषाम्रे।
सुख सुखसम्पादने अद० चु० उभ० सक० सेट्। सुखयति-ते असुसुखत्-त। अयोपदेशत्वान्न षत्वम्।
सुख न० सुख-घञ्। पुण्यजन्ये गुणभेदे आनन्दे अनुकूलवेदनीये यदनुभवाय चित्तमनुकूलं भवति तस्मिन् अर्थे। तच्च आत्मधर्म्म इति नैयायिकादय। चित्तधर्म इति साङ्ख्यादय। सुखयतीति अच्, सुखमस्यास्ति अच् वा। सुखकारके, सुखिनि च त्रि०। [दने सुखकारके त्रि०।
सुखङ्करी स्त्री० सुखङ्करोति कृ-खच् मुम् च ङीप्। जीवन्ती
सुखजात त्रि० जात सुखमस्य परनिपात। जातानन्दे— "सुखजात सुरायीत इति भट्टि।
सुखदोह्या स्त्री० सुखेन दोह्या दुह यत्। क्लेश विना दोहनीयायां गवि—सुखसंदोह्याप्यत।
सुखभाज् त्रि० सुख भजते भज-ण्वि। सुखयुक्ते।
सुखमोदा स्त्री० सुख सुखकरोमोदो यस्या। सल्लकीवृक्षे।
सुखरात्रि स्त्री० सुखा सुखकरी रात्रिर्यस्याम्। आश्विनामावास्यायाम् दीपान्विताम्बावास्यायाम्।
सुखरात्रिका स्त्री० सुखा रात्रिर्यस्या ५ब० कप्। दीपान्वितामावास्यायां—पूज्यायां लक्ष्म्याम् दीपान्वितां प्रक्रम्य "पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिकेति' ज्योतिर्वचनम्। कबभावे सुखरात्रिरप्यत्र "आख्याता भूतले देवि। सुखरात्रि। नमोऽस्तु ते 'इति दीपान्वितामावास्या याम् लक्ष्मीपूजनमन्त्र। [काक्षारे साजिमाटि।
सुखवर्चक पु० सुख वर्चयति उद्दीपयति वर्च-णिच्-ण्वुल्। सर्जि-
सुखवर्चस् पु० सुख सुखकरं वर्चो यस्य। सर्जिकाक्षारे, (साजिमाटि)। [फलवृक्षे।
सुखवास पु० सुख सुखकरोवासोगन्धो यस्य। (तरमुज)
सुखवासन पु० सुख सुखकरः वासनगन्धो यस्य। सुखवासनगन्धद्रव्ये।
सुखाधार पु० सुखानामाधार। स्वर्गे। कर्म०। सुखकरावासे।
सुखायत पु० सुखेनायम्यते आ+यम-क्त। विनीताश्वे।
सुखायन पु० सुखेनायतेऽनेन अय-ल्युट्। सुविनीताश्वे। [नके
सुखावह त्रि० सुखमावहति जनयति आ+वह-अच्। सुखज-
सुखाश पु० सुखा सुखकरीआशा यस्य। वरुणे। सुखेनाश्यते अश-घञ्। राजतिनिशे वृक्षे। स्वार्थे कन्। सुखाशके, (शशा) राजतिनिशवृक्षे च पु०। भावे घञ्। सुखभोजने।
सुखोत्सव पु० सुखकर उत्सवो यस्मात् ५ब०। पत्यौ। कर्म०। आनन्दकारके, उत्सवे पु०। [क्षारे (साजिमाटि)।
सुखोर्ज्जिक पु० सुखस्य उर्ज्ज वृद्धि रस्यास्य ठन्। सर्ज्जिका-
सुग न० सुष्ठु गच्छति निर्याति गम-ड। विष्ठायाम्। सुगमे त्रि०
सुगत पु० सुष्ठु गच्छति जानाति गम-कर्त्तरि-क्त। बुद्धे।
सुगन्ध न० सुष्ठु गन्धोऽस्य न इत्। गन्धतैले, क्षुद्रजीरके, नीलोत्पले, चन्दने, ग्रन्थिपर्णे च। रक्तशिग्रौ, गन्धके, चणके, भूतृणे च पु०। सद्गन्धद्रव्ययुक्ते आपणादौ त्रि०।
सुगन्धक पु० सुष्ठु गन्धोऽस्य कप्। रक्ततुलस्यां, गन्धके, नागरङ्गे, कर्क्कोट्याञ्च।
सुगन्धपत्रा स्त्री० सुगन्धं पत्रमस्या। रुद्रजटायाम्।
सुगन्धभूतृण न० कर्म०। गन्धतृणे, [याञ्च।
सुगन्धमूला स्त्री० सुगन्धं मूलं यस्या। स्थलपद्मिन्याम्, रास्ना
सुगन्धा स्त्री० सुष्ठु गन्धोऽस्या। रास्नायां शटा, बन्ध्याकर्कोट्याम्, रुद्रजटायां, नाकुल्यां, शतपुष्पायां, नवमालिकायां, स्वर्णयूथिकायां, पृक्कायां, सल्लक्यां, गन्धपत्त्राम्, अनन्तायां, तुलस्या, मातुलुङ्गके च।
सुगन्धामलक न० सुगन्धैः सर्व्वौषधिगणैर्युक्तमामलकम्। 'सर्व्वौषधिसमायुक्तं शुष्कास्त्वामलकास्तथ। यदातदाय योगः स्यात् सुगन्धामलकाभिधः" इत्युक्ते सर्व्वौषधियुक्ते शुष्के आमलकचूर्णे।
सुगन्धि पु० सुष्ठु गन्ध इत्समा०। इष्टगन्धे सुरभौ। सुष्ठु गन्धोऽस्य। सुगन्धयुक्ते त्रि० एलवालुके सुक्षाया, कशेरौ, गन्धतृणे, धान्यके, पिप्पलीमूले च पु०। स्वार्थे कन्। कह्लारे।

पुष्करमूले, उशीरे, सुरपर्णे, मर्च शालौ, गन्धके, तरुस्के च
**सुगन्धिकुसुम** पु० सुगन्धि कुसुम यस्य। पीतकरवीरे। सुग-
न्धयुक्तपुष्पवति त्रि०।
**सुगन्धित्रिफला** स्त्री० त्वचय विभिराक वा फल त्रिफल
सुगन्धि त्रिफलमस्यस्या साहश्येन अच्। जातीफले,
पूगफले, लवङ्गकलिकाफले च
**सुगन्धिमूल** न० सुगन्धि मूलमस्य। उशीरे (वेना)
**सुगृहीतनामन्** पु० सुगृहीत प्रात काले स्मरणीय नाम
यस्य। प्रात स्मरणीये पुण्यकीर्त्तौ जने। [त्रि०
**सुग्रन्थि** पु० सुष्ठु ग्रन्थिर्यस्य। चोरकवृक्षे। सुन्दरग्रन्थिमति
**सुग्रीव** पु० सुष्ठु ग्रीवाऽस्य। श्रीकृष्णाश्वे, सूर्यपुत्रे वानरेश्वरे
च। सुन्दरग्रीवावति त्रि०।
**सुचक्षुस्** पु० सुष्ठु चक्षुरिव फलमस्य। उडुम्बरे, शोभनलो-
चनयुक्ते त्रि०। भा०। शोभने नेत्रे न०।
**सुचञ्चुका** स्त्री० सुष्ठु चञ्चुरिव शिखा यस्याः कप्। महाचञ्चुशाके
**सुचरित्रा** स्त्री० सुष्ठु चरित्र यस्याः। पतिव्रतायां स्त्रियाम्
सच्चरित्रवति त्रि०। भा०। सच्चरित्रे न०।
**सुचर्मन्** पु० सुष्ठु चर्मेव वल्कलमस्य। भूर्जवृक्षे सुन्दरचर्म
वति त्रि०। भा०। सुन्दरे चर्मणि न०। [द्रायाम्।
**सुचित्रबीजा** स्त्री० सुचित्र विचित्र बीज यस्याः। विड-
**सुचित्रा** स्त्री० भा०। चिर्भटायाम्। विचित्रे त्रि०।
**सुचिर** भा०। अत्यन्तचिरकाले, बहुकाले च। बहुकालभवे त्रि०
**सुचिरायुस्** पु० सुचिर बहुकालिकमायुर्यस्य। देवे। बहुकाल-
जीविनि त्रि०
**सुचेलक** पु० भा०। सूक्ष्मवस्त्रे। सुष्ठु चेलोऽस्य कप्। सूक्ष्मवस्त्र-
धरे त्रि०। [जले न०
**सुजल** न० शोभन जल यस्मात् ५व०। कमले। भा०। सुन्दरे
**सुजाता** स्त्री० सु+जन-क्त। तुवर्याम्। मनोज्ञे त्रि०।
**सुजीवन्ती** स्त्री० भा० स्वर्णजीवन्त्याम् [अथोमदेशत्वात् च।
**सुट्ट अनादरे** चु० उ० सक० सेट्। सुट्टयति ते असुसुट्टत् त
**सुत** पु० स्त्री० सु-क्त। पुत्रे तनयायाम्। स्त्री० सा च
दुरालभायाञ्च। उत्पन्ने, अभिषुते, निष्पीडिते च त्रि०।
**सु(सू)तक** न०। सु (सू)-भावे क्त सु(सू)त जनन तस्मादा
गतम् कन्। जननाशौचे, अशौचमात्रे च 'सुतके मृतके
तथेति "मातुश्च सूतक तत्स्यादिति' च स्मृति।
**सुतजीवक** पु० सुत जीवयति धारयति जीव-णिच्-ण्वुल्।
पुत्रजीववृक्षे।
**सुतनु(नू)** पु० स्त्री० सुष्ठु तनुर्यस्या वा ऊङ्। नार्याम्। 'सुतनु'
सत्यममलङ्करणाय ते'' इति माघः।
**सुतपस्** पु० सुष्ठु तपति सु+तप-असि। सूर्ये। सुष्ठु तपोऽस्य
मुनौ पु०। सुन्दरतपोयुक्ते त्रि० भा०। सुन्दरे तपसि न०।
**सुतपादिका** सुता सहता पादा मूलान्यस्याः कप् न
पाद्भाव कपि अत इत्त्वम्। हंसपदीलतायाम्
**सुतराम्** अव्य० सु+अतिशये अर्थे आमु तरप्। अवधारितार्थस्य
अतिशयोचितत्वे ''धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्य-
माणः सुतरां दयालुरिति'' रघु-अत्र कातराक्ष्या धेन्वा
दृश्यमानत्वेन दयालुत्वस्य अतिशयौचित्यम् [लतायाम्।
**सुतश्रेणी** स्त्री० सुतश्रेणिमिच्छति *-अण् ङीप्। देवदाली
**सुतल** पु० न० सुष्ठु तल यत्र। पातालभेदे अट्टालिकाभेदे पु०।
**सुतहिबुकयोग** पु० सुते हिबुके च योग ग्रहविशेषस्य।
"सुतहिबुकवियद्विलग्नधर्मेष्वमरगुरुर्यदि दानवार्चितो
वा। यदशुभसमयाति तच्छुभ स्यात्" इत्युक्ते योगभेदे।
**सुतिक्त** पु० भा०। (श्वेतपापड़ा) पर्पटे अत्यन्ततिक्ते त्रि०
कोषातक्यां स्त्री० भवायां कन्। पारिभद्रे निम्बे भूनि-
म्बे च पु०।
**सुतीक्ष्ण** पु० भा०। शोभाञ्जनवृक्षे, श्वेतशोभाञ्जने, मुनिभेदे
च "सुतीक्ष्णमुनिकेतन" मितिभट्टि। अत्युग्रे त्रि०।
**सुतुङ्ग** पु० भा०। नारिकेलवृक्षे ज्योतिषोक्ते ग्रहाणाम् उच्च
राशिषु अशभेदेषु च विस्तरोहद्दभिधाने। अतिशयोच्चे त्रि०
**सुतेजन** पु० सु+तिज-ल्यु। धन्वनि, वृक्षे।
**सुतेजस्** पु० सुष्ठु तेजोऽस्य। आदित्यभक्तायाम्। शोभन
तेजोयुक्ते त्रि० [लतायाम्
**सुतैला** स्त्री० सुष्ठु तैल यस्याम् ७व०। महाज्योतिष्मती
**सु(सू)त्रामन्** पु० सुष्ठु त्रायते सु+त्रै-मनिन् इ०। इन्द्रे
**सुत्वन्** पु० सुनोतिस्म सु-क्वनिप्। कृताभिषेके कृतयज्ञार्थस्नाने
कृतसोमनिष्पीडने च। [अथोमदेशत्वात् च।
**सुद** शोभायां सौ० प० सक० सेट् इदित्। सुन्दति असुन्दीत्।
**सुदग्धिका** पु० सुष्ठु दग्धमस्यस्य ठन्। सुदग्धानामवृक्षे।
**सुदण्ड** पु० सुष्ठु दण्डोयस्मात् ५व०। वेत्रे
**सुदण्डिका** स्त्री० सुदण्डयति रोगान् ण्वुल्। गोरक्ष्याम्।
(गोरक्षचाकुले) सुदण्डवल्ल्यां स्त्रियाञ्च।
**सुदत्** पु० सुष्ठु दन्तोऽस्य वयसि दद्वादेश। शोभनदन्तयुक्त-
वयस्के गजादौ युवत्यां स्त्रियां ङीप्। 'सुदतीजनमज्ज-
नार्पितमिति नैषधम्। वयो भिन्ने तु सुदन्तइत्येव नटादौ।
**सुदर्भा** स्त्री० सु+दृभ-घञ्। इक्षुदर्भावृक्षे। सुष्ठु दर्भोऽस्य
सुन्दरकुशयुक्ते त्रि०।

**सुदर्शन** पु० सुष्ठु दृश्यते खलर्थे युच । विष्णुचक्रे (पद्मगुलुञ्च) लताभेदे, इन्द्रपुरे च अमरावत्यां स्त्री० ङीप् ।

**सुदल** पु० सुष्ठु दलान्यस्य । चीरमोरटावृक्षे । शालपर्ण्यां स्त्री०

**सुदामन्** पु० सुष्ठु ददाति दा मनिन् । मेघे पर्वतभेदे (दरारत् पर्वत) गोपभेदे, समुद्रे, ऐरावते गजे, पुराणप्रसिद्धे श्रीकृष्णमित्रे विप्रभेदे च शोभनदातरि त्रि० । नदीभेदे स्त्री० तत्र वा ङीप् । सुदाम्नी ।

**सुदाय** पु० सुष्ठु दीयते सु+दा-घञ् । यौतकप्रसादादिना देये धने । सुष्ठु दायो यस्य । पितृप्रभृतौ दातरि ।

**सुदि** अव्य० सुष्ठु दीव्यति सु+दिव डि । शुक्लपक्षे ।

**सुदिन** न० प्रादि० । प्रशस्तदिवसे । प्रशस्ते त्रि ।

**सुदिनाह** न० सुदिनं प्रशस्तमह्नः टच् समा० । प्रशस्तदिवसे ।

**सुदीर्घधर्मा** स्त्री० सुदीर्घं अतिविस्तीर्णो धर्मो गुणविशेषो यस्याः केवलत्वाभावादानिच् डाप् । अश्वनपत्न्याम्

**सुदूर** त्रि० प्रादि० । अतिदूरे । [कर्मणि च पु०

**सुद्युम्न** पु० वैवस्वतमनुपुत्रे । [विशेषे, अनन्ते नागे,विष्णु

**सुधन्वन्** त्रि० सुष्ठु धनुर्यस्य अनङ् । सुन्दरधनुर्द्धरे । राज-

**सुधर्मन्** स्त्री० सु+धृ मनिन् । देवसभायाम् । कुटुम्बिनि पु०

**सुधर्मा** स्त्री० सुष्ठु धर्मो यस्याः अनिच् समा० वा डाप् । देवसभायाम् । गौ० ङीप् । सुधर्मशीलत्वन्त ।

**सुधा** स्त्री० सुष्ठु धीयते पीयते धयते वा धे,धा वाक । अमृते । लेपनद्रव्ये (कलिचुन) मूर्वायाम्, स्नुह्याम्, गङ्गायाम्, इष्टकाया, विद्युति, रसे,जले, धात्र्याम् हरीतक्याम् मधुनि, शालपर्ण्याञ्च ।

**सुधांशु** पु०सुधेवाह्लादकाः अंशवोऽस्य । चन्द्रे कर्पूरे च । सुधाकरादयोऽप्यत्र । [भावित तैले ।

**सुधांशुतैल** न० सुधांशुना कर्पूरेण भावितं तैलम् । कर्पूर

**सुधांशुरत्न** न० ६त० । मौक्तिके तस्य चन्द्रप्रियत्वात्तथात्वम् ।

**सुधाङ्ग** पु० सुधेवाप्यायनमङ्गमस्य । चन्द्रे,कर्पूरे च ।

**सुधाजीविन्** पु०सुधां लेपनद्रव्यमाजीवति आ+जीव णिनि । पलगण्डे (राज) ।

**सुधाधार** पु० ६त० । चन्द्रे, कर्पूरे, अमृताधारपात्रे च ।

**सुधानिधि** पु०सुधा निधीयतेऽत्र नि+धा कि । चन्द्रे,कर्पूरे च

**सुधापयस्** पु० सुधा लेपनद्रव्यमिव शुभ्रं पयो निर्यासोऽस्य । स्नुहीवृक्षे ।

**सुधाभुज्** पु० सुधां भुक्तवान् भुज-भूते क्विप् । देवे ।

**सुधाभृ(सू)ति** पु० सुधा भ्रियते पुष्यते सूयते वाऽनेन भृ सू-वा क्तिच् । यज्ञे, चन्द्रे कर्पूरे च ।

**सुधामय** न० सुधात्मकं लेपनद्रव्यात्मकं वा माधुर्यं मयट् । राजभवने सौधे । अमृतवदाह्लादकवाक्यादौ त्रि० । स्त्रियां ङीप् । [शर्करायाम्, कर्पूरे च ।

**सुधामोदक** पु० सुधेव मोदयति मुद णिच्-ण्वुल् । यवास-

**सुधावर्षिन्** पु० सुधां वर्षति वृष-णिनि । चन्द्रे,कर्पूरे, ब्रह्मणि च । [गन्धो यस्याः । तरुण्याम् ।

**सुधावास** पु० ६त० । चन्द्रे, कर्पूरे च । सुधाया इव वासो

**सुधासिन्धु** पु० सुधामयः सिन्धुः । अमृतसमुद्रे ।

**सुधास्रवा** स्त्री० सुधां स्रवति स्रु अच् । दन्तीवृक्षे क्षुद्रजिह्वायाञ्च (आलजिभ) । [दयोऽप्यत्र ।

**सुधाहर** पु० सुधां हरति हृ अच् । गरुडे सुधाहारका-

**सुधिति** पु०स्त्री० सु+धा क्तिच् न ह्यादेश । कुठारे ।

**सुधी** पु० सुष्ठु धीर्यस्य । पण्डिते । सुष्ठु धीः । सुन्दरबुद्धौ स्त्री० । सुष्ठु ध्यायति सु+ध्यै क्विप् नि० । सुबुद्धियुक्ते त्रि०

**सुधोद्भव** पु० सुधया सह उद्भवति उद्+भू-अच् । धन्वन्तरि वैद्यराजे । ५त० । हरितक्यां स्त्री० ।

**सुनन्द** न० सुष्ठु नन्दयति सु+नन्द-अच् । बलरामसुषले श्रीकृष्णपार्श्वचरभेदे,राजगृहभेदे च । आनन्दजनके त्रि० गोरोचनायाम्, उमायाम् उमासखीभेदे, नार्याम्, अर्कपत्त्रीवृक्षे च (इश्वेरमूल) स्त्री० । [नेत्रयुक्ते त्रि० ।

**सुनयन** पु०सुष्ठु नयने यस्य । मृगे । नार्यां स्त्री० । शोभन

**सुनालक** पु० सुष्ठु नालेन कायति कै क । वकवृक्षे सुन्दर-नालयुक्ते त्रि० ।

**सुनासिका** स्त्री० सुष्ठु नासाऽस्त्यस्य ठन् । काकनासायाम् । प्रा० । सुन्दरनासिकायाम् स्त्री० ।

**सुनासी(शी)र** पु०सुष्ठु नासी(शी)र अग्रगमैन्यं यस्य । इन्द्रे

**सुनासी(शी)र्य** पु० सुना(शी)सीरो देवताऽस्य यत् । यज्ञभेदे । छ । सुनासी(शी)रीयोऽप्यत्र । [स्वार्थे कन् तत्रैव

**सुनिषण्ण** न० सुष्ठु निषण्णः स्वमो यस्मात् ५व० । (सुसुनि) शाके ।

**सुनिष्टप्त** त्रि० सु+निस्+तप क्त प्रत्यम् । अत्यन्तोद्दीप्ते,तप्ते च

**सुनीति** स्त्री० सुष्ठु नीतिः यस्याः । ध्रुवमातरि, सुन्दरनीतियुक्ते त्रि० । मा० । सुन्दरनीतौ स्त्री० ।

**सुनील** न० मा० ।मणिभेदे (नीलम) । दाडिमे, सुन्दरनीलवर्णे च पु० । तद्वति त्रि० । अतस्याम् अपराजितायाम् जरतीवृक्षे च स्त्री० । [घने, नीलत्वे च ।

**सुनीलक** पु० सुनीलमिव इवार्थे कन् । नीलभृङ्गराजे, भीवा

**सुन्द** पु० । दैत्यभेदे, वानरभेदे च ।

**सुन्दर** त्रि० सु+उन्द अरन् शक० । मनोहरे । स्त्रियां

ङीप्। सा च उत्तमस्त्रिया त्रिपुरसुन्दरीदेव्याञ्च। कामदेवे, वृत्तभेदे च (सुदरि) पु०। [परिणते त्रि०।
सुपक्व पु०सुन्दर पच्यते स्म पच क्त तस्य वः। शोभनाम्रे सुन्दर
सुपच त्रि० भुक्तं सत् सुखेन पच्यते पच-घञर्थे क। लघु-पाके द्रव्यमात्रे।
सुपत्त्र न० सुष्ठु पत्त्रमस्य। तेजपत्रे श्रादित्यपत्त्रे पु० सुन्दर पत्त्रयुक्ते त्रि० रुद्रजटायां, शतावर्य्यां, शालञ्चा शाल-पर्ण्याञ्च स्त्री०। [काया स्त्री० अत इत्त्वम।
सुपत्त्रक पु० सुष्ठु पत्त्रमस्य स्वार्थे कन्। शोभाञ्जनवृक्षे अत
सुपथ पु० सुष्ठु पन्थाः प्रा० अच् समा०। सद्वर्त्मनि सदा-चारे च सुष्ठु पन्था यत्र अच् समा०। सुन्दरपथयुक्ते त्रि०
सुपथिन् पु० प्रा० समासान्ताभाव। सत्पथे।
सुपद्मा स्त्री० सुष्ठु पद्यते पद-म। वचायाम्। पद्मिन्यां स्त्री०
सुपर्ण पु०सुष्ठु पर्णं पत्त्रं पत्रो वा यस्य। गरुडे सुन्दरपर्णे युक्ते त्रि० नागकेशरे पु०। वक्तव्रीह्यर्थे अण्। आरग्वधे वृक्षे, सप्तच्छदवृक्षे, गरुडे च। शालपर्ण्यां, रेणुकायां, पलाश्यां, स्वर्णजीवन्त्याञ्च स्त्री० कापि अत इत्त्वम्।
सुपर्णकेतु पु० सुपर्णो गरुड केतुर्यस्य। विष्णौ।
सुपर्णी स्त्री० सुष्ठु पर्णा यस्या गौ० ङीष्। पद्मिन्यां, गरुड़मातरि च।
सुपर्णीतनय पु० ६त०। गरुडे। [सुन्दरे पर्व्वणि न०।
सुपर्व्वन् पु सुष्ठु पर्व्व यस्य। देवे, वाणे, वंशे, धूमे च प्रा।
सुपर्व्वा स्त्री० सुष्ठु पर्व्व यस्या डाप्। श्वेतदूर्व्वायाम्।
सुपाक्य न० सुपाकमर्हति यत्। विड्लवणे।
सुपार्श्व पु० सुष्ठु पार्श्वोऽस्य। सुचवृक्षे (पाकुड) वृक्षभेदे, वस्यातिपुत्त्रे विद्गभेदे च सञ्ज्ञायां कन्। गर्द्दभाण्डवृक्षे पु सुन्दरपार्श्वान्विते त्रि०।
सुपिङ्गला स्त्री० प्रा०। ज्योतिष्मत्यां, जीवन्त्याञ्च। [त्रि०
सुपीत न०प्रा। गर्ज्जरे (गाजर)। सुन्दरपीतवर्णे पु०। तद्वति
सुपुट पु० सुष्ठु पुटमस्य। कोलकन्दे, विष्णुकन्दे च।
सुपुत्त्रिका स्त्री० सुष्ठु पुत्र पत्त्र यस्याः कप् अत इत्वम। जतुकायाम् (तेलोपोका)।
सुपुष्करा स्त्री० सुष्ठु पुष्करमस्यस्याः [टाप्] स्थलपद्मिन्याम्।
सुपुष्प न० प्रा०। लवङ्गकुसुमे, प्रपौण्डरीके तूले, स्त्रीणां रजसि च। सुपुष्पं दारकोपि कुसुमपल्लवाभङ्गिरसि ति स्वाभा स्व। सुष्ठु पुष्पमस्य। (पारातमान्दार) वृक्षे कप्। पाट-लायां स्त्री० अत इत्वम्।
सुपुष्पी स्त्री० सुष्ठु पुष्पमस्या गौ०ङीष्। श्वेतापराजिता-यां, शतपुष्पायाम्, मिश्रेयायां, द्रोणपुष्प्याञ्च।
सुपूर पु० सुष्ठु पूर्य्यते सु+पूर क। बीजपूरे।
सुपूरक पु० सुष्ठु पूरयति पूर ण्वुल्। वकवृक्षे।
सुप् स्त्री० व्याकरणपरिभाषिते सुप्रभृतौ प्रत्यये।
सुप्त न० स्वप भावे क्त सम्प्रसारणम्। निद्रायां, शयने च। क र्त्तरि क्त। निद्रिते त्रि०।
सुप्तजन पु० सुप्तो जनो यत्र। अर्द्धरात्रे।
सुप्ति स्त्री० स्वप क्तिन्। शयने निद्रायाम्, स्वप्ने च 'करोति सुप्तिर्जनदर्शनातिथिमि ति नैषधम्।
सुप्रतिभा स्त्री० सुष्ठु प्रतिभा यस्याः ६ब०। सुरायाम् प्रा०। उज्ज्वलबुद्धौ। ६ब०। तद्वति त्रि० [पादके छन्दोभेद स्त्री
सुप्रतिष्ठा स्त्री०प्रा०। प्रशंसायाम्। ६ब० तद्वति त्रि०। पञ्चाचर
सुप्रतीक पु० सुष्ठु प्रतीक यस्य। ऐशानकोणस्थिते दिग्गजे शिवे कामे च सुन्दराङ्गे त्रि०। प्रा०। सुन्दरेऽङ्गे न०।
सुप्रभा स्त्री० सुष्ठु प्रभा यस्याः। अग्निजिह्वाभेदे। सुन्दर-दीप्तिमति त्रि०। प्रा०। शोभनदीप्तौ स्त्री०। [वाक्ये च
सुप्रभात न०प्रा०। शुभसूचकप्रात काले, तत्र पाठ्यमाङ्गल्य
सुप्रयुक्तशर पु० सुप्रयुक्त शरो येन। शीघ्रहस्ते वाणमोच-नाभ्यासपाटवयुक्ते।
सुप्रयोगविशिख पु० सुष्ठु प्रयोगो निक्षेपो यस्य तादृशो विशिखोयस्य। शीघ्रहस्ते वाणमोचशीघ्रताह्लपपाटवयुक्ते।
सुप्रलाप पु० सु+प्र+लप घञ्। सुवचने।
सुप्रसन्न पु सु+प्र+सद-क्त। कुवेरे। प्रसादयुक्ते त्रि०।सनाया कन्। कृष्णार्जके पु०। [विस्तारयुक्ते त्रि०
सुप्रसरा स्त्री० सु+प्र+सृ-अच्। प्रसारिणी-लतायाम
सुप्रसाद पु० सुखेनानायासेन प्रसादो यस्य। शिवे। प्रा०। सुन्दरप्रसन्नतायाम्।
सुफल पु० सुष्ठु फलमस्य। दाड़िमे, वदरे मुद्गे कर्णिकारे कपित्थे च। सुन्दरफलवति त्रि०। इन्द्रवारुण्यां कुष्मा ण्डयां, कदल्यां, कपिलद्राक्षायाञ्च स्त्री०।
सुबन्ध पु० सुखेन बध्यतेऽसौ बन्ध-घञ्। तिलवृक्षे।
सुभग पु० सुष्ठु भग माहात्म्यादि यस्य। चम्पके, अशोके, रक्ताम्लाने, टङ्कणे च। सुन्दरे, प्रिये, शोभनैश्वर्य्ययुक्त च त्रि०। कैवर्त्तीमुस्तायां, शालपर्ण्याम, हरिद्रायां, नील-दूर्व्वायां, तुलस्यां, प्रियङ्गौ, कस्तूर्य्यां, स्वर्णकदल्यां, वन-मल्लिकायां, पतिप्रियायां स्त्रियां च स्त्री०।
सुभगम्मन्य त्रि० असुभग असुभगोभवति भू ख्युन् सुकम् समुम्। प्रियम्भविष्णौ।

स्थिररङ्गा स्त्री० स्थिरोरङ्गो रागोयस्याः । नील्याम् ।

स्थिररागा स्त्री० स्थिरोरागोरञ्जन यस्याः । दारुहरिद्रायाम्

स्थिरसाधनक पु० स्थिरं साधयति ल्यु ततः कन् । सिन्दुवारवृक्षे ।

स्थिरसार पु० स्थिरः सारोयस्य । (सेगुण) शाकवृक्षे ।

स्थिराङ्घ्रिप पु० कर्म० । हिन्तालवृक्षे ।

स्थिरायुस् पु० स्थिरमायुर्यस्य दीर्घकालस्थायित्वात् । शाल्मलिवृक्षे । चिरजीविनि त्रि० ।

स्थुड वरणे तुदा० कुटा० पर० सक० सेट् । स्थुडति अस्थुडीत् तुस्थोड । अषोपदेशत्वान्न ष ।

स्थूणा स्त्री० स्था–नक् ऊदन्तादेश ह्र० । (खुटी) गृहस्तम्भे "स्थूणावशेष गृहमिति" शाङ्गि० लौहप्रतिमायाञ्च ।

स्थूरिन् पु० स्था–ऊरन् किच्च स्थूरो वृषादिर्भारवाहक स्थूरोऽस्यस्य साहाय्येन इनि । वृषादिवत्पृष्ठेन भारवाहके ऽश्वे । स्थूरस्य भाव ष्यण् स्थौरं तदस्यास्ति इनि । स्थौरीत्यप्यत्र । [स्थूलत् त ।

स्थूल वृंहणे अद० चु० उभ० अक० सेट् । स्थूलयति-ते अतु-

स्थूल त्रि० स्थूल–अच् । पीवरे, (मोटा) कूटे, समूहे च न० पनसे पु० । गजपिप्पल्याम्, एर्वारौ, बृहदेलायाञ्च स्त्री० । स्वार्थे कन् । पीवरे त्रि० । सञ्ज्ञायां कन् (उलुखड) तृणभेदे पु०

स्थूलकङ्गु पु० कर्म० । वरकधान्ये (वोरधान) ।

स्थूलकणा स्त्री० कर्म० । स्थूलजीरके ह्रेम० । पीनकणवति त्रि० ।

स्थूलकण्टक पु० स्थूलः कण्टकोऽस्य । जालवर्बुरे । सञ्ज्ञायां कन् अत इत्त्वम् । शाल्मलीवृक्षे स्त्री० ।

स्थूलकण्टा स्त्री० स्थूलः कण्टः कण्टकोऽस्याः । बृहत्याम् ।

स्थूलकन्द पु० स्थूलः कन्दोऽस्य । रक्तलशुने, सूरणे, हस्तिकन्दे, मानके च । [बृहच्चञ्चौ त्रि० ।

स्थूलचञ्चु पु० स्थूला चञ्चुरिव शिखाऽस्य । महाचञ्चुशाके ।

स्थूलजीरक पु० कर्म० । जीरकभेदे (कालजिरा) ।

स्थूलताल पु० कर्म० । हिन्ताले ।

स्थूलदण्ड पु० स्थूलोदण्डोऽस्य । देवनले । स्थूलनालोऽप्यत्र ।

स्थूलदर्भ पु० स्थूलः दर्भ्यतेऽनेन दृभ–घञ् । मुञ्जे (मुज) ।

स्थूलदला स्त्री० स्थूलानि दलानि यस्याः । घृतकुमार्याम् ।

स्थूलनास पु० स्थूला नासाऽस्य । शूकरे, स्थूलनासिकोऽप्यत्र । बृहन्नासावति त्रि० । [स्थूलत्वाच्चधात्वम् ।

स्थूलपट्ट पु० स्थूलं पट्टं यस्मात् । कार्पासे तत्स्थूलजपट्टस्य

स्थूलपाद पु० स्थूलौ पीनौ पादौ यस्य न पात्त्वं । गजे श्लीपदरोगे च । [स्त्री० । यत्नतिकायां स्त्री० ङीप् ।

स्थूलपुष्प पु० स्थूलं पुष्पं यस्य । बकवृक्षे । पर्वतजातापराजितायां-

स्थूलफल पु० स्थूलं फलमस्य । शाल्मलीवृक्षे । बृहत्फलान्विते त्रि० । शणपुष्प्यां स्त्री० ङीप् । [पृथिव्यादौ भूते ।

स्थूलभूत न० कर्म० । वेदान्तोक्ते मत्येकमेकात्मकताभापन्ने

स्थूलमरिच न० कर्म० । कक्कोले ।

स्थूललक्ष(क्ष्य) त्रि० स्थूलं लक्षयति दानाय सङ्कलते, स्थूलं लक्ष्यमस्य । बहुदातरि । [कायाम् ।

स्थूलवर्मकृत् पु० स्थूलं वर्म करोति कृ–क्विप् । मांसपयष्टि

स्थूलवल्कल पु० स्थूलं वल्कलमस्य । रक्तलोध्रे । स्थूलत्वचान्विते त्रि०

स्थूलवृक्षफल पु० स्थूलस्य वृक्षस्येव फलमस्य । स्निग्धपिण्डीतकवृक्षभेदे (मयना) ।

स्थूलवैदेही स्त्री० विदेहे भवा अण् कर्म० । गजपिप्पल्याम् ।

स्थूलशाटक पु० कर्म० । स्थूलवस्त्रे स्थूलशाटिकाद्योऽप्यत्र स्त्री० ।

स्थूलशालि पु० कर्म० । महाशालौ ।

स्थूलशीर्षिका स्त्री० स्थूलं शीर्षं यस्याः कप् अत इत्त्वम् । क्षुद्रपिपीलिकायाम् । [लूना] ।

स्थूलषट्पद पु० षट्पद इव स्थूलः राज० । वरटायाम् (बो-

स्थूलस्कन्ध पु० स्थूलः स्कन्धोऽस्य । लकुचे ।

स्थूलाख्या स्त्री० स्थूल आख्योऽवयवोऽस्याः । गन्धपत्रायाम् ।

स्थूलाम्र पु० कर्म० । आम्रभेदे ।

स्थूलैला स्त्री० कर्म० । बृहदेलायाम् ।

स्थूलोच्चय पु० स्थूलानामुपलानामुच्चयोऽत्र । गण्डशैले । स्थूलस्य गजस्य उच्चय । गजमध्यगतौ । वरण्डे, गजदन्तच्छिद्रे च ।

स्थेय पु० स्थीयते विवादनिश्चायकतयाऽत्र स्था–यत् । विवादेषयनिर्णायके, (जुरी) पुरोहिते च । स्थिरे त्रि० ।

स्थेयस् त्रि० अतिशयेन स्थिरः इयसुन् स्थादेशः । स्थिरतरे त्रि० स्त्रियां ङीप् । इष्ठन् स्थेष्ठोऽप्यत्र त्रि० । सान्त्वने न० ।

स्थैर्य्य न० स्थिरस्य भावः ष्यञ् । स्थिरतायाम् ।

स्थौणेय(क) पु० स्थूणाया तत्समीपे भवः ढक् । ग्रन्थिपर्णनामगन्धद्रव्ये ।

स्थौल्य न० स्थूलस्य भावः ष्यञ् । पीवरत्वे ।

स्नपन पु० स्ना–णिच्–पुक् ल्युट् । जलादिनाऽभिषेककरणे

स्नव पु० स्नु–अप् । स्रवणे, क्षरणे च ।

स्नसा स्त्री० स्नस–अच् । स्नायौ ।

स्नातक पु० स्ना–भावे क्त स्नानं वेदाध्ययनानन्तरं समावर्त्तनाङ्ग

स्नानं तदस्यास्ति कन् । वेदाध्ययनानन्तरं गार्हस्थ्याय कृत-
समावर्त्तनाङ्गस्नाने ।

**स्नातकव्रत** न० ६त० । स्नातककर्त्तव्ये स्मृत्युक्ते व्रतभेदे, "अ-
लाभे चैव कन्याया. स्नातकव्रतमाचरेदिति" स्मृति ।

**स्नान** न० स्ना-ल्युट् । शोधने, अवगाहने मज्जने, च तच्च ।
मन्त्रादि कारणभेदादष्टविध विस्तरो वृहदभिधाने ।

**स्नानतृण** न० स्नानार्थं तृणम् । कुशे ।

**स्नानीय** त्रि० स्नानाय हितम् छ । स्नानसाधने तैलो-
द्वर्त्तनादौ । [वायुवाहिनाडीभेदे ।

**स्नायु** स्त्री० स्नाति-शुध्यति दोषोऽनया स्ना उण् । शरीरस्थे

**स्निग्ध** त्रि० स्निह-क्त । स्नेहयुक्ते, वयस्ये, मसृणे, चिक्कणे
च । रक्तैरण्डे, सरलद्रुमे च पु० । भक्तमण्डे न० ।
मेदायां स्त्री० ।

**स्निग्धतण्डुल** पु० कर्म० । षष्टिधान्ये ।

**स्निग्धता** स्त्री० स्निग्धस्य भाव । स्नेहे, प्रियत्वे च । [वृक्षे च ।

**स्निग्धदारु** पु० स्निग्ध दारु काष्ठमस्य । सरलद्रुमे, देवदारु

**स्निग्धपत्त्रक** पु० स्निग्धं पत्त्रमस्य कप् । घृतकरञ्जे, गुच्छक-
रञ्जे, गर्जरतृणे च । बदर्य्यां, पालक्यां, काश्मीर्य्याञ्च स्त्री० ।

**स्निग्धपिण्डीतक** पु० कर्म० । मदनवृक्षभेदे, पिण्डीतकभेदे

**स्निग्धफला** स्त्री० स्निग्धं फलमस्याः । नाकुल्याम् ।

**स्निट** स्नेहे चु० उ० सक० सेट् । स्नेटयति- असिस्निटत्-त ।
अयोपदेशत्वान्न ष. । [भाग्येऽस्नायौ स्त्री० ।

**स्नु** पु० सानु+स्नु आदेशः स्ना-कु वा । पर्व्वतस्य समभू-

**स्नुक्छद** पु० स्नुह्यति क्विप् कुत्सम् स्नुक्,छदोऽस्य । चोरक-
स्नुहीवृक्षे ।

**स्नुत** पु० स्नु-क्त । क्षरिते जलादौ ।

**स्नुषा** स्त्री० स्नु-सक् । पुत्त्रवध्वाम्, स्नुहीवृक्षे च ।

**स्नुह्(हा)** स्त्री० स्नुह-क्विप् वा टाप् । स्नुहीवृक्षे ।

**स्नुहि(ही)** स्त्री० स्नुह-इन् वा ङीप् । (मनसासिज) वृक्षे ।
"स्नुहीविटपसंस्थिता मिति" पुराणम् ।

**स्नेह** पु० स्निह-घञ् । प्रेमणि, तैलादिरसभेदे, न्यायोक्ते गुण
भेदे च यद्वशात् दाक्षाद्युत्पत्तम् ।

**स्नेहन** न० स्निह-णिच्-ल्युट् । तैलादिमर्द्दने अभ्यङ्गे ।

**स्नेहप्रिय** पु० स्नेहः तैलादि प्रियोऽस्य । प्रदीपे ।

**स्नेहभू** स्त्री० ६त० । वेदाख्ये देहस्थे धातुभेदे, श्लेष्माणे च

**स्नेहरङ्ग** पु० स्नेहेन रज्यते रञ्ज-कर्म्मणि घञ् । तिले ।

**स्नेहवत्** त्रि० स्नेहोऽस्त्यस्य मतुप् मस्य व । स्नेहयुक्ते स्त्रियां
ङीप् । सा च मेदायां पु० स्त्री० ।

**स्नेहविद्ध** न० स्नेहेन विद्धम् । देवदारुणि । [स्नेहकार्य्ये न० ।

**स्नेहवीज** पु० स्नेहाढ्यं वीजमस्य । प्रियालवृक्षे । ६त० ।

**स्नेहाश** पु० स्नेहमश्नाति अश-अण् । प्रदीपे ।

**स्नेहिन्** पु० स्निह-णिनि । वयस्ये सख्यौ, स्नेहयुक्ते त्रि० ।
स्त्रियां ङीप् । [स्निग्धे ।

**स्पद** ईषत्कम्पे भ्वा० आत्म० अक० सेट् इदित् । स्पन्दते अ-

**स्पन्द** पु० स्पदि-घञ् । ईषच्चलने, ईषत्कम्पे, क्रियाभेदे च । नेत्र-
स्पन्दादौ शुभाशुभविवेचन वृहदभिधाने ।

**स्पर्द्ध** सङ्घर्षे (पराभिभवेच्छायाम्) भ्वा० आत्म० अक० सेट् ।
स्पर्द्धते अस्पर्द्धिष्ट । [प्रीतौ च ।

**स्पर्द्धा** स्त्री० स्पर्द्ध-अ । सङ्घर्षे पराभिभवेच्छायां, साम्ये, क्षमो-

**स्पर्श** स्पर्शने, स्नेये च चु० उ० सक० सेट् । स्पर्शयति ते अप-
स्पर्शत् त ।

**स्पर्श** पु०-स्पर्श-स्पृश-वा अच् घञ् वा । न्यायोक्ते त्वगिन्द्रिय-
ग्राह्ये गुणभेदे, स्पर्शने, रोगे, युद्धे, गुप्तचरे, उपतापके च ।
वायौ पु० स्पर्शके त्रि० । स्पृश-णिच्-अच् । दाने स्पृष्टस्य । वा-
युना जिह्वाग्रादयोऽन्त, घञ्या कादिषु मावसानेषु वर्ण्यवर्णेषु पु०

**स्पर्शन** न० स्पर्श-स्पृश-वा ल्युट् । स्पर्शने, स्पर्शे च । णिच् ल्युट् ।
स्पर्शने, दाने च । स्पृश-कर्त्तरि ल्यु । वायौ पु० ।

**स्पर्शलज्जा** स्त्री० स्पर्शमात्रेण लज्जते लज्ज-अच् । लज्जालुवृक्षे

**स्पर्शमुद्रा** स्त्री० स्पर्शे मुद्रा । शतमूल्याम् । [दायक ।

**स्पर्शन्** त्रि० स्पृश-तृच् । उपतापयितरि । रोगे पु० । अग्र । स्प-

**स्पश** ग्रन्थे बाधने च भ्वा० उभ० सक० सेट् । स्पशति-ते अस्प-
शीत्-अस्पाशीत् । अस्पशिष्ट । [स्पश इति" माघ ।

**स्पश** पु० स्पश-अच् । चरमात्ये, दूते, गूढचरे, च । "राजनीति-

**स्पष्ट** त्रि० स्पश-क्त नि० इडभाव । व्यक्ते, स्फुटे च ।

**स्पृ** प्रीतौ अक० प्रीणने रक्षणे पालने च सक० स्वा० पर०
अनिट् । स्पृणोति अस्पार्षीत् ।

**स्पृक्का** स्त्री० स्पृश-क्वन् ह० सस्य क । देवकायाम् ।

**स्पृश** स्पर्शे तु० पर० सक० अनिट् । स्पृशति अस्प्राक्षीत् अ-
स्पार्क्षीत् अस्पृक्षत् । [टाप् ।

**स्पृशा** स्त्री० स्पृश-क । सर्पे, विजीवृक्षे । कण्टकार्य्यां स्त्री०

**स्पृष्ट** त्रि० स्पृश-क्त । कृतस्पर्शे । भावे क्त । स्पर्शे न० ।

**स्पृष्टास्पृष्ट** न० स्पृष्टेन वा सम्यक् स्पृष्टम् । परस्परस्पर्शने ।

**स्पृष्टास्पृष्टि** न० स्पृश-भावे-क्त नञ्+स्पृश-क्तिन्, स्पृष्टञ्च
अस्पृष्टिश्च तयो समाहार । स्पर्शास्पर्शयो । "मद्दे
पापदाहे च स्पृष्टास्पृष्टि न दुष्यतीति" स्मृति । [शस्पृक्षत्

**स्पृह** इच्छायां अद० चुरा० उभ० सक० सेट् । स्पृहयति-ते अ-

स्पृहणीय त्रि० स्पृह-अनीयर् । वाञ्छनीये, श्लाघ्ये च "अहो वतासि स्पृहणीयवीर्य्यः" इति कुमार.।

स्पृहयालु त्रि० स्पृह-आलुच् । स्पृहाशीले । [कुमार.।

स्पृहा स्त्री० स्पृह-अङ् । इच्छायाम् "मिथुने स्पृहावतीति"

स्पृह्य पु० स्पृह-यत् । मातुलुङ्गवृक्षे । वाञ्छनीये त्रि०।

स्फट विशीर्णतायाम् अक० भ्वा० पर० सेट् । स्फटति अस्फटीत्-अस्फाटीत् । इदिदयमप्ययमर्थे स्फण्टति अस्फण्टीत् । [भेदे।

स्फट पु० स्त्री० स्फट-अच् । सर्पफणायाम् ।

स्फटि(टी) स्त्री० स्फट-इन् वा ङीप्। (फट् क। रि) वणिग्द्रव्य

स्फटि(टी)क पु० स्फटिरि(टी)व इवार्थे कन्। स्वनामख्याते मणौ स्वार्थेऽण् । स्फाटिकमप्यत्र न०। [स्फाटिकमयपर्वते च।

स्फटिकाचल पु० स्फटिक इव शुभ्रः अचलः । कैलासपर्वते,

स्फटिकाद्रिभिद्(द) पु० स्फटिकाद्रिं स्फाटिकपर्वतं भिनत्ति साहस्यात् भिद-क्विप् क वा। कर्पूरे।

स्फटिकाभ्र पु० स्फटिकवर्णः अभ्र इव। कर्पूरे।

स्फटिकारि पुं० देश०। (फट् किरि) वणिग्द्रव्यभेदे तस्य स्फटिकतुल्यदीप्तिमत्त्वात्तथात्वम्। [यति-ते अपस्फण्डत्-त।

स्फण्ड परिहासे चु० उभ० अक० सेट् इदित्। स्फण्ड-

स्फर चले स्फूर्त्तौ च तुदा० प० अक० सेट्। स्फरति अस्फारीत्।

स्फरण न० स्फर-ल्युट्। स्फुरणे। [लीत्

स्फल चले स्फूर्त्तौ च तुदा० पर० अक० सेट्। स्फलति अस्फा-

स्फाटिकोपल पु० स्फटिकमेव अण् कर्म० । स्फटिके।

स्फाति स्त्री० स्फाय-क्तिन्। वृद्धौ।

स्फाय वृद्धौ भ्वा० आ० अक० सेट्। स्फायते अस्फायि-अस्फायिष्ट। निष्ठायामनिट् स्फीतः। [त्रि०।

स्फार पु० स्फाय-रक्। स्वर्णबुद्बुदे। विपुले, विकटे, प्रचुरे च

स्फारण न० स्फुर-णिच्-स्फारादेशः ल्युट्। विकाशने।

स्फाल पु० स्फल-घञ्। स्फूर्त्तौ। [कट् चले।

स्फिगाघातन पु० स्फिचं घातयति हन-स्वार्थे णिच्-ल्यु।

स्फिच् स्त्री० स्फाय-डिच्। कटिप्रोथे, तत्स्थे वातजे रोगभेदे च

स्फिट हतौ हिंसे अनादरे च चु० उभ० सक० सेट्। स्फेटयति ते अपिस्फिटत् त।

स्फिर त्रि० स्फाय-किरच्। प्रचुरे, वृद्धे च।

स्फीत त्रि० स्फाय-क्त स्फीभाव। वृद्धे-समृद्धे च।

स्फुट भेदे चु० उभ० अक० सेट्। स्फोटयति ते अपुस्फुटत् त।

स्फुट विकाशे भ्वा० प० अक० सेट्। स्फोटति अस्फुटत् अस्फोटीत्। [पुस्फोट।

[illegible]

स्फुट विदलने भ्वा० आत्म० अक० सेट्। स्फोटते अस्फोटिष्ट

स्फुट भावे चुरा० उभ० अक० सेट्। इदित् स्फुण्टयति ते अपुस्फुण्टत् त।

स्फुट हिंसे चु० उभ० सक० सेट् प्रायेणाङ् पूर्व्वः। आस्फोटयति ते आपुस्फुटत् त। [अपुस्फुटत् त।

स्फुट विकाशे अद० चु० उभ० सक० सेट्। स्फुटयति ते

स्फुट त्रि० स्फुट-क। विकशिते, व्यक्ते, भिन्ने, शुक्ले च। ज्योतिषोक्तेषु मेषादिराशिषु अंशविशेषस्थितेषु सूर्य्यादिग्रहेषु पु०। तेषां तत्तदंशकलादिषु गतौ स्त्री०। उत्प्रेक्षाया द्योतने न०। सर्पफणायां स्त्री०।

स्फुटन न० स्फुट-ल्युट्। विकशने, विदलीभावे च,

स्फुटबन्धनी स्त्री० स्फुटं बन्धनं यस्याः गौ० ङीप्। कपोतवङ्काम्

स्फुटित त्रि० स्फुट-क्त। विकशिते, भिन्ने "दग्धे वा स्फुटितेऽथ वेति" पुराणम् व्यक्तीकृते, परिहासिते च।

स्फुटि(टी) स्त्री० स्फुट-इन् वा ङीप्। पादस्फोटरोगे (फोड़ा) कर्कटीफले च। (फुटि)। [इत् त।

स्फुट्ट अनादरे चु० उ० सक० सेट्। स्फुट्टयति ते अपुस्फु-

स्फुड् वरणे तु० कु० पर० सक० सेट्। स्फुडति अस्फुडीत् पुस्फोड। [अस्फुण्डिष्ट।

स्फुण्ड विकाशे भ्वा० आत्म० अक० सेट् इदित्। स्फुण्डते

स्फुण्ड परिहासे चु० उ० सक० सेट् इदित्। स्फुण्डयति ते अपुस्फुण्डत् त।

स्फुर स्फूर्त्तौ तु० कुटा० प० अक० सेट्। स्फुरति अस्फुरीत् पुस्फोर। "बाहु पुस्फोर वाञ्छ्यरिति" भट्टिः।

स्फुरण न० स्फुर-ल्युट्। ईषत्स्पन्दने। युच्। तत्रैव स्त्री०।

स्फुर्च्छ विस्मरणे भ्वा० प० सक० सेट्। स्फूर्च्छति अस्फूर्च्छीत्

स्फुर्ज वज्रशब्दे भ्वा० प० अक० सेट्। स्फूर्जति अस्फूर्जीत्।

स्फुल स्फूर्त्तौ-चले च अक० सञ्चये सक० तुदा० कुटा०प० सेट्। स्फुलति अस्फुलीत्। पुस्फोल।

स्फुल न० स्फुल-क। वस्त्रागारे (ताँबु)।

स्फुलन न० स्फुल-ल्युट्। स्फुरणे।

स्फुलिङ्ग पु० स्त्री० स्फुल-इङ्गच्, स्फुलत्तव्यक्त-शब्दो लिङ्गति गच्छति यथात् लिगि-अच् पृ० वा। अग्निकणे।

स्फुलिङ्गिनी स्त्री० स्फुलिङ्ग+अस्त्यर्थे इनि। अग्निज्वालायाम्। स्फुलिङ्गयुक्ते त्रि०।

स्फूर्ज्जथु पु० स्फूर्ज-अथुच्। वज्रपातशब्दे। [प्रतिभायाञ्च।

स्फूर्त्ति स्त्री० स्फुर्च्छ-स्फुर-वा क्तिन्। स्फुरणे विकाशे

स्फूर्त्तिमत् पु० स्फूर्त्तिरस्त्यस्य मतुप्। पाशुपतभेदे [illegible]

प्रतिभायुक्ते विकाशयुक्ते च त्रि०।

**स्फेयस्** त्रि० अतिशयेन स्फिर, ईयसु स्फादेश। अतिप्रचुरे, स्त्रियां ङीप्। इष्ठन्। स्फेष्ठोऽप्यत्र त्रि०।

**स्फोट** पु० स्फुटत्यर्थो यस्मात् स्फुट-घञ्। व्याकरणोक्ते वर्णातिरिक्ते पूर्वपूर्ववर्णानुभवसहितचरमवर्णव्यङ्ग्ये अर्थप्रत्यायके अखण्डे शब्दभेदे "शृणोति य इमं स्फोटमिति" भागवतम्। "न स्फोटः प्रतीत्यप्रतीतिभ्यामिति" शारीरकसूत्रम् यथा च वर्णसमुदायानां नार्थबोधकत्वं तथा प्रपञ्चितमस्माभिः, शब्दार्थरत्ने। व्रणभेदे च (फोड़ा)।

**स्फोटक** पु० स्फुट-ण्वुल्। (फोड़ा) व्रणभेदे विदारके च।

**स्फोटन** न० स्फुट-ल्युट्। विदारणे, विकाशने च।

**स्फोटनी** स्त्री० स्फुट्यतेऽनया स्फुट-ल्युट् ङीप्। मणिवेधनकरणे यन्त्रभेदे (भोमरी)। [कन्। भल्लातके।

**स्फोटवीजक** पु० स्फोटस्य व्रणभेदस्य बीजम् ततः स्वार्थे

**स्फोटायन** पु० स्फोटएवायनं अर्थबोधकतयाश्रयणं यस्य। अर्थबोधकत्वेन स्फोटाभ्युपगन्तरि वैयाकरणे मुनिभेदे "अवङ् स्फोटायनस्येति", पाणिनिः।

**स्फ्य** न० स्फा-य यत् नि०। खड्गाकारे यज्ञार्थं काष्ठभेदे।

**स्म** अव्य० स्मि-ड। अतीते, पादपूरणे च।

**स्मय** पु० स्मि-अच्। गर्वे, अद्भुते च।

**स्मर** पु० स्मरति प्रियमनेन स्मृ-अप्। कामदेवे। भावे अप्। स्मरणे। [योन्यङ्गे।

**स्मरच्छत्र** न० स्मरस्य छत्रमिव। स्त्रीचिह्नभेदे स्मरमन्दिराद-

**स्मरण** न० स्मृ-ल्युट्। ज्ञातवस्तुनोऽनुभवाधीनसंस्कारजन्ये उद्बोधकसहकारेण जायमाने ज्ञानभेदे आध्याने चिन्तने च।

**स्मरदशा** स्त्री० स्मरकृता दशा। कामिनां स्मरकृतासु नयनप्रीत्यादिषु दशसु दशासु। विस्तरो वृहदभिधाने।

**स्मरप्रिया** स्त्री० ६त०। स्मरभार्यायां रतौ।

**स्मरवीथिका** स्त्री० स्मरस्य वीथिकेव प्राप्तिहेतुत्वात् वेश्यायाम्

**स्मरहर** पु० स्मरं हरति नाशयति हृ-अच्। महादेवे स्मरहरादयोऽप्यत्र। [न हि स्त्रीणां स्मरोद्दीपनम्।

**स्मराङ्कुश** पु० स्मरस्याङ्कुशइवउत्तेजकत्वात्। नखे, प्रगल्भपते-

**स्मराम्र** पु० स्मरप्रिय आम्रः। राजाम्रे।

**स्मरासव** पु० स्मरोद्दीपक आसवः। लालायाम् कामिनां तत्पाने हि स्मरोद्दीपनात्तस्यास्तथात्वम्।

**स्मार्त्त** त्रि० स्मृतौ विहित, स्मृतिं वेत्त्यधीते वा अण्। स्मृतिविहिते स्नानादौ "कर्म्मोऽपि स्मार्त्तमाचरेदिति" "स्मार्त्तं वैदिकवत् चरेदिति" च स्मृतिः स्मृतिशास्त्राभिज्ञे च।

**स्मि** अनादरे विस्मये च चु० आ० सक० सेट्। स्माययते असिस्मयत। अधोपदेशत्वात् न षः। अन्यतोविस्मये स्माययतीत्येव। अयं भ्वादिरपि अनिट्। स्मयते अस्मेष्ट।

**स्मिट** अनादरे सक० स्नेहे अक० चु० उभ० सेट्। स्मेटयति ते असिस्मिटत् त।

**स्मित** न० स्मि-क्त। ईषद्धासे "सख विकसितस्मितमिति" मालतीमाधवम्। विकसिते, विस्मिते च त्रि०।

**स्मील** निमेषणे भ्वा० पर० अक० सेट्। स्मीलति अस्मीलीत्

**स्मृ** स्मरणे भ्वा० प० सक० अनिट्। स्मरति अस्मार्षीत्।

**स्मृ** औत्सुक्ये भ्वा० प० सक० अनिट् घटा०। स्मरति अस्मार्षीत्

**स्मृत** त्रि० स्मृ-क्त। ज्ञातस्मरणे स्मृतिविषये।

**स्मृति** स्त्री० स्मृ-क्तिन्। अनुभूतवस्तुनउद्बोधकसहकारेण संस्काराधीने ज्ञानभेदे। स्मर्य्यते वेदधर्मोऽनेन करणे क्तिन्। धर्मशासनशास्त्रे वेदार्थानुभवजन्ये वेदार्थानुवादके मुनिप्रणीते वाक्यरूपे शास्त्रे। "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदा मिति" मनु.।

**स्मृतिहेतु** पु० ६त०। संस्कारे वासनारूपे गुणभेदे।

**स्मेर** त्रि० स्मि-रन्। विकसिते ईषद्धास्यान्विते च "मङ्गलज. स्मेरमुखोभविष्यतीति" कुमार.। [प्रस्रवणे।

**स्यद** पु० स्यन्द-घञर्थे क। वेगे। [स्यन्दते अस्यदत् अस्यन्दिष्ट

**स्यन्द** स्रवणे भ्वा० आ० लुङि, लृङि, लुटि च उभ० अक० वेट्।

**स्यन्द** पु० स्यन्द-घञ्। क्षरणे, प्रसवे।

**स्यन्दन** न० स्यन्द-भावे ल्युट्। क्षरणे। कर्त्तरि ल्यु। जले न०। रथे, तिनिशवृक्षे च पु०। [रथारोहेण योद्धरि।

**स्यन्दनारोह** पु० स्यन्दनमारोहति युद्धार्थम्, आ+रुह अण्।

**स्यन्दनि** पु० स्यन्द-अनि। तिनिशवृक्षे। ङीप्। लालायां स्त्री०

**स्यन्दिन्** त्रि० स्यन्द+णिनि। प्रस्रविणि। लालायां स्त्री० ङीप्।

**स्यन्न** त्रि० स्यन्द-क्त। स्रुते अश्वादौ। [illegible]

**स्यम** ध्वनने भ्वा० पर० अक० सेट् ज्वलादि० घटादि०। स्यमति

**स्यम** वितर्के चु० उ० सक० सेट्। स्यामयति ते असिस्यमत् त।

**स्यम** ध्याने अद० चु० उभ० सक० सेट्। स्यमयति असिस्यमत् त

**स्यमन्तक** पु० स्यम-भच् संज्ञायां कन्। [illegible] मणिभेदे। तस्य गुणादिकं वृहदभिधाने वक्ष्यते।

**स्यमीका** स्त्री० स्यम-ईकन्। वल्मीके। कीटभेदे च पु०।

**स्यूत** त्रि० सिव-क्त। सूच्यादिना ग्रथिते वस्त्रादौ। [illegible] पात्रे पु०। [illegible] स्योतोऽप्यत्र।

**स्यूति** स्त्री० सिव-क्तिन्। सूच्यादिना वस्त्रादिग्रथने —

यस्य नियोजके धर्मभेदे, स्वामित्वे च तच्च द्रव्यगतमात्मगतञ्च
**स्वदन** न० स्वद-ल्युट्। आस्वादे, लेहने च। सुष्ठु अदनम्।
शुभचर्वणे। [आचारादिधर्मे।
**स्वधर्म्म** स्वस्य वेदादिविहितोधर्म्मः। स्वानुरूपे वेदाद्युक्ते
**स्वधा** अव्य० स्वद-आ पृ०दस्य धः। पितृदेवोद्देशेन हवि-
स्त्यागे। स्वेन धयति धे-क आप्। मातृकाभेदे स्त्री०
"नमःस्वधायै स्वाहायै" इति पितृगाथा।
**स्वधाप्रिय** पु० स्वधायिना प्रिय. शाक०। कृष्णतिले, स्वधोप
लक्षितश्राद्धादिप्रिये पित्रादौ च। [गणे, देवे च।
**स्वधाभुज्** स्वधेत्यनेन त्यक्तद्रव्य भुङ्क्ते भुज-क्विप्। पितृ-
**स्वधि(ती)** स्त्री० स्वेन धीयते धा-क्तिन् वा ङीप्। कुठारे
वरस्वधे। पु०। स्वधितिरधन्न।
**स्वन** शब्दे भ्वा०पर० अक० सेट्-फणा०। स्वनति। अस्वनीत्-
अस्वानीत्। अयं भूषणे वा घटा०। [नत्-न
**स्वन** ध्वाने अद० चु० उभ० अक० सेट्। स्वनयति-ते अवस्व-
**स्वन** पु० स्वन-अप्। शब्दे। [मेघगर्जिते च न०
**स्वनित** त्रि० स्वन-कर्त्तरि-क्त। शब्दिते। भावे क्त। शब्दे,
**स्वपन** न० स्वप-ल्युट्। शयने, निद्रायाञ्च।
**स्वपिण्डा** स्त्री० स्वेनैव पिण्डः पिण्डाकारोऽस्यस्याः अच्।
पिण्डखर्जूर्याम्। [भेदे च।
**स्वप्न** पु० स्वप-नन्। निद्रायां, शयने, सुप्तस्य मानसिकज्ञान-
**स्वप्नकृत्** न० स्वप्नं निद्रां करोति कृ-क्विप्। (सुसुनि) शाके।
**स्वप्नज्** त्रि० स्वप-नजिङ्। शयनशीले।
**स्वभाव** पु० स्वस्य भावः। निसर्गे, नैसर्गिके-स्वकीये-धर्मे च।
**स्वभावोक्ति** स्त्री० स्वभावस्योक्तिरत्र। अलङ्कारोक्ते अर्थालङ्कार
भेदे हेम०। स्वभावस्य कथने। [ईश्वरे, कामे च।
**स्वभू** पु० स्वेनैव भवति भू-क्विप्। ब्रह्मणि, विष्णौ, शिवे,
**स्वयंवर** पु० स्वयमात्मना वरो वरणम्। "अन्ययात्मनैव स्वयते-
वैरप्ये,, सदसि स्वयंवर" इति नैषधम्। स्वयं वृणुते पतिम्
वृ-अच्। आत्मनैव पतिवरणकर्त्र्यां कन्यकायां स्त्री०।
**स्वयंकृत** पु० स्वयमात्मना कृत.। कृत्रिमे पुत्रे, आत्मकृते
त्रि०। "पूर्वजुषः स्वयंकृत" इति स्मृतिः।
**स्वयंगुप्ता** स्त्री० स्वयमात्मनैव गुप्ता। शूकशिम्ब्याम्।
**स्वयन्दत्त** पु० स्वयमात्मनैव मत पित्रभावदत्तो दत्त। दत्तात्मके
पुत्रभेदे "दत्तात्मा तु स्वयन्दत्त" इति स्मृति।
**स्वयम्** अव्य० सु+अय-अम्। आत्मनेत्यर्थे।
**स्वयम्भु** पु० स्वयम्+ भू-डु। ब्रह्मणि।
**स्वयम्भुवा** पु० स्वयम्भवति भू-क। धूम्रपत्रायाम्।

**स्वयम्भू** पु० स्वयं भवति भू-क्विप्। चतुर्मुखे ब्रह्मणि, कुचे च।
**स्वर** आक्षेपे अद० चुरा० उभ० सक० सेट्। स्वरयति-ते
असस्वरत्-त।
**स्वर्** अव्य० स्वृ-विच्। स्वर्गे, "यन्न दुःखेन संभिन्नं न च ग्रस्त-
मनन्तरम् अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पद" मित्युक्ते
दुःखासंभिन्ने सुखसन्ताने, परलोके, देवावासे, शोभने च।
**स्वर** पु० स्वर-अच्, स्वृ-अप् वा। उदात्तानुदात्तस्वरितरूपे व-
र्णोच्चारणयत्नभेदे, ता, अस्वरवत्ता च अकारादिषु व्यञ्जन-
भिन्नवर्णेषु शिक्षायामुक्ता। तन्त्रोक्ते भाषादिवायोश्चोच्चार-
भेदे, काकादिकृते वर्णाद्युच्चारणध्वनिविशेषे, निषादादिषु
गानजध्वनिषु च। विस्तरो शब्दाभिधाने।
**स्वरपत्तन** न० स्वराणां निषादादीनां गानध्वनिविशेषाणां
पत्तनमाश्रय। सामवेदे।
**स्वरभङ्ग** पु० स्वरस्य कण्ठध्वनिभेदस्य भङ्गो यस्मात्। रोगभेदे।
**स्वरमण्डलिका** स्वराणां मण्डलमस्त्यस्य ठन्। वीणायाम्
हेम०। स्वरसमूहे। [ष-ण्वुल्। वीणायां, वंशाञ्च।
**स्वरलासिका** स्त्री० स्वरैः निषादादिभिः लसति नृत्यतीव ल-
**स्वरस** पु० स्वेन स्वभावेन रसः आस्वादः। शिलापिष्टकल्कभेदे,
क्वाथभेदे च। स्वस्य रसः रागः। स्वाभिप्राये स्वतात्पर्ये, वा
क्यादौ-रचनाभङ्ग्यां च।
**स्वराज्** पु० स्वेनैव राजते राज-क्विप्। ईश्वरे "अर्थेष्वभिज्ञः
स्वराडिति,, भागवतम्। वैदिकच्छन्दोभेदे च। [ब्रह्म।
**स्वरापगा** स्त्री० स्वः स्वर्गस्यापगा। गङ्गायाम् स्वर्गापगादयो-
**स्वरित** पु० स्वरोजातोऽस्य इतच्। उदात्तानुदात्तसमाहार-
रूपे स्वरभेदे स्वर-क्त। स्वरयुक्ते त्रि०। [अधिकभेदे च।
**स्वरु** पु० स्वृ-उ, वज्रे, यूपखण्डे, बाणे, यज्ञे, सूर्यकिरणे,
**स्वरुचि** त्रि० स्वस्यैव रुचि. प्रवर्त्तिका स्वतन्त्रे यस्य। स्वतन्त्रे,
हेम०। स्वस्याभिलाषे स्त्री०।
**स्वरूप** न० स्वस्य रूपम्। स्वभावे। स्वमेव रूपम्। आत्मके पदार्थे
स्वं यथास्वं रूपयति रूप-अण्। यथास्वरूपाभिधे-प०
विज्ञते पु०। स्वेन स्वभावेनैव रूपमस्य। मनोज्ञे, त्रि०।
**स्वरूपसम्बन्ध** पु० स्वरूपं सम्बन्धः, स्वरूपयोर्वा सम्बन्ध। न्या-
योक्ते, आत्मके सम्बन्धे, षट्पदार्थातिरिक्ते पदार्थभेदे, येया
प्रतियोगित्वम् विषयत्वमित्यादि।
**स्वरोदय** स्वरशास्त्रोदयोपल। स्वरस्य श्वासविशेषस्य शुभाशुभ
ज्ञापनसाधने तन्त्रशास्त्रभेदे।
**स्वर्ग** पु० स्वरिति गीयते गै-क सु+अर्ज-घञ् वा। दुः-
खासंभिन्ने सुखज्ञाने, देवानामावासस्थाने च।

स्वर्गनाथ पु० ६त०। इन्द्रे। स्वर्गपत्यादयोऽप्यत्र।
स्वर्गवधू स्त्री० ६त०। अप्सरसु।
स्वर्गाचल पु० स्वर्गलोकस्थोऽचलः। सुमेरुपर्वते। [लि०।
स्वर्गिन् पु० स्वर्गोऽस्यास्ति भोग्यत्वेन इनि। देवे। स्वर्गवासिनि
स्वर्गौकस् पु० स्वर्गओको यस्य। देवे।
स्वर्जिक पु० सु+अर्ज–घञ् अस्त्यर्थे ठन्। सर्जिकाक्षारे।
कर्म०। स्वर्जिकाक्षारादयोऽप्यत्र।
स्वर्ण न० सुष्ठु अर्णो वर्णोऽस्य। काञ्चने, धुस्तूरे, नागकेशरे,
गौरवर्णशाके च। [सुवर्णस्य लेये पु०।
स्वर्णकण न० स्वर्णमिव पीतं कणोऽस्य। त्पुग्गुलौ ६त०।
स्वर्णकाय पु० स्वर्णमिव पीतः कायोऽस्य। गरुडे।
स्वर्णकार पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ–अण्।
(सेकरा) जातिभेदे।
स्वर्णकेतकी स्त्री० स्वर्णमिव पीता केतकी। पीतकेतक्याम्।
स्वर्णक्षीरी स्त्री० स्वर्णमिव पीतं क्षीरं निर्यासोऽस्याः अच्
गौ० ङीष्। ओषधिभेदे सा च मालवदेशे जायते। [भेदे।
स्वर्णगैरिक न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थ
स्वर्णग्रीवा स्त्री० नदीभेदेन।
स्वर्णचूड पु० स्वर्णमिव पीता चूडा यस्य। चाषपक्षिणि।
स्वर्णज न० स्वर्णात् जायते जन–ड। वङ्गे। स्वर्णजातमात्रे त्रि०।
स्वर्णजीवन्ती स्त्री० स्वर्णमिव पीता जीवन्ती। पीतपुष्पजीवन्त्याम्
स्वर्णदी स्त्री० स्वर्णं द्यति अपसारयति तत्स्वर्णनाशात् दो क
गौ० ङीष्। वृश्चिकाल्याम्। ६त० गङ्गायाम्। [विकटस्थे च।
स्वर्णदीधिति पु० स्वर्णमिव भास्वरा दीधितिरस्य। वह्नौ, चि-
स्वर्णद्रु पु० स्वर्णमिव पुष्पादौ पीतो द्रुः। आरग्वधे।
स्वर्णपक्ष पु० स्वर्णमिव पीतं पक्षोऽस्य। गरुडे।
स्वर्णपाटक पु० स्वर्णं पाटयति पट–णिच्–ण्वुल्। टङ्कणे।
स्वर्णपुष्प पु० स्वर्णमिव पीतं पुष्पमस्य। चम्पके, आरग्वधे,
पु० भौ० स्त्रीत्वे ङीष्। सा च स्वर्णकेतक्याञ्च। सातलायाम्
कलिकारी स्त्री० टाप्। [कदल्याम्।
स्वर्णफला स्त्री० स्वर्णमिव पीतं फलमस्याः। (चाँपाकला) स्वर्ण
स्वर्णभृङ्गार पु० स्वर्णमिव स्वर्णमयो वा भृङ्गारः। पीतभृङ्गराजे
स्वर्णमयकरके च। [उपधातुभेदे।
स्वर्णमाक्षिक न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते
स्वर्णयूथी स्त्री० स्वर्णमिव पीता यूथी। पीतयूथिकायाम्।
स्वर्णलता स्त्री० स्वर्णमिव पीता लता। ज्योतिष्मत्याम्।
स्वर्णवर्णा स्त्री० स्वर्णमिव वर्णोऽस्याः। हरिद्रायाम्।
स्वर्णवल्कल पु० स्वर्णमिव पीतं वल्कलमस्य। शोणाकवृक्षे।
स्वर्णशेफालिका स्त्री० स्वर्णमिव पीता शेफालिका।
पीतशेफालिकायाम्। [वर्णदेशे त्रि०।
स्वर्णाङ्ग पु० स्वर्णमिवाङ्गं पत्रपुष्पादि यस्य। आरग्वधे। पीत-
स्वर्णारि पु० ६त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।
स्वर्त्त गतौ सक० दु खेनजीवने अक० चु० उ० सेट्। स्वर्त्तयति ते
असस्वर्त्तत् त। [असस्वर्दिष्ट।
स्वर्द प्रीतौ अक० प्रीणने वेष्टनेच सक० भ्वा० आत्म० सेट्। स्वर्दते
स्वर्भानव पु० स्वरिव भूमौ भानुर्दीप्तिरस्यास्य अच्। गोमेदमणौ
स्वर्भानु पु० स्वः स्वर्गे भानुर्दीप्तिरस्य। राहौ।
स्वर्लोक पु० स्वरेव लोकः भुवनम्। स्वर्गे, ६त०। स्वर्गस्थलोके।
स्वर्वापी स्त्री० स्वः स्वर्गस्य वापीव। गङ्गायाम्।
स्वर्वेश्या स्त्री० स्वः स्वर्गस्य वेश्या। मेनकाद्यप्सरसु।
स्वल्प त्रि० सुष्ठु अल्पम् प्रा०। अत्यल्पे क्षुद्रे।
स्वल्पकेशरिन् पु० स्वल्पं केशरोऽस्त्यस्य इनि। कोविदारवृक्षे।
स्वल्पपत्रक पु० स्वल्पं पत्रमस्य कप्। गौरशाके
स्ववासिनी स्त्री० स्वस्मिन् पित्रालये वसति वस–णिनि। चिर
मित्रगृहादिवासिन्यामूढायामनूढाया वा स्त्रियाम्।
स्वसृ स्त्री० सु+अस ऋन्। भगिन्याम्।
स्वस्क गतौ चु० उ० सक० सेट्। स्वस्कति ते असस्वस्कत्त।
स्वस्ति अव्य० सु–अस–क्तिच्, अस्तीति विभक्तिप्रतिरूपकम् अव्य
य प्रादि० वा। क्षेमे, आशिषि, पुण्यादौ, स्वीकारस्तुतौ च।
स्वस्तिक पु० न०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिक मा-
श्रुत्य यत् स्यादलिन्दात्तुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ
तत्पर्यन्तगतोऽपरः" इत्युक्तलक्षणे गृहभेदे, सितावरशाके,
आसनबन्धभेदे, तण्डुलचूर्णनिर्म्मिते–त्रिकोणाकारे–द्रव्य-
भेदे च "इत स्वस्तिकसिन्दूर" मित्यधिवासनद्रव्यज्ञापक-
वाक्यम्" चतुष्पथे पु०। [पु०। स्वस्तिवादिनि त्रि०।
स्वस्तिमुख पु० स्वस्ति मुखे आदौ यस्य। लेख्ये पत्रादौ। विप्रे
स्वस्तिवाचन न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कमार-
म्भे विप्रोपयाजालये माङ्गल्यद्वारा कर्त्तव्यकर्म्मणः शुभता
वाचने।
स्वस्तिवाचनिक त्रि० स्वस्तिवाचनाय हितं, तत आगतम्, तन्-
मयं वा ठन्। स्वस्तिवाचनसाधने, तदुपलब्धे, तत्सम्बन्धिनि च
स्वस्त्ययन न० स्वस्ति शुभस्य अयनं लाभोऽस्मात्। शुभार्थं
क्रियमाणे वेदादिविहिते यज्ञयागादौ।
स्वस्थ त्रि० स्वे परब्रह्मणि तिष्ठति स्थेम स्वभावेन सुखेन, वा
तिष्ठति स्था–क विसर्गलोपः। स्वभावस्थे, स्वर्गस्थिते, चिन्ता
शून्ये सुखेनावस्थिते च। "स्वस्था भवन्ति मयि जीवति

स्वर्गनाथ पु० ६त०। इन्द्रे। स्वर्गपत्यादयोऽप्यत्र।
स्वर्गवधू स्त्री० ६त०। अप्सरसि।
स्वर्गाचल पु० स्वर्गलोकस्याऽचल। सुमेरुपर्वते। [लि०।
स्वर्गिन् पु० स्वर्गोऽस्यास्ति भोग्यत्वेन इनि। देवे। स्वर्गवासिनि
स्वर्गौकस् पु० स्वर्गः ओको यस्य। देवे।
स्वर्जिक पु० सु+अर्ज्ज–घञ् अस्त्यर्थे ठन्। सर्ज्जिकाक्षारे।
कर्म०। स्वर्जिकाक्षारादयोऽप्यत्र।
स्वर्ण न० सुष्ठु अर्णो वर्णोऽस्य। काञ्चने, धुस्तूरे, नागकेशरे,
गौरवर्णशाके च। [सुवर्णस्य लेपे पु०।
स्वर्णकण न० स्वर्णमिव पीतः कणोऽस्य। कणगुग्गुलौ ६त०।
स्वर्णकाय पु० स्वर्णमिव पीतः कायोऽस्य। गरुडे।
स्वर्णकार पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ–अण्।
(सेकरा)जातिभेदे।
स्वर्णकेतकी स्त्री० स्वर्णमिव पीता केतकी। पीतकेतक्याम्।
स्वर्णक्षीरी स्त्री० स्वर्णमिव पीतं क्षीरं निर्यासोऽस्यास्ति अच्
गौ० ङीष्। ओषधिभेदे सा च मालवदेशे जायते। [भेदे।
स्वर्णगैरिक न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थ
स्वर्णग्रीवा स्त्री० नदीभेदे।
स्वर्णचूड़ पु० स्वर्णमिव पीता चूड़ा यस्य। चाषपक्षिणि।
स्वर्णज न० स्वर्णात् जायते जन–ड। वङ्गे। स्वर्णजातमात्रे लि०।
स्वर्णजीवन्ती स्त्री० स्वर्णमिव पीता जीवन्ती। पीतपुष्पजीवन्त्याम्
स्वर्णदी स्त्री० स्वर्णं द्यति अपसारयति तुल्यवर्णत्वात् दो–क
गौ० ङीष्। वृश्चिकाल्याम्। ६त०। गङ्गायाम्। [विकङ्कते च।
स्वर्णदीधिति पु० स्वर्णमिव भास्वरा दीधितिरस्य। वह्नौ, चि-
स्वर्णद्रु पु० स्वर्णमिव पुष्पादौ पीतो द्रुः। आरग्वधे।
स्वर्णपक्ष पु० स्वर्णमिव पीतः पक्षोऽस्य। गरुड़े।
स्वर्णपाठक पु० स्वर्णं पाठयति पट–णिच्–ण्वुल्। टङ्कणे।
स्वर्णपुष्प पु० स्वर्णमिव पीतं पुष्पमस्य। चम्पके, आरग्वधे,
पु० स्त्री० स्त्रीत्वे ङीप्। सा च स्वर्णकेतक्याम्। सातलायाम्
कलिकारी स्त्री० टाप्। [कदल्याम्।
स्वर्णफला स्त्री० स्वर्णमिव पीतं फलमस्याः। (चापाकला) स्वर्ण
स्वर्णभृङ्गार पु० स्वर्णमिव स्वर्णमयो वा भृङ्गारः। पीतभृङ्गराजे
स्वर्णमयकलशे च। [उपधातुभेदे।
स्वर्णमाक्षिक न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते
स्वर्णयूथी स्त्री० स्वर्णमिव पीता यूथी। पीतयूथिकायाम्।
स्वर्णलता स्त्री० स्वर्णमिव पीता लता। ज्योतिष्मत्याम्।
स्वर्णवर्णा स्त्री० स्वर्णमिव वर्णोऽस्याः। हरिद्रायाम्।
स्वर्णवल्कल पु० स्वर्णमिव पीतं वल्कलमस्य। शोनाकवृक्षे।

स्वर्णशेफालिका स्त्री० स्वर्णमिव पीता शेफालिका।
पीतशेफालिकायाम्। [स्वर्णदेहे लि०।
स्वर्णाङ्ग पु० स्वर्णमिवाङ्गं पत्रपुष्पादि–यस्य। आरग्वधे। पीत-
स्वर्णारि पु० ६त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।
स्वर्त्त गतौ सक० द० दुःखजीवने अक० चु० उ० सेट्। स्वर्त्तयति ते
असस्वर्त्तत् त। [असस्वर्द्दिष्ट।
स्वर्द मीतौ अक० प्रीणने चेङ्नेच सक० भ्वा० आत्म० सेट्। स्वर्द्दते
स्वर्भानव पु० स्वरिव भूमौ भानुर्दीप्तिरस्यास्य अण्। गोमेदमणौ
स्वर्भानु पु० स्वः स्वर्गे भानुर्दीप्तिरस्य। राहौ।
स्वर्लोक पु० स्वरेव लोकः भुवनम्। स्वर्गे, ६त०। स्वर्गस्थलोके।
स्वर्वापी स्त्री० स्वः स्वर्गस्य वापीव। गङ्गायाम्।
स्वर्वेश्या स्त्री० स्वः स्वर्गस्य वेश्या। मेनकाद्यप्सरसु।
स्वल्प त्रि० सुष्ठु अल्पम् प्रा०। अत्यल्पे क्षुद्रे।
स्वल्पकेशरिन् पु० स्वल्पः केशरोऽस्त्यस्य इनि। कोविदारवृक्षे।
स्वल्पपत्रक पु० स्वल्पं पत्त्रमस्य कप्। गौरशाके
स्ववासिनी स्त्री० स्वस्मिन् पितालये वसति वस–णिनि। चिरं
पितृसद्मादिवासिन्यामूढायामनूढाया वा स्त्रियाम्।
स्वसृ स्त्री० सु+अस–ऋन्। भगिन्याम्।
स्वस्क गतौ भ्वा० उ० सक० सेट्। स्वस्कति ते अस्वस्कत्तृत।
स्वस्ति अव्य० सु–अस–क्तिच्, असोति विभक्तिप्रतिरूपकम् अव्य
यं प्रादि० वा। क्षेमे, आशिषि, पुण्यादौ, स्वीकारद्योतने च।
स्वस्तिक पु० न०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिक प्रा-
ङ्मुख यत् स्यादलिन्दात्तुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ
तत्पर्यन्तगतोऽपरः" इत्युक्तलक्षणे गृहभेदे, सितावरशाके,
आसनबन्धभेदे, वस्त्रचूर्णनिर्म्मिते–त्रिकोणाकारे–द्रव्य-
भेदे च "द्यतं स्वस्तिकमिन्दूर" मित्यधिवासनद्रव्यनामक-
थनम्" चतुष्पदे पु०। [पु०। स्वस्तिवादिनि त्रि०।
स्वस्तिमुख पु० स्वस्ति मुखे आदौ यस्य। लेख्ये पत्त्रादौ। विप्रे
स्वस्तिवाचन न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मार-
म्भे विप्रोपस्थानपूर्वं मन्त्रद्वारा कर्त्तव्यकर्मणां शुभता
वाचने।
स्वस्तिवाचनिक त्रि० स्वस्तिवाचनाय हितं, तत आगतम्, तत्-
मय वा ठञ्। स्वस्तिवाचनसाधने, तदुत्पन्ने, तत्सम्बन्धिनि च
स्वस्त्ययन न० स्वस्ति शुभस्यायनं प्राप्तियस्मात्। शुभार्थं
क्रियमाणे वेदादिविहिते पाठयागादौ।
स्वस्थ त्रि० स्वे परलोके तिष्ठति स्वेन स्वभावेन रूपेण, वा
तिष्ठति स्था–क विसर्गलोपः। स्वभावस्थे, स्वर्गस्थिते, विना
श्रमेण रूपेणावस्थिते च। "स्वस्था भवन्तु मयि जीवति

**हताश** त्रि० हता आशा यस्य। आशाशून्ये, वन्ध्ये, निर्दये, पिशुने च। [शुषने च।

**हति** स्त्री० हन-क्तिन्। हनने, मारणे, व्याघाते, अपकर्षे,

**हत्या** स्त्री० हन-क्यप्। मारणे, वधे, प्राणवियोगानुकूल व्यापारे "ब्रह्महत्या सुरापानमिति" स्मृति.।

**हद्** विष्ठोत्सर्गे भ्वा० आ० अक० सेट्। हदते अहदिष्ट।

**हन** वधे-गतौ च भ्वा० प० सक० अनिट्। हन्ति अवधीत्। "कुञ्जं हन्ति कृशोदरी' त्यादावालङ्कारिकास्तु गतौ निष्ठतार्थताभाहुः।

**हनन** न० हन-ल्युट्। "स्नात् प्राणविच्छेदफलव्यापारोहननं स्मृत, मिलुक्ते, व्यापारे शुषने च। [ह्वी।

**हनील** पु० हन-इन् ङीप् हन्यां लीयते ली-ड। केतकी

**हनु(नू)** पु० स्त्री० हन-उन् वा ऊङ्। कपोलद्वयोपरिस्थे मुखभागे, हट्टविलासिन्यां, रोगे, अस्त्रभेदे, मृतौ च स्त्री०।

**हनु(नू)मत्** पु० हनु(नू)+अस्त्यर्थे मतुप्। रामस्य अनुचरे, अञ्जनागर्भजाते पवनतनये वानरभेदे।

**हन्त** अव्य० हन-त। हर्षे,अनुकम्पायां, विषादे, आर्त्तौ, वाक्ये, सम्भ्रमे, वाक्यारम्भे, खेदे,परिच्छेदे, वसने च।

**हन्तकार** पु० हन्त हर्षस्य कारः करणं, हन्तेत्यस्य कारः उच्चारणम् वा क-घञ्। अतिथये देये-अन्ने, हन्तशब्दप्रयोगे च।

**हन्तृ** त्रि० हन-तृच्। हननकर्त्तरि सततहननानुशीलयित, रि च स्त्रियां ङीप्।"महिषासुरहन्त्र्यावेति„ पुराणम्।

**हन्न** त्रि० हद्-क्त। कृतपुरीषोत्सर्गे।

**हम्** अव्य० हा-डम्। रुषोक्तौ, अनुनये च। [पु०। हम्बाध्वन।

**हम्भा(म्बा)** स्त्री० हम्+भा-हम्ब-अङ् वा। गवां ध्वनौ

**हम्म** गतौ भ्वा० प० सक० सेट्। हम्मति। अहम्मीत्।

**हय** गतौ सक० क्लान्तौ अक० भ्वा० प० सेट्। हयति अहयीत्।

**हय** पु० हय-हि-वा अच्। घोटके।

**हयगन्ध** पु० हयस्येव गन्धोऽस्य। काचलवणे। अश्वगन्धायाम्, अजमोदायाञ्च स्त्री०।

**हयग्रीव** पु० हयस्येव दीर्घा ग्रीवाऽस्य। विष्णोरवतारभेदे, दैत्यभेदे च, "हयग्रीववधोपेत तद्धे भागवत विदुरिति„ पुराणम् दुर्गायां स्त्री०। [विष्णौ।

**हयग्रीवहन्** पु० हयग्रीवाख्यं दैत्यं हतवान् हन-क्विप्।

**हयन** न० हि-ल्युट्। कर्णीरथे। [माषपर्ण्याम्।

**हयपुच्छी** स्त्री० हयस्य पुच्छाकारोऽस्त्यस्याः अच् गौ०ङीप्।

**हयप्रिय** पु० ६त०। यवे, अश्वगन्धायां, खर्जूर्याञ्च स्त्री० अश्वप्रिये त्रि०। हयेष्टादयोप्यत्र। [करवीरे, खुरे। तत्रैव च।

**हयमार** पु० हयं मारयति ईन्धिवशात् मृ-णिच्-अण्।

**हयमारण** पु० हयं मारयति मृ-णिच्-ल्यु। अश्वत्थवृक्षे।

**हयवाहनसङ्कर** पु० हयस्य वाहनं चालनं सङ्किरति सम्×कॄ-अच्। रक्तकाञ्चने।

**हया** स्त्री० हयः हयगन्धोऽस्त्यस्याः अच्। अश्वगन्धायाम्।

**हयाध्यक्ष** पु० हयेषु तद्रक्षणेषु अध्यक्ष। अश्वरक्षणाधिकृते।

**हयानन्द** पु० हयमानन्दयति आ+नन्द-णिच्-अण्। मुद्गे

**हयारि** पु० ६त०। करवीरे।

**हयाशना** स्त्री० हयैरश्यते अश-ल्युट्। सल्लकीवृक्षे।

**हयोत्तम** पु० हयेषु उत्तमः। अश्वरत्ने आजानेयेऽश्वे।

**हर** पु० हृ-अच्। रुद्रे, अग्नौ, गर्दभे, विभाजके च„अन्योन्यहाराभिहतौ हराशी विति„ लीलावती। हृ-भावे अप्। हरणे, विभाजने च।

**हरगौरी** स्त्री० हरदेहार्द्धहरा गौरी। अर्द्धनारीश्वररूपे शिवपार्वत्योर्मूर्त्तिभेदे द्वन्द०। शिवपार्वत्योः द्वि० व०।

**हरण** न० हृ-भावे ल्युट्। स्थानान्तरकरणे, विभाजने च कर्मणि ल्युट्। यौतकादौ देये धने।

**हरतेजस्** न० ६त०। पारदे शिववीर्ये च। हरवीजादयोप्यत्र

**हरशेखरा** स्त्री० हरस्य शेखरमाश्रयत्वेनास्त्यस्याः अच्। गङ्गायाम्।

**हरि** पु० हृ-इन्। विष्णौ, सिंहे, सर्पे, वानरे, भेके, चन्द्रे, सूर्ये, वायौ, अश्वे यमे, हरे, ब्रह्मणि, किरणे, नृ-वर्षमध्ये वर्षभेदे, मयूरे, कोकिले, हंसे शुकपक्षिणि, भर्त्तृहरिनामके वाक्यप्रदीपग्रन्थकारके पण्डिते, इन्द्रे, पीते, पिङ्गलवर्णे, हरिद्वर्णे च। तद्वति त्रि० "हरिं विदित्वा हरिभिश्च वाजिभिरि'ति रघुः।

**हरिकेश** पु० हरिः पिङ्गलः केशोऽस्य। शिवे, शिवभक्तयक्षभेदे च। स एव तत्प्रसादात् काश्यां दण्डपाणित्वमाप्तवान्, इति काशीखण्डे स्थितम्। [एकपक्षपुरीभेदे च।

**हरिद्रद** न० ६त०। हरेर्विष्णुमूर्त्तेर्गदृपम्। हरिमूर्त्तिप्टडे

**हरिचन्दन** न० हरेरिन्द्रस्य प्रियं चन्दनम्, चन्दयति चदि-ल्यु ६त० वा। देवतरुभेदे। हरेर्विष्णोः प्रियं चन्दनम्। श्वेतचन्दने गोपीचन्दनामके मलयकर्दमे-जाते चन्दनभेदे, ज्योत्स्नायां, कुङ्कुमे, सुन्दराङ्गे च न०।

**हरिण** पु० हृ-इनन्। स्वनामख्याते पशौ, शिवे, विष्णौ, हंसे, शुक्लवर्णे पाण्डुवर्णे च। तद्वति त्रि०।

**हरिणहृदय** पु० हरिणस्येव भीतं हृदयमस्य। भीरौ।

**हरिणाक्षी** स्त्री० हरिणस्येवाक्षि यस्याः ६ब०। षच् समा० ङीष्। हरिणाक्षिविनीतामञ्चलदृष्ट्ये हरिणवज्जलेक्षणे त्रि०स्त्रियां ङीप्। 'हरिणाक्षि ! मनागपेहि' मुद्गर।

